# गरुड़पुराणम्।

कृष्णद्वैपायन-महर्षि-श्रीवेदव्यास-

प्रणीतम्।

पण्डितवरश्रीयुक्तपञ्चाननतर्करत्नेन

सम्पादितम्।

श्रीयुक्तवीरसिंहशास्त्रिणा श्रीयुक्तधीरानन्दकाव्यनिधिना च

परिशोधितम्।

कलिकाताराजधान्याम्

कलुटोलाष्ट्रीटस्थित ३४।१ नं वङ्गवासी-ष्टीम-मेसिन-यन्त्रे

श्रीअरुणोदयरायेण

मुद्रितं प्रकाशितञ्च।

शकाब्दाः १८१२।

मूल्यं २) मुद्रामात्रम्।




# विज्ञप्तिः ।

---

वेदव्यासमहर्षिवाङ्मयसुधानिष्यन्दलीलानदी-
नानावार्त्तमिदं पुराणममलं नाम्ना पुनर्गारुडम् ।
अस्मिन् सम्यगुपैति यो निपुणतां मोहान्धकारच्छिदं
शास्त्रार्थः सकलो हि तस्य रसनारङ्गाङ्गने रिङ्गते ॥

अनेकदेवार्चन-सर्पविद्या-
सामुद्रिक ज्योतिषतन्त्रवादाः ।
तीर्थानुभावो नय-य गसारौ
च्छन्दः स्मृति-श्राद्धविधि-व्रतानि ॥

चिकित्सित-व्याकरणेतिहासाः
प्रश्नानुसारा गणना विचित्रा ।
ब्रह्मप्रमा रत्नपरीक्षणादि
निरूपितं गारुड़पूर्व्वखण्डे ॥

शमनभवनयानं गर्भवासो नराणां
विविधनरकवार्त्ता श्राद्धदानानि दाहः ।
कुशनरदहनञ्चेत्यादिभिर्वाच्यजातै-
र्विलसितमतिरम्यं गारुड़प्रेतखण्डम् ॥

प्रेतपञ्चकवृत्तान्तो बभ्रुवाहनचेष्टितम् ।
पर्यमातुषदाहादि पौनरुक्त्यस्य गोचरः ॥

बोध्यसंस्कारदार्ढ्यार्थं विहिताः पुनरुक्तयः ।
स्थूणानिखननन्यायात् ततो दोषो न कश्चन ॥

आस्थाय कापिलतनुं हरिरेकमेव
वाच्यं पुनः पुनरवोचत सांख्यशास्त्रे ।
संस्कारदार्ढ्यमुपपादयित महान्तः
शिक्षार्थिनामनुसरन्ति हि रीतिमेनाम् ॥

दक्षिणापथभवेन केनचित्
पौनरुक्त्यपरिहारपूर्व्वकम् ।
गारुड़ो विरचितस्तु संग्रहः
प्रेतखण्डमिति मुद्रितोऽबुधैः ॥

एनां विपत्तिमपनोदयितुं प्रयत्ना-
दाहृत्य दुर्लभपुरातनपुस्तकानि ।
सम्यग्विलोक्य कृतपाठविचारचारु
मुद्राङ्कितं सकलमेव पुराणमेतत् ॥

श्रीवीरसिंहविदुषा विदुषा च धीरा-
नन्देन शोधितमिदं बहुयत्नपूर्व्वम् ।
प्रीतिं परां यदि विधातुमलं बुधानां
तद्भाविनी सफलतास्मदतिश्रमस्य ॥

सम्पादकस्य
भट्टपल्लीनिवासि-
श्रीपञ्चाननदेवशर्म्मणः ।

# गरुड़पुराणसूचीपत्रम् ।



## पूर्व्वखण्डे ।

---

## उत्तरखण्डे।

गरुड़पुराणसूचीपत्रं समाप्तम्।

# गरुड़पुराणम्।

## पूर्व्वखण्डम्।

### प्रथमोऽध्यायः।

ओँ नमो भगवते वासुदेवाय।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

अजमजरमनन्तं ज्ञानरूपं महान्तं
शिवममलमनादिं भूतदेहादिहीनम्।
सकलकरणहीनं सर्व्वभूतस्थितं तं
हरिममलममायं सर्व्वगं वन्द एकम्॥ १
नमस्यामि हरिं रुद्रं ब्रह्माणञ्च गणाधिपम्।
देवीं सरस्वतीञ्चैव मनोवाक्कर्म्मभिः सदा॥ २
सूतं पौराणिकं शान्तं सर्व्वशास्त्रविशारदम्।
विष्णुभक्तं महात्मानं नैमिषारण्यमागतम्॥ ३
तीर्थयात्राप्रसङ्गेन उपविष्टं शुभासने।
ध्यायन्तं विष्णुमनघं तमभ्यर्च्यास्तुवन् कविम्॥ ४
शौनकाद्या महाभागा नैमिषीयास्तपोधनाः।
मुनयो रविसङ्काशाः शान्ता यज्ञपरायणाः॥ ५

ऋषय ऊचुः।

सूत जानासि सर्व्वं त्वं पृच्छामस्त्वामतो वयम्।
देवतानां हि को देव ईश्वरः पूज्य एव कः॥ ६
को ध्येयः को जगत्स्रष्टा जगत् पाति च हन्ति कः।
कस्मात् प्रवर्त्तते धर्म्मो दुष्टहन्ता च कः स्मृतः॥ ७
तस्य देवस्य किं रूपं जगत्सर्गः कथं मतः।
कैर्व्रतैः स तु तुष्टः स्यात् केन योगेन वाप्यते॥ ८
अवताराश्च के तस्य कथं वंशादिसम्भवः।
वर्णाश्रमादिधर्म्माणां कः पाता कः प्रवर्त्तकः॥ ९
एतत् सर्व्वं तथान्यच्च ब्रूहि सूत महामते।
नारायणकथाः सर्व्वाः कथयास्माकमुत्तमाः॥ १०

सूत उवाच।

पुराणं गारुडं वक्ष्ये सारं विष्णुकथाश्रयम्।
गरुड़ोक्तं कश्यपाय पुरा व्यासाच्छ्रुतं मया॥ ११
एको नारायणो देवो देवानामीश्वरेश्वरः।
परमात्मा परंब्रह्म जन्माद्यस्य यतो भवेत्॥ १२
जगतो रक्षणार्थाय वासुदेवोऽजरोऽमरः।
स कुमारादिरूपेण अवतारान् करोत्यजः॥ १३
हरिः स प्रथमं देवः कौमारं सर्गमास्थितः।
चचार दुश्चरं ब्रह्मन् ब्रह्मचर्य्यमखण्डितम्॥ १४
द्वितीयन्तु भवायास्य रसातलगतां महीम्।
उद्धरिष्यन्नुपादत्त यज्ञेशः शौकरं वपुः॥ १५
तृतीयमृषिसर्गन्तु देवर्षित्वमुपेत्य सः।
तन्त्रं सात्त्वतमाचष्ट नैष्कर्म्म्यं कर्म्मणां यतः॥ १६

नरनारायणो भूत्वा तुर्य्ये तेपे तपो हरिः ।
धर्म्मसंरक्षणार्थाय पूजितः स सुरासुरैः ॥ १७
पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ १८
षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनुसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ १९
ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ।
सयामाद्यैः सुरगणैर्यष्टा स्वायम्भुवान्तरे ।
सयामाद्यैर्देवगणैरपात् स्वायम्भुवान्तरम् ॥ २०
अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः ।
दर्शयन् वर्त्म धीराणां सर्व्वाश्रमनिषेवितम् ॥ २१
ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धेमहौषधेर्विप्रास्तेन संजीविताः (क)प्रजाः ॥ २२
रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ २३
सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥ २४
धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
आप्याययत् सुरानन्यान्मोहिन्यामोहयन् स्त्रिया ॥ २५
चतुर्द्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्ज्जितम् ।
ददार करजैरूरावेरकां कटकृद्यथा ॥ २६
पञ्चदशं वामनको भूत्वागादध्वरं बलेः ।
पादत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपम् ॥ २७
अवतारे षोड़शमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् ॥ २८
ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखां दृष्ट्वा पुंसोऽल्पमेधसः ॥ २९
नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे कार्य्याण्यतः परम् ॥ ३०
एकोनविंश-विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ ३१
ततः कलौ तु सन्ध्यायां सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ ३२
अथासौ युगसन्ध्यायां नष्टप्रायेषु राजसु ।
भविता विष्णुयशसो नाम्ना कल्की जगत्पतिः ॥ ३३
अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।
मनुर्वेदविदो ह्याद्याः सर्व्वे विष्णुकलाः स्मृताः ॥ ३४
तस्मात् सर्गादयो जाताः सम्पूज्यश्च व्रतादिना ॥ ३५
अष्टौ श्लोकसहस्राणि तथा चाष्टौ शतानि च ।
पुराणं गारुड़ं व्यासः पुराऽसौ मेऽब्रवीदिदम् ॥ ३६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

ऋषय ऊचुः ।

कथं व्यासेन कथितं पुराणं गारुड़ं तव ।
एतत् सर्व्वं समाख्याहि परं विष्णुकथाश्रयम् ॥ १

सूत उवाच ।

अहं हि मुनिभिः सार्द्धं गतो बदरिकाश्रमम् ।
तत्र दृष्टो मया व्यासो ध्यायमानः परेश्वरम् ।
तं प्रणम्योपविष्टोऽहं पृष्टवान् हि मुनीश्वरम् ॥ २
व्यास ब्रूहि हरे रूपं जगत्सर्गादिकं ततः ।
मन्ये ध्यायसि तं यस्मात् तस्माज्जानासि तं विभुम् ।
एवं पृष्टो यथा प्राह तथा विप्रा निबोधत ॥ ३

व्यास उवाच ।

शृणु सूत प्रवक्ष्यामि पुराणं गारुड़ं तव ।
सह नारद-दक्षाद्यैर्ब्रह्मा मामुक्तवान् यथा ॥ ४

सूत उवाच ।

दक्ष-नारदमुख्यैस्तु युक्तं त्वां कथमुक्तवान् ।
ब्रह्मा श्रीगारुड़ं पुण्यं पुराणं सारवाचकम् ॥ ५

व्यास उवाच ।

अहं हि नारदो दक्षो भृग्वाद्याः प्रणिपत्य तम् ।
सारं ब्रूहीति पप्रच्छुर्ब्रह्माणं ब्रह्मलोकगम् ॥ ६

ब्रह्मोवाच ।

पुराणं गारुड़ं सारं पुरा रुद्रश्च मां यथा ।
सुरैः सहाब्रवीद्विष्णुस्तथाहं व्यास वच्मि ते ॥ ७

व्यास उवाच ।

कथं रुद्रं सुरैः सार्द्धमब्रवीद्वा हरिः पुरा ।
पुराणं गारुड़ं सारं ब्रूहि ब्रह्मन् महार्थकम् ॥ ८

---

(क) दुग्धि महौषधीर्विप्रास्तेन संपूजिता प्रजा इति क्वचित् पुस्तके पाठः ।

ब्रह्मोवाच।

अहं गतो हि कैलासमिन्द्राद्यैर्दैवतैः सह।
तत्र दृष्टो मया रुद्रो ध्यायमानः परं पदम्॥ ९
पृष्टो नमस्कृतो देवः किं त्वं ध्यायसि शङ्कर।
त्वत्तो नान्यं परं देवं जानामि ब्रूहि मां ततः
सारात् सारतरं त्वत्तः(क) श्रोतुकामः सुरैः सह॥१०

रुद्र उवाच।

अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम्।
सर्व्वदं सर्व्वगं सर्व्वं सर्व्वप्राणिहृदिस्थितम्।
भस्मोद्धूलितदेहस्तु जटामण्डलमण्डितः॥ ११
विष्णोराराधनार्थं मे व्रतचर्य्या पितामह।
तमेव गत्वा पृच्छामः सारं यं चिन्तयाम्यहम्॥ १२
विष्णुं जिष्णुं पद्मनाभं हरिं देहविवर्ज्जितम्।
शुचिं शुचिपदं हंसं तत्पदं परमेश्वरम्॥ १३
युक्त्या सर्व्वात्मनात्मानं तं देवं चिन्तयाम्यहम्।
यस्मिन् विश्वानि भूतानि तिष्ठन्ति च विशन्ति च॥१४
गुणभूतानि भूतेशे सूत्रे मणिगणा इव।
सहस्राक्षं सहस्राङ्घ्रिं सहस्रोरुकराननम्॥ १५
अणीयसामणीयांसं स्थविष्ठञ्च स्थवीयसाम्।
गरीयसां गरिष्ठञ्च श्रेष्ठञ्च श्रेयसामपि॥ १६
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।
गृणन्ति सत्यकर्म्माणं सत्यं सत्येषु सामसु॥ १७
पुराणपुरुषः प्रोक्तो ब्रह्मा प्रोक्तो द्विजातिषु।
क्षये सङ्कर्षणः प्रोक्तस्तमुपास्यमुपास्महे॥ १८
यस्मिन् लोकाः स्फुरन्तीमे जलेषु शकुलो यथा।
ऋतमेकाक्षरं ब्रह्म यत्तत् सदसतः परम्।
अर्च्चयन्ति च यं देवा यक्ष-राक्षस-पन्नगाः॥ १९
यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः।
चन्द्रादित्यौ च नयने तं देवं चिन्तयाम्यहम्॥ २०
यस्य त्रिलोकी जठरे यस्य काष्ठाश्च बाहवः।
यस्योच्छ्वासश्च पवनः तं देवं चिन्तयाम्यहम्॥ २१
यस्य केशेषु जीमूता नद्यः सर्व्वाङ्गसन्धिषु।
कुक्षौ समुद्राश्चत्वारस्तं देवं चिन्तयाम्यहम्॥ २२
परः कालात् परो यज्ञात् परः सदसतश्च यः।
अनादिरादिर्विश्वस्य तं देवं चिन्तयाम्यहम्॥ २३
मनसश्चन्द्रमा यस्य चक्षुषोश्च दिवाकरः।
मुखादग्निश्च संजज्ञे तं देवं चिन्तयाम्यहम्॥ २४
पद्भ्यां यस्य क्षितिर्जाता श्रोत्राभ्याञ्च तथा दिशः।
मूर्द्धभागाद्दिवं यस्य तं देवं चिन्तयाम्यहम्॥ २५
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं यस्मात् तं देवं चिन्तयाम्यहम्॥ २६
यं ध्यायाम्यहमेतस्माद्व्रजामः सारमीक्षितुम्॥ २७

ब्रह्मोवाच।

इत्युक्तोऽहं सुरा रुद्रः श्वेतद्वीपनिवासिनम्।
गत्वा प्रणम्य तं विष्णुं श्रोतुकामाः किलास्थिताः॥२८
अस्माकं मध्यतो रुद्र उवाच परमेश्वरम्।
सारात् सारतरं विष्णुं पृष्टवांस्तं प्रणम्य वै॥ २९
यथा पप्रच्छ मां व्यासस्तथासौ भगवान् भवः।
पप्रच्छ विष्णुं देवाद्यैः शृण्वतो मम वै सह॥ ३०

रुद्र उवाच।

हरे कथय देवेश देवदेवः क ईश्वरः।
को ध्येयः कश्च वै पूज्यः कैर्व्रतैस्तुष्यते परः॥ ३१
कैर्धर्म्मैः कैश्च नियमैः कया वा धर्म्मपूजया।
केनाचारेण तुष्टः स्यात् किं तद्रूपञ्च तस्य वै॥ ३२
कस्माद्देवाज्जगज्जातं जगत् पालयते च कः।
कीदृशैरवतारैश्च कस्मिन् याति लयं जगत्॥ ३३
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
कस्माद्देवात् प्रवर्त्तन्ते कस्मिन्नेतत् प्रतिष्ठितम्।
एतत् सर्व्वं हरे ब्रूहि यच्चान्यदपि किञ्चन॥ ३४

सूत उवाच।

परमेश्वरमाहात्म्यं युक्तायोगादिकं तथा।
तथाष्टादशविद्याश्च हरी रुद्रं ततोऽब्रवीत्॥ ३५

हरिरुवाच।

शृणु रुद्र प्रवक्ष्यामि ब्रह्मणा च सुरैः सह।
अहं हि देवो देवानां सर्व्वलोकेश्वरेश्वरः॥ ३६
अहं ध्येयश्च पूज्यश्च स्तुत्योऽहं स्तुतिभिः सुरैः।
अहं हि पूजितो रुद्र ददामि परमां गतिम्॥ ३७
नियमैश्च व्रतैस्तुष्ट आचारेण च मानवैः।
जगत्स्थितेरहं वीजं जगत्कर्त्ता त्वहं शिव॥ ३८
दुष्टनिग्रहकर्त्ता हि धर्म्मगोप्ता त्वहं हर।
अवतारैश्च मत्स्याद्यैः पालयाम्यखिलं जगत्॥ ३९

(क) तत्त्वमिति पाठः क्वाचित्कः।

अहं मन्त्राश्च मन्त्रार्थः पूजाध्यानपरो ह्यहम् ।
सर्गादीनाञ्च कर्त्ताहं सर्गादीन्यहमेव च ॥ ४०
ज्ञाता श्रोता तथा मन्ता वक्ता वक्तव्यमेव च ।
सर्व्वः सर्व्वात्मको देवो भुक्तिमुक्तिकरः परः ॥ ४१
ध्यानं पूजोपहारोऽहं मण्डलान्यहमेव च ।
इतिहासान्यहं रुद्र सर्व्ववेदा ह्यहं शिव ॥ ४२
सर्व्वज्ञानान्यहं शम्भो ब्रह्मात्माहमहं शिवः ।
अहं ब्रह्मा सर्व्वलोकः सर्व्वदेवात्मको ह्यहम् ॥ ४३
अहं साक्षात् सदाचारो धर्म्मोऽहं वैष्टवो ह्यहम् ॥४४
वर्णाश्रमास्तथा चाहं तद्धर्म्मोऽहं पुरातनः ।
यमोऽहं नियमो रुद्र व्रतानि विविधानि च ॥ ४५
अहं सूर्य्यस्तथा चन्द्रो मङ्गलादीन्यहं तथा ॥ ४६
पुरा मां गरुडः पक्षी तपसाराधयद्भुवि ।
तुष्ट उक्ते वरं ब्रूहि मत्तो वव्रे वरं स च ॥ ४७

गरुड़ उवाच ।

मम माता च विनता नागैर्दासीकृता हरे ।
यथाहं देवतान् जित्वा चामृतं ह्यानयामि तत् ॥४८
दास्याद्विमोचयिष्यामि यथाहं वाहनं तव ।
महाबलो महावीर्य्यः सर्व्वज्ञो नागदारणः ।
पुराणसंहिताकर्त्ता यथाहं स्यां तथा कुरु ॥ ४९

विष्णुरुवाच ।

यथा त्वयोक्तं गरुड़ तथा सर्व्वं भविष्यति ।
देवादीन् सकलान् जित्वा चामृतं ह्यानयिष्यसि ॥५०
नागदास्यान्मातरं त्वां विनतां मोचयिष्यसि ।
महाबलो वाहनं त्वं भविष्यसि विषार्द्दनः ॥ ५१
पुराणं मत्प्रसादाच्च मम माहात्म्यवाचकम् ।
यदुक्तं मत्स्वरूपञ्च तव चाविर्भविष्यति ॥ ५२
गारुड़ं तव नाम्ना तल्लोके ख्यातिं गमिष्यति ।
यथाहं देवदेवानां श्रीः ख्याता विनतासुत ।
तथा ख्यातिं पुराणेषु गारुड़ं गरुड़ैष्यति ॥ ५३
यथाहं कीर्त्तनीयोऽथ तथा त्वं गरुड़ात्मना ।
मां ध्यात्वा पक्षिमुख्येदं पुराणं गद गारुड़म् ॥ ५४
इत्युक्तो गरुड़ो रुद्र कश्यपायाह पृच्छते ।
कश्यपो गारुड़ं श्रुत्वा(क) वृक्षं दग्धमजीवयत् ॥ ५५
स्वयञ्चान्यमना भूत्वा विद्ययान्यान्यजीवयत् ।
यक्षि ओँ तं स्वाहाजापी विद्येयं गारुड़ी परा ।
गरुड़ोक्तं गारुड़ं हि शृणु रुद्र महात्मकम् ॥ ५६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

सूत उवाच ।

इति रुद्राब्जजो विष्णोः शुश्राव ब्रह्मणो मुनिः ।
व्यासो व्यासादहं वच्मि हन्त शौनक नैमिषे ॥ १
मुनीनां शृण्वतां मध्ये सर्गाद्यं देवपूजनम् ।
तीर्थं भुवनकोषञ्च मन्वन्तरमिहोच्यते ॥ २
वर्णाश्रमादिधर्म्माश्च दानराज्यादिधर्म्मकाः ।
व्यवहारो व्रतं वंशा वैद्यकं सनिदानकम् ॥ ३
अङ्गानि प्रलयो धर्म्मकामार्थज्ञानमुत्तमम् ।
सप्रपञ्चं निष्प्रपञ्चं कृतं विष्णोर्निगद्यते ॥ ४
पुराणे गारुड़े सर्व्वं गरुड़ो भगवान् हरिः ।
वासुदेवप्रसादेन सामर्थ्यातिशयैर्युतः ॥ ५
भूत्वा हरेर्वाहनञ्च सर्गादीनाञ्च कारणम् ।
देवान् विजित्य गरुड़ः अमृताहरणं तथा ॥ ६
चक्रे क्षुधाहतं यस्य ब्रह्माण्डमुदरे हरेः ।
यं दृष्ट्वा स्मृतिमात्रेण नागादीनाञ्च संक्षयः ॥ ७
कश्यपो गरुड़ाद्वृक्षं दग्धञ्चाजीवयद्गुतः ।
गरुड़ः स हरिस्तेन प्रोक्तं श्रीकश्यपाय यत् ॥ ८
तत् श्रीमद्गारुड़ं पुण्यं सर्व्वदं पठितं तव ।
हरीरितञ्च रुद्राय शृणु शौनक तद्यथा ॥ ९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

रुद्र उवाच ।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव एतद्ब्रूहि जनार्द्दन ॥ १

हरिरुवाच ।

शृणु रुद्र प्रवक्ष्यामि सर्गादीन् पापनाशनान् ।

(क) गरुड़ं स्मृत्वेति वा पाठः।

सर्ग-स्थिति-लयान्तां तां विष्णोः क्रीड़ां पुरातनीम्॥ २
एको नारायणो देवो वासुदेवो निरञ्जनः।
परमात्मा परंब्रह्म जगज्जनिलयादिकृत्॥ ३
तदेतत् सर्व्वमेवैतद्व्यक्ताव्यक्तस्वरूपवत्।
तथा पुरुषरूपेण कालरूपेण च स्थितम्॥ ४
व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च।
क्रीड़तो बालकस्येव चेष्टास्तस्य निशामय॥ ५
अनादिनिधनो धाता त्वनन्तः पुरुषोत्तमः।
तस्माद्भवति चाव्यक्तं तस्मादात्मापि जायते॥ ६
तस्माद्बुद्धिर्मनस्तस्मात् ततः खं पवनस्ततः।
तस्मात् तेजस्ततश्चापस्ततो भूमिस्ततोऽसृजत्॥ ७
अण्डं हिरण्मयं रुद्र तस्यान्तः स्वयमेव हि।
शरीरग्रहणं पूर्व्वं सृष्ट्यर्थं कुरुते प्रभुः॥ ८
ब्रह्मा चतुर्मुखो भूत्वा रजोमात्राधिकः सदा।
शरीरग्रहणं कृत्वाऽसृजदेतच्चराचरम्॥ ९
अण्डस्यान्तर्जगत् सर्व्वं सदेवासुरमानुषम्।
स्रष्टा सृजति चात्मानं विष्णुः पाल्यञ्च पाति च॥ १०
उपसंह्रियते चान्ते संहर्त्ता च स्वयं हरिः॥ ११
ब्रह्मा भूत्वाऽसृजद्विष्णुर्जगत् पाति हरिः स्वयम्।
रुद्ररूपी च कल्पान्ते जगत् संहरते प्रभुः॥ १२
ब्रह्मा तु सृष्टिकालेऽस्मिन् जलमध्यगतां महीम्।
दंष्ट्रोद्धरति यो ज्ञात्वा वाराहीमास्थितस्तनूम्॥ १३
देवादिसर्गादन्योऽहं संक्षेपाच्छृणु शङ्कर।
प्रथमो महतः सर्गो विरूपो ब्रह्मणस्तु सः॥ १४
तन्मात्राणां द्वितीयस्तु भूतसर्गोहि स स्मृतः।
वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकः स्मृतः॥ १५
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्व्वकः।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः॥ १६
तिर्य्यक्स्रोतास्तु यः प्रोक्तस्तैर्य्यग्योन्यः स उच्यते।
तदूर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः॥ १७
ततोऽर्व्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसस्तु सः॥ १८
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः।
प्राकृता वैकृताश्चापि कौमारो नवमः स्मृतः॥ १९
स्थावरान्ताः सुराद्यास्तु प्रजा रुद्र चतुर्व्विधाः।
ब्रह्मणः कुर्व्वतः सृष्टिं जज्ञिरे मानसाः सुताः॥२०

ततो देवासुरपितॄन् मानुषांश्च चतुष्टयम्।
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत्॥ २१
युक्तात्मनस्ततो मात्रा उद्रिक्ताभूत् प्रजापतेः।
सिसृक्षोर्जघनात् पूर्व्वमसुरा जज्ञिरे ततः॥ २२
उत्ससर्ज्ज ततस्तान्तु तमोमात्रात्मिकां तनूम्।
तमोमात्रा तनूस्त्यक्ता शङ्कराभूद्विभावरी॥ २३
सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः।
सत्त्वोद्रिक्तास्तु मुखतः सम्भूता ब्रह्मणो हर॥ २४
सत्त्वप्राया तनूस्तेन संत्यक्ता साप्यभूद्दिनम्।
ततो हि बलिनो रात्रावसुरा देवता दिवा॥ २५
सत्त्वमात्रां तनूं गृह्य पितरश्च ततोऽभवन्।
सा चोत्सृष्टाभवत् सन्ध्या दिननक्तान्तरस्थिता॥२६
रजोमात्रां तनूं गृह्य मनुष्यास्त्वभवंस्ततः।
सा त्यक्ताचाभवज्ज्योत्स्ना प्राक्सन्ध्या याभिधीयते२७
ज्योत्स्ना रात्र्यहनी सन्ध्या शरीराणि तु तस्य वै।
रजोमात्रां तनूं गृह्य क्षुदभूत् कोप एव च॥ २८
क्षुत्क्षामानसृजद्द्यत्वान्(क)राक्षसान् रक्षणाच्च सः।
यक्षाख्या यक्षणाज्ज्ञेयाः सर्पा वै कीशसर्पणात्॥ २९
जाताः कोपेन भूताद्या गन्धर्व्वा जज्ञिरे ततः।
पिबन्तो जज्ञिरे वाचं गन्धर्व्वास्तेन तेऽनघ॥ ३०
अवयो वक्षसश्चक्रे मुखतोऽजाः स सृष्टवान्।
सृष्टवानुदराद्गाश्च पार्श्वाभ्याञ्च प्रजापतिः॥ ३१
पद्भ्याञ्चाश्वान् समातङ्गान् गर्द्दभोष्ट्रादिकांस्तथा।
ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे॥ ३२
गौरजः पुरुषो मेषः अश्वाश्वतरगर्द्दभाः।
एतान् ग्राम्यान् पशून् प्राहुरारण्यांश्च निबोध मे॥३३
श्वापदं द्विखुरं हस्ति-वानराः पक्षिपञ्चमाः।
औदकाः पशवः षष्ठाः सप्तमाश्च सरीसृपाः॥ ३४
पूर्व्वादिभ्यो मुखेभ्यस्तु ऋग्वेदाद्याः प्रजज्ञिरे।
आस्याद्वै ब्राह्मणा जाता बाहुभ्यां क्षत्रियाः स्मृताः।
ऊरुभ्यान्तु विशः सृष्टाः शूद्रः पद्भ्यामजायत॥ ३५
ब्राह्मो लोको ब्राह्मणानां शाक्रः क्षत्रियजन्मनाम्।
मारुतञ्च विशां स्थानं गान्धर्व्वं शूद्रजन्मनाम्॥ ३६
ब्रह्मचारिव्रतस्थानां ब्रह्मलोकः प्रजायते।
प्राजापत्यं गृहस्थानां यथाविहितकारिणाम्॥ ३७

(क) त्रक्षेति वा पाठः।

स्थानं सप्तर्षीणाञ्च तथैव वनवासिनाम्।
यतीनामक्षयं स्थानं यदृच्छागामिनां सदा ॥ ३८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

हरिरुवाच।

कुलेहासुव संस्थानं प्रजासर्गन्तु मानसम्।
अथासृजत् प्रजाकर्तॄन् मानसांस्तनयान् प्रभुः ॥ १
धर्म्मं रुद्रं मनुञ्चैव सनकं स सनातनम्।
भृगुं सनत्कुमारञ्च रुचिं श्रद्धं तथैव च ॥ २
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
वशिष्ठं नारदञ्चैव पितृन् बर्हिषदस्तथा ॥ ३
अग्निष्वात्तांश्च कव्यादानाज्यपांश्च सुकालिनः।
उपहूतांस्तथा दीप्यांस्त्रयो मूर्त्तिविवर्ज्जिताः ॥ ४
समूर्त्तयश्च चत्वारोऽप्यङ्गुष्ठाद्दक्षमीश्वर।
वामाङ्गुष्ठात् तस्य भार्य्यामसृजत् पद्मसम्भवः ॥ ५
तस्यान्तु जनयामास दक्षो दुहितरः शुभाः।
ददौ ता ब्रह्मपुत्रेभ्यः सतीं रुद्राय दत्तवान्।
रुद्रपुत्रा बभूवुर्हि असंख्याता महाबलाः ॥ ६
भृगवे च ददौ ख्यातिं रूपेणाप्रतिमां शुभाम्।
भृगोर्धाताविधातारौ जनयामास सा शुभा ॥ ७
श्रियञ्च जनयामास पत्नी नारायणस्य या।
तस्यां वै जनयामास बलोन्मादौ हरिः स्वयम् ॥ ८
आयतिर्नियतिश्चैव मनोः कन्ये महात्मनः।
धाताविधात्रोस्ते भार्य्ये तयोर्जातौ सुतावुभौ।
प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ॥ ९
पत्नी मरीचेः सम्भूतिः पौर्णमासमसूयत।
विरजाः सर्व्वगश्चैव तस्य पुत्रा महात्मनः ॥ १०
स्मृतेश्चाङ्गिरसः पुत्राः प्रसूताः कन्यकास्तथा।
सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ॥ ११
अनुसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान्।
सोमं दुर्व्वाससञ्चैव दत्तात्रेयञ्च योगिनम् ॥ १२
प्रीत्यां पुलस्त्यभार्य्यायां दत्तोलिस्तत्सुतोऽभवत्।
कर्म्मणश्चार्थवीरश्च सहिष्णुश्च सुतत्रयम् ॥ १३
क्षमा तु सुषुवे भार्य्या पुलहस्य प्रजापतेः।
क्रतोश्च सन्नतिर्भार्य्या बालिखिल्यानसूयत ॥ १४
षष्टिं यानि सहस्राणि ऋषीणामूर्द्धरेतसाम्।
अङ्गुष्ठपर्व्वमात्राणां ज्वलद्भास्करवर्चसाम् ॥ १५
ऊर्ज्जायान्तु वशिष्ठस्य सप्ताजायन्त वै सुताः।
रजोगात्रोर्द्ध्वबाहुश्च शरणस्थानघस्तथा।
सुतपाः शुक्र इत्येते सर्व्वे सप्तर्षयो मताः ॥ १६
स्वाहां प्रादात् स दक्षोऽपि सशरीराय वह्नये।
तस्मात् स्वाहा सुतान् लेभे त्रीनुदारौजसो हर।
पावकं पवमानञ्च शुचिञ्चापि जलाशिनः ॥ १७
पितृभ्यश्च स्वधा यज्ञे मेनां वैधारणीं तथा।
ते उभे ब्रह्मवादिन्यौ मेनागात् तु हिमाचलम् ॥ १८
ततो ब्रह्मात्मसम्भूतं पूर्व्वं स्वायम्भुवं प्रभुः।
आत्मानमेव कृतवान् प्रजापाल्ये मनुं हर ॥ १९
शतरूपाञ्च तां नारीं तपोनिहतकल्मषाम्।
स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे ततः ॥ २०
तस्माच्च पुरुषाद्देवी शतरूपा व्यजायत।
प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञिते ॥ २१
देवहूतिं मनुस्तासु आकूतिं रुचये ददौ।
प्रसूतिञ्चैव दक्षाय देवहूतिञ्च कर्द्दमे ॥ २२
रुचेर्यज्ञो दक्षिणाभूद्दक्षिणायाञ्च यज्ञतः।
अभवन् द्वादश सुता यामा नाम महाबलाः ॥ २३
चतुर्व्विंशतिकन्याश्च सृष्टवान् दक्ष उत्तमः।
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥२४
बुद्धिर्लज्जा वपुः शान्तिर्ऋद्धिः कीर्त्तिस्त्रयोदशी।
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥ २५
ख्यातिः सत्यथ सम्भूतिः स्मृतिः प्रीतिः क्षमा तथा।
सन्नतिश्चानुसूया च ऊर्ज्जा स्वाहा स्वधा तथा ॥२६
भृगुर्भवो मरीचिश्च तथा चैवाङ्गिरा मुनिः।
पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ॥ २७
अत्रिर्वशिष्ठो वह्निश्च पितरश्च यथाक्रमम्।
ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तमाः ॥ २८
श्रद्धा कामं चला दर्पं नियमं धृतिरात्मजम्।
सन्तोषञ्च तथा तुष्टिर्लोभं पुष्टिरसूयत ॥ २९
मेधा श्रुतं क्रिया दण्डं नयं विनयमेव च।
बोधं बुद्धिस्तथा लज्जा विनयं वपुरात्मजम् ॥ ३०

व्यवसायं प्रजज्ञे वै क्षेमं शान्तिरसूयत ।
सुखमृद्धिर्यशः कीर्त्तिरित्येते धर्म्मसूनवः ॥ ३१
कामस्य च रतिर्भार्य्या तत्पुत्रो हर्ष उच्यते ॥ ३२
ईजे कदाचिद्यज्ञेन हयमेधेन दक्षकः ।
तस्य जामातरः सर्व्वे यज्ञं जग्मुर्निमन्त्रिताः ।
भार्य्याभिः सहिताः सर्व्वे रुद्रं देवीं सतीं विना ॥ ३३
अनाहूता सती प्राप्ता दक्षेणैवावमानिता ।
त्यक्त्वा देहं पुनर्जाता मेनायान्तु हिमालयात् ॥ ३४
शम्भोर्भार्य्याभवद्गौरी तस्यां जज्ञे विनायकः ।
कुमारश्चैव भृङ्गीशः क्रुद्धो रुद्रः प्रतापवान् ॥ ३५
विध्वंस्य यज्ञं दक्षन्तु तं शशाप पिनाकधृक् ।
ध्रुवस्यान्वयसम्भूतो मनुष्यस्त्वं भविष्यसि ॥ ३६

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

हरिरुवाच ।

उत्तानपादादभवत् सुरुच्यामुत्तमः सुतः ।
सुनीत्यान्तु ध्रुवः पुत्रः स लेभे स्थानमुत्तमम् ॥ १
मुनिप्रसादादाराध्य देवदेवं जनार्द्दनम् ।
ध्रुवस्य तनयः श्लिष्टिर्महाबलपराक्रमः ॥ २
तस्य प्राचीनवर्हिस्तु पुत्रस्तस्याप्युदारधीः ।
दिवञ्जयस्तस्य सुतस्तस्य पुत्रो रिपुः स्मृतः ॥ ३
रिपोः पुत्रस्ततः श्रीमांश्चाक्षुषः कीर्त्तितो मनुः ।
रुरुस्तस्य सुतः श्रीमानङ्गस्तस्य तथात्मजः ॥ ४
अङ्गस्य वेणः पुत्रस्तु नास्तिको धर्म्मवर्ज्जितः ।
अधर्म्मकारी वेणश्च मुनिभिश्च कुशैर्हतः ॥ ५
ऊरुं ममन्थः पुत्रार्थं ततोऽस्य तनयोऽभवत् ।
ह्रस्वोऽतिमात्रः कृष्णाङ्गो निषीदेति ततोऽब्रुवन् ।
निषादस्तेन वै जातो विन्ध्यशैलनिवासकः ॥ ६
ततोऽस्य दक्षिणं पाणिं ममन्थुः सहसा द्विजाः ।
तस्मात् तस्य सुतो जातो विष्णोर्मानसरूपधृक् ॥ ७
पृथुरित्येवनामा स वेणः पुत्राद्दिवं ययौ ।
दुदोह पृथिवीं राजा प्रजानां जीवनाय हि ॥ ८
अन्तर्द्धानः पृथोः पुत्रो हविर्द्धानस्तदात्मजः ।
प्राचीनवर्हिस्तत्पुत्रः पृथिव्यामेकराड्बभौ ॥ ९
उपयेमे समुद्रस्य लवणस्य स वै सुताम् ।
तस्मात् सुषाव सामुद्री दश प्राचीनवर्हिषः ॥ १०
सर्व्वे प्रचेतसो नाम धनुर्व्वेदस्य पारगाः ।
अपृथग्धर्म्मचरणास्तेऽतप्यन्त महत् तपः ॥ ११
दश वर्षसहस्राणि समुद्रसलिलेशयाः ।
प्रजापतित्वं सम्प्राप्य भार्य्या तेषाञ्च मारिषा ॥ १२
अभवद्भवशापेन तस्यां दक्षोऽभवत् ततः ।
असृजन्मनसा दक्षः प्रजाः पूर्व्वं चतुर्व्विधाः ॥ १३
नावर्द्धन्त च तास्तस्य अपध्याता हरेण तु ।
मैथुनेन ततः सृष्टिं कर्त्तुमैच्छत् प्रजापतिः ॥ १४
असिक्नीमावहद्भार्य्यां वीरणस्य प्रजापतेः ।
तस्य पुत्रसहस्रन्तु वैरण्यां समपद्यत ॥ १५
नारदोक्ता भुवश्चान्तं गता न्यातुञ्च नागताः ।
दक्षः पुत्रसहस्रञ्च तेषु नष्टेषु सृष्टवान् ॥ १६
शवलाश्वास्तेऽपि गता भ्रातॄणां पदवीं हर ।
दक्षः क्रुद्धः शशापाथ नारदं जन्म चाप्स्यसि ॥ १७
नारदो ह्यभवत् पुत्रः कश्यपस्य मुनेः पुनः ।
यज्ञे ध्वस्तेऽथ दक्षोऽपि शशापोग्रं महेश्वरम् ॥ १८
यष्ट्वा लाभमुपचारेश्च अपसच्छन्ति हि द्विजाः ।
जन्मान्तरेऽपि वैराणि न विनश्यन्ति शङ्कर ॥ १९
असिक्न्यां जनयामास दक्षो दुहितरो ह्यथ ।
षष्टिः कन्या रूपयुता द्वे चैवाङ्गिरसे ददौ ॥ २०
द्वे प्रादात् स कृशाश्वाय दश धर्म्माय चाप्यथ ।
त्रयोदश कश्यपाय सप्तविंशत् तथेन्दवे ॥ २१
प्रददौ बहुपुत्राय सुप्रभां भामिनीं तथा ॥ २२
मनोरमां भानुमतीं विशालां बहुदामथ ।
दक्षः प्रादान्महादेव चतस्रोऽरिष्टनेमिने ॥ २३
स कृशाश्वाय च प्रादात् सुप्रजाञ्च तथा जयाम् ।
अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती ॥ २४
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च ता दश ।
धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् ॥ २५
अदितिर्दितिर्दनुः काला दनायुः(क)सिंहिका मुनिः
कद्रुः प्राधा इरा क्रोधा विनता सुरभिः खगा ॥ २६
विश्वे देवास्तु विश्वायाः साध्या साध्यान् व्यजायत ।

(क) स्वनायुरिति क्वचित् पाठः ।

मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवस्तथा ॥ २७
भानोस्तु भानवो रुद्र मुहूर्त्ताश्च मुहूर्त्तजाः।
लम्बायाश्चैव घोषोऽथ नागवीथी तु यामितः॥ २८
पृथिवीविषयं सर्व्वमरुन्धत्यां व्यजायत।
सङ्कल्पायास्तु सर्व्वात्मा जज्ञे सङ्कल्प एव हि ॥२९
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः॥ ३०
आपस्य पुत्त्रो वैतुण्ड्यः श्रमः श्रान्तोऽध्वनिस्तथा।
ध्रुवस्य पुत्त्रो भगवान् कालो लोकस्य कालनः॥३१
सोमस्य भगवान् वर्च्चा वर्च्चस्वी येन जायते।
धरस्य पुत्त्रो द्रुहिणो हुतहव्यवहस्तथा॥ ३२
मनोहरायां शिशिरः प्राणोऽथ रमणस्तथा।
अनिलस्य शिवा भार्य्या तस्याः पुत्त्रः पुलोमजः॥३३
अविज्ञातगतिश्चैव द्वौ पुत्त्रावनिलस्य तु।
अग्निपुत्त्रः कुमारस्तु शरस्तम्बे व्यजायत॥ ३४
तस्य शाखो विशाखश्च नैगमेयश्च (क) पृष्ठजः।
अपत्यं कृत्तिकानान्तु कार्त्तिकेय इति स्मृतः॥ ३५
प्रत्यूषस्य विदुः पुत्त्रमृषिं नाम्ना तु देवलम्।
विश्वकर्म्मा प्रभासस्य विख्यातो देववर्द्धकिः॥ ३६
अजैकपादहिर्ब्रध्नस्त्वष्टा रुद्रश्च वीर्य्यवान्।
त्वष्टुश्चाप्यात्मजः पुत्त्रो विश्वरूपो महातपाः॥ ३७
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः।
वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा॥ ३८
मृगव्याधश्च शर्व्वश्च कपाली च महामुने।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः॥ ३९
सप्तविंशति सोमस्य पत्न्यो नक्षत्रसंज्ञिताः॥ ४०
अदित्यां कश्यपाच्चैव सूर्य्या द्वादश जज्ञिरे।
विष्णुः शक्रोऽर्य्यमा धाता त्वष्टा पूषा तथैव च॥ ४१
विवस्वान् सविता चैव मित्रो वरुण एव च।
अंशुमांश्च भगश्चैव आदित्या द्वादश स्मृताः॥ ४२
हिरण्यकशिपुर्दित्यां हिरण्याक्षोऽभवत् तथा।
सिंहिका चाभवत् कन्या विप्रचित्तिपरिग्रहः॥ ४३
हिरण्यकशिपोः पुत्त्राश्चत्वारः पृथुलौजसः।
अनुह्रादश्च ह्रादश्च प्रह्लादश्चैव वीर्य्यवान्।
संह्रादश्चाभवत् तेषां प्रह्लादो विष्णुतत्परः॥ ४४

(क) नैगमेशश्चेति पाठान्तरम्।

संह्रादपुत्त्र आयुष्मान् शिविर्वाष्कल एव च।
विरोचनश्च प्राह्लादिर्बलिर्जज्ञे विरोचनात्।
बलेः पुत्त्रशतन्त्वासीद्बाणज्येष्ठं वृषध्वज॥ ४५
हिरण्याक्षसुताश्चासन् सर्व्वे एव महाबलाः।
उत्कुरः शकुनिश्चैव भूतसन्तापनस्तथा।
महानाभो महाबाहुः कालनाभस्तथापरः॥ ४६
अभवन् दनुपुत्त्राश्च द्विमूर्द्धा शङ्करस्तथा।
अयोमुखः शङ्कुशिराः कपिलः शम्बरस्तथा॥ ४७
एकचक्रो महाबाहुस्तारकश्च महाबलः।
स्वर्भानुर्वृषपर्व्वा च पुलोमा च महासुरः॥ ४८
एते दनोः सुताः ख्याता विप्रचित्तिश्च वीर्य्यवान्॥ ४९
स्वर्भानोः सुप्रभा कन्या शर्म्मिष्ठा वार्षपर्व्वणी।
औपदानवी हयशिराः प्रख्याता वरकन्यकाः॥ ५०
वैश्वानरसुते चोभे पुलोमा कालका तथा।
उभे ते तु महाभागे मारीचेस्तु परिग्रहः॥ ५१
ताभ्यां पुत्त्रसहस्राणि षष्टिर्दानवसत्तमाः।
पौलोमाः कालकञ्जाश्च मारीचतनयाः स्मृताः॥ ५२
सिंहिकायां समुत्पन्ना विप्रचित्तिसुतास्तथा।
व्यंशः शल्यश्च बलवान् नभश्चैव महाबलः॥ ५३
वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा।
अञ्जको नरकश्चैव कालनाभस्तथैव च।
निवातकवचा दैत्याः प्रह्लादस्य कुलेऽभवन्॥ ५४
षट्सुताश्च महासत्त्वास्ताम्रायाः परिकीर्त्तिताः।
शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका॥ ५५
शुकी शुकानजनयदुलूकी प्रत्युलूककान्।
श्येनी श्येनांस्तथा भासी भासान् गृध्रांश्च गृध्र्यपि॥ ५६
शुच्यौदकान् पक्षिगणान् सुग्रीवी तु व्यजायत।
अश्वानुष्ट्रान् गर्द्दभांश्च ताम्रावंशः प्रकीर्त्तितः॥ ५७
विनतायास्तु पुत्त्रौ द्वौ विख्यातौ गरुड़ारुणौ।
सुरसायाः सहस्रन्तु सर्पाणाममितौजसाम्॥ ५८
काद्रवेयाश्च फणिनः सहस्रममितौजसः।
तेषां प्रधानं भूतेश शेष-वासुकि-तक्षकाः॥ ५९
शङ्खः श्वेतो महापद्मः कम्बलाश्वतरौ तथा।
एलापत्रस्तथा नागः कर्कोटक-धनञ्जयौ।
गणं क्रोधवशं विद्धि ते च सर्व्वे च दंष्ट्रिणः॥ ६०
क्रोधा तु जनयामास पिशाचांश्च महाबलान्।

गास्तु वै जनयामास सुरभिर्महिषांस्तथा ॥ ६१
इरा वृक्ष-लता-वल्लीस्तृणजातीश्च सर्व्वशः।
खगा च यक्ष-रक्षांसि मुनिरप्सरसस्तथा।
अरिष्टा तु महासत्त्वान् गन्धर्व्वान् समजीजनत् ॥ ६२
देवा एकोनपञ्चाशन्मरुतो ह्यभवन्निति।
एकज्योतिर्द्विज्योतिश्च त्रिचतुर्ज्योतिरेव च ॥ ६३
एकशुक्रो द्विशुक्रश्च त्रिशुक्रश्च महाबलः।
ईदृक् चान्यादृक् सदृक् च ततः प्रतिसदृक् तथा ॥ ६४
मितश्च समितश्चैव सुमितश्च महाबलः।
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित् तथा ॥ ६५
अतिमित्रोऽप्यमित्रश्च दूरमित्रोऽजित् ततः।
ऋतश्च ऋतधर्म्मा च विहर्त्ता वरुणो ध्रुवः ॥ ६६
विधारणश्चतुर्थोऽयं गणमेकगणः स्मृतः।
ईदृक्षश्च सदृक्षश्च एतादृक्षो मिताशनः ॥ ६७
एतनः प्रसदृक्षश्च ऋषभश्च महायशाः।
तादृगुग्रो ध्वनिर्भासो विमुक्तो विक्षिपः सहः ॥ ६८
द्युतिर्वसुरनाधृष्यो लाभः कामो जयी विराट्।
उद्देषणो गणो नाम वायुस्कन्धे तु सप्तमे ॥ ६९
एते सर्व्वे हरेरूपं राजानो दानवाः सुराः।
सूर्य्यादिपरिवारेण मन्वाद्या ईजिरे हरिम् ॥ ७०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे षष्ठोऽध्यायः।

---

## सप्तमोऽध्यायः।

रुद्र उवाच।

सूर्य्यादिपूजनं ब्रूहि स्वायम्भुवादिभिः कृतम्।
भुक्तिमुक्तिप्रदं सारं व्यास-संक्षेपतः परम् ॥ १

हरिरुवाच।

सूर्य्यादिपूजां वक्ष्यामि धर्म्मकामादिकारिकाम् ॥ २

ओं सूर्य्यासनाय नमः। ओं नमः सूर्य्यमूर्त्तये। ओं ह्रां ह्रीं सः सूर्य्याय नमः। ओं सोमाय नमः। ओं मङ्गलाय नमः। ओं बुधाय नमः। ओं बृहस्पतये नमः। ओं शुक्राय नमः। ओं शनैश्चराय नमः। ओं राहवे नमः। ओं केतवे नमः। ओं तेजश्चण्डाय नमः इति ॥ ३

आसनावाहनं पाद्यमर्घ्यमाचमनं तथा।
स्नानं वस्त्रोपवीतञ्च गन्धपुष्पञ्च धूपकम् ॥ ४
दीपकञ्च नमस्कारं प्रदक्षिणविसर्ज्जने।
सूर्य्यादीनां सदा कुर्य्यादिति मन्त्रैर्वृषध्वज ॥ ५

ओं हां शिवासनाय नमः। ओं हां शिवमूर्त्तये नमः। ओं हां हृदयाय नमः। ओं ह्रीं शिरसे नमः। ओं हूं शिखायै नमः। ओं हैं कवचाय नमः। ओं ह्रौं नेत्रत्रयाय नमः। ओं हः अस्त्राय नमः। ओं हां सद्योजाताय नमः। ओं ह्रीं वामदेवाय नमः। ओं हूं अघोराय नमः। ओं हैं तत्पुरुषाय नमः। ओं ह्रौं ईशानाय नमः। ओं हां गौर्य्यै नमः। ओं हां गुरुभ्यो नमः। ओं हां इन्द्रादिभ्यो नमः। ओं हां चण्डाय नमः। (क) ओं वासुदेवाय नमः। ओं वासुदेवमूर्त्तये नमः। ओं अं ओं नमो भगवते वासुदेवाय नमः। ओं आं ओं नमो भगवते सङ्कर्षणाय नमः। ओं अं ओं नमो भगवते प्रद्युम्नाय नमः। ओं अः ओं नमो भगवते अनिरुद्धाय नमः। ओं ओं नारायणाय नमः। ओं तत्सद्ब्रह्मणे नमः। ओं हूं विष्णवे नमः। ओं क्ष्रौं नमो भगवते नरसिंहाय नमः। ओं भूः ओं नमो भगवते वराहाय नमः। ओं कं टं पं शं वैनतेयाय नमः। ओं जं खं वं सुदर्शनाय नमः। ओं खं ठं फं षं गदायै नमः। ओं वं लं मं क्षं पाञ्चजन्याय नमः। ओं घं ढं भं हं श्रियै नमः। ओं गं डं वं सं पुष्ट्यै नमः। ओं धं षं वं सं वनमालायै नमः। ओं सं दं लं श्रीवत्साय नमः। ओं ठं चं भं यं कौस्तुभाय नमः। ओं गुरुभ्यो नमः। ओं इन्द्रादिभ्यो नमः। ओं विष्वक्सेनाय नमः ॥ ६

आसनादीन् हरेरेतैर्मन्त्रैर्दद्याद्वृषध्वज।
विष्णुशक्त्याः सरस्वत्याः पूजां शृणु शुभप्रदाम् ॥ ७

ओं ह्रीं सरस्वत्यै नमः। ओं ह्रां हृदयाय नमः। ओं ह्रीं शिरसे नमः। ओं ह्रूं शिखायै नमः। ओं ह्रैं कवचाय नमः। ओं ह्रौं नेत्रत्रयाय नमः। ओं ह्रः अस्त्राय नमः ॥ ८

---

(क) इतः परं—ओं हां अघोराय नम इत्यधिकं क्वचित्।

श्रद्धा ऋद्धिः कला मेधा तुष्टिः पुष्टिः प्रभा मतिः।
ओङ्काराद्या नमोऽन्ताश्च सरस्वत्याश्च शक्तयः॥ ८
ओँ क्षेत्रपालाय नमः। ओँ गुरुभ्यो नमः।
ओँ परमगुरुभ्यो नमः॥ ८
पद्मस्थायाः सरस्वत्या आसनाद्यं प्रकल्पयेत्।
सूर्य्यादीनां स्वकैर्मन्त्रैः पवित्रारोहणं तथा॥ १०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः।

हरिरुवाच।

भूमिष्ठे मण्डपे स्नात्वा मण्डले विष्णुमर्च्चयेत्।
पञ्चरङ्गिकचूर्णेन वचनाभन्तु मण्डलम्॥ १
षोड़शैः कोष्ठकैस्तत्र सम्मितं रुद्र कारयेत्।
चतुर्थपञ्चकोणेषु सूत्रपातन्तु कारयेत्॥ २
कोणसूत्रादुभयतः कोणा ये तत्र संस्थिताः।
तेषु चैव प्रकुर्व्वीत सूत्रपातं विचक्षणः॥ ३
तदनन्तरकोणेषु एवमेव हि कारयेत्।
प्रथमा नाभिरुद्दिष्टा मध्ये रेखाप्रसङ्गमे॥ ४
अन्तरेषु च सर्व्वेषु अष्टौ चैव तु नाभयः।
पूर्व्वमध्यमनाभिभ्यामथ सूत्रन्तु भ्रामयेत्॥ ५
अन्तरेषु द्विजश्रेष्ठः पादोनं भ्रामयेद्धर।
अनेन नाभिसूत्रस्य कर्णिकां भ्रामयेच्छिव॥ ६
कर्णिकाया द्विभागेन केशराणि विचक्षणः।
तदग्रेण सदा विद्वान् दलान्येव समालिखेत्॥ ७
सर्व्वेषु नाभिक्षेत्रेषु मानेनानेन सुव्रत।
पद्मानि तानि कुर्व्वीत देशिकः परमार्थवित्॥ ८
आदिसूत्रविभागेन द्वाराणि परिकल्पयेत्।
द्वारशोभां तथा तत्र तदर्द्धेन तु कल्पयेत्॥ ९
कर्णिकां पीतवर्णेन सितरक्तादिकेशरान्।
अन्तरं नीलवर्णेन दलानि असितेन च॥ १०
कृष्णवर्णेन रजसा चतुरस्रं प्रपूरयेत्।
द्वाराणि शुक्लवर्णेन रेखाः पञ्च च मण्डले॥ ११
सिता रक्ता तथा पीता कृष्णा चैव यथाक्रमम्।
कृत्वैव मण्डलञ्चादौ न्यासं तत्रार्च्चयेद्धरिम्॥ १२
हृन्मध्ये तु न्यसेद्विष्णुं कण्ठे सङ्कर्षणं तथा।
प्रद्युम्नं शिरसि न्यस्य शिखायामनिरुद्धकम्॥ १३
ब्रह्माणं सर्व्वगात्रेषु करयोः श्रीधरं तथा।
अहं विष्णुरिति ध्यात्वा कर्णिकायां न्यसेद्धरिम्॥ १४
न्यसेत् सङ्कर्षणं पूर्व्वे प्रद्युम्नञ्चैव दक्षिणे।
अनिरुद्धं पश्चिमे च ब्रह्माणञ्चोत्तरे न्यसेत्॥ १५
श्रीधरं रुद्रकोणेषु इन्द्रादीन् दिक्षु विन्यसेत्।
ततोऽभ्यर्च्च्य च गन्धाद्यैः प्राप्नुयात् परमं पदम्॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
अष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

हरिरुवाच।

समयी दीक्षितः शिष्यो बद्धनेत्रस्तु वाससा।
अष्टाहुतिशतं तस्य मूलमन्त्रेण होमयेत्॥ १
द्विगुणं पुत्त्रके होमं त्रिगुणं साधके मतम्।
निर्व्वाणदेशिके रुद्र चतुर्गुणमुदाहृतम्।
गुरु-विष्णु-द्विज-स्त्रीणां हन्ता वर्ज्ज्यश्च दीक्षिते॥ २
अथ दीक्षां प्रवक्ष्यामि धर्म्माधर्म्मक्षयङ्करीम्।
उपवेश्य बहिः शिष्यान् धारणां तेषु कारयेत्॥ ३
वायव्या कलया रुद्र शोष्यमाणान् विचिन्तयेत्।
आग्नेय्या दह्यमानांश्च प्लावितानम्भसा पुनः॥ ४
तेजस्तेजसि तं जीवमेकीकृत्य समाक्षिपेत्।
प्रणवं चिन्तयेद्व्योम्नि शरीरेऽन्यत् तु कारणम्॥ ५
एकैकं योजयेत् तत्र चैतन्यं देहधारणात्।
उत्पाद्यं योजयेत् पश्चादेकैकं वृषभध्वज॥ ६
मण्डलादिष्वशक्तास्तु कल्पयित्वार्च्चयेद्धरिम्।
चतुर्द्वारं भवेत् तच्च ब्रह्मतीर्थादनुक्रमात्॥ ७
हस्तं पद्मं समाख्यातं पत्राण्यङ्गुलयः स्मृताः।
कर्णिकातलहस्तन्तु नखान्यस्य तु केशराः॥ ८
तत्रार्च्चयेद्धरिं ध्यात्वा सूर्य्येन्द्वग्न्यन्तरेव च।
तं हस्तं पातयेन्मूर्द्ध्नि शिष्यस्य तु समाहितः॥ ९
हस्ते विष्णुः स्थितो यस्माद्विष्णुहस्तस्ततस्त्वयम्।
नश्यन्ति स्पर्शनात् तस्य पातकान्यखिलानि च॥ १०
गुरुः शिष्यं समभ्यर्च्च्य नेत्रे बद्ध्वे तु वाससा।

देवस्य प्रमुखं कृत्वा पुष्पाणि मोचयेत् ततः ।
पुष्पं निपतितं यत्र मूर्द्धा देवस्य शार्ङ्गिणः ॥ ११
तन्नाम कारयेत् तस्य स्त्रीणां नामाङ्कितं स्वकम् ।
शूद्राणां दाससंयुक्तं कारयेत् तु विचक्षणः ॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

हरिरुवाच ।

देवीपूजां प्रवक्ष्यामि स्थण्डिलादिषु सिद्धये ॥ १
ओँ श्रीँ महालक्ष्म्यै नमः ॥ २
आं श्रीं श्रूं श्रैं श्रौं श्रः क्रमाद्धृदयञ्च शिरः शिखाम् ।
कवचं नेत्रमन्त्रञ्च आसनं मूर्त्तिमर्च्चयेत् ॥ ३
मण्डले पद्मगर्भे च चतुर्द्वारि रजोऽन्विते ।
चतुःषष्ठ्यन्तमष्टादि खाक्षिखान्यादिमण्डलम् ।
खौक्षीन्दुसूर्य्यगं सर्व्वं खादिवेदेन्दुवर्त्तनात् ॥ ४
लक्ष्मीमङ्गानि चैकस्मिन् कोणे दुर्गां गणं गुरुम् ।
क्षेत्रपालमथाग्न्यादौ होमाज्जुहाव कामभाक् ॥ ५
ओँ घं टं भं हं श्रीँ महालक्ष्म्यै नमः ॥ ६
अनेन पूजयेल्लक्ष्मीं पूर्व्वोक्तपरिवारकैः ॥ ७
ओँ सौं सरस्वत्यै नमः । ओँ श्रीँ सौं सरस्वत्यै नमः । ओँ ह्रीँ वद वद वाग्वादिनि स्वाहा । ओँ ह्रीँ सरस्वत्यै नमः ॥ ८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

हरिरुवाच ।

नवव्यूहार्च्चनं वक्ष्ये यदुक्तं कपिलाय हि ।
जीवमुत्पाद्य मूर्द्धानं नीत्वा व्योम्नि निवेशयेत् ॥१
ततो रमिति वीजेन दहेद्भूतात्मकं वपुः ।
यमित्यनेन वीजेन तच्च सर्व्वं विनाशयेत् ॥ २
लमित्यनेन वीजेन प्लावयेत् सचराचरम् ।
वमित्यनेन वीजेन चिन्तयेदमृतं ततः ॥ ३
ततो बुद्बुदमध्ये तु पीतवासाश्चतुर्भुजः ।
अहं मतस्तथात्मानं ध्यानेन परिचिन्तयेत् ॥ ४
मन्त्रन्यासं ततः कुर्य्यात् त्रिविधं करदेहयोः ।
द्वादशाक्षरवीजेन उक्तवीजैरनन्तरम् ।
षड़ङ्गेन ततः कुर्य्यात् साक्षाद्देवेन हरिर्भवेत् ॥५
दक्षिणाङ्गुष्ठमारभ्य मध्याङ्गुष्ठं दले न्यसेत् ।
मध्ये वीजद्वयं न्यस्य न्यसेदङ्गे ततः पुनः ॥ ६
हृच्छिरसि शिखा-वर्म्म-वक्त्राच्युदर-पृष्ठतः ।
बाह्वोश्च करयोर्जान्वोः पादयोश्चापि विन्यसेत् ॥ ७
पद्माकारौ करौ कृत्वा मध्येऽङ्गुष्ठं निवेशयेत् ।
चिन्तयेत् तत्र सर्व्वेशं परं तत्त्वमनामयम् ॥ ८
क्रमाच्चैतानि वीजानि तर्ज्जन्यादिषु विन्यसेत् ।
ततो मूर्द्धाक्षिवक्त्रेषु कण्ठेषु हृदये तथा ।
नाभौ गुह्ये तथा जान्वोः पादयोर्विन्यसेत् क्रमात्॥९
पाण्योः षड़ङ्गवीजानि न्यस्य काये ततो न्यसेत् ।
अङ्गुष्ठादि-कनिष्ठान्तं विन्यसेद्वीजपञ्चकम् ॥ १०
करमध्ये नेत्रवीजमङ्गन्यासेऽप्ययं क्रमः ।
हृदये हृदयं न्यस्य शिरः शिरसि विन्यसेत् ॥ ११
शिखायान्तु शिखां न्यस्य कवचं सर्व्वतस्तनौ ।
नेत्रे नेत्रे विधातव्ये अस्त्रञ्च करयोर्द्वयोः ॥ १२
तेनैव च दिशो बद्ध्वा पूजाविधिमथारभेत् ।
हृदये चिन्तयेत् पूर्व्वं योगपीठं समाहितः ॥ १३
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यञ्च यथाक्रमम् ।
आग्नेयादौ च पूर्व्वादावधर्म्मादींश्च विन्यसेत् ॥ १४
एभिः परिच्छन्नतनूं पीठभूतं तदात्मकम् ।
अनन्तं विन्यसेत् पश्चात् पूर्व्वकायोन्नतं स्थितम् ॥१५
ततो विद्यासरोजातं दलाष्टसमदिग्दलम् ।
सिताङ्गं शतपत्राढ्यं विप्रकीर्णोर्द्धकर्णिकम् ॥ १६
ध्यात्वा वेदादिना पश्चात् सूर्य्यसोमानलात्मनाम् ।
मण्डलानि क्रमादेवमुपर्य्युपरि चिन्तयेत् ॥ १७
ततः पूर्व्वादिदिक्संस्थाः शक्तीः केशवगोचराः ।
विमलाद्या न्यसेदष्टौ नवमीं कर्णिकागताम् ॥ १८
एवं ध्यात्वा समभ्यर्च्च्य योगपीठमनन्तरम् ।
मनसावाह्य तत्रेशं हरिं शार्ङ्गं न्यसेत् पुनः ॥ १९
हृदयादीनि पूर्व्वादिचतुर्द्दिग्दलयोगतः ।
मध्ये नेत्रन्तु कोणेषु अस्त्रमन्त्रं न्यसेत् ततः ॥ २०

सङ्कर्षणादिवीजानि पूर्व्वादिक्रमयोगतः ।
द्वारि पूर्व्वे परे चैव नैनतेयन्तु विन्यसेत् ॥ २१
सुदर्शनं सहस्रारं दक्षिणे द्वारि विन्यसेत् ।
श्रियं दक्षिणतो न्यस्य लक्ष्मीमुत्तरतस्तथा ॥ २२
द्वार्य्युत्तरे गदां न्यस्य शङ्खं कोणेषु विन्यसेत् ।
देवदक्षिणतः शार्ङ्गं वामे चैव सुधीर्न्यसेत् ॥ २३
तद्वत् खड्गं तथा चर्म्म न्यसेत् पार्श्वद्वये द्वयम् ।
ततोऽन्तर्लोकपालांश्च स्वदिग्भेदेन विन्यसेत् ॥ २४
वज्रादीनायुधांश्चैव तथैव विनिवेशयेत् ।
ऊर्द्ध्वं ब्रह्म तथानन्तमधश्च परिचिन्तयेत् ॥ २५
सर्व्वं ध्यात्वेति सम्पूज्य मुद्राः सन्दर्शयेत् ततः ।
अञ्जलिः प्रथमा मुद्रा क्षिप्रं देवप्रसादनी ॥ २६
वन्दनी हृदयासक्ता सार्द्धं दक्षिणतोन्नता ।
ऊर्द्ध्वाङ्गुष्ठो वाममुष्टिर्दक्षिणाङ्गुष्ठबन्धनः ॥ २७
सव्यस्य तस्य चाङ्गुष्ठो यः स ऊर्द्धः प्रकीर्त्तितः ।
तिस्रः साधारणा ह्येता मूर्त्तिभेदेन कल्पिताः ॥२८
कनिष्ठादिप्रयोगेण अष्टौ मुद्रा यथाक्रमम् ।
अष्टानां पूर्व्ववीजानां क्रमशस्त्ववधारयेत् ॥ २९
अङ्गुष्ठेन कनिष्ठान्तं नमयित्वाङ्गुलित्रयम् ।
मुद्रेयं नरसिंहस्य न्युब्जं कृत्वा करद्वयम् ॥ ३०
सव्यहस्तं तथोत्तानं कृत्वोर्द्ध्वं भ्रामयेच्छनैः ।
नवमीयं स्मृता मुद्रा वाराहीति मता सदा ॥ ३१
मुष्टिद्वयमथोत्तानमन्व्येकैकेन मोचयेत् ।
कुञ्चयेत् सर्व्वमुद्राश्च अङ्गमुद्रेयमुच्यते ॥ ३२
मुष्टिद्वयमथो बद्ध्वा एवमेवानुपूर्व्वशः ।
दशानां लोकपालानां मुद्राश्च क्रमयोगतः ॥ ३३
स्वरमाद्यं द्वितीयञ्च उपान्त्यञ्चान्त मेव च ।
वासुदेवो बलः कामो ह्यनिरुद्धो यथाक्रमम् ॥ ३४
प्रणवस्तत्सदित्येतत् हूं क्ष्रौं भूरिति मन्त्रकाः ।
नारायणस्तथा ब्रह्मा विष्णुः सिंहो वराहराट्॥३५
सितारुणहरिद्राभा नीलश्यामललोहिताः ।
मेघाग्निमधुपिङ्गाभा वर्णतो नवनामकाः ॥ ३६
कं टं जं शं गरुत्मान् स्याज्जं खं वज्र सुदर्शनम् ।
खं चं फं षं गदा देवी व्रं लं मं चञ्च शङ्खकम् ॥ ३७
गं ढं वं भं चं भवेच्छ्रीश गं डं वं शश्च पुष्टिका ।
धं वञ्च वनमाला स्यात् श्रीवत्सं दं शं भवेत् ॥ ३८
छं डं यं कौस्तुभः प्रोक्तश्चानन्तो ह्यहमेव च ।
इत्यङ्गानि यथायोगं देवदेवस्य वै दश ॥ ३९
गरुड़ोऽम्बुजसङ्काशो गदा चैवासिताकृतिः ।
पुष्टिः शिरीषपुष्पाभा लक्ष्मीः काञ्चनसन्निभा ॥ ४०
पूर्णचन्द्रनिभः शङ्खः कौस्तुभस्त्वरुणद्युतिः ।
चक्रं सूर्य्यसहस्राभं श्रीवत्सः कुन्दसन्निभः ।
पञ्चवर्णनिभा माला ह्यनन्तो मेघसन्निभः ॥ ४१
विद्युद्रूपाणि चास्त्राणि यानि नोक्तानि वर्णतः ।
अर्घ्यपाद्यादि वै दद्यात् पुण्डरीकाक्षविद्यया ॥ ४२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
एकादशोऽध्यायः ॥११॥

---

## द्वादशोऽध्यायः ।

हरिरुवाच ।

पूजानुक्रमसिद्ध्यर्थं पूजानुक्रम उच्यते ।
ओँ नम इत्याद्यो परमात्मानुसंस्मृतिः ॥ १

यं वं लं रमिति कायशुद्धिः । ओँ नमः इति चतुर्भुजात्मकाय निर्म्माणम् । ततस्त्रिविधाकारकायविन्यासः । ततो हृदिस्थयोगपीठपूजा ॥ २

ओँ अनन्ताय नमः । ओँ धर्म्माय नमः । ओँ ज्ञानाय नमः । ओँ वैराग्याय नमः । ओँ ऐश्वर्य्याय नमः । ओँ अधर्म्माय नमः । ओँ अज्ञानाय नमः । ओँ अवैराग्याय नमः । ओँ अनैश्वर्य्याय नमः । ओँ पद्माय नमः । ओँ आदित्यमण्डलाय नमः । ओँ चन्द्रमण्डलाय नमः । ओँ वह्निमण्डलाय नमः । ओँ विमलायै नमः । ओँ उत्कर्षिण्यै नमः । ओँ ज्ञानायै नमः । ओँ क्रियायै नमः । ओँ अज्ञानायै नमः । ओँ अक्रियायै नमः । ओँ योगायै नमः । ओँ प्रह्व्यै नमः । ओँ सत्यायै नमः । ओँ ईशानायै नमः । ओँ सर्व्वतोमुख्यै नमः । ओँ साङ्गोपाङ्गाय हरेरासनाय नमः । ततः कर्णिकायां अं वासुदेवाय नमः । आं हृदयाय नमः । ईं शिरसे नमः । ऊं शिखायै नमः । ऐं कवचाय नमः । औं नेत्राभ्यां नमः । अः फट्

अस्त्राय नमः। ओं आं सङ्कर्षणाय नमः। ओं अं प्रद्युम्नाय नमः। ओं अः अनिरुद्धाय नमः। ओं ओं नारायणाय नमः। ओं तत्सद्ब्रह्मणे नमः। ओं ह्रूं विष्णवे नमः। क्ष्रौं नरसिंहाय। भूर्वराहाय। कं टं जं शं वैनतेयाय। जं खं वं सुदर्शनाय। खं चं फं षं गदायै। वं लं मं क्षं पाञ्चजन्याय। घं ढं भं हं श्रियै। गं ढं वं शं पुष्ट्यै। धं वं वनमालायै। दं शं श्रीवत्साय। छं डं यं कौस्तुभाय। शं शार्ङ्गाय। इं इषुधिभ्यां। चं चर्म्मणे। खं खड्गाय। लं इन्द्राय सुराधिपतये। रं अग्नये तेजोऽधिपतये। यं यमाय धर्म्माधिपतये। क्षां नैर्ऋताय रक्षोऽधिपतये। वं वरुणाय जलाधिपतये। यं वायवे प्राणाधिपतये। धां धनदाय धनाधिपतये। हां ईशानाय विद्याधिपतये। ओं वज्राय। ओं शक्त्यै। ओं दण्डाय। ओं खड्गाय। ओं पाशाय। ओं ध्वजाय। ओं गदायै। ओं त्रिशूलाय। लं अनन्ताय पातालाधिपतये। खं ब्रह्मणे सर्व्वलोकाधिपतये। ओं नमो भगवते वासुदेवाय नमः। ओं ओं नमः। ओं नं नमः। ओं मों नमः। ओं भं नमः। ओं गं नमः। ओं वं नमः। ओं तें नमः। ओं वां नमः। ओं सुं नमः। ओं दें नमः। ओं वां नमः। ओं यं नमः। ओं ओं नमः। ओं नं नमः। ओं मों नमः। ओं नां नमः। ओं रां नमः। ओं यं नमः। ओं णां नमः। ओं यं नमः। ओं नमो नारायणाय। ओं नमः पुरुषोत्तमाय नमः॥ ३

नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन।
सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्व्वज॥ ४
होमकर्म्मणि चैतेषां स्वाहान्तमुपकल्पयेत्॥ ५
एवं जप्त्वा विधानेन शतमष्टोत्तरं तथा।
अर्घं दत्त्वा जितं तेन प्रणामञ्च पुनः पुनः॥ ६
ततोऽग्नावपि सम्पूज्य तं यजेत यथाविधि।
देवदेवं स्वबीजेन अङ्गादिभिरथाच्युतम्॥ ७
पूर्व्वमुद्दीप्य चाभ्युक्ष्य प्रणवेन तु मन्त्रवित्।
भ्रामयित्वानलं कुण्डे पूजयेच्च शुभैः फलैः॥ ८
पूर्व्वं तत् सकलं ध्यात्वा मण्डले मनसा न्यसेत्।
वासुदेवाख्यतत्त्वेन हुत्वा चाष्टोत्तरं शतम्॥ ९
सङ्कर्षणादिबीजेन यजेत् षट्कं तथैव च।
त्र्यं त्र्यं तथाङ्गानामेकैकं दिक्पतींस्तथा॥ १०
पूर्णाहुतिं तथैवान्ते दद्यात् सम्यगुपस्थितः।
वागतीते परे तत्त्वे आत्मानञ्च लयं नयेत्॥ ११
उपविश्य पुनर्मुद्रां दर्शयित्वा नमेत् पुनः।
नित्यमेवंविधं होमं नैमित्तं द्विगुणं भवेत्॥ १२
गच्छ गच्छ परं स्थानं यत्र देवो निरञ्जनः।
गच्छन्तु देवताः सर्व्वाः स्वस्थानस्थितिहेतवे॥ १३
सुदर्शनः श्रीहरिश्च अच्युतः सत्रिविक्रमः।
चतुर्भुजो वासुदेवः षष्ठः प्रद्युम्न एव च॥ १४
सङ्कर्षणः पुरुषोऽथ नवव्यूहो दशात्मकः।
अनिरुद्धो द्वादशात्मा अत ऊर्द्ध्वमनन्तकः॥ १५
एते एकादिभिश्चक्रैर्विज्ञेया लक्षिताः सुराः।
चक्राङ्कितैः पूजितैः स्याद्रक्षकाः सदा नरैः॥ १६
ओं चक्राय स्वाहा। ओं विचक्राय स्वाहा।
ओं सुचक्राय स्वाहा। ओं महाचक्राय स्वाहा।
ओं असुरान्तकृत् हुं फट् ओं हुं सहस्रार हुं फट्॥
द्वारकाचक्रपूजेयं गृहे रक्षाकरी शुभा॥ १७

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

हरिरुवाच।

प्रवक्ष्याम्यधुना ह्येतद्वैष्णवं पञ्जरं शुभम्।
नमो नमस्ते गोविन्द चक्रं गृह्य सुदर्शनम्।
प्राच्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः॥ १
गदां कौमोदकीं गृह्य पद्मनाभ नमोऽस्तु ते।
याम्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः॥ २
हलमादाय सौनन्दं नमस्ते पुरुषोत्तम।
प्रतीच्यां रक्ष मां विष्णो त्वामहं शरणं गतः॥ ३
मुषलं शातनं गृह्य पुण्डरीकाक्ष रक्ष माम्।
उत्तरस्यां जगन्नाथ भवन्तं शरणं गतः॥ ४
खड्गमादाय चर्म्माथ अस्त्रशस्त्रादिकं हरे।
नमस्ते रक्ष रक्षोघ्न ऐशान्यां शरणं गतः॥ ५

पाञ्चजन्यं महाशङ्खमनुद्बोधञ्च पङ्कजम्।
प्रगृह्य रक्ष मां विष्णो आग्नेय्यां यज्ञशूकर ॥ ६
चन्द्रसूर्य्यसमं गृह्य खड्गं चान्द्रमसं तथा।
नैऋत्यां माञ्च रक्षस्व दिव्यमूर्त्ते नृकेशरिन् ॥ ७
वैजयन्तीं सम्प्रगृह्य श्रीवत्सं कण्ठभूषणम्।
वायव्यां रक्ष मां देव हयग्रीव नमोऽस्तु ते ॥ ८
वैनतेयं समारुह्य त्वन्तरीक्षे जनार्द्दन।
माञ्च रक्षाजित सदा नमस्तेऽस्त्वपराजित ॥ ९
विशालाक्षं समारुह्य रक्ष मां त्वं रसातले।
अकूपार नमस्तुभ्यं महामीन नमोऽस्तु ते ॥ १०
करशीर्षाद्यङ्गुलेषु सत्यत्वं बाहुपञ्जरम्।
कृत्वा रक्षस्व मां विष्णो नमस्ते पुरुषोत्तम ॥ ११
एवमुक्तं शङ्कराय वैष्णवं पञ्जरं महत्।
पुरा रक्षार्थमीशान्याः कात्यायन्या वृषध्वज ॥ १२
नाशयामास सा येन चामरं महिषासुरम्।
दानवं रक्तवीजञ्च अन्यांश्च सुरकण्टकान्।
एतज्जपन् नरो भक्त्या शत्रून् विजयते सदा ॥ १३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्द्दशोऽध्यायः।

### हरिरुवाच।

अथ योगं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम्।
ध्यायिभिः प्रोच्यते ध्येयो ध्यानेन हरिरीश्वरः ॥ १
तच्छृणुष्व महेशान सर्व्वपापविनाशनम्।
विष्णुः सर्व्वेश्वरोऽनन्तः षड्भिमिपरिवर्ज्जितः ॥ २
वासुदेवो जगन्नाथो ब्रह्मात्मास्म्यहमेव हि।
देहिदेहस्थितो नित्यः सर्व्वदेहविवर्ज्जितः ॥ ३
देहधर्म्मविहीनश्च क्षराक्षरविवर्ज्जितः।
षड्विधेषु स्थितो द्रष्टा श्रोता घ्राता ह्यतीन्द्रियः ॥४
तद्धर्म्मरहितः स्रष्टा नामगोत्रविवर्ज्जितः।
मन्ता मनःस्थितो देवो मनसा परिवर्ज्जितः ॥ ५
मनोधर्म्मविहीनश्च विज्ञानं ज्ञानमेव च।
बोद्धा बुद्धिस्थितः साक्षी सर्व्वज्ञो बुद्धिवर्ज्जितः ॥ ६
बुद्धिधर्म्मविहीनश्च सर्व्वः सर्व्वगतोऽमलः।
सर्व्वप्राणिविनिर्म्मुक्तः प्राणधर्म्मविवर्ज्जितः ॥ ७
प्राणिप्राणो महाशान्तो भयेन परिवर्ज्जितः।
अहङ्कारादिहीनश्च तद्धर्म्मपरिवर्ज्जितः ॥ ८
तत्साक्षी तन्नियन्ता च परमानन्दरूपकः।
जाग्रत्स्वप्नसुषुप्तिस्थस्तत्साक्षी तद्विवर्ज्जितः ॥ ९
तुरीयः परमो धाता दृग्रूपो गुणवर्ज्जितः।
मुक्तो बुद्धोऽजरोऽव्यापी सत्य आत्मास्म्यहं शिव ॥
एवं ये मानवा विद्या ध्यायन्तीशं परंपदम्।
प्राप्नुयुस्ते च तद्रूपं नात्र कार्य्या विचारणा ॥ ११
इति ध्यानं समाख्यातं तव शङ्कर सुव्रत।
पठेद्य एतत् सततं विष्णुलोकं स गच्छति ॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः।

### रुद्र उवाच।

संसारसागराद्घोरान्मुच्यते किं जपन् प्रभो।
नरस्तन्मे परं जप्यं कथय त्वं जनार्द्दन ॥ १

### हरिरुवाच।

ईश्वरं परमं ब्रह्म परमात्मानमव्ययम्।
विष्णुं नामसहस्रेण स्तुवन् मुक्तो भवेन्नरः ॥ २
यत् पवित्रं परं जप्यं कथयामि वृषध्वज।
शृणुष्वावहितो भूत्वा सर्व्वपापविनाशनम् ॥ ३
वासुदेवो महाविष्णुर्वामनो वासवो वसुः।
बालचन्द्रनिभो बालो बलभद्रो बलाधिपः ॥ ४
बलिबन्धनकृद्वेधा वरेण्यो वेदवित् कविः।
वेदकर्त्ता वेदरूपो वेद्यो वेदपरिप्लुतः ॥ ५
वेदाङ्गवेत्ता वेदेशो बलाधारो बलार्द्दनः।
अविकारो वरेशश्च वरदो वरुणाधिपः ॥ ६
वीरहा च वृहद्वीरो वन्दितः परमेश्वरः।
आत्मा च परमात्मा च प्रत्यगात्मा वियत् परः ॥ ७
पद्मनाभः पद्मनिधिः पद्महस्तो गदाधरः।
परमः परभूतश्च पुरुषोत्तम ईश्वरः ॥ ८
पद्मजङ्घः पुण्डरीकः पद्ममालाधरः प्रियः।
पद्माक्षः पद्मगर्भश्च पर्ज्जन्यः पद्मसंस्थितः ॥ ९

अपारः परमार्थश्च पराणाञ्च परः प्रभुः।
पण्डितः पण्डितेश्यश्च पवित्रः पापमर्द्दकः॥ १०
शुद्धः प्रकाशरूपश्च पवित्रः परिरक्षकः।
पिपासावर्ज्जितः पाद्यः पुरुषः प्रकृतिस्तथा॥ ११
प्रधानं पृथिवीपद्मं पद्मनाभः प्रियप्रदः।
सर्व्वेशः सर्व्वगः सर्व्वः सर्व्ववित् सर्व्वदः परः॥ १२
सर्व्वस्य जगतो धाम सर्व्वदर्शी च सर्व्वभृत्।
सर्व्वानुग्रहकृद्देवः सर्व्वभूतहृदिस्थितः॥ १३
सर्व्वपः सर्व्वपूज्यश्च सर्व्वदेवनमस्कृतः।
सर्व्वस्य जगतो मूलं सकलो निष्कलोऽनलः॥ १४
सर्व्वगोप्ता सर्व्वनिष्ठः सर्व्वकारणकारणम्।
सर्व्वध्येयः सर्व्वमित्रः सर्व्वदेवस्वरूपधृक्॥ १५
सर्व्वाध्यक्षः सुराध्यक्षः सुरासुरनमस्कृतः।
दुष्टानाञ्चासुराणाञ्च सर्व्वदा घातकोऽन्तकः॥ १६
सत्यपालश्च सन्नाभः सिद्धेशः सिद्धवन्दितः।
सिद्धसाध्यः सिद्धसिद्धः सिद्धसिद्धहृदीश्वरः॥ १७
शरण्यं जगतश्चैव श्रेयः क्षेमस्तथैव च।
शुभकृच्छोभनः सौम्यः सत्यः सत्यपराक्रमः॥ १८
सत्यस्थः सत्यसङ्कल्पः सत्यवित् सत्यदस्तथा।
धर्म्मो धर्म्मी च कर्म्मी च सर्व्वकर्म्मविवर्ज्जितः॥ १९
कर्म्मकर्त्ता च कर्म्मैव क्रिया कार्य्यं तथैव च।
श्रीपतिर्नृपतिः श्रीमान् सर्व्वस्य पतिरूर्ज्जितः॥२०
स देवानां पतिश्चैव वृष्णीनां पतिरीड़ितः।
पतिर्हिरण्यगर्भस्य त्रिपुरान्तपतिस्तथा॥ २१
पशूनाञ्च पतिः प्रायो वसूनां पतिरेव च।
पतिराखण्डलस्यैव वरुणस्य पतिस्तथा॥ २२
वनस्पतीनाञ्च पतिरनिलस्य पतिस्तथा।
अनलस्य पतिश्चैव यमस्य पतिरेव च॥ २३
कुबेरस्य पतिश्चैव नक्षत्राणां पतिस्तथा।
ओषधीनां पतिश्चैव वृक्षाणाञ्च पतिस्तथा॥ २४
नागानां पतिरर्कस्य दक्षस्य पतिरेव च।
सुकृताञ्च पतिश्चैव नृपाणाञ्च पतिस्तथा॥ २५
गन्धर्व्वाणां पतिश्चैव असूनां पतिरुत्तमः।
पर्व्वतानां पतिश्चैव निम्नगानां पतिस्तथा॥ २६
सुराणाञ्च पतिः श्रेष्ठः कपिलस्य पतिस्तथा।
लतानाञ्च पतिश्चैव वीरुधाञ्च पतिस्तथा॥ २७
मुनीनाञ्च पतिश्चैव सूर्य्यस्य पतिरुत्तमः।
पतिश्चन्द्रमसः श्रेष्ठः शुक्रस्य पतिरेव च॥ २८
ग्रहाणाञ्च पतिश्चैव राक्षसानां पतिस्तथा।
किन्नराणां पतिश्चैव द्विजानां पतिरुत्तमः॥ २९
सरिताञ्च पतिश्चैव समुद्राणां पतिस्तथा।
सरसाञ्च पतिश्चैव भूतानाञ्च पतिस्तथा॥ ३०
वेतालानां पतिश्चैव कुष्माण्डानां पतिस्तथा।
पक्षिणाञ्च पतिः श्रेष्ठः पशूनां पतिरेव च॥ ३१
महात्मा मङ्गलोऽमेयो मन्दरो मन्दरेश्वरः।
मेरुर्म्माता प्रमाणञ्च माधवो मलवर्ज्जितः॥ ३२
मालाधरो महादेवो महादेवेन पूजितः।
महाशान्तो महाभागो मधुसूदन एव च॥ ३३
महावीर्य्यो महाप्राणो मार्कण्डेयप्रवन्दितः।
मायादो (क) मायया बद्धो मायया तु विवर्ज्जितः॥३४
मुनिस्तुतो मुनिर्म्मैत्रो महानासो महाहनुः।
महाबाहुर्महादन्तो मरणेन (ख) विवर्ज्जितः॥ ३५
महावक्त्रो महानात्मा महाकायो महोदरः।
महापादो महाग्रीवो महामानी महामनाः॥ ३६
महामतिर्म्महाकीर्त्तिर्म्महारूपो महासुरः।
मधुश्च माधवश्चैव महादेवो महेश्वरः॥ ३७
मखेज्यो मखरूपी च माननीयो मखेश्वरः।
महावातो महाभागो महेशोऽतीतमानुषः॥ ३८
मानवश्च मनुश्चैव मानवानां प्रियङ्करः।
मृगश्च मृगपूज्यश्च मृगाणाञ्च पतिस्तथा॥ ३९
बुधस्य तु पतिश्चैव पतिश्चैव वृहस्पतेः।
पतिः शनैश्चरस्यापि राहोः केतोः पतिस्तथा॥ ४०
लक्ष्मणो लक्षणश्चैव लम्बौष्ठो ललितस्तथा।
नानालङ्कारसंयुक्तो नानाचन्दनचर्च्चितः॥ ४१
नानारसोज्ज्वलद्वक्त्रो नानापुष्पोपशोभितः।
रामो रमापतिश्चैव सभार्य्यः परमेश्वरः॥ ४२
रत्नदो रत्नहर्त्ता च रूपी रूपविवर्ज्जितः।
महारूपोग्ररूपश्च सौम्यरूपस्तथैव च॥ ४३
नीलमेघनिभः शुद्धः कालमेघनिभस्तथा।
धूमवर्णः पीतवर्णो नानावर्णो ह्यवर्णकः॥ ४४

(क) मायालेति पाठान्तरम्।
(ख) रवणेन विवर्ज्जितः इति वा पाठः।

विरूपो रूपदश्चैव शुक्लवर्णस्तथैव च ।
सर्व्ववर्णो महायोगी यज्ञो यज्ञकृदेव च ॥ ४५
सुवर्णवर्णवांश्चैव सुवर्णाख्यस्तथैव च ।
सर्व्ववर्णो महायोगौ (क) सुवर्णः स्वर्णमेखलः ॥ ४६
सुवर्णस्य प्रदाता च सुवर्णांशस्तथैव च ।
सुवर्णस्य प्रियश्चैव सुवर्णाढ्यस्तथैव च ॥ ४७
सुपर्णी च महापर्णः सुपर्णस्य च कारणम् ।
वैनतेयस्तथादित्य आदिरादिकरः शिवः ॥ ४८
कारणं महतश्चैव पुराणस्य च कारणम् ।
बुद्धीनां कारणञ्चैव कारणं मनसस्तथा ॥ ४९
कारणं चेतसश्चैव अहङ्कारस्य कारणम् ।
भूतानां कारणं तद्वत् कारणञ्च विभावसोः ॥ ५०
आकाशकारणं तद्वत् पृथिव्याः कारणं परम् ।
अण्डस्य कारणञ्चैव प्रकृतेः कारणं तथा ॥ ५१
देहस्य कारणञ्चैव चक्षुषश्चैव कारणम् ।
श्रोत्रस्य कारणं तद्वत् कारणञ्च त्वचस्तथा ॥ ५२
जिह्वायाः कारणञ्चैव प्राणस्यैव च कारणम् ।
हस्तयोः कारणं तद्वत् पादयोः कारणं तथा ॥ ५३
वाचश्च कारणं तद्वत् पायोश्चैव तु कारणम् ।
इन्द्रस्य कारणञ्चैव कुबेरस्य च कारणम् ॥ ५४
यमस्य कारणञ्चैव ईशानस्य च कारणम् ।
यक्षाणां कारणञ्चैव रक्षसां कारणं परम् ॥ ५५
भूषाणां कारणं श्रेष्ठं धर्म्मस्यैव तु कारणम् ।
जन्तूनां कारणञ्चैव वसूनां कारणं परम् ॥ ५६
मनूनां कारणञ्चैव पक्षिणां कारणं परम् ।
मुनीनां कारणं श्रेष्ठं योगिनां कारणं परम् ॥ ५७
सिद्धानां कारणञ्चैव यक्षाणां कारणं परम् ।
कारणं किन्नराणाञ्च गन्धर्व्वाणाञ्च कारणम् ॥ ५८
नदानां कारणञ्चैव नदीनां कारणं परम् ।
कारणञ्च समुद्राणां वृक्षाणां कारणं तथा ॥ ५९
कारणं वीरुधाञ्चैव लोकानां कारणं तथा ।
पातालकारणञ्चैव देवानां कारणं तथा ॥ ६०
सर्पाणां कारणञ्चैव श्रेयसां कारणं तथा ।
पशूनां कारणञ्चैव सर्व्वेषां कारणं तथा ॥ ६१
देहात्मा चेन्द्रियात्मा च आत्मा बुद्धेस्तथैव च ।

(क) वसुवर्णाव्ययश्चैवेति क्वचित् पाठः ।

मनसश्च तथैवात्मा चात्माहङ्कारचेतसोः ॥ ६२
जाग्रतः स्वपतश्चात्मा महदात्मा परस्तथा ।
प्रधानस्य परात्मा च आकाशात्मा ह्यपां तथा ।
पृथिव्याः परमात्मा च रसस्यात्मा तथैव च ।
गन्धस्य परमात्मा च रूपस्यात्मा परस्तथा ॥ ६५
शब्दात्मा चैव वागात्मा स्पर्शात्मा पुरुषस्तथा ।
श्रोत्रात्मा च त्वगात्मा च जिह्वायाः परमस्तथा ।
घ्राणात्मा चैव हस्तात्मा पादात्मा परमस्तथा ।
उपस्थस्य तथैवात्मा पाय्वात्मा परमस्तथा ॥ ६६
इन्द्रात्मा चैव ब्रह्मात्मा रुद्रात्मा च मनोस्तथा ।
दक्षप्रजापतेरात्मा सत्यात्मा परमस्तथा ॥ ६७
ईशात्मा परमात्मा च रौद्रात्मा मोक्षविद्यतिः ।
यत्नवांश्च तथा यत्नश्चर्म्मी खड्गासुरान्तकः ॥ ६८
ह्रीप्रवर्त्तनशीलश्च यतीनाञ्च हिते रतः ।
यतिरूपी च योगी च योगिध्येयो हरिः शितिः ॥ ६९
संविन्मेधा च कालश्च उष्मा वर्षा मतिस्तथा ।
संवत्सरो मोक्षकरो मोहप्रध्वंसकस्तथा ॥ ७०
मोहकर्त्ता च दुष्टानां माण्डव्यो बड़वामुखः ।
संवर्त्तकः कालकर्त्ता गौतमो भृगुरङ्गिराः ॥ ७१
अत्रिर्वशिष्ठः पुलहः पुलस्त्यः कुत्स एव च ।
याज्ञवल्क्यो देवलश्च व्यासश्चैव पराशरः ॥ ७२
शर्म्मदश्चैव गाङ्गेयो हृषीकेशो वृहच्छ्रवाः ।
केशवः क्लेशहन्ता च सुकर्णः कर्णवर्ज्जितः ॥ ७३
नारायणो महाभागः प्राणस्य पतिरेव च ।
अपानस्य पतिश्चैव व्यानस्य पतिरेव च ॥ ७४
उदानस्य पतिः श्रेष्ठः समानस्य पतिस्तथा ।
शब्दस्य च पतिः श्रेष्ठः स्पर्शस्य पतिरेव च ॥ ७५
रूपाणाञ्च पतिश्चाद्यः खड्गपाणिर्हलायुधः ।
चक्रपाणिः कुण्डली च श्रीवत्साङ्कस्तथैव च ॥ ७६
प्रकृतिः कौस्तुभग्रीवः पीताम्बरधरस्तथा ।
सुमुखो दुर्म्मुखश्चैव मुखेन तु विवर्ज्जितः ॥ ७७
अनन्तोऽनन्तरूपश्च सुनखः सुरसुन्दरः ।
सुकलापो विभुर्जिष्णुर्भ्राजिष्णुश्चेषुधिस्तथा ॥ ७८
हिरण्यकशिपोर्हन्ता हिरण्याक्षविमर्द्दकः ।
निहन्ता पूतनायाश्च भास्करान्तविनाशनः ॥ ७९
केशिनो दलनश्चैव मुष्टिकस्य विमर्द्दकः ।

कंसदानवभेत्ता च चाणूरस्य प्रमर्द्दकः ॥ ८०
अरिष्टस्य निहन्ता च अक्रूरप्रिय एव च ।
अक्रूरः क्रूररूपश्च अक्रूरप्रियवन्दितः ॥ ८१
भगहा भगवान् भानुस्तथा भागवतः स्वयम् ।
उद्धवश्चोद्धवस्येशो ह्युद्धवेन विचिन्तितः ॥ ८२
चक्रधृक् चञ्चलश्चैव चलाचलविवर्ज्जितः ।
अहङ्कारो मतिश्चित्तं गगनं पृथिवी जलम् ॥ ८३
वायुश्चक्षुस्तथा श्रोत्रं जिह्वा च घ्राणमेव च ।
वाक्पाणिपादो जवनः पायूपस्थस्तथैव च ॥ ८४
शङ्करश्चैव खर्व्वश्च क्षान्तिदः क्षान्तिकृन्नरः ।
भक्तप्रियस्तथा भर्त्ता भक्तिमद्भक्तिवर्द्धनः ॥ ८५
भक्तस्तुतो भक्तपरः कीर्त्तिदः कीर्त्तिवर्द्धनः ॥
कीर्त्तिर्द्दीप्तिः क्षमा कान्तिर्भक्तिश्चैव दया परा ॥ ८६
दानं दाता च कर्त्ता च देवदेवप्रियः शुचिः ।
शुचिमान् सुखदो मोक्षः कामश्चार्थः सहस्रपात् ॥ ८७
सहस्रशीर्षा वैद्यश्च मोक्षद्वारस्तथैव च ।
प्रजाद्वारं सहस्रान्तः सहस्रकर एव च ॥ ८८
शुक्रश्च सुकिरीटी च सुग्रीवः कौस्तुभस्तथा ।
प्रद्युम्नश्चानिरुद्धश्च हयग्रीवश्च शूकरः ॥ ८९
मत्स्यः परशुरामश्च प्रह्लादो बलिरेव च ।
शरण्यश्चैव नित्यश्च बुद्धो मुक्तः शरीरभृत् ॥ ९०
खरदूषणहन्ता च रावणस्य प्रमर्द्दनः ।
सीतापतिश्च वर्द्धिष्णुर्भरतश्च तथैव च ॥ ९१
कुम्भेन्द्रजिन्निहन्ता च कुम्भकर्णप्रमर्द्दनः ।
नरान्तकान्तकश्चैव देवान्तकविनाशनः ॥ ९२
दुष्टासुरनिहन्ता च शम्बरारिस्तथैव च ।
नरकस्य निहन्ता च त्रिशीर्षस्य विनाशनः ॥ ९३
यमलार्ज्जुनभेत्ता च तपोहितकरस्तथा ।
वादित्रश्चैव वाद्यश्च बुद्धस्य च वरप्रदः ॥ ९४
सारः सारप्रियः सौरः कालहन्ता निकृन्तनः ।
अगस्तिर्द्देवलश्चैव नारदो नारदप्रियः ॥ ९५
प्राणोऽपानस्तथा व्यानो रजः सत्त्वं तमः शरत् ।
उदानश्च समानश्च भेषजश्च भिषक् तथा ॥ ९६
कूटस्थः स्वच्छरूपश्च सर्व्वदेहविवर्ज्जितः ।
चक्षुरिन्द्रियहीनश्च वागिन्द्रियविवर्ज्जितः ॥ ९७
हस्तेन्द्रियविहीनश्च पादाभ्याञ्च विवर्ज्जितः ।
पायूपस्थविहीनश्च महातपोविवर्ज्जितः ॥ ९८
प्रबोधेन विहीनश्च बुद्ध्या चैव विवर्ज्जितः ।
चेतसा विगतश्चैव प्राणेन च विवर्ज्जितः ॥ ९९
अपानेन विहीनश्च व्यानेन च विवर्ज्जितः ।
उदानेन विहीनश्च समानेन विवर्ज्जितः ॥ १००
आकाशेन विहीनश्च वायुना परिवर्ज्जितः ।
अग्निना च विहीनश्च उदकेन विवर्ज्जितः ॥ १०१
पृथिव्या च विहीनश्च शब्देन च विवर्ज्जितः ।
स्पर्शेन च विहीनश्च सर्व्वरूपविवर्ज्जितः ॥ १०२
रागेण विगतश्चैव अघेन परिवर्ज्जितः ।
शोकेन रहितश्चैव वचसा परिवर्ज्जितः ॥ १०३
रजोविवर्ज्जितश्चैव विकारैः षड्भिरेव च ।
कामेन वर्ज्जितश्चैव क्रोधेन परिवर्ज्जितः ॥ १०४
लोभेन विगतश्चैव दम्भेन च विवर्ज्जितः ।
सूक्ष्मश्चैव सुसूक्ष्मश्च स्थूलात् स्थूलतरस्तथा ॥ १०५
विशारदो बलाध्यक्षः सर्व्वध्यक्षोऽभकस्तथा (क) ।
प्रकृतेः क्षोभकश्चैव महतः क्षोभकस्तथा ॥ १०६
भूतानां क्षोभकश्चैव बुद्धेश्च क्षोभकस्तथा ।
इन्द्रियाणां क्षोभकश्च विषयक्षोभकस्तथा ॥ १०७
ब्रह्मणः क्षोभकश्चैव रुद्रस्य क्षोभकस्तथा ।
अगम्यश्चक्षुरादेश्च श्रोत्रागम्यस्तथैव च ॥ १०८
त्वचा नगम्यः कूर्म्मश्च जिह्वाग्राह्यस्तथैव च ।
घ्राणेन्द्रियागम्य एव वाचाग्राह्यस्तथैव च ॥ १०९
अगम्यश्चैव पाणिभ्यां पादागम्यस्तथैव च ।
अग्राह्यो मनसा चैव बुद्ध्याग्राह्यो हरिस्तथा ॥ ११
अहंबुद्ध्या तथाग्राह्यश्चेतसाग्राह्य एव च ।
शङ्खपाणिरव्ययश्च गदापाणिस्तथैव च ॥ १११
शार्ङ्गपाणिश्च कृष्णश्च ज्ञानमूर्त्तिः परन्तपः ।
तपस्वी ज्ञानगम्यो हि ज्ञानी ज्ञानविदेव च ॥ ११२
ज्ञेयश्च ज्ञेयहीनश्च ज्ञप्तिश्चैतन्यरूपधृक् ।
भावो भाव्यो भवकरो भावनो भवनाशनः ॥ ११३
गोविन्दो गोपतिर्गोपः सर्व्वगोपीसुखप्रदः ।
गोपालो गोपतिश्चैव गोमतिर्गोधरस्तथा ॥ ११४
उपेन्द्रश्च नृसिंहश्च शौरिश्चैव जनार्द्दनः ।
आरणेयो बृहद्भानुर्बृहद्दीप्तस्तथैव च ॥ ११५

(क) सर्व्वस्य क्षोभकस्तथेति क्वचित् पाठः ।

दामोदरस्त्रिकालश्च कालज्ञः कालवर्ज्जितः ।
त्रिसन्ध्यो द्वापरं त्रेता प्रजाद्वारं त्रिविक्रमः ॥ ११६
विक्रमो दण्डहस्तश्च ह्येकदण्डी त्रिदण्डधृक् ।
सामभेदस्तथोपायः सामरूपी च सामगः ॥ ११७
सामवेदो ह्यथर्व्वा च सुकृतः सुखरूपधृक् ।
अथर्व्ववेदविच्चैव ह्यथर्व्वाचार्य्य एव च ॥ ११८
ऋग्रूपी चैव ऋग्वेद ऋग्वेदेषु प्रतिष्ठितः ।
यजुर्व्वेत्ता यजुर्व्वेदो यजुर्व्वेदविदेकपात् ॥ ११९
बहुपाच्च सुपाच्चैव तथा चैव सहस्रपात् ।
चतुष्पाच्च द्विपाच्चैव स्मृतिर्न्यायो यमो यमी ॥ १२०
सन्न्यासी चैव सन्न्यासश्चतुराश्रम एव च ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥ १२१
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वर्णस्तथैव च ।
शीलदः शीलसम्पन्नो दुःशीलपरिवर्ज्जितः ॥ १२२
मोक्षोऽध्यात्मसमाविष्टः स्तुतिः स्तोता च पूजकः ।
पूज्यो वाक् करणञ्चैव वाच्यश्चैव तु वाचकः ॥ १२३
वेत्ता व्याकरणञ्चैव वाक्यञ्चैव च वाक्यवित् ।
वाक्यगम्यस्तीर्थवासी तीर्थस्तीर्थी च तीर्थवित्॥१२४
तीर्थादिभूतः सांख्यश्च निरुक्तन्त्वधिदैवतम् ।
प्रणवः प्रणवेशश्च प्रणवेन प्रवन्दितः ॥ १२५
प्रणवेन च लक्ष्यो वै गायत्री च गदाधरः ।
शालग्रामनिवासी च शालग्रामस्तथैव च ॥ १२६
जलशायी योगशायी शेषशायी (क) कुशेशयः ।
महीभर्त्ता च कार्य्यञ्च कारणं पृथिवीधरः ॥ १२७
प्रजापतिः शाश्वतश्च काम्यः कामयिता विराट् ।
सम्राट् पूषा तथा स्वर्गो रथस्थः सारथीरथः(ख)१२८
धनी धनप्रदो धन्यो यादवानां हिते रतः ।
अर्ज्जुनस्य प्रियश्चैव ह्यर्ज्जुनो भीम एव च ॥ १२९
पराक्रमी दुर्व्विषहः सर्व्वशास्त्रविशारदः ।
सारस्वतो महाभीष्मः पारिजातहरस्तथा ॥ १३०
अमृतस्य प्रदाता च क्षीरोदः क्षीर एव च ।
इन्द्रात्मजस्तस्य गोप्ता गोवर्द्धनधरस्तथा ॥ १३१
कंसस्य नाशनस्तद्वद्धस्तिपो हस्तिनाशनः ।
शिपिविष्टः प्रसन्नश्च सर्व्वलोकार्त्तिनाशनः ॥ १३२

(क) नागशायीति पाठान्तरम् ।
(ख) रथस्थः सारथिर्बलमिति पाठान्तरम् ।

मुद्रो मुद्राकरश्चैव सर्व्वमुद्राविवर्ज्जितः ।
देही देहस्थितश्चैव देहस्य च नियामकः ॥ १३३
श्रोता श्रोत्रनियन्ता च श्रोतव्यः श्रवणं तथा ।
त्वक्स्थितश्च स्पर्शयिता स्पृश्यञ्च स्पर्शनं तथा ॥ १३४
चक्षुःस्थो रूपद्रष्टा च नियन्ता चक्षुषस्तथा ।
दृश्यञ्चैव तु जिह्वास्थो रसज्ञश्च नियामकः ॥ १३५
घ्राणस्थो घ्राणकृद्घ्राता घ्राणेन्द्रियनियामकः ।
वाक्स्थो वक्ता च वक्तव्यं वचनं वाङ्नियामकः ॥
प्राणिस्थः शिल्पकृच्छिल्पी हस्तयोश्च नियामकः ।
पदव्यश्चैव गन्ता च गन्तव्यं गमनं तथा ॥ १३७
नियन्ता पादयोश्चैव पाद्यभाक् च विसर्गकृत् ।
विसर्गस्य नियन्ता च ह्युपस्थस्थः सुखं तथा ॥ १३८
उपस्थस्य नियन्ता च तदानन्दकरश्च ह ।
शत्रुघ्नः कार्त्तवीर्य्यश्च दत्तात्रेयस्तथैव च ॥ १३९
अलर्कस्य हितश्चैव कार्त्तवीर्य्यनिकृन्तनः ।
कालनेमिर्महानेमिर्मेघो मेघपतिस्तथा ॥ १४०
अन्नप्रदोऽन्नरूपी च ह्यन्नादोऽन्नप्रवर्त्तकः ।
धूमकृद्धूमरूपश्च देवकीपुत्र उत्तमः ॥ १४१
देवक्या नन्दनो नन्दो रोहिण्याः प्रिय एव च ।
वसुदेवप्रियश्चैव वसुदेवसुतस्तथा ॥ १४२
दुन्दुभिर्हासरूपश्च पुष्पहासस्तथैव च ।
अट्टहासप्रियश्चैव सर्व्वाध्यक्षः क्षरोऽक्षरः ॥ १४३
अच्युतश्चैव सत्येशः सत्यायाश्च प्रियो वरः ।
रुक्मिण्याश्च पतिश्चैव रुक्मिण्या वल्लभस्तथा ॥ १४४
गोपीनां वल्लभश्चैव पुण्यश्लोकश्च विश्रुतः ।
वृषाकपिर्यमो गुह्यो मङ्गलश्च बुधस्तथा ॥ १४५
राहुः केतुर्ग्रहो ग्राहो गजेन्द्रमुखमेलकः ।
ग्राहस्य विनिहन्ता च ग्रामणी रक्षकस्तथा ॥ १४६
किन्नरश्चैव सिद्धश्च छन्दः स्वच्छन्द एव च ।
विश्वरूपो विशालाक्षो दैत्यसूदन एव च ॥ १४७
अनन्तरूपो भूतस्थो देवदानव संस्थितः ।
सुषुप्तिस्थः सुषुप्तिश्च स्थानं स्थानान्त एव च ॥ १४८
जगत्स्थश्चैव जागर्त्ता स्थानं जागरित स्तथा ।
स्वप्नस्थः स्वप्नवित् स्वप्नः स्थानस्थः सुस्थ एव च ॥ १४९
जाग्रत्स्वप्नसुषुप्तेश्च विहीनो वै चतुर्थकः ।
विज्ञानं चेत्यरूपश्च जीवो जीवयिता तथा ॥ १५०

भुवनाधिपतिश्चैव भुवनानां नियामकः।
पातालवासी पातालं सर्व्वज्वरविनाशनः॥ १५१
परमानन्दरूपी च धर्म्माणाञ्च प्रवर्त्तकः।
सुलभो दुर्लभश्चैव प्राणायामपरस्तथा॥ १५२
प्रत्याहारो धारणा च प्रत्याहारकरस्तथा।
प्रभा कान्तिस्तथा ह्यर्च्चिः शुद्धस्फटिकसन्निभः॥ १५३
अग्राह्यश्चैव गौरश्च सर्व्वः शुचिरभिष्टुतः।
वषट्कारो वषट् वौषट् स्वधा स्वाहा रतिस्तथा॥१५४
पक्ता नन्दयिता भोक्ता बोद्धा भावयिता तथा।
ज्ञानात्मा चैव ऊहात्मा भूमा सर्व्वेश्वरेश्वरः॥ १५५
नदी नन्दी च नन्दीशो भारतस्तरुनाशनः।
चिद्रूपः (क) श्रीपतिश्चैव नृपश्च चक्रवर्त्तिनाम्॥ १५६
ईशश्च सर्व्वदेवानां द्वारकासंस्थितस्तथा।
पुष्करः पुष्कराध्यक्षः पुष्करद्वीप एव च॥ १५७
भरतो जनको जन्यः सर्व्वाकारविवर्ज्जितः।
निराकारो निर्निमित्तो निरातङ्को निराश्रयः॥१५८
इति नामसहस्रं ते वृषभध्वज कीर्त्तितम्।
देवस्य विष्णोरीशस्य सर्व्वपापविनाशनम्॥ १५९
पठन् द्विजश्च विष्णुत्वं क्षत्त्रियो जयमाप्नुयात्।
वैश्यो धनं सुखं शूद्रो विष्णुभक्तिसमन्वितः॥ १६०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
श्रीविष्णोः सहस्रनामस्तोत्रं नाम
पञ्चदशोऽध्यायः॥ १५॥

---

## षोड़शोऽध्यायः।

रुद्र उवाच।

पुनर्ध्यानं समाचक्ष्व शङ्ख-चक्र-गदाधर।
विष्णोरीशस्य देवस्य शुद्धस्य परमात्मनः॥ १

हरिरुवाच।

शृणु रुद्र हरेर्ध्यानं संसारतरुनाशनम्।
स्वरूपमनन्तञ्च सर्व्वव्याप्यजमव्ययम्॥ २
अक्षरं सर्व्वगं नित्यं महद्ब्रह्मास्ति केवलम्।
सर्व्वस्य जगतो मूलं सर्व्वेशं परमेश्वरम्॥ ३
सर्व्वभूतहृदिस्थं वै सर्व्वभूतमहेश्वरम्।
सर्व्वाधारं निराधारं सर्व्वकारणकारणम्॥ ४
अलेपकं तथा मुक्तं मुक्तयोगिविचिन्तितम्।
स्थूलदेहविहीनञ्च चक्षुषा परिवर्ज्जितम्॥ ५
श्रोत्रेन्द्रियविहीनञ्च श्रोत्रधर्म्मविवर्ज्जितम्।
जिह्वेन्द्रियविहीनञ्च त्वगिन्द्रियविवर्ज्जितम्॥ ६(क)
घ्राणेन्द्रियविहीनञ्च प्राणिधर्म्मविवर्ज्जितम्। (ख)
वागिन्द्रियविहीनञ्च प्राणेन्द्रियविवर्ज्जितम्।
पादेन्द्रियविहीनञ्च वाग्धर्म्मपरिवर्ज्जितम्॥ ७
पायूपस्थविहीनञ्च सर्व्वेन्द्रियविवर्ज्जितम्।
मनोविरहितं तद्वन्मनोधर्म्मविवर्ज्जितम्॥ ८
बुद्ध्या विहीनं देवेशं चेतसा परिवर्ज्जितम्।
अहङ्कारविहीनं वै बुद्धिधर्म्मविवर्ज्जितम्॥ ९
प्राणेन रहितञ्चैव ह्यपानेन विवर्ज्जितम्।
व्यानाख्यवायुहीनं वै प्राणधर्म्मविवर्ज्जितम्॥ १०
पुनः सूर्य्यार्च्चनं वक्ष्ये यदुक्तं भगवे पुरा॥ ११

ओँ खखोल्काय नमः॥ १२

सूर्य्यस्य मूलमन्त्रोऽयं भुक्तिमुक्तिप्रदायकः॥ १३

ओँ खखोल्काय विदमाय नमः। ओँ विचि ठठ शिरसे नमः। ओँ ज्ञानिने ठठ शिखायै नमः। ओँ सहस्ररश्मये ठठ कवचाय नमः। ओँ सर्व्वतेजोऽधिपतये ठठ अस्त्राय नमः। ओँ ज्वल ज्वल प्रज्वल प्रज्वल ठठ नमः॥ १४

अग्निप्राकारमन्त्रोऽयं सूर्य्यस्याघविनाशनः॥ १५

ओँ आदित्याय विद्महे विश्वभावाय धीमहि।
तन्नः सूर्य्यः प्रचोदयात्॥ १६

सकलीकरणं कुर्य्याद्गायत्र्या भास्करस्य च॥ १७
धर्म्मात्मने च पूर्व्वस्मिन् यमायेति च दक्षिणे।
दण्डनायकाय ततो वैवर्णायेति चोत्तरे॥ १८
श्यामपिङ्गलमैशान्यामाग्नेय्यां दीक्षितं यजेत्।
वज्रपाणिञ्च नैर्ऋत्यां भूर्भुवः स्वश्च वायवे॥ १९

ओँ चन्द्राय नक्षत्राधिपतये नमः। ओँ अङ्गारकाय क्षितिसुताय नमः। ओँ बुधाय सोमपुत्त्राय नमः। ओँ वागीश्वराय सर्व्वविद्याधिपतये नमः।

---

(क) चक्रपः इति क्वचित् पाठः।

(क) श्लोकोऽयं क्वचित् पुस्तके नास्ति।

(ख) प्राणेन्द्रियविहीनञ्च प्राणधर्म्मविवर्ज्जितम् इति क्वचित् पाठः। तत्र च वागित्यादिश्लोकोऽपि नास्ति।

ओं शुक्राय महर्षये भृगुसुताय नमः। ओं शनैश्चराय सूर्य्यात्मजाय नमः। ओं राहवे नमः।
ओं केतवे नमः। २०
पूर्व्वादीशानपर्य्यन्ता एते पूज्या वृषध्वज ॥ २१
ओं अनूरुकाय नमः। ओं प्रमथनाथाय नमः।
ओं बुद्धाय नमः ॥ २२
ओं भगवन्नपरिमितमयूखमालिन् सकलजगत्पते सप्ताश्ववाहन चतुर्भुज परमसिद्धिप्रद विस्फुलिङ्ग-पिङ्गभद्र एह्येहि इदमर्घ्यं नमः शिरसि गतं गह्ल गह्ल तेज उग्ररूपमनग्नि ज्वल ज्वल ठठ नमः ॥२३
अनेनावाह्य मन्त्रेण ततः सूर्य्यं विसर्ज्जयेत् ॥ २४
ओं नमो भगवते आदित्याय सहस्रकिरणाय गच्छ सुखं पुनरागमनायेति ॥ २५

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः।

### हरिरुवाच।

पुनः सूर्य्यार्च्चनं वच्मे यदुक्तं धनदाय हि।
अष्टपत्रं लिखेत् पद्मं शुचौ देशे सकर्णिकम् ॥ १
आवाहनीं ततो बद्धा मुद्रामावाहयेद्धरिम्।
खखोल्कं स्थापयेन्मध्ये स्थापयेद्दुयन्त्ररूपिणम् ॥ २
आग्नेय्यां दिशि देवस्य हृदयं स्थापयेच्छिव।
ऐशान्यान्तु शिरः स्थाप्यं नैर्ऋत्यां विन्यसेच्छिखाम्॥३
पौरन्दर्य्यां न्यसेद्वर्म्मसेकाग्रस्थितमानसः।
वायव्याञ्चैव नेत्रन्तु वारुण्यामस्त्रमेव च ॥ ४
ऐशान्यां स्थापयेत् सोमं पौरन्दर्य्यान्तु लोहितम्।
आग्नेय्यां सोमतनयं याम्याञ्चैव वृहस्पतिम् ॥ ५
नैर्ऋत्यां दानवगुरुं वारुण्यान्तु शनैश्चरम्।
वायव्याञ्च तथा केतुं कौवेर्य्यां राहुमेव च ॥ ६
द्वितीयायान्तु कक्षायां सूर्य्यान् द्वादश पूजयेत्।
भगः सूर्य्योऽर्य्यमा चैव मित्रो वै वरुणस्तथा ॥ ७
सविता चैव धाता च विवस्वांश्च महाबलः।
त्वष्टा पूषा तथा चेन्द्रो द्वादशो विष्णुरुच्यते ॥ ८
पूर्व्वादावर्च्चयेद्देवानिन्द्रादीन् श्रद्धया नरः।
जया च विजया चैव जयन्ती चापराजिता।
शेषश्च वासुकिश्चैव नागानित्यादि पूजयेत् ॥ ९

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

### हरिरुवाच।

गरुड़ोक्तं कश्यपाय वच्मे मृत्युञ्जयार्च्चनम्।
उद्धारपूर्व्वकं पुण्यं सर्व्वदेवमयं मतम् ॥ १
ओङ्कारं पूर्व्वमुद्धृत्य जुङ्कारं तदनन्तरम्।
सविसर्गं तृतीयं स्यान्मृत्युदारिद्र्यमर्द्दनम् ॥ २
ईशविष्ण्वर्कदेव्यादिकवचं सर्व्वसाधकम्।
अमृतेशं महामन्त्रं त्र्यक्षरं पूजनं समम्।
जपनान्मृत्युहीनाः स्युः सर्व्वपापविवर्ज्जिताः ॥ ३
शतजप्याद्वेदफलं यज्ञतीर्थफलं लभेत्।
अष्टोत्तरशतं जप्यं त्रिसन्ध्यं मृत्युशत्रुजित् ॥ ४
ध्यायेत् सितन्तु पद्मस्थं (क) वरदञ्चाभयं करे।
हाभ्याञ्चामृतकुम्भन्तु चिन्तयेदमृतेश्वरम् ॥ ५
तस्यैवाङ्गगतां देवीममृतामृतभाषिणीम्।
कलसं दक्षिणे हस्ते वामहस्ते सरोरुहम् ॥ ६
जपेदष्टसहस्रं वै त्रिसन्ध्यं मासमेकतः।
जरा-मृत्यु-महाव्याधि-शत्रुजिज्जीवशान्तिदः ॥ ७
आह्वानं स्थापनं रोधं सन्निधानं निवेशनम्।
पाद्यमाचमनं स्नानमर्घ्यञ्चागुरुलेपनम्।
दीपाम्बरं भूषणञ्च नैवेद्यं पानवीजनम् ॥ ८
माला मुद्रा जपो ध्यानं दक्षिणा चाहुतिः स्तुतिः
वाद्यं गीतञ्च नृत्यञ्च न्यासो योगः प्रदक्षिणम्।
प्रणतिर्मन्त्र इज्या च वन्दनञ्च विसर्ज्जनम् ॥ ९
षड़ङ्गादिप्रकारेण पूजनन्तु प्रमोदितम्।
परमेशमुखोद्गीर्णं यो जानाति स पूजकः ॥ १०
अर्घ्यपाद्यार्च्चनञ्चादावस्त्रेणैव तु ताड़नम्।
शोधनं कवचेनैव अमृतीकरणं ततः ॥ ११
पूजा चाधारशक्त्यादिः प्राणायामं तथासने।
पिण्डशुद्धिं ततः कुर्य्याच्छोषणाद्यैस्ततः स्मरेत्

(क) ध्यायेच्च सितपद्मस्थमिति च पाठः।

आत्मानं देवरूपञ्च कराङ्गन्यासकं चरेत् ।
आत्मानं पूजयेत् पश्चाज्ज्योतीरूपं हृदब्जतः ॥ १३
मूर्त्तौ वा स्थण्डिले वापि क्षिपेत् पुष्पन्तु भास्करम् ।
आह्वानं द्वारपूजार्थं पूजा चाधारशक्तिजा ॥ १४
सान्निध्यकरणं देवे परिवारस्य पूजनम् ।
अङ्गषट्कस्य पूजार्थं कर्त्तव्या दिग्विभागतः ॥ १५
धर्म्मादयश्च शक्राद्याः सायुधाः परिवारकाः ।
युग-वेद-मुहूर्त्ताश्च पूजेयं भुक्तिमुक्तिकृत् ॥ १६
मातृकाश्च गणश्चादौ नन्दि-गङ्गे च पूजयेत् ।
महाकालञ्च यमुनां देहल्यां पूजयेत् पुरा ॥ १७
ओं अमृतेश्वरभैरवाय नमः । एवं ओं ह्रूं सः
सूर्याय नमः ॥ १८
एवं शिवाय कृष्णाय ब्रह्मणे च गणाय च ।
चण्डिकायै सरस्वत्यै महालक्ष्म्यादि पूजयेत् ॥ १९
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे अमृतेश-
पूजनं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ।

हरिरुवाच ।

प्राणेश्वरं गारुड़ञ्च शिवोक्तं प्रवदाम्यहम् ।
स्थानान्यादौ प्रवक्ष्यामि नयां दष्टो न जीवति ॥ १
चिता-वल्मीक-शैलादौ कूपे च विवरे तरोः ।
दंशे रेखात्रयं यस्य प्रच्छन्नं स न जीवति ॥ २
षष्ठ्याञ्च कर्क्कटे मेषे मूलाश्लेषामघादिषु ।
कक्षाश्रोणिगले सन्धौ शङ्खकर्णोदरादिषु ॥ ३
दण्डी शस्त्रधरो भिक्षुर्नग्नादिः कालदूतकः ।
वक्त्रे बाहौ च ग्रीवायां पृष्ठे च न हि जीवति ॥ ४
पूर्व्वं दिनपतिर्भुङ्क्ते अर्द्धयामं ततोऽपरे ।
शेषा ग्रहाः प्रतिदिनं षट्संख्यापरिवर्त्तनैः ॥ ५
नागभोगक्रमो ज्ञेयो रात्रौ वाणविवर्त्तनैः ।
शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः ॥ ६
कर्कोटो ज्ञो गुरुः पद्मो महापद्मश्च भार्गवः ।
शङ्खः शनैश्वरो राहुः कुलिकश्चाहयो ग्रहाः ॥ ७
रात्रौ दिवा सुरगुरोर्भोगे स्यादमरान्तकः ।
अङ्गेः कालो दिवा राहुः कुलिकेन सह स्थितः ।

यामार्द्धद्वयसन्धिसंस्थो वेलां कालवतीं चरेत् ॥ ८
वाण-द्वि-षड्-वह्नि-वाजि-युग-भूरेकभागतः ।
दिवा षड्-वेद-नेत्राद्रि-पञ्च-त्रि-मानुषांशकैः ॥ ९
पादाङ्गुष्ठे पादपृष्ठे गुल्फे जानुनि लिङ्गके ।
नाभौ हृदि स्तनपुटे कण्ठे नासापुटेऽक्षिणि ।
कर्णयोश्च भ्रुवोः शङ्खे मस्तके प्रतिपत्क्रमात् ॥ १०
तिष्ठेच्चन्द्रश्च जीवेन पुंसो दक्षिणभागके ।
कायस्य वामभागे तु स्त्रिया वायुवहात् करात् ।
अवसत् तत्कृतो मोक्षो निवर्त्तेत च मर्द्दनात् ॥ ११
आत्मनः परमं वीजं हंसाख्यं स्फटिकामलम् ।
ज्ञातव्यं विषपापघ्नं वीजं तस्य चतुर्व्विधम् ॥ १२
बिन्दुपञ्चस्वरयुतमाद्यमुक्तं द्वितीयकम् ।
षष्ठारूढं तृतीयं स्यात् सविसर्गं चतुर्थकम् ॥ १३
ओं कुरुकुल्ले स्वाहा ॥ १४
विद्या त्रैलोक्यरक्षार्थं गरुड़ेन धृता पुरा १५
वर्णेप्सुना च नागानां मुखेऽथ प्रणवं न्यसेत् ।
गले कुरु न्यसेद्धीमान् हृदि चैव विशेषतः ।
कुल्ले स्वाहा गुह्ययोः पादयुगे न्यास ईरितः ॥ १६
गृहेऽपि लिखितो यत्र तन्नागाः सन्त्यजन्ति च ।
सहस्रमन्त्रजप्तन्तु कर्णे सूत्रं धृतं तथा ॥ १७
यद्गृहे शर्करा जप्ता क्षिप्ता नागास्त्यजन्ति तत् ।
सप्तलक्षस्य जप्याद्धि सिद्धिः प्राप्ता सुरासुरैः ॥ १८
ओं सुवर्णरेखे कुक्कुटविग्रहरूपिणि स्वाहा॥१९
एवञ्चाष्टदले पद्मे दले वर्णयुगं लिखेत् ।
नामैतद्वारिधाराभिः स्नातो दष्टो विषं त्यजेत्॥ २०
ओं पक्षि स्वाहा ॥ २१
अङ्गुष्ठादि कनिष्ठान्तं करे न्यस्याथ देहके ।
के वक्त्रे हृदि लिङ्गे च पादयोर्गरुड़ः स हि ॥ २२
नाक्रामन्ति च तच्छायां स्वप्नेऽपि विषपन्नगाः ।
यस्तु लक्षं जपेच्चास्याः स दृष्ट्वा नाशयेद्विषम् ॥ २३
ओं क्रौं क्रौं क्रौं भिरुण्डायै स्वाहा ॥ २४
कर्णे जप्ता त्वियं विद्या दष्टकस्य विषं हरेत् ॥ २५
अ आ न्यसेत् तु पादाग्रे इ ई गुल्फेऽथ जानुनि ।
उ ऊ ए ऐ कटितटे ओ नाभौ हृदि औ न्यसेत् ॥२६
वक्त्रे अमुत्तमाङ्गे अः न्यसेच्च हंससंयुताः ।
हंसो विषादि च हरेज्जप्तो ध्यातोऽथ पूजितः ॥२७

गरुड़ोऽहमिति ध्यात्वा कुर्य्याद्विषहरीं क्रियाम्।
हुं मन्त्रं गात्रविन्यस्तं विषादिहरमीरितम्॥ २८
न्यस्य हंसं वामकरे नासामुखनिरोधकृत्।
मन्त्री हरेद्दष्टकस्य लग्नांसादिगतं विषम्॥ २९
स वायुना समाकृष्य दष्टानां गरलं हरेत्।
तनौ न्यसेद्दष्टकस्य नीलकण्ठादि संस्मरेत्॥ ३०
पीतं प्रत्यङ्गिरामूलं तण्डुलाद्भिर्विषापहम्।
पुनर्नवाफलिनीनां मूलं चक्राजमीदृशम्॥ ३१
मूलं शुक्लबृहत्यास्तु कर्कोव्या गैरिकर्णिकम्।
अद्भिर्घृष्टं घृतोपेतं लेपोऽयं विषमर्द्दनः॥ ३२
विषवृद्धिं न व्रजेच्च उष्णां पिबति यो घृतम्।
पञ्चाङ्गन्तु शिरीषस्य मूलं गृञ्जनजं तथा।
सर्व्वाङ्गलेपतश्चापि पानाद्वा विषहृद्भवेत्॥ ३३
क्लौं गोनसादिविषहृत्॥ ३४
हृल्ललाटविसर्गान्तं ध्यातं वश्यादिकृद्भवेत्।
न्यस्तं योनौ वशेत् कन्यां कुर्य्यान्मदजलाविलाम्॥३५
जप्त्वा सप्ताष्टसाहस्रं गरुत्मानिव सर्व्वगः।
कविः स्याच्छ्रुतिधारी स्यादश्वत्थोञ्च समाप्नुयात्॥३६
विषहृत् स्यात् कथातत्त्वं मुनेर्व्यासस्य ते ध्रुवम्॥३७

इति श्रीगारुड़े महापुराणे प्राणेश्वरं नामैकोनविंशोऽध्यायः॥ १९॥

---

## विंशोऽध्यायः।

हरिरुवाच।

वक्ष्ये तत् परमं गुह्यं शिवोक्तं मन्त्रवृन्दकम्।
पाशं धनुश्च चक्रञ्च मुद्गरं शूलपट्टिशम्।
एतैरेवायुधैर्युद्धे मन्त्रैः शत्रुं जयेन्नृपः॥ १
मन्त्रोद्धारं पद्मपत्रे आदि पूर्व्वादिके लिखेत्।
अष्टवर्गञ्चाष्टमञ्च ख्यातमीशानपत्रके॥ २
ओङ्कारो ब्रह्मबीजं स्याद्ध्रीङ्कारो विष्णुरेव च।
हूङ्कारश्च शिवः शूले त्रिशाखे तु क्रमान्न्यसेत्॥ ३
ओं क्लीं हूं॥ ४
शूलं गृहीत्वा हस्तेन भ्राम्य चाकाशसम्मुखम्।
तद्दर्शनाद्ग्रहा नागा दृष्ट्वा वा नाशमाप्नुयुः॥ ५
धूम्रं धनुः करमध्ये ध्यात्वा खे चिन्तयेन्नरः।
दुष्टा नागा ग्रहा मेघा विनश्यन्ति च राक्षसाः।
त्रिलोकान् रक्षयेन्मन्त्री मर्त्त्यलोकस्य का कथा॥ ६
ओं ह्रूं सूं ह्रूं फट्॥ ७
खादिरान् कीलकानष्टौ क्षेत्रे संमन्त्र्य विन्यसेत्।
न तत्र वज्रपातस्य स्फूर्ज्जथ्वादिरुपद्रवः॥ ८
गरुड़ोक्तं महामन्त्रं कीलकानष्ट मन्त्रयेत्।
एकविंशतिवाराणि क्षेत्रे तु निखनेन्निशि॥ ९
विद्युन्मूषिकवज्रादिसमुपद्रव एव च।
हरक्षरमलवषड्विन्दुयुक्तः सदाशिवः॥ १०
ओं क्षां सदाशिवाय नमः॥ ११
तर्ज्जन्या विन्यसेत् पिण्डं दाड़िमीकुसुमप्रभम्॥ १२
तस्यैव दर्शनाद्दुष्टा मेघविद्युद्विषादयः।
राक्षसा भूतडाकिन्यः प्रद्रवन्ति दिशो दश॥ १३
ओं क्लीं गणेशाय नमः। ओं क्लीं स्तम्भनादि-चक्राय नमः। ओं ऐं यों त्रैलोक्यडामराय नमः॥ १४
भैरवं पिण्डमाख्यातं विषपापग्रहापहम्।
क्षेत्रस्य रक्षणं भूतराक्षसादेः प्रमर्द्दनम्॥ १५
ओं नमः॥ १६
इन्द्रवज्रं करे ध्यात्वा दुष्टमेघादिवारणम्।
विषशत्रुगणा भूता नश्यन्ति वज्रमुद्रया॥ १७
ओं क्षुं नमः॥ १८
स्मरेत् पाशं वामहस्ते विषभूतादि नश्यति॥ १९
ओं हूं नमः॥ २०
हरेदुच्चारणान्मन्त्री विष-मेघ-ग्रहादिकान्।
ध्यात्वा कृतान्तञ्च दहेच्छेदकाख्येण वै जगत्॥ २१
ओं क्षां नमः॥ २२
ध्यात्वा तु भैरवं कुर्य्याद्ग्रहभूतविषापहम्॥ २३
ओं लसद्विजिह्वाक्ष स्वाहा॥ २४
क्षेत्रादौ ग्रहभूतादिविषपक्षिनिवारणम्॥ २५
ओं क्षां नमः॥ २६
रक्तेन पटहे लिख्य शब्दस्तेषु ग्रहादयः॥ २७
ओं मर मर मारय मारय स्वाहा।
ओं हूं फट् स्वाहा॥ २८
मूलञ्चाष्टशतैर्मन्त्र्य भ्रामणाच्छत्रुवृन्दहृत्॥ २९
ऊर्द्ध्वशक्तिनिपातेन अधःशक्तिं निकुञ्चयेत्।

पूरके पूरिता मन्त्राः कुम्भकेन सुमन्त्रिताः ॥ ३०
प्रणवेनाप्यायितास्तेन अनेन तदुदीरिताः।
एवमाप्यायिता मन्त्रा भृत्यवत् फलदायकाः ॥ ३१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः।

हरिरुवाच।

पञ्चवक्त्रार्च्चनं वक्ष्ये पृथग्यद्भुक्तिमुक्तिदम् ॥ १
ओं भूविष्णवे आदिभूताय सर्व्वाधाराय
मूर्त्तये स्वाहा ॥ २
सद्योजातस्य चाह्वानमनेन प्रथमं चरेत् ॥ ३
ओं हां सद्योजातायैव कला ह्यष्टौ प्रकीर्त्तिताः।
सिद्धिऋद्धिर्धृतिर्लक्ष्मीर्मेधा कान्तिः स्वधा स्थितिः ॥४
ओं हां वामदेवायैव कला ह्यस्य त्रयोदश।
रजा रक्षा रतिः पाल्या कान्तिस्तृष्णा मतिः क्रिया।
कामा बुद्धिश्च रात्रिश्च त्रासनी मोहिनी तथा ॥ ५
मोम्मनी अघोरा च तथा मोहा क्षुधा कला।
निद्रा मृत्युश्च माया च अष्टसंख्या भयङ्करा ॥ ६
ओं हैं तत्पुरुषायैव।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिर्न केवला ॥ ७
ओं हौं ईशानाय नमो निश्चला च निरञ्जना।
शशिनी चाङ्गना चैव मरीचिर्ज्ज्वालिनी तथा ॥ ८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पञ्च-
वक्त्रपूजनं नामैकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः।

हरिरुवाच।

शिवार्च्चनं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम्।
शिवं सर्व्वगतं शून्यं मात्राद्वादशके स्थितम्।
वक्त्राणि ह्रस्वानि दीर्घाण्यङ्गानि विन्दुना ॥ १
सर्गं वदेदस्त्रं शिव जर्द्ध तथा पुनः।
नाधो महामन्त्रो हौमित्येवाखिलार्थदः ॥ २
हस्ताभ्यां संस्पृशेत् पादावूर्द्धं पादान्तमस्तकम्।
महामुद्रा हि सर्व्वेषां कराङ्गन्यासमाचरेत् ॥ ३
तालहस्तेन पृष्ठञ्च अस्त्रमन्त्रेण शोधयेत्।
कनिष्ठामादितः कृत्वा तर्ज्जन्यङ्गानि विन्यसेत् ॥ ४
पूजनं सम्प्रवक्ष्यामि कर्णिकायां हृदम्बुजे।
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यादि हृदार्च्चयेत् ॥ ५
आवाहनं स्थापनञ्च पाद्यमर्घ्यं हृदार्पयेत्।
आचामं स्नपनं पूजामेकाधारणतुल्यकाम् ॥ ६
अग्निकार्य्यविधिं वक्ष्ये अस्त्रेणोल्लेखनं चरेत्।
वर्म्मणाभ्युक्षणं कार्य्यं शक्तिन्यासं हृदाचरेत् ॥ ७
हृदि वा शक्तिगर्त्ते च प्रक्षिपेज्जातवेदसम्।
गर्भाधानादिकं कृत्वा निष्कृतिञ्चास्य पश्चिमाम् ॥ ८
हृदा कृत्वा सर्व्वकर्म्म शिवं साङ्गन्तु होमयेत्।
पूजयेन्मण्डले शम्भुं पद्मगर्भं गवाङ्कितम् ॥ ९
चतुःषष्ट्यन्तमष्टादि स्वाहिस्वाध्यादिमण्डलम्।
स्वाहीन्द्रसूर्य्यगं सर्व्वं स्वादि वेदेन्दुवर्त्तनात् ॥ १०
आग्नेय्यां कारयेत् कुण्डमर्द्धचन्द्रनिभं शुभम्।
अग्नीशास्त्र-परश्वस्त्र-हृदयादिगणोच्यते।
अस्त्रं दिशासुपान्तेषु कर्णिकायां सदाशिवम् ॥ ११
दीक्षां वक्ष्ये पञ्चतत्त्वे स्थितां भूम्यादिकां परे।
निवृत्तिभूः प्रतिष्ठायै विषाग्निः शान्तिवर्णिनः ॥१२
शान्त्यतीतं भवेद्धोमे तत्परं शान्तमव्ययम्।
एकैकस्य शतं होममित्येवं पञ्च होमयेत्।
पश्चात् पूर्णाहुतिं दत्त्वा प्रसादेन शिवं स्मरेत् ॥१३
प्रायश्चित्तं विशुद्ध्यर्थमेकैकाज्याहुतिं क्रमात्।
होमयेदस्त्रवीजेन एवं दीक्षा समाप्यते ॥ १४
यजनव्यतिरेकेण गोप्यं संस्कारमुत्तमम्।
एवं संस्कारयुक्तस्य शिवत्वं जायते ध्रुवम् ॥ १५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः।

हरिरुवाच।

शिवार्च्चनं प्रवक्ष्यामि धर्म्मकामादिसाधनम्।
त्रिभिर्मन्त्रैराचामेत स्वाहान्तैः प्रणवादिकैः ॥ १
ओं हांआत्मतत्त्वाय ओं ह्रीं विद्यातत्त्वाय ह्रौं तथा।

ओं हूं शिवतत्त्वाय स्वाहा हृदा स्याच्छोत्रवन्दनम्।
भस्मस्नानं तर्पणञ्च ओं हां यां स्वाहा सर्व्वमन्त्रकाः॥२
सर्व्वे देवाः सर्व्वमुनिर्नमोऽन्तो वौषड़न्तकः।
स्वधान्ताः सर्व्वपितरः स्वधान्ताश्च पितामहाः॥ ३
ओं हां प्रपितामहेभ्यस्तथा मातामहादयः।
हां नमः सर्व्वमातृभ्यस्ततः स्यात् प्राणसंयमः॥ ४
आचामं मार्ज्जनञ्चाथो गायत्रीञ्च जपेत् ततः॥ ५
ओं हां तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि।
तन्नो रुद्रः प्रचोदयात्॥ ६
सूर्य्योपस्थापनं कृत्वा सूर्य्यमन्त्रैः प्रपूजयेत्॥ ७
ओं हां हीं हूं हैं हौं हः शिवसूर्य्याय नमः।
ओं हं खखोल्काय सूर्य्यमूर्त्तये नमः। ओं ह्रां ह्रीं
सः सूर्य्याय नमः॥ ८
दण्डिने पिङ्गले त्वाति-प्रभूतासि नमः स्मरेत्॥ ९
अग्न्यादौ विमलेशानमाराध्य परमं सुखम्।
यजेत् पद्माञ्च रां दीप्तां रीं सूक्ष्मां रूं जयाञ्च रें१०
भद्राञ्च रैं विभूतिं रों विमलां रौममोघिकाम्।
रं विद्युताञ्च पूर्व्वादौ रो मध्ये रं सर्व्वतोमुखीम्॥११
अर्कासनं सूर्य्यमूर्त्तिं ह्रां ह्रूं सः सूर्य्यमर्च्चयेत्।
ओंआं हृदर्काय च शिरःशिखाय च भूर्भुवःस्वरौम्१२
ज्वालिनी हूं कवचस्य चास्त्रं राज्ञीञ्च दीप्तिताम्।
यजेत् सूर्य्यहृदा सर्व्वान् सों सोमञ्च मं मङ्गलम्॥१३
वं बुधं वृं वृहस्पतिं भं भार्गवं शं शनैश्चरम्।
रं राहुं कं यजेत् केतुं ओं तेजश्चण्डमर्च्चयेत्॥ १४
सूर्य्यमभ्यर्च्च्य चाचम्य कनिष्ठातोऽङ्गकान् न्यसेत्।
हां हीं शिरो हूं शिखा हैं वर्म्म हौञ्च नेत्रकम्।
होऽस्त्रं शक्तिस्थितिं कृत्वा भूतशुद्धिं पुनर्न्यसेत्॥ १५
अर्घ्यपात्रं ततः कृत्वा तदद्भिः प्रोक्षयेद्यजेत्।
आत्मानं पद्मसंस्थञ्च हौं शिवाय ततो वहिः॥ १६
द्वारे नन्दि-महाकालौ गङ्गा च यमुनाथ गौः।
श्रीवत्सं वास्त्वधिपतिं ब्रह्माणञ्च गणं गुरुम्॥ १७
शक्त्यनन्तौ यजेन्मध्ये पूर्व्वादौ धर्म्मकादिकम्।
अधर्म्मादिञ्च वह्न्यादौ मध्ये पद्मस्य कर्णिके।
वामा ज्येष्ठा च पूर्व्वादौ;रौद्री काली शिवासिता१८
ओं हां कलविकरिण्यै बलविकरिणी ततः।
बलप्रमथनी सर्व्व-भूतानां दमनी ततः॥ १९

मनोन्मनी यजेदेताः पीठमध्ये शिवाग्रतः।
शिवासनमहामूर्त्तिं मूर्त्तिमध्ये शिवाय च॥ २०
आवाहनं स्थापनञ्च सन्निधानं निरोधनम्।
सकलीकरणं मुद्रा-दर्शनञ्चार्घ्यपाद्यकम्॥ २१
आचामाभ्यङ्गमुद्वर्त्त-स्नानं निर्म्मञ्छनं चरेत्।
वस्त्रं विलेपनं पुष्पं धूपं दीपं चरुं ददेत्॥ २२
आचामं मुखवासञ्च ताम्बूलं हस्तशोधनम्।
छत्रचामरोपवीतं परमीकरणं चरेत्॥ २३
रूपकल्पनकैकत्वे जपो जपसमर्पणम्।
स्तुतिर्नतिर्हृदाद्यैश्च ज्ञेयं नामाङ्गपूजनम्॥ २४
अग्नीशरक्षोवायव्ये मध्ये पूर्व्वादितोऽस्त्रकम्।
इन्द्राद्यांश्च यजेच्चण्डं तस्मै निर्म्माल्यमर्पयेत्॥ २५
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादात् त्वयि स्थिते॥ २६
यत् किञ्चित् कर्म्म हे देव सदा सुकृतदुष्कृतम्।
तन्मे शिवपदस्थस्य हूं क्षः क्षपय शङ्कर (क)॥२[illegible]
शिवो दाता शिवो भोक्ता शिवः सर्व्वमिदं जगत्।
शिवो जयति सर्व्वत्र यः शिवः सोऽहमेव च॥२[illegible]
यत् कृतं यत् करिष्यामि तत् सर्व्वं सुकृतं तव।
त्वं त्राता विश्वनेता च नान्यो नाथोऽस्ति मे शिव
अथान्येन प्रकारेण शिवपूजां वदाम्यहम्।
गणः सरस्वती नन्दी महाकालोऽथ गङ्गया॥ [illegible]
यमुनास्त्रं वास्त्वधिपो द्वारि पूर्व्वादितस्त्विमे।
इन्द्राद्याः पूजनीयाश्च तत्त्वानि पृथिवी जलम्
तेजो वायुर्व्योम गन्धो रसरूपे च शब्दकः।
स्पर्शो वाक् पाणिपादौ च पायूपस्थं श्रुतिस्त्वचौ
चक्षुर्जिह्वा घ्राणमनो बुद्धिश्चाहंप्रकृत्यपि।
पुमान् रागो द्वेषविद्ये कालाकालनियत्यपि॥ [illegible]
माया च शुद्धविद्या च ईश्वरश्च सदाशिवः।
शक्तिः शिवश्च तान् ज्ञात्वा मुक्तो ज्ञानी शिवो भ[illegible]
यः शिवः स हरिर्ब्रह्मा सोऽहं ब्रह्मास्मि मुक्तितः
भूतशुद्धिं प्रवक्ष्यामि यथा शुद्धः शिवो भवेत्।
हृत्पद्मे सद्योमन्त्रः स्यान्निवृत्तिश्च कला इड़ा॥
पिङ्गला द्वे च नाड्यौ च प्राणोऽपानश्च मारुतौ
ईन्द्रदैवो ब्रह्मदैवश्चतुरस्रञ्च मण्डलम्॥ ३६

(क.) क्षयं कुरु शशिस्कर इति क्वचित् पाठः

वज्रेण लाञ्छितं दीप्तमेकोद्घातगुणाः पराः।
हृत्स्थानपातूणहनं शतकोष्ठप्रविस्तरम् ॥ ३७
ओं क्ष्रौं प्रतिष्ठायै ओं हूं हः फट्। ओं क्ष्रं
विद्यायै क्ष्रूं हः फट् ॥ ३८
चतुरशीतिकोटीनामुच्छ्रयं भूमितत्त्वकम्।
तन्मध्ये भवद्दचञ्च आत्मानञ्च विचिन्तयेत् ॥ ३९
अधोमुखीं ततः पृथ्वीं तदच्छन्दं भवेद्ध्रुवम्।
वामदेवी प्रतिष्ठा च सुषुम्णा कारिका तथा ॥ ४०
समानोदानवरुणौ देवताविष्णुकारणम्।
उद्घातास्य गुणं वेदाः श्वेताध्यानं तथैव च ॥ ४१
एवं कुर्य्यात् कण्ठपद्ममर्द्धचन्द्राख्यमण्डलम्।
पद्माङ्कितं द्विशतकं कोटिविस्तीर्णमास्मरेत् ॥ ४२
चतुर्नवत्युच्छ्रयञ्च आत्मानञ्च अधोमुखम्।
तासु स्थानञ्च पद्मञ्च अघोरो विद्ययान्वितः ॥ ४३
नाभ्योष्ठया हस्तिजिह्वा ध्यानो नागोऽग्निदेवता।
रुद्रहेतुस्त्रिरुद्घातास्त्रिगुणा रक्तवर्णकम् ॥ ४४
ज्वालाकृते त्रिकोणाच्च चतुःकोटिशतानि च।
विस्तीर्णञ्च समुत्सेधं रुद्रतत्त्वं विचिन्तयेत् ॥ ४५
ललाटे तु तत्पुरुषः शक्तिर्यः माइलं बुधाः।
कूर्म्मश्च कृकरो वायुर्द्देव ईश्वरकारणम् ॥ ४६
द्विरुद्घातगुणौ द्वौ च वृत्तं षट्कोणमण्डलम्।
बिन्दुङ्कितञ्चाष्टकोटि-विस्तीर्णञ्चोच्छ्रयं तथा।
चतुर्द्दशाधिकं कोटि वायुतत्त्वं विचिन्तयेत् ॥ ४७
द्वादशान्ते सरसिजे शान्त्यतीतास्तथेश्वराः।
कुहूश्च शङ्खिनी नाड्यौ देवदत्तो धनञ्जयः ॥ ४८
शिखेशानकारणञ्च सदाशिव इति स्मृतः।
गुण एकस्तथोद्घातः शुद्धस्फटिकवत् स्मरेत् ॥ ४९
षोड़शं कोटिविस्तीर्णं पञ्चविंशति चोच्छ्रयम्।
वर्त्तुलं चिन्तयेद्धाम भूतशुद्धिरुदाहृता ॥ ५०
गणगुरुर्व्वीजगुरुः शक्त्यनन्तौ च धर्म्मकः।
ज्ञानवैराग्यमैश्वर्य्यं ततः पूर्व्वादिपत्रके ॥ ५१
अधोर्द्ध्ववदने द्वे च पद्मकर्णिककेशरम्।
वामाद्या आत्मविद्या च सदा ध्यायेच्छिवाख्यकम्।
तत्त्वं शिवासने मूर्त्तिर्ह्रौं ह्रौं विद्यादेहाय नमः ॥ ५२
बद्धपद्मासनासीनः सितः षोड़शवर्षकः।
पञ्चवक्त्रः कराग्रैः स्वैर्दशभिश्चैव धारयन् ॥ ५३
अभयं प्रसादं शक्तिं शूलं खट्वाङ्गमीश्वरः।
दक्षैः करैर्व्वामकैश्च भुजगञ्चाक्षसूत्रकम्।
डमरुकं नीलोत्पलं वीजपूरकमुत्तमम् ॥ ५४
इच्छा ज्ञाना क्रिया शक्तिस्त्रिनेत्रो हि सदाशिवः।
एवं शिवार्च्चनध्यानी सर्व्वदा कालवर्ज्जितः ॥ ५५
इड़ाहोरात्रचारेण त्रीणि वर्षाणि जीवति।
दिनद्वयस्य चारेण जीवेद्वर्षद्वयं नरः ॥ ५६
दिनत्रयस्य चारेण वर्षमेकं स जीवति।
नाकाले शीतले मृत्युरुष्णे चैव तु कारके ॥ ५७
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे शिवादि-
पूजायां त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्व्विंशोऽध्यायः।

हरिरुवाच।

वक्ष्ये गणादिकाः पूजाः सर्व्वदाः सर्गदाः पराः।
गणानां मङ्गलां मूर्त्तिं गणाधिपतिमर्च्चयेत् ॥ १
गामादि (क) हृदयाद्यङ्गं दुर्गाया गुरुपादुकाः।
दुर्गासनञ्च तन्मूर्त्तिं क्रौं दुर्गे दुर्गे रक्षिणीति च ॥२
हृदादिकमष्टशक्त्यो रुद्रचण्डा प्रचण्डया।
चण्डोग्रा चण्डनायिका चण्डा चण्डवती क्रमात्।
चण्डरूपा चण्डिकाख्या दुर्गे दुर्गेऽथ रक्षिणि ॥ ३
वज्रखड्गादिका मुद्रा शिवाद्या वह्निदैशतः।
सदाशिवमहाप्रेतपद्मासनमथापि वा ॥ ४
ऐं क्लीं सौस्त्रिपुरायै नमः ॥ ५
ओं ह्रां ह्रीं चें चैं ह्रौं ह्रौं रें स्रें स्रौं शां।
पद्मासनञ्च मूर्त्तिञ्च त्रिपुराहृदयादिकम् ॥ ६
पीठाम्बुजे तु ब्राह्म्यादीर्ब्रह्माणी च महेश्वरी।
कौमारी वैष्णवी पूज्या वाराही चेन्द्रदेवता।
चामुण्डा चण्डिका पूज्या भैरवाख्यांस्ततो यजेत् ॥ ७
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः।
कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ॥ ८
रतिः प्रीतिः कामदेवः पञ्च वाणाश्च योगिनी।
वटुकं दुर्गया विघ्न-राजो गुरुश्च क्षेत्रपः ॥ ९
पद्मगर्भे मण्डले च त्रिकोणे चिन्तयेद्धृदि।

(क) प्राणापीति क्वचित् पाठः ॥

शुक्लां वराच-सूत्र-पुस्तकाभयसमन्विताम्।
लक्षजप्याच्च होमाच्च त्रिपुरा सिद्धिदा भवेत्॥ १०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे गणादिपूजा नाम चतुर्व्विंशोऽध्यायः॥२४॥

---

## पञ्चविंशोऽध्यायः।

हरिरुवाच।

ऐं क्लीं श्रीं स्फ्रें ह्रौं अनन्तशक्तिपादुकां पूजयामि नमः॥ १

ऐं क्लीं श्रीं फ्रीं ह्रौं आधारशक्तिपादुकां पूजयामि नमः॥ २

श्रीं ह्रूं कालाग्निरुद्रपादुकां पूजयामि नमः॥३

श्रीं क्लीं ह्रूं हाटकेश्वरदेवपादुकां पूजयामि नमः॥ ४

श्रीं क्लीं शेषभट्टारकपादुकां पूजयामि नमः॥५

श्रीं क्लीं श्रीं पृथिवीतदर्शभुवनद्वीपसमुद्रदिशामनन्ताख्यमासनं पूजयामि नमः॥ ६

क्लीं श्रीं निवृत्त्यादिकला पृथिव्यादितत्त्वमनन्तादिभुवनमोङ्कारादिवर्णं हकारादिनवात्मकपदः सद्योजातादिमन्त्रः॥ ७

हां हृदयाद्यङ्गः। एवं माहेश्वरो मन्त्रः सिद्धविद्यात्मकः परामृतार्णवः॥ ८

सर्व्वतो दिक्समस्तेषु षड़ङ्गं सदाशिवार्णवपयःपूर्णोदधिपद्मं श्रीमानासदात्मकः॥ ९

वियोमापूर्णशतलकर्त्तृकललक्षणाज्येष्ठारूपचक्ररुद्रशत्यात्मककर्णिको नवशक्तिशिवादित्रिशूलमण्डलत्रयः॥ १०

पञ्चजात्मको न्यस्तपद्मासनपादुकां पूजयामि नमः॥ ११

इति श्रीगारुड़े महापुराणे आसनपूजा नाम पञ्चविंशोऽध्यायः॥ २५॥

---

## षड़्विंशोऽध्यायः।

हरिरुवाच।

अनन्तरं करन्यासः। विद्याकारी शुद्धिः कार्या। पद्ममुद्रां बद्ध्वा मन्त्रन्यासं कुर्य्यात्॥ १

क्रौं कनिष्ठायै नमः। नौं अनामिकायै नमः। मौं मध्यमायै नमः। तौं तर्ज्जन्यै नमः। श्रं अङ्गुष्ठायै नमः। लां करतलायै नमः। वां करपृष्ठायै नमः॥ २

अथ देहन्यासः। स्थं स्थं मणिबन्धाय नमः। ऐं क्लीं श्रीं करास्फालाय नमः। महातेजोरूपं ह्रूं हूङ्कारेण करास्फालनं कुर्य्यात्॥ ३

ऐं क्लीं क्लीं श्रीं ह्रैं स्फौं नमो भगवति स्फौं कुब्जिकायै नमः। ह्रूं क्लीं क्रौं ङञणनमे अघोरामुखि ह्रां ह्रीं किलि किलि विद्ये स्त्रौ व्यङ्गस्त्रौ क्लीं क्लीं श्रीं ऐं नमो भगवते ऊर्द्धवक्त्राय नमः। स्फौं कुब्जिकायै पूर्व्ववक्त्राय नमः। क्लीं श्रीं क्लीं ङञणनमे दक्षिणवक्त्राय नमः। श्रीं क्लीं श्रीं किलि किलि पश्चिमवक्त्राय नमः। श्रीं अघोरामुखि उत्तरवक्त्राय नमः। श्रीं नमो भगवते हृदयाय नमः। ह्रैं ऐं कुब्जिकायै शिरसे स्वाहा। क्लीं क्रीं क्लीं प्रां ङञणनमे शिखायै वषट्। अघोरामुखि कवचाय हूं। ह्रैं ह्रैं ह्रूं नेत्रत्रयाय वौषट्। किलि किलि विद्ये अस्त्राय फट्॥ ४

ऐं क्लीं श्रीं अखण्डमण्डलाकारमहाशूलमण्डलाय नमः। ऐं क्लीं श्रीं वायुमण्डलाय नमः। ऐं क्लीं श्रीं सोममण्डलाय नमः। ऐं क्लीं श्रीं महाकुलबोधावलिमण्डलाय नमः। ऐं क्लीं श्रीं महाकौलमण्डलाय नमः। ऐं क्लीं श्रीं गुरुमण्डलाय नमः। ऐं क्लीं क्लीं आम्नायमण्डलाय नमः। ऐं क्लीं श्रीं समग्रसिद्धयोगिनीपीठोपपीठक्षेत्रोपक्षेत्रमहासन्तानमण्डलाय नमः। एवं मण्डलानां द्वादशकं क्रमेण पूज्यम्॥ ५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे कुब्जिकापूजा नाम षड़्विंशोऽध्यायः॥ २६॥

---

## सप्तविंशोऽध्यायः ।

हरिरुवाच ।

ओं कालविकालकङ्कालि चर्व्विणि भूतहारिणि फणिविषिणि विरथनारायणि उमे दह दह हस्ते चण्डे रौद्रि माहेश्वरि महामुखि ज्वालामुखि शङ्कुकर्णि शुकमुण्डे शत्रुं हन हन सर्व्वनाशिनि स्वेद सर्व्वाङ्गशोणितम् । तन्निरीक्षसि मनसादेवि सम्मोहय सम्मोहय रुद्रस्य हृदये जाता रुद्रस्य हृदये स्थिता । रुद्रो रौद्रेण रूपेण त्वं देवि एहि एहि रक्ष रक्ष मां ॥ क्रूं मां क्रूं मां क्रूं फफ ठठ स्कन्दमेखलावान् ग्रहशत्रुविषहरि ओं शाले माले हर हर विषोरगं हां हां शवरि हूं शवरि प्रकोपविश्वरे सर्व्वं विद्य मेवमाले । सर्व्वनागादिविषहरणम् ॥ १

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ।

हरिरुवाच ।

गोपालपूजां रुव्यामि भुक्तिमुक्तिप्रदायिनीम् ।
द्वारे धाता विधाता च गङ्गा यमुनया सह ॥ १
शङ्खपद्मनिधी चैव शारङ्गः शरभः श्रिया ।
पूर्व्वे भद्रः सुभद्रो द्वौ दक्षे चण्डप्रचण्डकौ ॥ २
पश्चिमे बलप्रबलौ जयश्च विजयो यजेत् ।
उत्तरे श्रीश्चतुर्द्वारे गणो दुर्गा सरस्वती ॥ ३
देवस्याग्न्यादिकोणेषु दिक्षु नारदपूर्व्वकम् ।
सिद्धो गुरुर्नलकूवरः कोणे भागवतं यजेत् ॥ ४
पूर्व्वं विष्णुं विष्णुतपो विष्णुशक्तिं समर्च्चयेत् ।
ततो विष्णुपरीवारं मध्ये शक्तिञ्च कूर्म्मकम् ॥ ५
अनन्तं पृथिवीं धर्म्मं ज्ञानं वैराग्यमन्वितः ।
ऐश्वर्य्यं वायुपूर्व्वञ्च प्रकाशात्मानमुत्तरे ॥ ६
सत्त्वाय प्रकृत्यात्मने रजसे मोहरूपिणे ।
तमसे पद्माय यजेदहङ्कारकतत्त्वकम् ॥ ७
विद्यातत्त्वं परं तत्त्वं सूर्य्येन्दुवह्निमण्डलम् ।
विमलाद्या आसनञ्च प्राच्यं श्रीं ह्रीं सम्पूजयेत् ।
गोपीजनवल्लभाय स्वाहान्तो मनुरुच्यते ॥ ८
स्वाहान्तान्यङ्गान्याचक्रं विचक्रञ्च सुचक्रकम् ।
त्रैलोक्यरक्षणं चक्रमसुरारिसुदर्शनम् ॥ ९
हृदादिपूर्व्वकोणेषु अस्त्रं शक्तिञ्च पूर्व्ववतः ।
रुक्मिणी सत्यभामा च सुनन्दा नाग्नजित्यपि ॥ १०
लक्ष्मणा मित्रविन्दा च जाम्बवत्या सुशीलया ।
शङ्ख-चक्र-गदा-पद्मं मुषलं शार्ङ्गमर्च्चयेत् ॥ ११
खड्गं पाशाङ्कुशं प्राच्यां श्रीवत्सं कौस्तुभं यजेत् ।
मुकुटं वनमालाञ्च इन्द्राद्यान् ध्वजमुख्यकान् ॥ १२
कुमुदाद्यान् विश्वक्सेनं कृष्णं श्रिया सहार्च्चयेत् ।
जप्याद्ध्यानात् पूजनाच्च सर्व्वान् कामानवाप्नुयात् ॥१३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे श्रीकृष्णपूजनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

हरिरुवाच ।

त्रैलोक्यमोहिनीं वक्ष्ये पुरुषोत्तमसुख्यकाम् ।
पूजामन्त्रान् श्रीधराद्यान् धर्म्मकामादिदायकान् ॥१

ओं ह्रीं श्रीं क्लीं ह्रूं ओं नमः पुरुषोत्तम अप्रतिरूप लक्ष्मीनिवास सकलजगत्क्षोभण सर्व्वस्त्रीहृदयविदारण त्रिभुवनमदोन्मादकर सुरासुरमनुजसुन्दरीजनमनांसि तापय तापय शोषय शोषय मारय मारय स्तम्भय स्तम्भय द्रावय द्रावय आकर्षय आकर्षय ॥ २

परमसुभग सर्व्वसौभाग्यकर सर्व्वकामप्रद अमुकं हन हन चक्रेण गदया खड्गेन सर्व्ववाणैर्भिन्धि भिन्धि पाशेन कट्ट कट्ट अङ्कुशेन ताड़य ताड़य तुरु तुरु किं तिष्ठसि तावद्यावत् समीहितं मे सिद्धं भवति ह्रूं फट् नमः ॥ ३

ओं श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः ॥ ४
ओं क्लीं पुरुषोत्तमाय त्रैलोक्यमोहनाय नमः॥५
ओं ह्रूं विष्णवे त्रैलोक्यमोहनाय नमः ॥ ६
ओं श्रीं ह्रीं क्लीं त्रैलोक्यमोहनाय विष्णवेनमः॥७
त्रैलोक्यमोहना मन्त्राः सर्व्वे सर्व्वार्थसाधकाः ।

सर्व्वं विद्याः पृथग्वापि व्यास-संक्षेपतोऽथवा ॥ ८
आसनं मूर्त्तिमन्त्रञ्च होमाद्यङ्गषडङ्गकम्।
चक्रं गदाञ्च खड्गञ्च मुषलं शङ्खशार्ङ्गकम् ॥ ९
शरं पाशमङ्कुशञ्च लक्ष्मीगरुड़संयुतम्।
विष्वक्सेनं विस्तराद्वा नरः सर्व्वमवाप्नुयात् ॥ १०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे मोहिनी-पूजनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः।

हरिरुवाच।

विस्तरेण प्रवक्ष्यामि श्रीधरस्यार्च्चनं शुभम्।
परिवारस्य सर्व्वेषां समो ज्ञेयो हि पण्डितैः ॥ १

ओं श्रां हृदयाय नमः। ओं श्रीं शिरसे स्वाहा। ओं श्रूं शिखायै वषट्। ओं श्रैं कवचाय हूं। ओं श्रौं नेत्रत्रयाय वौषट्। ओं श्रः अस्त्राय फट् इति ॥ २

दर्शयेदात्मनो मुद्रां शङ्ख-चक्र-गदादिकाम्।
ध्यात्वात्मानं श्रीधराख्यं शङ्ख-चक्र-गदाधरम् ॥ ३
ततस्तं पूजयेद्देवं मण्डले स्वस्तिकादिके।
आसनं पूजयेदादौ देवदेवस्य शार्ङ्गिणः।
एभिर्मन्त्रैर्महादेव तान् मन्त्रान् शृणु शङ्कर ॥ ४

ओं श्रीधरासनदेवता आगच्छत। ओं समस्तपरिवारायाच्युतासनाय नमः। ओं धात्रे नमः। ओं विधात्रे नमः। ओं गङ्गायै नमः। ओं यमुनायै नमः। ओं आधार-शक्त्यै नमः। ओं कूर्म्माय नमः। ओं अनन्ताय नमः। ओं पृथिव्यै नमः। ओं धर्म्माय नमः। ओं ज्ञानाय नमः। ओं वैराग्याय नमः। ओं ऐश्व-र्य्याय नमः। ओं अधर्म्माय नमः। ओं अज्ञानाय नमः। ओं अवैराग्याय नमः। ओं अनैश्वर्य्याय नमः। ओं स्कन्दाय नमः। ओं नीलाय नमः। ओं पद्माय नमः। ओं विमलायै नमः। ओं उत्कर्षिण्यै नमः। ओं ज्ञानायै नमः। ओं क्रियायै नमः। ओं योगायै नमः। ओं पुह्व्यै नमः। ओं प्रह्व्यै नमः। ओं सत्यायै नमः। ओं ईशानायै नमः। ओं अनुग्रहायै नमः ॥ ५

अर्च्चयित्वा समं रुद्र हरिमावाह्य संयजेत्।
मन्त्रैरेभिर्महाप्राज्ञः सर्व्वपापप्रणाशनैः ॥ ६

ओं श्रीं श्रीधराय त्रैलोक्यमोहनाय विष्णवे नमः ॥ ७

ओं श्रियै नमः। ओं श्रां हृदयाय नमः। ओं श्रीं शिरसे नमः। ओं श्रूं शिखायै नमः। ओं श्रैं कवचाय नमः। ओं श्रौं नेत्रत्रयाय नमः। ओं श्रः अस्त्राय नमः। ओं शङ्खाय नमः। ओं पद्माय नमः। ओं चक्राय नमः। ओं गदायै नमः। ओं श्रीवत्साय नमः। ओं कौस्तुभाय नमः। ओं वनमालायै नमः। ओं पीताम्बराय नमः। ओं ब्रह्मणे नमः। ओं नारदाय नमः। ओं गुरुभ्यो नमः। ओं इन्द्राय नमः। ओं अग्नये नमः। ओं यमाय नमः। ओं निर्ऋतये नमः। ओं वरुणाय नमः। ओं वायवे नमः। ओं सोमाय नमः। ओं ईशानाय नमः। ओं अनन्ताय नमः। ओं ब्रह्मणे नमः। ओं सत्त्वाय नमः। ओं रजसे नमः। ओं तमसे नमः। ओं विष्वक्सेनाय नम इति ॥ ८

अभिषेकं तथा वस्त्रं ततो यज्ञोपवीतकम्।
गन्धं पुष्पं तथा धूपं दीपमन्नं प्रदक्षिणम् ॥ ९
दद्यादेभिर्महामन्त्रैः समाप्याथ जपेन्मनुम्।
शतमष्टोत्तरञ्चापि जप्त्वा ह्यथ समर्पयेत् ॥ १०
ततो मुहूर्त्तमेकन्तु ध्यायेद्देवं हृदिस्थितम्।
शुद्धस्फटिकसङ्काशं सूर्य्यकोटिसमप्रभम् ॥ ११
प्रसन्नवदनं सौम्यं स्फुरन्मकरकुण्डलम्।
किरीटिनमुदाराङ्गं वनमालासमन्वितम्।
परंब्रह्मस्वरूपञ्च श्रीधरं चिन्तयेत् सुधीः ॥ १२
अनेन चैव स्तोत्रेण स्तुवीत परमेश्वरम्।
श्रीनिवासाय देवाय नमः श्रीपतये नमः ॥ १३
श्रीधराय सशार्ङ्गाय श्रीप्रदाय नमो नमः।
श्रीवल्लभाय शान्ताय श्रीमते च नमो नमः ॥ १४
श्रीपर्व्वतनिवासाय नमः श्रेयस्कराय च।
श्रेयसां पतये चैव ह्याश्रमाय नमो नमः ॥ १५
नमः श्रेयःस्वरूपाय श्रीकराय नमो नमः।

महत्त्वाय वरेण्याय नमो भूयो नमो नमः॥ १६
स्तोत्रं कृत्वा नमस्कृत्य देवदेवं विसर्ज्जयेत्।
इति रुद्र समाख्याता पूजा विष्णोर्महात्मनः॥ १७
यः करोति महाभक्त्या स याति परमं पदम्।
इमं यः पठतेऽध्यायं विष्णुपूजाप्रकाशकम्।
स विधूयेत पापानि याति विष्णोः परं पदम्॥ १८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
त्रिंशोऽध्यायः॥ ३०॥

---

## एकत्रिंशोऽध्यायः।

रुद्र उवाच।

भूय एव जगन्नाथ पूजां कथय मे प्रभो।
यया तरेयं संसारसागरं ह्यतिदुस्तरम्॥ १

हरिरुवाच।

अर्च्चनं विष्णुदेवस्य वक्ष्यामि वृषभध्वज।
तच्छृणुष्व महाभाग भुक्तिमुक्तिप्रदं शुभम्॥ २
कृत्वा स्नानं ततः सन्ध्यां ततो यागगृहं व्रजेत्।
प्रक्षाल्य पाणी पादौ च आचम्य च विशेषतः॥ ३
मूलमन्त्रं समस्तन्तु हस्तयोर्व्यापकं न्यसेत्।
मूलमन्त्रञ्च देवस्य शृणु रुद्र वदामि ते॥ ४

ओं श्रीं श्रीधराय विष्णवे नमः॥

अयं मन्त्रः सुरेशस्य विष्णोरीशस्य वाचकः॥ ५
सर्व्वव्याधिहरश्चैव सर्व्वग्रहहरस्तथा।
सर्व्वपापहरश्चैव भुक्तिमुक्तिप्रदायकः॥ ६
अङ्गन्यासं ततः कुर्य्यादेभिर्मन्त्रैश्च शङ्कर (क)॥ ७

ओं ह्रां हृदयाय नमः। ओं ह्रीं शिरसे स्वाहा। ओं ह्रूं शिखायै वषट्। ओं ह्रैं कवचाय हुं। ओं ह्रौं नेत्रत्रयाय वौषट्। ओं ह्रः अस्त्राय फट्॥ ८

इति मन्त्रः समाख्यातो मया ते प्रभविष्णुना।
न्यासं कृत्वात्मनो मुद्रां दर्शयेद्विजितात्मवान्॥ ९
ततो ध्यायेत् परं विष्णुं हृत्कोटरसमाश्रितम्।
शङ्ख-चक्रसमायुक्तं कुन्देन्दुधवलं हरिम्॥ १०
श्रीवत्सकौस्तुभयुतं वनमालासमन्वितम्।
रत्नहारकिरीटेन संयुक्तं परमेश्वरम्।
अहं विष्णुरिति ध्यात्वा कृत्वा वै शोधनादिकम्॥ ११
यं क्षं रमिति वीजैश्च कठिनीकृत्य लमिति।
अण्डमुत्पाद्य च ततः प्रणवेनैव भेदयेत्॥ १२
तत्र पूर्व्वोक्तरूपन्तु भावयित्वा वृषध्वज।
आत्मपूजां ततः कुर्य्याद्गन्धपुष्पादिभिः शुभैः॥ १३
आवाह्य पूजयेत् सर्व्वा देवता आसनस्य याः।
मन्त्रैरेभिर्महादेव तन्मन्त्रं शृणु शङ्कर॥ १४

ओं विश्वासनदेवता आगच्छत। ओं समस्तपरिवारायाच्युताय नमः। ओं धात्रे नमः। ओं विधात्रे नमः। ओं गङ्गायै नमः। ओं यमुनायै नमः। ओं शङ्खनिधये नमः। ओं पद्मनिधये नमः। ओं चण्डाय नमः। ओं प्रचण्डाय नमः। ओं द्वारश्रियै नमः। ओं आधारशक्त्यै नमः। ओं कूर्म्माय नमः। ओं अनन्ताय नमः। ओं श्रियै नमः। ओं धर्म्माय नमः। ओं ज्ञानाय नमः। ओं वैराग्याय नमः। ओं ऐश्वर्य्याय नमः। ओं अधर्म्माय नमः। ओं अज्ञानाय नमः। ओं अवैराग्याय नमः। ओं अनैश्वर्य्याय नमः। ओं सं सत्त्वाय नमः। ओं रं रजसे नमः। ओं तं तमसे नमः। ओं कं कन्दर्पाय नमः। ओं मं नीलाय नमः। ओं लां पद्माय नमः। ओं अं अर्कमण्डलाय नमः। ओं उं सोममण्डलाय नमः। ओं मं वह्निमण्डलायनमः। ओं विमलायै नमः। ओं उत्कर्षिण्यै नमः। ओं ज्ञानायै नमः। ओं क्रियायै नमः। ओं योगायै नमः। ओं प्रह्व्यै नमः। ओं सत्यायै नमः। ओं ईशानायै नमः। ओं अनुग्रहायै नमः॥ १५

गन्धपुष्पादिभिस्त्वेतैर्मन्त्रैरेतास्तु पूजयेत्।
पूजयित्वा ततो विष्णुं सृष्टिसंहारकारिणम्॥ १६
आवाह्य मण्डले रुद्र पूजयेत् परमेश्वरम्।
अनेन विधिना रुद्र सर्व्वपापहरं हरिम्॥ १७
यथात्मनि तथा देवे न्यासं कुर्व्वीत चादितः।
मुद्रां प्रदर्शयेत् पश्चादर्घ्यादि दर्शयेत् ततः॥ १८
स्नानं कुर्य्यात् ततो वस्त्रं दद्यादाचमनं ततः।
गन्धपुष्पं तथा धूपं दीपं दद्याच्चरुं ततः॥ १९

(क) विचक्षण इति वा पाठान्तरम्।

प्रदक्षिणं ततो जप्यं ततस्तस्मिन् समर्पयेत्।
अङ्गादीनां स्वमन्त्रैश्च पूजां कुर्व्वीत साधकः॥ २०
देवस्य मूलमन्त्रेण ह्रीति विद्धि वृषध्वज।
मन्त्रान् शृणु त्रिनेत्र त्वं कथ्यमानान् मयाधुना॥२१

ओँ ह्रां हृदयाय नमः। ओँ ह्रीँ शिरसे नमः। ओँ ह्रूं शिखायै नमः। ओँ ह्रैँ कवचाय नमः। ओँ ह्रौँ नेत्रत्रयाय नमः। ओँ ह्रः अस्त्राय नमः॥२२

ओँ श्रियै नमः। ओँ शङ्खाय नमः। ओँ पद्माय नमः। ओँ चक्राय नमः। ओँ गदायै नमः। ओँ श्रीवत्साय नमः। ओँ कौस्तुभाय नमः। ओँ वनमालायै नमः। ओँ पीताम्बराय नमः। ओँ खड्गाय नमः। ओँ मुषलाय नमः। ओँ पाशाय नमः। ओँ अङ्कुशाय नमः। ओँ शार्ङ्गाय नमः। ओँ शराय नमः। ओँ ब्रह्मणे नमः। ओँ नारदाय नमः। ओँ सर्व्वसिद्धेभ्यो नमः। ओँ भागवतेभ्यो नमः। ओँ गुरुभ्यो नमः। परमगुरुभ्यो नमः। ओँ इन्द्राय सुराधिपतये सवाहनपरिवाराय नमः। ओँ अग्नये तेजोऽधिपतये सवाहनपरिवाराय नमः। ओँ यमाय प्रेताधिपतये सवाहनपरिवाराय नमः। ओँ निर्ऋतये रक्षोऽधिपतये सवाहनपरिवाराय नमः। ओँ वरुणाय जलाधिपतये सवाहनपरिवाराय नमः। ओँ वायवे प्राणाधिपतये सवाहनपरिवाराय नमः। ओँ सोमाय नक्षत्राधिपतये सवाहनपरिवाराय नमः। ओँ कुबेराय यक्षाधिपतये सवाहनपरिवाराय नमः। ओँ ईशानाय विद्याधिपतये सवाहनपरिवाराय नमः। ओँ अनन्ताय नागाधिपतये सवाहनपरिवाराय नमः। ओँ ब्रह्मणे सर्व्वलोकाधिपतये सवाहनपरिवाराय नमः। ओँ वज्राय ह्रूं फट् नमः। ओँ शक्त्यै ह्रूं फट् नमः। ओँ दण्डाय ह्रूं फट् नमः। ओँ खड्गाय ह्रूं फट् नमः। ओँ पाशाय ह्रूं फट् नमः। ओँ ध्वजाय ह्रूं फट् नमः। ओँ गदायै ह्रूं फट् नमः। त्रिशूलाय ह्रूं फट् नमः। ओँ चक्राय ह्रूं फट् नमः। ओँ पद्माय ह्रूं फट् नमः। ओ वौँ विष्वक्सेनाय नमः॥ २३

एभिर्मन्त्रैर्महादेव पूज्या अङ्गादयो नराः॥ २४
पूजयित्वा महात्मानं विष्णुं ब्रह्मस्वरूपिणम्।
स्तुवीत चानया स्तुत्या परमात्मानमव्ययम्॥२५
विष्णवे देवदेवाय नमो वै प्रभविष्णवे।
विष्णवे वासुदेवाय नमः स्थितिकराय च॥ २६
ग्रसिष्णवे नमश्चैव नमः प्रलयशायिने।
देवानां प्रभवे चैव यज्ञानां प्रभवे नमः॥ २७
मुनीनां प्रभवे नित्यं यक्षाणां प्रभविष्णवे।
जिष्णवे सर्व्वदेवानां सर्व्वगाय महात्मने॥ २८
ब्रह्मेन्द्ररुद्रवन्द्याय सर्व्वेशाय नमो नमः।
सर्व्वलोकहितार्थाय सर्व्वाराध्याय वै नमः॥ २९
सर्व्वगोप्त्रे सर्व्वकर्त्रे सर्व्वदुष्टविनाशिने।
वरप्रदाय शान्ताय वरेण्याय नमो नमः।
शरण्याय स्वरूपाय धर्म्मकामार्थदायिने॥ ३०
स्तुत्वा ध्यायेत् स्वहृदये ब्रह्मरूपिणमव्ययम्।
एवन्तु पूजयेद्विष्णुं मूलमन्त्रेण शङ्कर॥ ३१
मूलमन्त्रं जपेद्वापि यः स याति नरो हरिम्।
एतत् ते कथितं रुद्र विष्णोरर्च्चनमुत्तमम्॥ ३२
रहस्यं परमं पुण्यं भुक्तिमुक्तिप्रदं परम्।
एतद्यश्च पठेद्विद्वान् विष्णुभक्तः पुमान् हर।
शृणुयाच्छ्रावयेद्वापि विष्णुलोकं स गच्छति॥ ३३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
एकत्रिंशोऽध्यायः॥ ३१॥

---

## द्वात्रिंशोऽध्यायः।

महेश्वर उवाच।

पञ्चतत्त्वार्च्चनं ब्रूहि शङ्ख-चक्र-गदाधर।
येन विज्ञानमात्रेण नरो याति परं पदम्॥ १

हरिरुवाच।

पञ्चतत्त्वार्च्चनं वक्ष्ये तव शङ्कर सुव्रत।
मङ्गल्यं मङ्गलं दिव्यं रहस्यं कामदं परम्।
तच्छृणुष्व महादेव पवित्रं कलिनाशनम्॥ २
एक एवाव्ययः शान्तः परमात्मा सनातनः।
वासुदेवो ध्रुवः शुद्धः सर्व्वव्यापी निरञ्जनः॥ ३
स एव मायया देव पञ्चधा संस्थितो हरिः।

लोकानुग्रहकृद्विष्णुः सर्व्वदुष्टविनाशनः ॥ ४
वासुदेवस्वरूपेण तथा सङ्कर्षणेन च।
तथा प्रद्युम्नरूपेणानिरुद्धाख्येन च स्थितः।
नारायणस्वरूपेण पञ्चधा च स्वयं स्थितः ॥ ५
एतेषां वाचकान् मन्त्रानेतान् शृणु वृषध्वज।

ओं अं वासुदेवाय नमः। ओं आं सङ्कर्षणाय नमः। ओं अं प्रद्युम्नाय नमः। ओं अः अनिरुद्धाय नमः। ओं ओं नारायणाय नमः ॥ ६

पञ्च मन्त्राः समाख्याता देवानां वाचकास्तव।
सर्व्वपापहराः पुण्याः सर्व्वरोगविनाशनाः ॥ ७
अधुना संप्रवक्ष्यामि पञ्चतत्त्वार्च्चनं शुभम्।
विधिना येन कर्त्तव्यं येर्वा मन्त्रैश्च शङ्कर ॥ ८
आदौ स्नानं प्रकुर्व्वीत स्नात्वा सन्ध्यां समाचरेत्।
अर्च्चनागारमासाद्य प्रक्षाल्याङ्घ्र्यादिकं तथा ॥ ९
आचम्योपविशेत् प्राज्ञो बद्धासनमभीप्सितम्।
शोषणादि ततः कुर्य्यात् अं क्ष्रौं रमिति मन्त्रकैः ॥ १०
सामान्यकठिनीकृत्य चाण्डमुत्पादयेत् ततः।
विभिद्याण्डं ततो खण्डे भावयेत् परमेश्वरम् ॥ ११
वासुदेवं जगन्नाथं पीतकौषेयवाससम्।
सहस्रादित्यसङ्काशं स्फुरन्मकरकुण्डलम् ॥ १२
आत्मनो हृदिपद्मे तु भावयित्वा परेश्वरम्।
ततः सङ्कर्षणं देवमात्मानं चिन्तयेत् प्रभुम्।
प्रद्युम्नमनिरुद्धञ्च श्रीमन्नारायणं ततः ॥ १३
इन्द्रादींश्च सुरांस्तस्माद्देवदेवात् समुत्थितान्।
चिन्तयेच्च ततो न्यासं कुर्य्याद्वै करयोर्द्वयोः ॥ १४
व्यापकं मूलमन्त्रेण चाङ्गन्यासं ततः परम्।
अङ्गमन्त्रैर्महादेव तन्मन्त्रान् शृणु सुव्रत ॥ १५

ओं आं हृदयाय नमः। ओं ईं शिरसे नमः। ओं ऊं शिखायै नमः। ओं ऐं कवचाय नमः। ओं औं नेत्रत्रयाय नमः। ओं अः अस्त्राय फट् ॥ १६

ओं समस्तपरिवारायाच्युताय नमः। ओं धात्रे नमः। ओं विधात्रे नमः। ओं आधारशक्तये नमः। ओं कूर्म्माय नमः। ओं अनन्ताय नमः। ओं पृथिव्यै नमः। ओं धर्म्माय नमः। ओं ज्ञानाय नमः। ओं वैराग्याय नमः। ओं ऐश्वर्य्याय नमः। ओं अधर्म्माय नमः। ओं अज्ञानाय नमः। ओं अवैराग्याय नमः। ओं अनैश्वर्य्याय नमः। ओं अं अर्कमण्डलाय नमः। ओं सों सोममण्डलाय नमः। ओं वं वह्निमण्डलाय नमः। (क)

ओं अः वासुदेवाय परब्रह्मणे शिवाय तेजोरूपाय व्यापिने सर्व्वदेवाधिदेवाय नमः। ओं पाञ्चजन्याय नमः। ओं सुदर्शनाय नमः। ओं गदायै नमः। ओं पद्माय नमः। ओं श्रियै नमः। ओं क्रियायै नमः। ओं पुष्ट्यै नमः। ओं कीर्त्त्यै नमः। ओं शक्त्यै नमः। ओं प्रीत्यै नमः। ओं इन्द्राय नमः। ओं अग्नये नमः। ओं यमाय नमः। ओं नैर्ऋतये नमः। ओं वरुणाय नमः। ओं वायवे नमः। ओं सोमाय नमः। ओं ईशानाय नमः। ओं अनन्ताय नमः। ओं ब्रह्मणे नमः। ओं विश्वक्सेनाय नमः। ओं पद्माय नमः इति ॥ १७

एते मन्त्राः समाख्यातास्तव रुद्र समासतः।
पूजा चैव प्रकर्त्तव्या मण्डले स्वस्तिकादिके ॥ १८
अङ्गन्यासञ्च कृत्वा तु मुद्राः सर्व्वाः प्रदर्शयेत्।
आत्मानं वासुदेवञ्च ध्यात्वा चैव परेश्वरम् ॥ १९
आसनं पूजयेत् पश्चादावाह्य विधिवन्नरः।
द्वारे धातुर्व्विधातुश्च पूजा कार्य्या वृषध्वज ॥ २०
गरुड़ं पूजयेदग्रे वासुदेवस्य शङ्कर।
शङ्खादिपद्मपर्य्यन्तं मध्यदेशे प्रपूजयेत् ॥ २१
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यं पूर्व्वदेशतः।
आग्नेयादिष्वर्च्चयेद्वै अधर्म्मादिचतुष्टयम् ॥ २२
मण्डलत्रयमध्ये तु कीर्त्तिता ह्यासनस्थितिः।
पूर्व्वादिपद्मपत्रेषु पूज्याः सङ्कर्षणादयः ॥ २३
कर्णिकायां वासुदेवं पूजयेत् परमेश्वरम्।
पाञ्चजन्यादयः पूज्याः ऐशान्यादिषु संस्थिताः ॥ २४
शक्तयश्चैव पूर्व्वादौ देवदेवस्य शङ्कर।
इन्द्रादयो लोकपालाः पूज्याः पूर्व्वादिषु स्थिताः ॥ २५
अधोनागं तथोर्द्धन्तु ब्रह्माणं पूजयेत् सुधीः।

(क) उं सोममण्डलाय नमः। मं वह्निमण्डलाय नम इति वा पाठः।

इति स्थानक्रमो ज्ञेयो मण्डले शङ्कर त्वया ॥ २६
आवाह्य मण्डले देवं कृत्वा न्यासन्तु तस्य च ।
मुद्रां प्रदर्श्य पाद्यादीन् दद्यान्मूलेन शङ्कर ॥ २७
स्नानं वस्त्रं तथाचामं गन्धं पुष्पञ्च धूपकम् ।
दीपं नैवेद्यमाचामं नमस्कारं प्रदक्षिणम् ।
कुर्य्याच्छङ्कर मूलेन जपञ्चापि समर्पयेत् ॥ २८
इदं स्तोत्रं जपेत् पश्चाद्वासुदेवमनुस्मरन् ।
ओं नमो वासुदेवाय नमः सङ्कर्षणाय च ॥ २९
प्रद्युम्नायादिदेवायानिरुद्धाय नमो नमः ।
नमो नारायणायैव नाराणां पतये नमः ॥ ३०
नरपूज्याय कीर्त्याय स्तुत्याय वरदाय च ।
अनादिनिधनायैव पुराणाय नमो नमः ॥ ३१
सृष्टिसंहारकर्त्त्रे च ब्रह्मणः पतये नमः ।
नमो वै वेदवेद्याय शङ्खचक्रधराय च ॥ ३२
कलिकल्मषहर्त्त्रे च सुरेशाय नमो नमः ।
संसारवृक्षच्छेत्त्रे च मायाभेत्त्रे नमो नमः ॥ ३३
बहुरूपाय तीर्थाय त्रिगुणायागुणाय च ।
ब्रह्म-विष्ण्वीशरूपाय मोक्षदाय नमो नमः ॥ ३४
मोक्षद्वाराय धर्म्माय निर्व्वाणाय नमोनमः ।
सर्व्वकामप्रदायैव परंब्रह्मस्वरूपिणे ॥ ३५
संसारसागरे घोरे निमग्नं मां समुद्धर ।
त्वदन्यो देवदेवेश नास्ति त्राता जगत्प्रभो ॥ ३६
त्वामेव सर्व्वगं विष्णुं गतोऽहं शरणं ततः ।
ज्ञानदीपप्रदानेन तमोमुक्तं प्रकाशय ॥ ३७
एवं स्तुवीत देवेशं सर्व्वक्लेशविनाशनम् ।
अन्यैश्च वैदिकैः स्तोत्रैः स्तुत्वा वा नीललोहित ॥ ३८
पञ्चतत्त्वसमायुक्तं ध्यायेद्विष्णुं नरो हृदि ।
विसर्ज्जयेत् ततो देवमिति पूजा प्रकीर्त्तिता ॥ ३९
सर्व्वकामप्रदा श्रेष्ठा वासुदेवस्य शङ्कर ।
एतत्पूजनमात्रेण कृतकृत्यो भवेन्नरः ॥ ४०
इदञ्च यः पठेद्रुद्र पञ्चतत्त्वार्च्चनं नरः ।
शृणुयाच्छ्रावयेद्वापि विष्णुलोकं स गच्छति ॥ ४१

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ।

रुद्र उवाच ।

सुदर्शनस्य पूजां मे वद शङ्खगदाधर ।
ग्रहरोगादिकं सर्व्वं यत् कृत्वा नाशमेति वै ॥ १

हरिरुवाच ।

सुदर्शनस्य चक्रस्य शृणु पूजां वृषध्वज ।
स्नानमादौ प्रकुर्व्वीत पूजयेच्च हरिं ततः ॥ २
मूलमन्त्रेण वै न्यासं मूलमन्त्रं शृणुष्व च ।
सहस्रारं हुं फट् नमो मन्त्रः प्रणवपूर्व्वकः ।
कथितः सर्व्वदुष्टानां नाशको मन्त्रभेदकः ॥ ३
ध्यायेत् सुदर्शनं देवं हृदि पद्मेऽमले शुभे ।
शङ्खचक्रगदापद्मधरं सौम्यं किरीटिनम् ॥ ४
आवाह्य मण्डले देवं पूर्व्वोक्तविधिना हर ।
पूजयेद्गन्धपुष्पाद्यैरुपचारैर्महेश्वर ॥ ५
पूजयित्वा जपेन्मन्त्रं शतमष्टोत्तरं नरः ।
एवं यः कुरुते रुद्र चक्रस्यार्च्चनमुत्तमम् ॥ ६
सर्व्वरोगविनिर्म्मुक्तो विष्णुलोकं समाप्नुयात् ।
एतत् स्तोत्रं जपेत् पश्चात् सर्व्वव्याधिविनाशनम् ॥ [७]
नमः सुदर्शनायैव सहस्रादित्यवर्च्चसे ।
ज्वालामालाप्रदीप्ताय सहस्राराय चक्षुषे ॥ ८
सर्व्वदुष्टविनाशाय सर्व्वपातकमर्द्दिने ।
सुचक्राय विचक्राय सर्व्वमन्त्रविभेदिने ॥ ९
प्रसवित्रे जगद्धात्रे जगद्विध्वंसिने नमः ।
शर्म्मदाय च देवानां (क) दुष्टासुरविनाशिने ॥ [१०]
उग्राय चैव सौम्याय चण्डाय च नमो नमः ।
नमश्चक्षुःस्वरूपाय संसारभयभेदिने ॥ ११
मायापञ्जरभेत्त्रे च शिवाय च नमो नमः ।
ग्रहातिग्रहरूपाय ग्रहाणां पतये नमः ॥ १२
कालाय मृत्यवे चैव भीमाय च नमो नमः ।
भक्तानुग्रहदात्रे च भक्तगोप्त्रे नमो नमः ॥ [१३]
विष्णुरूपाय शान्ताय चायुधानां धराय च ।
विष्णुशस्त्राय चक्राय नमो भूयो नमो नमः ॥ [१४]
इति स्तोत्रं महापुण्यं चक्रस्य तव कीर्त्तितम् ।
यः पठेत् परया भक्त्या विष्णुलोकं स गच्छति ॥

(क) पालनार्थाय लोकानामिति पाठान्तरम् ।

चक्रपूजाविधिं यश्च पठेद्रुद्र जितेन्द्रियः ।
स पापं भस्मसात् कृत्वा विष्णुलोकाय कल्पते ॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ।

रुद्र उवाच ।

पुनर्देवार्च्चनं ब्रूहि हृषीकेश गदाधर ।
शृण्वतो नास्ति तृप्तिर्मे गदतस्तव पूजनम् ॥ १

हरिरुवाच ।

हयग्रीवस्य देवस्य पूजनं कथयामि ते ।
च्छृणुष्व जगन्नाथो येन विष्णुः प्रतुष्यति ॥ २
मूलमन्त्रं महादेव हयग्रीवस्य वाचकम् ।
वक्ष्यामि परं पुण्यं तदादौ शृणु शङ्कर ॥ ३
ौं ह्रौं क्षौं शिरसे नमः इति प्रणवसंयुतः ।
यं नवाक्षरो मन्त्रः सर्व्वविद्याप्रदायकः ॥ ४
स्याङ्गानि महादेव शृणु तानि वृषध्वज ।
ां क्षां हृदयाय नमः । ओं क्षौं (क) शिरसे
ाहायुक्तं शिरः प्रोक्तं क्षूं वषट् तथा ॥ ५
ोङ्कारयुक्ता देवस्य शिखा ज्ञेया वृषध्वज ।
ं क्षैं कवचाय हुं वै कवचं परिकीर्त्तितम् ॥ ६
क्षौं नेत्रत्रयाय वौषट् नेत्रं देवस्य कीर्त्तितम् ।
ं क्षः (ख) अस्त्राय फट् अस्त्रं देवस्य कीर्त्तितम् ७
जाविधिं प्रवक्ष्यामि तन्मे निगदतः शृणु ।
ादौ स्नात्वा तथाचम्य ततो यागगृहं व्रजेत् ॥ ८
ततः प्रविश्य विधिवत् कुर्य्याद्वै शोषणादिकम् ।
ं क्षौं रमिति वीजैश्च कठिनीकृत्य लमिति ॥ ९
ण्डमुत्पाद्य च ततः ओङ्कारेणैव भेदयेत् ।
ण्डमध्ये हयग्रीवमात्मानं परिचिन्तयेत् ॥ १०
ङ्खकुन्देन्दुधवलं मृणालरजतप्रभम् ।
क्षीरसदृशं तद्वत् सूर्य्यकोटिसमप्रभम् ॥ ११
चक्रं गदां पद्मं धारयन्तं चतुर्भुजम् ।
ीटिनं कुण्डलिनं वनमालासमन्वितम् ॥ १२

सुवक्त्रं सुकपोलञ्च पीताम्बरधरं विभुम् ।
भावयित्वा महात्मानं सर्व्वदेवैः समन्वितम् ॥ १३
अङ्गमन्त्रैस्ततो न्यासं मूलमन्त्रेण वै तथा ।
ततश्च दर्शयेन्मुद्रां शङ्खपद्मादिकां शुभाम् ॥ १४
ध्यायित्वात्मार्च्चयेद्विष्णुं मूलमन्त्रेण शङ्कर ।
ततश्चावाहयेद्रुद्र देवता आसनस्य याः ॥ १५
ओं हयग्रीवासनस्य आगच्छत च देवताः ।
आवाह्य मण्डले तास्तु पूजयेत् स्वस्तिकादिके ॥ १६
द्वारे धातुर्विधातुश्च पूजा कार्य्या वृषध्वज ।
समस्तपरिवाराय अच्युताय नमो नमः ॥ १७
अस्य मध्येऽर्च्चनं कार्य्यं द्वारे गङ्गाञ्च पूजयेत् ।
यमुनाञ्च महादेवीं शङ्खपद्मनिधी तथा ॥ १८
गरुड़ं पूजयेदग्रे मध्ये शक्तिञ्च पूजयेत् ।
आधाराख्यं महादेव ततः कूर्म्मं समर्च्चयेत् ॥ १९
अनन्तं पृथिवीं पश्चाद्धर्म्मज्ञानौ ततोऽर्च्चयेत् ।
वैराग्यमथ चैश्वर्य्यमाग्नेयादिषु पूजयेत् ॥ २०
अधर्म्माज्ञानावैराग्यानैश्वर्य्यादींस्तु पूर्व्वतः ।
सत्त्वं रजस्तमश्चैव मध्यदेशेऽथ पूजयेत् ॥ २१
कन्दं नालञ्च पद्मञ्च मध्ये चैव प्रपूजयेत् ।
अर्कसोमाग्निसंज्ञानां मण्डलानां हि पूजनम् ।
मध्यदेशे प्रकर्त्तव्यमिति रुद्र प्रकीर्त्तितम् ॥ २२
विमलोत्कर्षिणी ज्ञाना क्रिया योगा वृषध्वज ।
प्रह्वी सत्या तथेशानानुग्रहा शक्तयो ह्यमूः ॥ २३
पूर्व्वादिषु च पत्रेषु पूज्याश्च विमलादयः ।
अनुग्रहा कर्णिकायां पूज्या श्रेयोऽर्थिभिर्नरैः ॥ २४
प्रणवाद्यैर्नमोऽन्तैश्च चतुर्थ्यन्तैश्च नामभिः ।
मन्त्रैरेतैर्महादेव आसनं परिपूजयेत् ॥ २५
स्नानगन्धप्रदानेन पुष्पधूपप्रदानतः ।
दीपनैवेद्यदानेन आसनस्यार्च्चनं शुभम् ॥ २६
कर्त्तव्यं विधिनानेन इति ते हर कीर्त्तितम् ।
ततश्चावाहयेद्देवं हयग्रीवं सुरेश्वरम् ॥ २७
वामनासापुटेनैव आगच्छन्तं विचिन्तयेत् ।
आगच्छतः प्रयोगेण मूलमन्त्रेण शङ्कर ॥ २८
आवाहनं प्रकर्त्तव्यं देवदेवस्य शार्ङ्गिणः ।
आवाह्य मण्डले तस्य न्यासं कुर्य्यादतन्द्रितः ॥ २९
न्यासं कृत्वा च तत्रस्थं चिन्तयेत् परमेश्वरम् ।

(क) क्षौं इति बहुपुस्तकीयः पाठः । क्षौमिति केचित् ।
(ख) क्ष इति बहुपुस्तकीयः पाठः ।

हयग्रीवं महादेवं सुरासुरनमस्कृतम् ॥ ३०
इन्द्रादिलोकपालैश्च संयुक्तं विष्णुमव्ययम् ।
ध्यात्वा प्रदर्शयेन्मुद्राः शङ्खचक्रादिकाः शुभाः ॥ ३१
पाद्यार्घ्याचमनीयानि ततो दद्याच्च विष्णवे ।
स्नापयेच्च ततो देवं पद्मनाभमनामयम् ॥ ३२
देवं संस्थाप्य विधिवद्वस्त्रं दद्याद्वृषध्वज ।
ततो ह्याचमनं दद्यादुपवीतं ततः शुभम् ॥ ३३
ततश्च मण्डले रुद्र ध्यायेद्देवं परेश्वरम् ।
ध्यात्वा पाद्यादिकं भूयो दद्याद्देवाय शङ्कर ॥ ३४
दद्याद्धि वरदेवाय मूलमन्त्रेण शङ्कर ।
ओं ह्रां हृदयाय नमः अनेन हृदयं यजेत् ॥ ३५
ओं ह्रीं शिरसे नमश्च शिरसः पूजनं भवेत् ।
ओं ह्रूं शिखायै नमश्च शिखामनेन पूजयेत् ॥ ३६
ओं ह्रैं कवचाय नमः कवचं परिपूजयेत् ।
ओं ह्रौं नेत्राय नमश्च नेत्रञ्चानेन पूजयेत् ॥ ३७
ओं ह्रः अस्त्राय नम इत्यस्त्रञ्चानेन पूजयेत् ।
हृदयञ्च शिरश्चैव शिखाञ्च कवचं तथा ॥ ३८
पूर्व्वादिषु प्रदेशेषु ह्येतास्तु परिपूजयेत् ।
कोणेष्वस्त्रं यजेद्रुद्र नेत्रं मध्ये प्रपूजयेत् ॥ ३९
पूजयेत् परमां देवीं लक्ष्मीं लक्ष्मीप्रदां शुभाम् ।
शङ्खं पद्मं तथा चक्रं गदां पूर्व्वादितोऽर्च्चयेत् ॥ ४०
खड्गञ्च मुषलं पाशमङ्कुशं सशरं धनुः ।
पूजयेत् पूर्व्वतो रुद्र एभिर्मन्त्रैः स्वनामकैः ॥ ४१
श्रीवत्सं कौस्तुभं मालां तथा पीताम्बरं शुभम् ।
पूजयेत् पूर्व्वतो रुद्र शङ्ख-चक्र-गदाधरम् ॥ ४२
ब्रह्माणं नारदं सिद्धं गुरुं परगुरुं तथा ।
गुरोश्च पादुके तद्वत् परमस्य गुरोस्तथा ॥ ४३
इन्द्रं सवाहनं वाथ परिवारयुतं तथा ।
अग्निं यमं निर्ऋतिञ्च वरुणं वायुमेव च ॥ ४४
सोममीशाननागञ्च ब्रह्माणं परिपूजयेत् ।
पूर्व्वादि चोर्द्ध्वपर्य्यन्तं पूजयेद्वृषभध्वज ॥ ४५
वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् ।
त्रिशूलं चक्रपद्मे च आयुधान्यथ पूजयेत् ॥ ४६
विश्वक्सेनं ततो देवमैशान्यां दिशि पूजयेत् ।
एभिर्मन्त्रैर्नमोऽन्तैश्च प्रणवाद्यैर्वृषध्वज ॥ ४७
पूजा कार्य्या महादेव ह्यनन्तस्य वृषध्वज ।
देवस्य मूलमन्त्रेण पूजा कार्य्या वृषध्वज।
गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ॥ ४८
प्रदक्षिणं नमस्कारं जप्यं तस्मै समर्पणम्।
स्तुवीत चानया स्तुत्या प्रणवाद्यैर्वृषध्वज ॥
ओं नमो हयशिरसे विद्याध्यक्षाय वै नमः।
नमो विद्यास्वरूपाय विद्यादात्रे नमो नमः।
नमः शान्ताय देवाय नमः शान्ततराय च (क
सुरासुरनिहन्त्रे च सर्व्वदुष्टविनाशिने ॥ ५१
सर्व्वलोकाधिपतये ब्रह्मरूपाय वै नमः।
नमस्त्रैश्वरवन्द्याय शङ्खचक्रधराय च ॥ ५२
नम आद्याय दान्ताय सर्व्वसत्त्वहिताय च।
त्रिगुणायागुणायैव ब्रह्मविष्णुस्वरूपिणे।
कर्त्त्रे हर्त्त्रे सुरेशाय सर्व्वगाय नमो नमः ॥ ५३
इत्येवं संस्तवं कृत्वा देवदेवं विचिन्तयेत्।
हृत्पद्मे विमले रुद्र शङ्खचक्रगदाधरम् ॥ ५४
सूर्य्यकोटिप्रतीकाशं सर्व्वावयवसुन्दरम्।
हयग्रीवं महेशेश परमात्मानमव्ययम् ॥ (ख)
इति ते कथिता पूजा हयग्रीवस्य शङ्कर।
यः पठेत् परया भक्त्या स गच्छेत् परमं पदम्

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ।

हरिरुवाच ।

न्यासादिकं प्रवक्ष्यामि गायत्र्याश्छन्द एव च
विश्वामित्र ऋषिश्चैव सविता चाथ देवता ॥
ब्रह्मशीर्षा रुद्रशिखा विष्णोर्हृदयसंश्रिता।
विनियोगेकनयना कात्यायनसगोत्रजा ॥ २
त्रैलोक्यचरणा ज्ञेया पृथिवीकुक्षिसंस्थिता।
एवं ज्ञात्वा तु गायत्रीं जपेद्द्वादशलक्षकम् ॥ ३
त्रिपदाष्टाक्षरा ज्ञेया चतुष्पदा षड़क्षरा।
जपे च त्रिपदा प्रोक्ता अर्च्चने च चतुष्पदा ॥ ४

---

(क) त्रिगुणायात्मने नम इति क्वचित् पाठः।
(ख) हयग्रीवोऽहमीशेशः परमात्माहमव्ययः क्वचित् पाठः।

न्यासे जपे तथा ध्याने अग्निकार्य्ये तथार्च्चने ।
गायत्रीं विन्यसेन्नित्यं सर्व्वपापप्रणाशिनीम् ॥ ५
पादाङ्गुष्ठे गुल्फमध्ये जङ्घयोर्विद्धि जानुनोः ।
ऊर्व्वोर्गुह्ये च वृषणे नाड्यां नाभौ तनूदरे ॥ ६
स्तनयोर्हृदि कण्ठौष्ठमुखे तालुनि वांशयोः ।
नेत्रे भ्रुवोर्ललाटे च पूर्व्वस्यां दक्षिणोत्तरे ।
...शिसे मूर्द्धि चाकारं न्यसेद्वर्णान् वदाम्यहम् ॥ ७
...न्द्रनीलञ्च वह्निञ्च पीतं श्यामञ्च कापिलम् ।
...वेतं विद्युत्प्रभं तारं कृष्णं रक्तं क्रमेण तत् ॥ ८
...ामं शुक्लं तथा पीतं श्वेतं वै पद्मरागवत् ।
...वर्णं पाण्डरञ्च रक्तञ्चासवसन्निभम् ।
...वर्णसमं सौम्यं शङ्खाभं श्वेतमेव च ॥ ९
...यत् स्पृशति हस्तेन यच्च पश्यति चक्षुषा ।
भवति तत् सर्व्वं गायत्र्या न परं विदुः ॥ १०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः ।

हरिरुवाच ।

...ाविधिं प्रवक्ष्यामि शृणु रुद्राघनाशनम् ।
...ायामत्रयं कृत्वा सन्ध्यास्नानमुपक्रमेत् ॥ १
...वां सव्याहृतिं गायत्रीं शिरसा सह ।
...पठेदायतप्राणः प्राणायामः स उच्यते ॥ २
...वाङ्कायजं दोषं प्राणायामैर्दहेद्द्विजः ।
...ात् सर्व्वेषु कालेषु प्राणायामपरो भवेत् ॥ ३
...यमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत् ।
...पः पुनन्तु मध्याह्ने उपस्पृश्य यथाविधि ॥ ४
...पोहिष्ठेत्यृचा कुर्य्यान्मार्ज्जनन्तु कुशोदकैः ।
...वेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥ ५
...तमःस्वमोहोत्थान् जाग्रत्स्वप्नसुषुप्तिजान् ।
...नःकर्म्मजान् दोषान् नवैतान् नवभिर्दहेत् ॥ ६
...त्योदकं पाणौ जप्त्वा च द्रुपदा क्षिपेत् ।
...ड्ष्टौ द्वादशधा वर्त्तयेदघमर्षणम् ॥ ७
...ं चित्रमित्याभ्यामुपतिष्ठेद्दिवाकरम् ।
...रात्रौ च यत् पापं सर्व्वं नश्यति तत्क्षणात् ॥ ८

पूर्व्वसन्ध्यां जपंस्तिष्ठत् पश्चिमामुपविश्य च ।
महाव्याहृतिसंयुक्तां गायत्रीं प्रणवान्विताम् ॥ ९
दशभिर्जन्मजनितं शतेन तु पुराकृतम् ।
त्रियुगन्तु सहस्रेण गायत्री हन्ति दुष्कृतम् ॥ १०
रक्ता भवति गायत्री सावित्री शुक्लवर्णिका ।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम् ॥ ११
ओं भूर्विन्यस्य हृदये ओं भुवः शिरसि न्यसेत् ।
ओं स्वरिति शिखायाञ्च गायत्र्याः प्रथमं पदम् ॥१२
विन्यसेत् कवचे विद्वान् द्वितीयं नेत्रयोर्न्यसेत् ।
तृतीयेनाङ्गविन्यासं चतुर्थं सर्व्वतो न्यसेत् ॥ १३
सन्ध्याकाले तु विन्यस्य जपेद्वै वेदमातरम् ।
शिवस्तस्यास्तु सर्व्वाङ्गे प्राणायामपरं न्यसेत् ॥ १४
त्रिपदा या तु गायत्री ब्रह्म-विष्णु-महेश्वरी ।
विनियोगमृषिं छन्दो ज्ञात्वा तु जपमारभेत् ।
सर्व्वपापविनिर्म्मुक्तो ब्रह्मलोकमवाप्नुयात् ॥ १५
परो रजसि सारं तं तुरीयपदमीरितम् ।
तं हन्ति सूर्य्यः सन्ध्यायां नोपास्तिं कुरुते तु यः॥१६
तुरीयस्य पदस्यापि ऋषिर्निर्म्मल ईरितः ।
छन्दस्तु देवी गायत्री परमात्मा च देवता ॥ १७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सन्ध्या-
विधिर्नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ।

हरिरुवाच ।

गायत्री परमा देवी भुक्तिमुक्तिप्रदा च ताम् ।
यो जपेत् तस्य पापानि विनश्यन्ति महान्त्यपि ॥ १
गायत्रीकल्पमाख्यास्ये भुक्तिमुक्तिप्रदञ्च तत् ।
अष्टोत्तरं सहस्रं वा अथवाष्टशतं जपेत् ।
त्रिसन्ध्यं ब्रह्मलोकी स्याच्छतजप्तं जलं पिबेत् ॥ २
सन्ध्यायां सर्व्वपापघ्नीं देवीमावाह्य पूजयेत् ।
भूर्भुवः स्वः स्वमन्त्रेण युतां द्वादशनामभिः ॥ ३
गायत्र्यै नमः सावित्र्यै सरस्वत्यै नमो नमः ।
वेदमात्रे च साङ्कृत्यै ब्रह्माणी कौशिकी क्रमात् ॥ ४
साध्व्यै सर्व्वार्थसाधिन्यै सहस्राक्ष्यै च भूर्भुवः ।
स्वरेव जुहुयादग्नौ समिधाज्यं हविष्यकम् ॥ ५

अष्टोत्तरसहस्रं वाप्यथवाष्टशतं हुतम् ।
सर्व्वकामादिसिद्ध्यर्थं शुह्वयात् सर्व्वकर्म्मसु ॥ ६
प्रतिमां चन्दनस्वर्ण-निर्म्मितां प्रतिपूज्य च ।
यथालब्धन्तु जप्तव्यं पयोमूलफलाशनैः ।
अयुतद्वयहोमेन सर्व्वकामानवाप्नुयात् ॥ ७
उत्तरे शिखरे जाता भूम्यां पर्व्वतवासिनी ।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथासुखम् ॥ ८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
गायत्रीमाहात्म्यं नाम सप्त-
त्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ।

### हरिरुवाच ।

नवम्यादौ यजेद्दुर्गां ह्रीं दुर्गे रक्षिणीति च ।
मातर्मातर्वरे दुर्गे सर्व्वकामार्थसाधने ।
अनेन बलिदानेन सर्व्वकामान् प्रयच्छ मे ॥ १
गौरी काली उमा दुर्गा भद्रा कान्तिः सरस्वती ।
मङ्गला विजया लक्ष्मीः शिवा नारायणी क्रमात् ।
मार्गतृतीयामारभ्य पूजयेन्न वियोगभाक् ॥ २
अष्टादशभुजां खेटकं घण्टां दर्पणं तर्ज्जनीम् ।
धनुर्ध्वजं डमरुकं परशुं पाशमेव च ॥ ३
शक्तिमुद्गरशूलानि कपालवज्रकाङ्कुशान् ।
शरं चक्रं शलाकाञ्च अष्टादशभुजां स्मरेत् ॥ ४
मन्त्रैः श्रीभगवत्याश्च प्रवक्ष्यामि जपादिकम् ॥ ५

ओँ नमो भगवति चामुण्डे श्मशानवासिनि कपालहस्ते महाप्रेतसमारूढ़े महाविमानमाला-कुले कालरात्रि बहुगणपरिवृते महामुखे बहु-भुजे घण्टाडमरुकिङ्किणीके अट्टाट्टहासे किलि किलि ह्रूं दंष्ट्राघोरान्धकारिणि सर्व्वनादशब्द-बहुले गजचर्म्मप्रावृतशरीरे रुधिरमांसदिग्धे लेलिहानोग्रजिह्वे (क) महाराक्षसि रौद्रदंष्ट्रा-कराले भीमाट्टाट्टहासे स्फुरितविद्युत्समप्रभे चल चल करालनेत्रे हिलि हिलि ललं प्रविशय ह्रूं जिह्वे भ्रुकुटिमुखि ओँङ्कारभद्रासने कपालमालावेष्टिते जटामुकुटशशाङ्कधारिणि अट्टाट्टहासे कि[illegible] ह्रूं ह्रूं दंष्ट्राघोरान्धकारिणि सर्व्वविघ्न[illegible] इदं कर्म्म साधय साधय शीघ्रं कुरु कुरु [illegible] अङ्कुशेन समनुप्रवेशय रङ्ग रङ्ग कम्प[illegible] चल चल चालय चालय रुधिरमांसमद्[illegible] हन कुट्ट कुट्ट छिन्धि छिन्धि मारय मारय [illegible] अनुक्रूय वज्रशरीरं साधय साधय त्रैलोक्य[illegible] दुष्टं वा गृहीतमगृहीतं वा आवेशय [illegible] क्रामय क्रामय नृत्य नृत्य बन्ध बन्ध वल[illegible] कोटराक्षि ऊर्द्ध्वकेशि उलूकवदने करकि[illegible] करङ्कमालाधारिणि दह दह पच पच गृह्ण [illegible] मण्डलमध्ये प्रवेशय प्रवेशय किं विलम्बसि [illegible] सत्येन विष्णुसत्येन रुद्रसत्येन ऋषिसत्येन आ[illegible] आवेशय किलि किलि खिलि खिलि मिलि [illegible] चिलि चिलि विकृतरूपधारिणि कृष्णभुजङ्ग[illegible] शरीरे सर्व्वग्रहावेशिनि प्रलम्बोष्ठि भ्रूभग्न[illegible] विकटमुखि कपिलजटे ब्राह्मि भञ्ज भञ्ज[illegible] ज्वल कालमुखि खल खल पातय [illegible] रक्ताक्षि घूर्णय घूर्णापय भूमिं पातय[illegible] शिरो गृह्ण गृह्ण चक्षुर्मीलय मीलय भ[illegible] हस्तपादौ गृह्ण गृह्ण मुद्रां स्फोटय स्फोटय [illegible] फट् विदारय विदारय त्रिशूलेन भेदय [illegible] वज्रेण हन हन दण्डेन ताड़य ताड़य [illegible] छेदय छेदय शक्तिना भेदय भेदय दंष्ट्रया [illegible] दष्टय कीलकेन कीलय कीलय कर्तृकया[illegible] पाटय अङ्कुशेन गृह्ण गृह्ण शिरो[illegible] ऐकाह्निकं द्व्याह्निकं त्र्याह्निकं चातुर्थिकं [illegible] स्कन्दग्रहान् मुञ्चापय मुञ्चापय [illegible] उत्थापय उत्थापय भूमिं पातय [illegible] गृह्ण गृह्ण ब्रह्माणि एहि एहि माहेश्वरि [illegible] एहि कौमारि एहि एहि वाराहि [illegible] ऐन्द्रि एहि एहि चामुण्डे एहि एहि वै[illegible] एहि नारसिंहि एहि एहि शिवदूति [illegible] कपालिनि एहि एहि महाकालि [illegible] रेवति एहि एहि शुष्करेवति एहि एहि [illegible] रेवति एहि एहि हिमवन्तचारिणि [illegible]

(क) लीलाग्रजिह्वे इति क्वचित् पाठः ।

एहि कैलासचारिणि एहि एहि परमन्त्रं छिन्धि छिन्धि किलि किलि विच्चे अघोरे घोर-
रूपिणि चामुण्डे रुरुक्रोधान्धविनिःसृते असुर-
यङ्करि आकाशगामिनि पाशेन बन्ध बन्ध कट्ट
ट समयं तिष्ठ तिष्ठ मण्डलं प्रविशय प्रविशय
तय पातय गृह्ण गृह्ण मुखं बन्ध बन्ध चक्षुर्बन्धय
य हृदयं बन्ध बन्ध हस्तपादौ बन्ध बन्ध दुष्ट-
ान् सर्व्वान् बन्ध बन्ध दिशां बन्ध बन्ध विदिशां
बन्ध ऊर्द्ध्वं बन्ध बन्ध अधस्ताद्बन्ध बन्ध भस्मना
येन मृत्तिकया सर्षपैर्वा आविशय आविशय
य पातय चामुण्डे किलि किलि विच्चे हूं फट्
ा ॥ ६

ष्टोत्तरपदानां हि मालामन्त्रमयी जपा ॥ ७
एकैकपदमष्टसहस्रधा त्रिमधुराक्ततिलाष्ट-
होमः। महामांसेन त्रिमधुराक्तेन ॥ ८
रसहस्रञ्च एकैकञ्च पदं जपेत्।
त्रिमधुराक्तांश्च सहस्राष्टञ्च होमयेत् ॥ ९
ांसं त्रिमधुरादथवा सर्व्वकर्मकृत्।
र्षपभस्मादि-क्षेपाद्युद्धादिके जयः ॥ १०
ंशभुजा ध्येया अष्टादशभुजाथवा।
ाष्टभुजा वापि ध्येया वापि चतुर्भुजा ॥ ११
खेटान्वितौ हस्तौ गदादण्डयुतौ परौ।
ापयुतौ चान्यौ खड्गमुद्गरसंयुतौ ॥ १२
घण्टान्वितौ चान्यौ ध्वजदण्डयुतौ परौ।
ौ परशुचक्राढ्यौ डमरुदर्पणान्वितौ ॥ १३
कुन्तान्वितौ चान्यौ नटन्तौ मुषलान्वितौ।
तोमरसंयुक्तौ ढक्कापणवसंयुतौ ॥ १४
यन्तौ परेणैव अन्यः कलकलध्वनिः।
यस्वस्तिकाढ्यौ च महिषघ्नी च सिंहगा ॥ १५
त्वं कामभूतेशे सर्व्वभूतसमावृते।
मां निजभूतेभ्यो बलिं गृह्ण नमोऽस्तु ते ॥ १६

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः।

रुद्र उवाच।

पुनर्देवार्चनं ब्रूहि संक्षेपेण जनार्दन।
सूर्य्यस्य विष्णुरूपस्य भुक्तिमुक्तिप्रदायकम् ॥ १

हरिरुवाच।

शृणु सूर्य्यस्य रुद्र त्वं पुनर्वक्ष्यामि पूजनम् ॥ २
ओँ उच्चैःश्रवसे नमः। ओँ अरुणाय नमः ॥
ओँ दण्डिने नमः। ओँ पिङ्गलाय नमः ॥ ३
एते द्वारे प्रपूज्या वै एभिर्मन्त्रैर्वृषध्वज ॥ ४
ओँ अं भूताय नमः ॥ ५
इमन्तु पूजयेन्मध्ये प्रभूतामलसंज्ञकम् ॥ ६
ओँ अं विमलाय नमः। ओँ अं साराय नमः। ओँ अं आराध्याय नमः। ओँ अं परमसुखाय नमः ॥ ७
इत्याग्नेयादिकोणेषु पूज्या वै विमलादयः ॥ ८
ओँ पद्माय नमः। ओँ कालिकायै नमः(क) ॥ ९
मध्ये तु पूजयेद्रुद्र पूर्व्वादिषु तथैव च।
दीप्ताद्याः पूजयेन्मध्ये पूजयेत् सर्व्वतोमुखीः ॥ १०
ओँ वां दीप्तायै नमः। ओँ वीं सूक्ष्माय नमः। ओँ वूं भद्रायै नमः। ओँ वैं जयायै नमः। ओँ वौं विभूत्यै नमः। ओँ वं अघोरायै नमः। ओँ वं विद्युतायै नमः। ओँ वः विजयायै नमः। ओँ सर्व्वतोमुख्य नमः। ओँ अर्कासनाय नमः। ओँ ह्रां सूर्य्यमूर्त्तये नमः ॥ ११
एतास्तु पूजयेन्मध्ये हृन्मन्त्रान् शृणु शङ्कर ॥ १२
ओँ हं सं खं खखोल्काय ह्रां ह्रीं सः स्वाहा सूर्य्यमूर्त्तये नमः ॥ १३
अनेनावाहनं कुर्य्यात् स्थापनं सन्निधानकम्।
सन्निरोधनमन्त्रेण सकलीकरणं तथा।
मुद्राया दर्शनं रुद्र मूलमन्त्रेण पूजयेत् ॥ १४
तेजोरूपं रक्तवर्णं सितपद्मोपरि स्थितम्।
एकचक्ररथारूढं द्विबाहुं धृतपङ्कजम् ॥ १५
एवं ध्यायेत् सदा सूर्य्यं मूलमन्त्रं शृणुष्व च ॥ १६
ओँ ह्रां ह्रीं सः सूर्य्याय नमः ॥ १७

---

(क) ओँ कर्णिकायै नम इति वा पाठः।

शारतयं पद्ममुद्रां बिम्बमुद्राञ्च दर्शयेत् ॥ १८

ओं आं हृदयाय नमः। ओं अं अर्काय शिरसे स्वाहा। ओं अः भूर्भुवः स्वरों ज्वालिनि शिखायै वषट्। ओं हुं कवचाय हुं। ओं भां नेत्राभ्यां वौषट्। ओं वः अस्त्राय फडिति ॥ १९

आग्नेय्यामथ वैशान्यां नैर्ऋत्यामर्च्चयेद्धर।
हृदयादि हि वायव्यां नेत्रञ्चान्तः प्रपूजयेत् ॥ २०
दिग्वक्षं पूजयेद्रुद्र सोमन्तु श्वेतवर्णकम्।
दक्षे पूर्व्वेऽर्च्चयेद्रुद्र बुधं चामीकरप्रभम् ॥ २१
दक्षिणे पूजयेद्रुद्र पीतवर्णं गुरुं यजेत्।
पश्चिमे चैव भूतेश मुत्तरे भार्गवं सितम् ॥ २२
रक्तमङ्गारकञ्चैव आग्नेये पूजयेद्धर।
शनैश्चरं कृष्णवर्णं नैर्ऋत्यां दिशि पूजयेत् ॥ २३
राहुं वायव्यदिशि तु नन्द्यावर्त्तनिभं हर।
ऐशान्यां धूम्रवर्णन्तु केतुं सम्पूरिपूजयेत्।
एभिर्मन्त्रैर्महादेव तच्छृणुष्व च शङ्कर ॥ २४

ओं सों सोमाय नमः। ओं बुं बुधाय नमः। ओं वृं वृहस्पतये नमः। ओं भं भार्गवाय नमः। ओं अं अङ्गारकाय नमः। ओं शं शनैश्चराय नमः। ओं रं राहवे नमः। ओं कं केतवे नमः इति ॥ २५

पाद्यादीन् मूलमन्त्रेण दत्त्वा सूर्य्याय शङ्कर।
नैवेद्यान्ते धेनुमुद्रां दर्शयेत् साधकोत्तमः ॥ २६
जप्त्वा चाष्टसहस्रन्तु तच्च तस्मै समर्पयेत्।
ऐशान्यां दिशि भूतेश तेजश्चण्डन्तु पूजयेत् ॥ २७
ओं तेजश्चण्डाय हुं फट् स्वधा स्वाहा वौषट्।
निर्म्माल्यञ्चार्पयेत् तस्मै ह्यर्घ्यं दद्यात् ततो हर ॥ २८
तिलतण्डुलसंयुक्तं रक्तचन्दनचर्च्चितम्।
गन्धोदकेन संमिश्रं पुष्पधूपसमन्वितम् ॥ २९
कृत्वा शिरसि तत्पात्रं जानुभ्यामवलिङ्गितः।
दद्यादर्घ्यन्तु सूर्य्याय हृन्मन्त्रेण वृषध्वज ॥ ३०
गणं गुरून् प्रपूज्याथ सर्व्वान् देवान् प्रपूजयेत् ॥ ३१
ओं गं गणपतये नमः। ओं अं गुरुभ्यो नमः।
सूर्य्यस्य कथिता पूजा कृत्वैतां विष्णुलोकभाक् ॥ ३२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः।

शङ्कर उवाच।

माहेश्वरीञ्च मे पूजां वद शङ्खगदाधर।
यां ज्ञात्वा मानवाः सिद्धिं गच्छन्ति परमे

हरिरुवाच।

शृणु माहेश्वरीं पूजां कथ्यमानां वृषध्वज।
आदौ स्नात्वा तथाचम्य ह्यासने चोपविश्य
न्यासं कृत्वा मण्डले वै पूजयेच्च महेश्वरम्।
मन्त्रैरेतैर्महेशान परिवारयुतं हरम् ॥ ३

ओं हां शिवासनदेवता आगच्छत इति
अनेनावाहयेद्रुद्र देवता आसनस्य याः ॥ ५

ओं हां गणपतये नमः। ओं हां स
नमः। ओं हां नन्दिने नमः। ओं हां महाका
नमः। ओं हां गङ्गायै नमः। ओं हां लक्ष्म्यै
ओं हां महाकालाय नमः। ओं हां
नम इति ॥ ६

एते द्वारे प्रपूज्या वै स्नानगन्धादिभिर्हर ॥

ओं हां ब्रह्मणे वास्त्वधिपतये नमः।
गुरुभ्यो नमः। ओं हां आधारशक्त्यै नमः
हां अनन्ताय नमः। ओं हां धर्म्माय नमः
हां ज्ञानाय नमः। ओं हां वैराग्याय नमः
हां ऐश्वर्य्याय नमः। ओं हां अधर्म्माय
ओं हां अज्ञानाय नमः। ओं हां अवै
नमः। ओं हां अनैश्वर्य्याय नमः।
ऊर्द्ध्वच्छन्दाय नमः। ओं हां अधश्छन्द
ओं हां पद्माय नमः। ओं हां कर्णिका
ओं हां वामायै नमः। ओं हां ज्येष्ठा
ओं हां रौद्र्यै नमः। ओं हां काल
ओं हां बलविकरिण्यै नमः। ओं
प्रमथिन्यै नमः। ओं हां सर्व्वभूतदम
ओं हां मनोन्मन्यै नमः। ओं हां मण्डल
नमः। ओं हां ह्रीं हूं शिवमूर्त्तये न
हां विद्याधिपतये नमः। ओं हां ह्रीं
नमः। ओं हां हृदयाय नमः। ओं हीं
नमः। ओं हूं शिखायै नमः। ओं हैं

नमः। आँ ह्रौं नेत्रत्रयाय नमः। ओं ह्रः
अस्त्राय नमः। ओं ह्रां सद्योजाताय नमः॥ ८
ओं ह्रां सिद्ध्यै नमः। ओं ह्रां ऋद्ध्यै नमः। ओं
ह्रां द्युत्यै नमः। ओं ह्रां लक्ष्म्यै नमः। ओं
ह्रां बोधायै नमः। ओं ह्रां काल्यै नमः। ओं
ह्रां स्वधायै नमः। ओं ह्रां प्रभायै नमः॥ ९
सत्यस्याष्टौ कला ज्ञेयाः पूर्व्वपूर्व्वादिषु स्थिताः॥१०
ओं ह्रां वामदेवाय नमः। ओं ह्रां रजसे
नमः। ओं ह्रां रक्षायै नमः। ओं ह्रां
रत्यै नमः। ओं ह्रां कन्यायै नमः। ओं
ह्रां कामायै नमः। ओं ह्रां जनन्यै नमः।
ओं ह्रां क्रियायै नमः। ओं ह्रां वृद्ध्यै नमः।
ओं ह्रां कार्य्यायै नमः। ओं ह्रां रात्र्यै नमः। ओं
ह्रां भ्रामण्यै नमः। ओं ह्रां मोहिन्यै नमः। ओं
ह्रां त्वरायै नमः॥ ११
वामदेवकला ज्ञेयास्त्रयोदश वृषध्वज॥ १२
आं ह्रां तत्पुरुषाय नमः। ओं ह्रां निवृत्त्यै
नमः। ओं ह्रां प्रतिष्ठायै नमः। ओं ह्रां विद्यायै
नमः। आँ ह्रां शान्त्यै नमः॥ १३
ज्ञेयास्तत्पुरुषस्यैव चतस्रो वृषभध्वज॥ १४
आं ह्रां अघोराय नमः। ओं ह्रां उमायै
नमः। ओं ह्रां क्षमायै नमः। ओं ह्रां निद्रायै
नमः। ओं ह्रां व्याध्यै नमः। ओं ह्रां क्षुधायै
नमः। ओं ह्रां तृष्णायै नमः॥ १५
कलाषट्कं ह्यघोरस्य विज्ञेयं भैरवं हर॥ १६
ओं ह्रां ईशानाय नमः। ओं ह्रां समित्यै
नमः। ओं ह्रां अङ्गदायै नमः। ओं ह्रां कृष्णायै
नमः। ओं ह्रां मारिच्यै नमः। ओं ह्रां
ज्वालायै नमः॥ १७
ईशानस्य कलाः पञ्च जानीहि वृषभध्वज॥ १८
ओं ह्रां शिवपरिवारेभ्यो नमः। ओं ह्रां
इन्द्राय सुराधिपतये नमः। ओं ह्रां अग्नये
तेजोऽधिपतये नमः। ओं ह्रां यमाय प्रेताधि-
पतये नमः। ओं ह्रां निर्ऋतये रक्षोऽधिपतये
नमः। ओं ह्रां वरुणाय जलाधिपतये नमः। ओं
ह्रां वायवे प्राणाधिपतये नमः। ओं ह्रां सोमाय
नक्षत्राधिपतये नमः। आँ ह्रां ईशानाय सर्व्व-
विद्याधिपतये नमः। ओं ह्रां अनन्ताय नागा-
धिपतये नमः। ओं ह्रां ब्रह्मणे सर्व्वलोकाधि-
पतये नमः। ओं ह्रां धूलिचण्डेश्वराय नमः
इति॥ १९

आवाहनं स्थापनञ्च सन्निधानञ्च शङ्कर।
सन्निरोधं तथा कुर्य्यात् सकलीकरणं तथा॥ २०
तत्त्वन्यासञ्च मुद्राया दर्शनं ध्यानमेव च।
पाद्यमाचमनं ह्यर्घ्यं पुष्पाण्यभ्यङ्गदानकम्॥ २१
तत उद्वर्त्तनं स्नानं सुगन्धञ्चानुलेपनम्।
वस्त्रालङ्कारभोगांश्च ह्यङ्गन्यासञ्च धूपकम्॥ २२
दीपं नैवेद्यदानञ्च हस्तोद्वर्त्तनमेव च।
पाद्यार्घ्याचमनं गन्धं ताम्बूलं गीतवादनम्॥ २३
नृत्यं छत्रादिकरणं मुद्राणां दर्शनं तथा।
रूपं ध्यानं जपञ्चाथ एकवद्भाव एव च॥ २४
मूलमन्त्रेण वै कुर्य्याज्जपपूजासमर्पणम्।
माहेशी कथिता पूजा रुद्र पापविनाशिनी॥ २५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
चत्वारिंशोऽध्यायः॥ ४०॥

---

## एकचत्वारिंशोऽध्यायः।

हरिरुवाच।

ओं विश्वावसुर्नाम गन्धर्व्वः कन्यानामधिपति-
र्लभामि ते कन्यां समुत्पाद्य तस्मै विश्वावसवे
स्वाहा॥ १
स्त्रीलाभो मन्त्रजप्याच्च कालरात्रिं वदाम्यहम्॥ २
ओं नमो भगवति ऋक्षकर्णि चतुर्भुजे उर्द्ध-
केशि त्रिनयने कालरात्रि मानुषाणां वसारुधिर-
भोजने अमुकस्य प्राप्तकालस्य मृत्युप्रदे हूं फट्
हन हन दह दह मांसरुधिरं पच पच ऋक्षपत्नि
स्वाहा॥ ३
न तिथिर्न च नक्षत्रं नोपवासो विधीयते॥ ४
शुद्धो रक्तेन सम्मार्ज्य करौ ताभ्यां प्रगृह्य च।
प्रदोषे संजपेल्लिङ्गमामपात्रञ्च मारयेत्॥ ५
ओं नमः सर्व्वतो यन्त्राण्येतद्दययया जम्भनि

मोहनि सर्व्वशत्रुविद्राविणि रक्ष रक्ष माममुकं सर्व्वभयोपद्रवेभ्यः स्वाहा ॥ ६

युद्धे नष्टे महादेव वक्ष्येऽहं द्विजपादिह ॥ ७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नानाविद्या नामैकचत्वारिंशोऽध्यायः ॥४१॥

---

## द्विचत्वारिंशोऽध्यायः।

हरिरुवाच।

पवित्रारोहणं वक्ष्ये शिवस्याशिवनाशनम्।
आचार्य्यः साधकः कुर्य्यात् पुत्रकः समयी हर ॥ १
संवत्सरकृतां पूजां विघ्नेशो हरतेऽन्यथा।
आषाढ़े श्रावणे माघे कुर्य्याद्भाद्रपदेऽपि वा ॥ २
सौवर्ण-रौप्य-ताम्रञ्च सूत्रं कार्पासिकं क्रमात्।
श्रेयं कृतादौ संग्राह्यं कन्यया कर्त्तितञ्च यत् ॥ ३
त्रिगुणं त्रिगुणीकृत्य ततः कुर्य्यात् पवित्रकम्।
ग्रन्थयो वामदेवेन सद्येन क्षालयेच्छिव ॥ ४
अघोरेण तु संशोध्य बहुरूपस्तत्पुरुषाद्भवेत्।
धूपयेदीशमन्त्रेण तन्तुदेवा इमे स्मृताः ॥ ५
ओङ्कारश्चन्द्रमा वह्निर्ब्रह्मा नागः शिखिध्वजः।
रविर्विष्णुः शिवः प्रोक्ताः क्रमात् तन्तुषु देवताः ॥ ६
अष्टोत्तरशतं कुर्य्यात् पञ्चाशत् पञ्चविंशतिम्।
रुद्रोऽन्तमादि विज्ञेयं मानञ्च ग्रन्थयो दश ॥ ७
चतुरङ्गुलान्तरालाः स्युर्ग्रन्थिनामानि च क्रमात्।
प्रभूतिः पौरुषी वीरा चतुर्थी चापराजिता ॥ ८
जया च विजया रुद्रा अजिता च सदाशिव।
मनोन्मनी सर्व्वमुखी द्व्यङ्गुलाङ्गुलतोऽथवा ॥ ९
रञ्जयेत् कुङ्कुमाद्यैस्तु कुर्य्याद्गन्धपवित्रकम्।
सप्तम्यां वा त्रयोदश्यां शुक्लपक्षे तथेतरे ॥ १०
क्षीरादिभिश्च संस्नाप्य लिङ्गं गन्धादिभिर्यजेत्।
दद्याद्गन्धपवित्रन्तु आत्मने ब्रह्मणे हर ॥ ११
पुष्पं गन्धयुतं दद्यान्मूलेनेशानगोचरे।
पूर्व्वे च दण्डकाष्ठन्तूत्तरे चामलकीफलम् ॥ १२
मृत्तिकां पश्चिमे दद्याद्दक्षिणे भस्मभूतयः।
नैरृते त्वगुरुं दद्याच्छिखामन्त्रेण मन्त्रवित्।
वायव्यां सर्षपं दद्यात् कवचेन वृषध्वज ॥ १३

गृहं संवेष्ट्य सूत्रेण दद्याद्गन्धपवित्रकम्।
होमं कृत्वाग्नये दत्त्वा दद्याद्भूतबलिं तथा ॥
आमन्त्रितोऽसि देवेश गणैः सार्द्धं महेश्वर।
प्रातस्त्वां पूजयिष्यामि अत्र सन्निहितो भव ॥
निमन्त्र्यानेन तिष्ठेत् तु कुर्व्वन् गीतादिकं नि...
मन्त्रितानि पवित्राणि स्थापयेद्देवपार्श्वतः ॥
स्नात्वादित्यं चतुर्द्दश्यां प्राक् च रुद्रं प्रपूजयेत्।
ललाटस्थं बिन्दुरूपं ध्यात्वात्मानं प्रपूजयेत् ॥
अस्त्रेण प्रोक्षितान्येवं हृदयेनार्च्चितान्यथ।
संहितामन्त्रितान्येव धूपितानि समर्पयेत् ॥
शिवतत्त्वात्मकञ्चादौ विद्यातत्त्वात्मकं ततः।
आत्मतत्त्वात्मकं पश्चाद्देवकाख्यं ततोऽर्च्चयेत् ॥

ओं ह्रौं शिवतत्त्वाय नमः। ओं ह्रौं वि[द्या]तत्त्वाय नमः। ओं ह्रां आत्मतत्त्वाय नमः। ह्रां ह्रीं ह्रूं ह्रौं सर्व्वतत्त्वाय नमः ॥ २०

ओं कालात्मना त्वया देव यद्दृष्टं मामके विधौ।
कृतं क्लिष्टं समुत्सृष्टं कृतं गुप्तञ्च यत् कृतम्।
सर्व्वात्मनात्मना शम्भो पवित्रेण त्वदिच्छया ॥

ओं पूरय पूरय मखव्रतं तन्नियमेश्वराय सर्व्वतत्त्वात्मकाय सर्व्वकारणपालिताय ओं ह्रीं ह्रूं ह्रैं ह्रौं शिवाय नमः ॥ २२

पूर्व्वैरनेन यो दद्यात् पवित्राणां चतुष्टयम्।
दत्त्वा वह्नेः पवित्रञ्च गुरवे दक्षिणां दिशेत्।
बलिं दत्त्वा द्विजान् भोज्य चण्डं प्रार्च्य विसर्जयेत् ॥

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे शिवपवित्रारोहणं नाम द्विचत्वारिंशोऽध्यायः ॥४२॥

---

## त्रिचत्वारिंशोऽध्यायः।

हरिरुवाच।

पवित्रारोहणं वक्ष्ये भुक्तिमुक्तिप्रदं हरेः।
पुरा देवासुरे युद्धे ब्रह्माद्याः शरणं ययुः ॥ १
विष्णुश्च तेषां देवानां ध्वजं ग्रैवेयकं ददौ।
एतौ दृष्ट्वा विनङ्क्ष्यन्ति दानवा ह्यब्रवीद्धरिः ॥
विख्याते ह्यब्रवीन्नागो वासुकेरनुजस्तदा ॥

वृणीत च पवित्राख्यं वरञ्चेदं वृषध्वज ।
अवेयं हरिदत्तन्तु मन्नाम्ना ख्यातिमेष्यति ।
इत्युक्ते तेन देवांस्तान् नाम्ना च तद्वरं ददौ ॥ ४
प्रावृट्काले तु ये मर्त्त्या नार्च्चिष्यन्ति पवित्रकैः ।
तेषां सांवत्सरी पूजा विफला च भविष्यति ।
तस्मात् सर्व्वेषु देवेषु पवित्रारोहणं क्रमात् ॥ ५
प्रतिपत्पौर्णमास्यन्ता यस्य या तिथिरुच्यते ।
द्वादश्यां विष्णवे कार्य्यं शुक्ले कृष्णेऽथवा हर ॥ ६
व्यतीपातेऽयने चैव चन्द्रसूर्य्यग्रहे शिव ।
विष्णवे वृद्धिकार्य्ये च गुरोरागमने तथा ।
नित्यं पवित्रमुद्दिष्टं प्रावृट्काले त्ववश्यकम् ॥ ७
कौषेयं पट्टसूत्रं वा कार्पासं क्षौममेव वा ।
विप्रसूत्रं द्विजानां स्याद्राज्ञां कौषेयपट्टकम् ॥ ८
[...]ानाञ्चौर्णकं क्षौमं शूद्राणां नववल्कजम् ।
[...]ार्पासं पद्मजञ्चैव सर्व्वेषां शस्तमीश्वर ॥ ९
[...]ह्मण्या कर्त्तितं सूत्रं त्रिगुणं त्रिगुणीकृतम् ।
[...]ोङ्कारोऽथ शिवः सोमो ह्यग्निर्ब्रह्मा फणी रविः ॥ १०
[...]न्द्रेशो विष्णुरित्येते स्थितास्तन्तुषु देवताः ।
[...]ह्मा विष्णुश्च रुद्रश्च त्रिसूत्रे देवताः स्मृताः ॥ ११
[...]विर्णं राजते ताम्रे वैष्णवे मृण्मये न्यसेत् ।
[...]ुष्ठेन चतुःषष्टिः श्रेष्ठं मध्यं तदर्द्धतः ॥ १२
[...]र्ध्दा तु कनिष्ठा स्यात् सूत्रमष्टोत्तरं शतम् ।
[...]ं मध्यमञ्चैव कन्यसं पूर्व्ववत् क्रमात् ॥ १३
[...]त्तमोऽङ्गुष्ठमानेन मध्यमो मध्यमेन तु ।
कन्यसे च कनिष्ठेन अङ्गुल्या ग्रन्थयः स्मृताः ।
विमाने स्थण्डिले चैव एतत् सामान्यलक्षणम् ॥ १४
शिरोहृतं पवित्रन्तु प्रतिमायाञ्च कारयेत् ।
ह्वन्नाभिरूरुमानेन जानुभ्यामवलम्बिनी ॥ १५
अष्टोत्तरसहस्रेण चत्वारो ग्रन्थयः स्मृताः ।
षट्त्रिंशच्च चतुर्व्विंशद्द्वादश ग्रन्थयोऽथवा ॥ १६
उत्तमादिषु विज्ञेयाः पर्व्वभिर्वा पवित्रकम् ।
चर्च्चितं कुङ्कुमेनैव हरिद्राचन्दनेन वा ॥ १७
सोपवासः पवित्रन्तु पात्रस्थमधिवासयेत् ।
अश्वत्थपत्रपुटके अष्टदिक्षु निवेशितम् ॥ १८
दण्डकाष्ठं कुशाग्रञ्च पूर्व्वे सङ्कर्षणेन तु ।
रोचनाकुङ्कुमेनैव प्रद्युम्नेन तु दक्षिणे ॥ १९

युद्धार्थी फलसिद्ध्यर्थमनिरुद्धेन पश्चिमे ।
चन्दनं नीलयुक्तञ्च तिलभस्माद्यतं तथा ।
आग्नेयादिषु कोणेषु श्रियादीनां क्रमान्न्यसेत् ॥ २०
पवित्रं वासुदेवेन अभिमन्त्र्य सकृत् सकृत् ।
दृष्ट्वा पुनः प्रपूज्याथ वस्त्रेणाच्छाद्य यत्नतः ॥ २१
देवस्य पुरतः स्थाप्यं प्रतिमामण्डलस्य वा ।
पश्चिमे दक्षिणे चैव उत्तरे पूर्व्ववत् क्रमात् ॥ २२
ब्राह्मणादींश्च संस्थाप्य कलसञ्चाथ पूजयेत् ।
अस्त्रेण मण्डलं कृत्वा नैवेद्यञ्च समर्पयेत् ॥ २३
अधिवास्य पवित्रन्तु त्रिसूत्रं नवमेव वा ।
वेदिकां वेष्टयित्वा तु आत्मानं कलसं घृतम् ॥ २४
अग्निकुण्डं विमानञ्च मण्डपं गृहमेव च ।
सूत्रमेकन्तु संगृह्य दद्याद्देवस्य मूर्द्धनि ॥ २५
दत्त्वा पठेदिमं मन्त्रं पूजयित्वा महेश्वरम् ।
आवाहितोऽसि देवेश पूजार्थं परमेश्वर ।
तत्प्रभातेऽर्च्चयिष्यामि सामग्र्या सन्निधीभव ॥ २६
एकरात्रं त्रिरात्रं वा अधिवास्य पवित्रकम् ।
रात्रौ जागरणं कृत्वा प्रातः सम्पूज्य केशवम् ॥ २७
आरोपयेत् क्रमेणैव ज्येष्ठमध्यकनीयसम् ।
धूपयित्वा पवित्रन्तु मन्त्रेणैवाभिमन्त्रयेत् ॥ २८
प्रजप्तग्रन्थिकञ्चैव पूजयेत् कुसुमादिभिः ।
गायत्र्या चार्च्चितं तेन देवं सम्पूज्य दापयेत् ॥ २९
समं पुत्त्रकलत्राद्यैः सूत्रपुच्छन्तु धारयेत् ।
विशुद्धग्रन्थिकं रम्यं महापातकनाशनम् ।
सर्व्वपापक्षयं देव तवाग्रे धारयाम्यहम् ॥ ३०
एवं धूपादिनाभ्यर्च्च्य मध्यमादीन् समर्पयेत् ।
पवित्रं वैष्णवं तेजः सर्व्वपातकनाशनम् ।
धर्म्मकामार्थसिद्ध्यर्थं स्वकण्ठे धारयाम्यहम् ॥ ३१
वनमालां समभ्यर्च्च्य स्वेन मन्त्रेण दापयेत् ।
नैवेद्यं विविधं दत्त्वा कुसुमाद्यैर्बलिं हरेत् ॥ ३२
अग्निं सन्तर्प्य तत्रापि द्वादशाङ्गुलमानतः ।
अष्टोत्तरशतेनैव दद्यादेकपवित्रकम् ॥ ३३
आदौ दत्त्वार्घ्यमादित्ये तत्र चैकं पवित्रकम् ।
विष्वक्सेनं ततः प्रार्च्च्य गुरुमर्घ्यादिभिर्हर ।
देवस्याग्रे पठेन्मन्त्रं कृताञ्जलिपुटस्थितः ॥ ३४
ज्ञानतोऽज्ञानतो वापि पूजनादि कृतं मया ।

तत् सर्व्वं पूर्णमेवास्तु त्वत्प्रसादात् सुरेश्वर ॥ ३५
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः।
इयं सांवत्सरी पूजा तवास्तु गरुड़ध्वज ॥ ३६
वनमाला यथा देव कौस्तुभं सततं हृदि।
तद्वत् पवित्रं तन्तूनां मालां त्वं हृदये धर ॥ ३७
एवं प्रार्थ्य द्विजान् भोज्य दत्त्वा तेभ्यश्च दक्षिणाम्।
विसर्ज्जयेत् तु तेनैव सायाह्ने त्वपरेऽहनि ॥ ३८
सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मया।
व्रज पवित्रकेदानीं विष्णुलोकं विसर्ज्जितः ॥ ३९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः।

हरिरुवाच।

पूजयित्वा पवित्राद्यैर्ब्रह्म ध्यात्वा हरिर्भवेत्।
ब्रह्मध्यानं प्रवक्ष्यामि मायायन्त्रप्रमर्द्दकम् ॥ १
यच्छेद्वाङ्मनसा प्राज्ञस्तं यजेज्ज्ञानमात्मनि।
ज्ञानं महति संयच्छेद्य इच्छेज्ज्ञानमात्मनि ॥ २
देहेन्द्रियमनोबुद्धि-प्राणाहङ्कारवर्ज्जितम्।
वर्ज्जितं भूततन्मात्रैर्गुणजन्मादिभिः ॥ ३
स्वप्रकाशं निराकारं सदानन्दमनादि यत्।
नित्यं शुद्धं बुद्धमुद्धं सत्यमानन्दमद्वयम् ॥ ४
तुरीयमक्षरं ब्रह्म अहमस्मि परं पदम्।
अहं ब्रह्मेत्यवस्थानं समाधिरपि गीयते ॥ ५
आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ६
इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचराः।
आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः ॥ ७
यस्य विज्ञानवानात्मा युक्तेन मनसा सदा (क)।
स तु तत्पदमाप्नोति स हि भूयो न जायते ॥ ८
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः।
स्वर्धुन्याः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९
अहिंसादि यमः प्रोक्तः शौचादि नियमः स्मृतः।
पद्मासनमुक्तमासनञ्च प्राणायामो मरुज्जयः ॥ १०
प्रत्याहारो जयः प्रोक्तो ध्यानमीश्वरचि[न्तनम्]।
मनोधृतिर्धारणा स्यात् समाधिर्ब्रह्मणि [स्थितिः] ॥ ११
अमूर्त्तौ चेद्दृणी स्यात् तु ततो मूर्त्तिं वि[चिन्तयेत्]।
हृत्पद्मकर्णिकामध्ये शङ्खचक्रगदाधरः ॥ १[२]
श्रीवत्सकौस्तुभयुतो वनमालाश्रिया युतः।
नित्यः शुद्धो बुद्धियुक्तः सत्यानन्दाद्वयः प[रः] ॥ १[३]
आत्माहं परमं ब्रह्म परमज्योतिरेव तु।
चतुर्व्विंशतिमूर्त्तिः स शालग्रामशिलास्थि[तः]
द्वारकादिशिलासंस्थो ध्येयः पूज्योऽपि वा ॥ [१४]
मनसोऽभीप्सितं प्राप्य देवो वैमानिको भ[वेत्]।
निष्कामोमुक्तिमाप्नोति मूर्त्तिं ध्यायन् स्तुव[न्]

इति श्रीगारुड़े महापुराणे पूर्व्वख[ण्डे]
मूर्त्तामूर्त्तध्यानं नाम चतुश्चत्वा-
रिंशोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशोऽध्यायः

हरिरुवाच।

प्रसङ्गात् कथयिष्यामि शालग्रामस्य लक्षण[म्]।
शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनम् ॥ १
शङ्खचक्रगदापद्मी केशवाख्यो गदाधरः।
साब्जकौमोदकी चक्र-शङ्खी नारायणो विभुः ॥ २
सचक्रशङ्खाब्जगदो माधवः श्रीगदाधरः।
गदाब्जशङ्खचक्री वा गोविन्दोऽर्च्यो गदाधरः ॥ ३
पद्मशङ्खारिगदिने (क) विष्णुरूपाय ते नमः।
सशङ्खाब्ज-गदा-चक्र-मधुसूदनमूर्त्तये ॥ ४
नमो गदारिशङ्खाब्ज-मूर्त्तित्रिविक्रमाय च।
सारिकौमोदकीपद्म-शङ्खवामनमूर्त्तये ॥ ५
चक्राब्जशङ्खगदिने नमः श्रीधरमूर्त्तये।
हृषीकेशायाब्जगदा-शङ्खिने चक्रिणे नमः।
साब्जचक्रगदाशङ्ख-पद्मनाभस्वरूपिणे।
दामोदर शङ्खचक्र-गदापद्मिन् नमो नमः।
सारिशङ्खगदाब्जाय वासुदेवाय वै नमः ॥ ८
शङ्खाब्जचक्रगदिने नमः सङ्कर्षणाय च।
सुशङ्खसुगदाब्जारि-धृते प्रद्युम्नमूर्त्तये।

(क) यस्तु विज्ञानवान् भवति युक्तेन मनसा सदेति वा पाठः।

(क) पद्मशङ्खाब्जगदिने इति वा पाठः।

नमोऽनिरुद्धाय गदाशङ्खाब्जारिविधारिणे ॥ ९
साब्जशङ्खगदाचक्र-पुरुषोत्तममूर्त्तये ।
नमोऽधोक्षजरूपाय गदाशङ्खारिपद्मिने ॥ १०
नृसिंहमूर्त्तये पद्म-गदाशङ्खारिधारिणे ।
पद्मारिशङ्खगदिने नमोऽस्त्वच्युतमूर्त्तये ॥ ११
सशङ्खचक्राब्जगदं जनार्द्दनमिहानये ।
उपेन्द्रं सगदं सारिं पद्मशङ्खिन् नमो नमः ॥ १२
सुचक्राब्जगदाशङ्ख-युताय हरिमूर्त्तये ।
सगदाब्जारिशङ्खाय नमः श्रीकृष्णमूर्त्तये ॥ १३
शालग्रामशिलाद्वार-गतलग्नद्विचक्रधृक् ।
शुक्लाभो वासुदेवाख्यः सोऽव्याद्वः श्रीगदाधरः ॥ १४
लग्नद्विचक्रो रक्ताभः पूर्व्वभागी तु पद्मभृत् ।
सङ्कर्षणोऽथ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतकः ॥ १५
स दीर्घः सुषिरश्छिद्रो योऽनिरुद्धस्तु वर्त्तुलः ।
नीलो द्वारि त्रिरेखश्च अथ नारायणोऽसितः ॥१६
मध्ये गदाकृती रेखा नाभिचक्रो महोन्नतः ।
पृथुवक्षा नृसिंहोऽथ कपिलोऽव्यात् त्रिबिन्दुकः ॥ १७
अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचारिणः ।
वराहशक्तिलिङ्गोऽव्याद्विषमद्वयचक्रकः ॥ १८
नीलस्त्रिरेखः स्थूलोऽथ कूर्म्ममूर्त्तिः स बिन्दुमान् ।
कृष्णः स वर्त्तुलावर्त्तः पातु वो नतपृष्ठकः ॥ १९
श्रीधरः पञ्चरेखोऽव्याद्वनमाली गदाङ्कितः ।
वामनो वर्त्तुलो ह्रस्वो वामचक्रः सुरेश्वरः ॥ २०
नानावर्णोऽनेकमूर्त्तिर्नागभोगी त्वनन्तकः ।
स्थूलो दामोदरो नीलो मध्ये चक्रः सुनीलकः ॥२१
सङ्कीर्णद्वारको वाऽव्यादथ ब्रह्मा सुलोहितः ।
सदीर्घरेखः शुषिर एकचक्राम्बुजः पृथुः ॥ २२
पृथुच्छिद्रः स्थूलचक्रः कृष्णो बिन्दुश्च बिन्दुमत् ।
हयग्रीवोऽङ्कुशाकारः पञ्चरेखः सकौस्तुभः ॥ २३
वैकुण्ठो मणिरत्नाभ एकचक्राम्बुजोऽसितः ।
मत्स्यो दीर्घोऽम्बुजाकारो द्वाररेखश्च पातु वः ॥ २४
वामचक्रो दक्षरेखः श्यामो वोऽव्यात् त्रिविक्रमः ।
शालग्रामे द्वारकायां स्थिताय गदिने नमः ॥ २५
एकद्वारे चतुश्चक्रं वनमालाविभूषितम् ।
स्वर्णरेखासमायुक्तं गोष्पदेन विराजितम् ।
कदम्बकुसुमाकारं लक्ष्मीनारायणोऽवतु ॥ २६

एकेन लक्षितो योऽव्याद्गदाधारी सुदर्शनः ।
लक्ष्मीनारायणो द्वाभ्यां त्रिभिर्मूर्त्तैस्त्रिविक्रमः ॥ २७
चतुर्भिश्च चतूर्व्यूहो वासुदेवश्च पञ्चभिः ।
प्रद्युम्नः षड्भिरेव स्यात् सङ्कर्षण इतस्ततः ॥ २८
पुरुषोत्तमोऽष्टाभिः स्यान्नवव्यूहो नवाङ्कितः ।
दशावतारो दशभिरनिरुद्धोऽवतादथ ॥ २९
द्वादशात्मा द्वादशभिरत ऊर्द्धमनन्तकः ।
विष्णोर्मूर्त्तिमयं स्तोत्रं यः पठेत् स दिवं व्रजेत् ॥ ३०
ब्रह्मा चतुर्म्मुखो दण्डी कमण्डलुयुगान्वितः ।
महेश्वरः पञ्चवक्त्रो दशबाहुर्वृषध्वजः ॥ ३१
यथायुधस्तथा गौरी चण्डिका च सरस्वती ।
महालक्ष्मीर्मातरश्च पद्महस्तो दिवाकरः ॥ ३२
गजास्यश्च गणः स्कन्दः षण्मुखोऽनेकधा गणाः ।
एतेऽर्च्चिताः स्थापिताश्च प्रासादे वास्तुपूजिते ।
धर्म्मार्थकाममोक्षाद्याः प्राप्यन्ते पुरुषेण च ॥ ३३

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
वासुदेवमूर्त्तिकथनं नाम पञ्चचत्वा-
रिंशोऽध्यायः ॥४५॥

---

## षट्चत्वारिंशोऽध्यायः ।

हरिरुवाच ।

वास्तुं संक्षेपतो वक्ष्ये गृहादौ विघ्ननाशनम् ।
ईशानकोणादारभ्य ह्येकाशीतिपदे यजेत् ॥ १
ईशाने च शिरः पादौ नैर्ऋतेऽग्न्यनिले करौ ।
आवासवासवेश्मादौ पुरे ग्रामे वणिक्पथे ॥ २
प्रासादारामदुर्गेषु देवालयमठेषु च ।
द्वात्रिंशत् तु सुरान् वाह्ये तदन्तश्च त्रयोदश ॥ ३
ईशश्चैवाथ पर्ज्जन्यो जयन्तः कुलिशायुधः ।
सूर्य्यः सत्यो भृगुश्चैव आकाशो वायुरेव च ॥ ४
पूषा च वितथश्चैव ग्रहक्षेत्रयमावुभौ ।
गन्धर्व्वौ भृगुराजस्तु मृगः पितृगणास्तथा ॥ ५
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो गणाधिपः ।
असुरः शेषपादौ च रोगोऽहिमुख्य एव च ॥ ६
भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ।
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ॥ ७

ईशानादिचतुष्कोण-संस्थितान् पूजयेद्बुधः।
आपश्चैवाथ सावित्री जयो रुद्रस्तथैव च॥ ८
मध्ये नवपदे ब्रह्मा तस्याष्टौ च समीपगान्।
देवानेकोत्तरानेतान् पूर्व्वादौ नामतः शृणु॥ ९
अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्।
अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः॥ १०
ईशानकोणादारभ्य दुर्गं च वंश उच्यते।
आग्नेयकोणादारभ्य वंशो भवति दुर्द्धरः॥ ११
अदितिं हिमवन्तञ्च जयन्तञ्च द्वयं त्रयम्।
नायिका कालिका नाम शक्राद्यस्त्वेकगाः पुनः।
वास्तुदेवान् पूजयित्वा गृहप्रासादकृद्भवेत्॥ १२
सुरेज्यः पुरतः कार्य्यो दिश्याग्नेय्यां महानसम्।
कायनिर्गमशो येन पूर्व्वतः सत्रमण्डपम्॥ १३
गन्धपुष्पगृहं कार्य्यमैशान्यां पट्टसंयुतम्।
भाण्डागारञ्च कौवेर्य्यां गोष्ठागारञ्च वायवे॥ १४
उदगाश्रयं वारुण्यां वातायनसमन्वितम्।
समित्कुशेन्धनस्थानमायुधानाञ्च नैर्ऋते॥ १५
अभ्यागतालयं रम्यं शय्यासनपादुकम्।
तोयाग्निदीपसद्भृत्यैर्युक्तं दक्षिणतो भवेत्॥ १६
गृहान्तराणि सर्व्वाणि सजलैः कदलीगृहैः।
पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत्॥ १७
प्राकारं तद्बहिर्दद्यात् पञ्चहस्तप्रमाणतः।
एवं विष्ण्वाश्रमं कुर्य्याद्वनैश्चोपवनैर्युतम्॥ १८
चतुःषष्टिपदो वास्तुः प्रासादादौ प्रपूजितः।
मध्ये चतुष्पदो ब्रह्मा द्विपदास्त्वर्य्यमादयः॥ १९
कर्णे चैवाथ शिख्याद्यास्तथा देवाः प्रकीर्त्तिताः।
तेभ्यो ह्युभयतः सार्द्धादन्येऽपि द्विपदाः सुराः।
चतुःषष्टिपदा देवा इत्येव परिकीर्त्तिताः॥ २०
चरकी च विदारी च पूतना पापराक्षसी।
ईशानाद्यास्ततो वाह्ये दैवाद्या हेतुकादयः॥ २१
हेतुकस्त्रिपुरान्तश्च अग्नि-वेतालकौ यमः।
अग्निजिह्वः कालकश्च करालो ह्येकपादकः॥ २२
ऐशान्यां भीमरूपस्तु पाताले प्रेतनायकः।
आकाशे गन्धमाली स्यात् क्षेत्रपालांस्ततो यजेत्॥ २३
विस्ताराभिहतं दैर्घ्यं राशिं वास्तोस्तु कारयेत्।
कृत्वा च वसुभिर्भागं शेषश्चैवायमादिशेत्॥ २४
पुनर्गुणितमष्टाभिर्ऋक्षैर्भागन्तु भाजयेत्।
यच्छेषं तद्भवेद्दृक्षं भागैर्हृत्वा व्ययं भवेत्॥ २५
ऋक्षं चतुर्गुणं कृत्वा नवभिर्भागहारितम्।
शेषमंशं विजानीयाद्देवलस्य मतं यथा॥ २६
अष्टाभिर्गुणितं पिण्डं षष्टिभिर्भागहारितम्।
यच्छेषं तद्भवेज्जीवं मरणं भूतहारितम्॥ २७
वास्तुक्रोडे गृहं कुर्य्यान्न पृष्ठे मानवः सदा।
वामपार्श्वेन स्वपिति नात्र कार्य्या विचारणा॥ २८
सिंहकन्यातुलायाञ्च द्वारं शुध्येद्यथोत्तरम्।
एवञ्च वृश्चिकादौ स्यात् पूर्व्वदक्षिणपश्चिमम्॥ २९
द्वारं दैर्घ्यार्द्धविस्तारं द्वाराण्यष्टौ स्मृतानि च॥ ३०
खतले प्लवनीचलं शयानं सूत्रभाजनम्।
पुत्रहीनन्तु रौद्रेण वीर्य्यघ्नं दक्षिणे तथा॥ ३१
वह्नौ बन्धश्च वायौ च पुत्रलाभः सुखप्रदः।
धनदे नृपपीड़ादं बन्धनं रोगदं जले॥ ३२
नृपभीतिर्मृतापत्यं धनपत्यञ्च वैरिदम्।
अर्थदे चार्थहानिश्च दोषदं पुत्रमृत्युदम्।
द्वाराण्युत्तरसंस्थानि पूर्व्वद्वाराणि वच्म्यहम्॥ ३३
अग्निभीतिर्बहुकन्या धनसम्मानकं पदम्।
राजघ्नं रोगदं पूर्व्वं फलतो द्वारमीरितम्॥ ३४
ईशानादौ भवेत् पूर्व्वमाग्नेयादौ तु दक्षिणम्।
नैर्ऋतादौ पश्चिमं स्याद्वायव्यादौ तु चोत्तरम्।
अष्टभागे कृते भागे द्वाराणाञ्च फलाफलम्॥ ३५
अश्वत्थ-प्लक्ष-न्यग्रोधाः पूर्व्वादौ स्यादुडुम्बरः।
गृहस्य शोभनः प्रोक्ता ईशाने चैव शाल्मलिः।
पूजितो विघ्नहारी स्यात् प्रासादस्य गृहस्य च

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
वास्तुमानलक्षणं नाम षट्चत्वा-
रिंशोऽध्यायः॥ ४६॥

## सप्तचत्वारिंशोऽध्यायः।

सूत उवाच।

प्रासादानां लक्षणञ्च वक्ष्ये शौनक तच्छृणु।
चतुःषष्टिपदं कृत्वा दिग्विदिक्षूपलक्षितम्॥ १

चतुष्कोणं चतुर्भिश्च द्वाराणि सूर्य्यसंख्यया ।
चत्वारिंशाष्टभिश्चैव भित्तीनां कल्पना भवेत् ॥ २
ऊर्द्ध्वक्षेत्रसमा जङ्घा तदूर्द्ध्वं द्विगुणं भवेत् ।
गर्भविस्तारविस्तीर्णा शुकाङ्घ्रिश्च विधीयते ॥ ३
तन्त्रिभागेण कर्त्तव्यः पञ्चभागेन वा पुनः ।
निर्गमस्तु शुकाङ्घ्रेश्च उच्छ्रायः शिखरार्द्धगः ॥ ४
चतुर्द्धा शिखरं कृत्वा त्रिभागे वेदिबन्धनम् ।
चतुर्थे पुनरस्यैव कण्ठमामूलसाधनम् ॥ ५
अथवापि समं वास्तुं कृत्वा षोड़शभागिकम् ।
तस्य मध्ये चतुर्भागमादौ गर्भन्तु कारयेत् ॥ ६
भागद्वादशिकां भित्तिं ततस्तु परिकल्पयेत् ।
चतुर्भागेण भित्तीनामुच्छ्रायः स्यात् प्रमाणतः ॥ ७
द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायाच्च मानतः ।
शिखरार्द्धस्य चार्द्धेन विधेयास्तु प्रदक्षिणाः ॥ ८
चतुर्द्दिक्षु तथा ज्ञेयो निर्गमस्तु तथा बुधैः ।
पञ्चभागेन संभज्य गर्भमानं विचक्षणः ॥ ९
भागमेकं गृहीत्वा तु निर्गमं कल्पयेत् पुनः ।
गर्भसूत्रसमो भागादग्रतो मुखमण्डपः ।
एतत् सामान्यमुद्दिष्टं प्रासादस्य हि लक्षणम् ॥ १०
लिङ्गमानमथो वक्ष्ये पीठो लिङ्गसमो भवेत् ।
द्विगुणेन भवेद्गर्भः समन्ताच्छौनक ध्रुवम् ।
द्विधा च भवेद्भित्तिर्जङ्घा तद्विस्तारार्द्धगा ॥ ११
[illegible]णा शिखरं प्रोक्तं जङ्घायाश्चैव शौनक ।
[illegible]ठगर्भावरं कर्म्म तन्मानेन शुकाङ्घ्रिकाम् ॥ १२
निर्गमस्तु समाख्यातः शेषं पूर्व्ववदेव तु ।
लिङ्गमानः स्मृतो ह्येष द्वारमानमथोच्यते ॥ १३
कराग्रं वेदवत् कृत्वा द्वारं भागाष्टमं भवेत् ।
विस्तरेण समाख्यातं द्विगुणं स्वेच्छया भवेत् ॥ १४
द्वारवत् पीठमध्ये तु शेषं शुषिरकं भवेत् ।
पादिकं शेषिकं भित्तिर्द्वारार्द्धेन परिग्रहात् ॥ १५
तद्विस्तारसमा जङ्घा शिखरं द्विगुणं भवेत् ।
शुकाङ्घ्रिः पूर्व्ववज्ज्ञेया निर्गमोच्छ्रायकं भवेत् ।
उक्तं मण्डपमानन्तु स्वरूपञ्चापरं वदे ॥ १६
त्रैवेदं कारयेत् चैत्रं यत्र तिष्ठन्ति देवताः ।
इत्थं कृतेन मानेन बाह्यभागविनिर्गतम् ।
नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः ॥ १७
गर्भन्तु द्विगुणं कुर्य्यान्नेम्या मानं भवेदिह ।
स एव भित्तेरुत्सेधो द्विगुणाच्च शिरो मतम्(क)॥ १८
प्रासादानाञ्च वक्ष्यामि मानं योनिञ्च नामतः ।
वैराजः पुष्पकाख्यश्च कैलासो मालकाह्वयः ।
त्रिपिष्टपञ्च पञ्चैते प्रासादाः सर्व्वयोनयः ॥ १९
प्रथमश्चतुरस्रो हि द्वितीयस्तु तदा[illegible]तः ।
वृत्तो वृत्तायतश्चान्योऽष्टास्रश्चेह च पञ्चमः ॥ २०
एतेभ्य एव सम्भूताः प्रासादाः सुमनोहराः ।
सर्व्वप्रकृतिभूतेभ्यश्चत्वारिंशच्च एव च ॥ २१
मेरुश्च मन्दरश्चैव विमानश्च तथापरः ।
भद्रकः सर्व्वतोभद्रो रुचको नन्दनस्तथा ॥ २२
नन्दिवर्द्धनसंज्ञश्च श्रीवत्सश्च नवेत्यमी ।
चतुरस्राः समुद्भूता वैराजादिति गम्यताम् ॥ २३
वड़भी गृहराजश्च शालागृहञ्च मन्दिरम् ।
विमानञ्च तथा ब्रह्म-मन्दिरं भवनं तथा ।
उत्तम्भं शिविकावेश्म नवैते पुष्पकोद्भवाः ॥ २४
वलयो दुन्दुभिः पद्मो महापद्मस्तथापरः ।
मुकुली चास्य उष्णीषी शङ्खश्च कलसस्तथा ।
गुवावृक्षस्तथान्यश्च वृत्ताः कैलाससम्भवाः ॥ २५
गजोऽथ वृषभो हंसो गरुड़ः सिंहनामकः ।
भूमुखो भूधरश्चैव श्रीजयः पृथिवीधरः ।
वृत्तायताः समुद्भूता नवैते मालकाह्वयात् ॥ २६
वज्रं चक्रं तथान्यच्च मुष्टिकं बभ्रुसंज्ञितम् ।
वक्रः स्वस्तिकखड्गौ च गदा श्रीवृक्ष एव च ।
विजयो नामतः श्वेतस्त्रिपिष्टपसमुद्भवाः ॥ २७
त्रिकोणं पद्ममर्द्धेन्दुश्चतुष्कोणं द्विरष्टकम् ।
यत्र तत्र विधातव्यं संस्थानं मण्डपस्य तु ॥ २८
राज्यञ्च विभवश्चैव ह्यायुर्वर्द्धनमेव च ।
पुत्त्रलाभः स्त्रियः(ख)पुष्टिस्त्रिकोणादिक्रमाद्भवेत् ॥ २९
कुर्य्याद्ध्वजादिकं ख्यात्या द्वारि गर्भगृहं तथा ।
मण्डपः समसंख्याभिर्गुणितः सूत्रतस्तथा ॥ ३०
मण्डपस्य चतुर्थांशाद्भद्रः कार्य्यो विजानता ।
सार्द्धगवाक्षकोपेतो निर्गवाक्षोऽथवा भवेत् ॥ ३१
सार्द्धभित्तिप्रमाणेन भित्तिमानेन वा पुनः ।

(क) शिखरो द्विगुणो मत इति पाठान्तरम् ।
(ख) स्त्रियः इति वा पाठः ।

भित्तेर्द्वैगुण्यतो वापि कर्त्तव्या मण्डपाः क्वचित् ॥ ३२
प्रासादे मञ्जरी कार्य्या चित्रा विषमभूमिका।
परिमाणविरोधेन रेखा वैषम्यभूषिता ॥ ३३
आधारस्तु चतुर्द्वारश्चतुर्मण्डपशोभितः।
शतशृङ्गसमायुक्तो मेरुः प्रासाद उत्तमः ॥ ३४
मण्डपास्तस्य कर्त्तव्या भद्रैस्त्रिभिरलङ्कृताः।
गठनाकारमानानां भिन्नाद्भिन्ना भवन्ति ते ॥ ३५
कियन्तो येषु चाधारा निराधाराश्च केचन।
प्रतिच्छन्दकभेदेन प्रासादाः सम्भवन्ति ते ॥ ३६
अन्योन्यसंस्कारात् तेषां गठनानामभेदतः।
देवतानां विशेषाय प्रासादा बहवः स्मृताः ॥ ३७
प्रासादे नियमो नास्ति देवतानां स्वयम्भुवाम्।
तानेव देवतानाञ्च पूर्व्वमानेन कारयेत् ॥ ३८
चतुरस्रायतास्तत्र चतुष्कोणसमन्विताः।
चन्द्रशालान्विताः कार्य्या भेरीशिखरसंयुताः ॥३९
पुरतो वाहनानाञ्च कर्त्तव्या लघुमण्डपाः।
नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ॥ ४०
प्रासादे देवतानाञ्च कार्य्या दिक्षु विदिक्ष्वपि।
द्वारपालाश्च कर्त्तव्या मुख्या गत्वा पृथक् पृथक् ॥ ४१
किञ्चिद्दूरतः कार्य्या मठास्तत्रोपजीविनाम्।
प्रावृता जगती कार्य्या फलपुष्पजलान्विता ॥ ४२
प्रासादेषु सुरान् स्थाप्यान् पूजाभिः पूजयेन्नरः।
वासुदेवः सर्व्वदेवः सर्व्वभाक् तद्गृहादिकृत् ॥ ४३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
प्रासादकीर्त्तनं नाम सप्तचत्वा-
रिंशोऽध्यायः ॥४७॥

---

## अष्टचत्वारिंशोऽध्यायः।

### सूत उवाच।

प्रतिष्ठां सर्व्वदेवानां संक्षेपेण वदाम्यहम्।
सुतिथ्यादौ सुरम्याञ्च प्रतिष्ठां कारयेद्गुरुः ॥ १
ऋत्विग्भिः सह चाचार्य्यं वरयेद्ब्रह्मदेशगम्।
स्वशाखोक्तविधानेन अथवा प्रणवेन तु ॥ २
पञ्चभिर्वज्रभिर्वाथ कुर्य्यात् पाद्यार्घ्यमेव च।
मुद्रिकाभिस्तथा वस्त्रैर्गन्धमाल्यानुलेपनैः।
मन्त्रन्यासं गुरुः कृत्वा ततः कर्म्म समारभेत्।
प्रासादस्याग्रतः कुर्य्यान्मण्डपं दशहस्तकम्।
कुर्य्याद्द्वादशहस्तं वा स्तम्भैः षोड़शभिर्युतम्।
ध्वजाष्टकैश्चतुर्हस्तां मध्ये वेदिञ्च कारयेत् ॥
नन्दीसङ्गमतीरोत्थां बालुकां तत्र दापयेत्।
चतुरस्रं कार्म्मुकाभं वर्त्तुलं कमलाकृति ॥ ५
पूर्व्वादितः समारभ्य कर्त्तव्यं कुण्डपञ्चकम्।
अथवा चतुरस्राणि सर्व्वाण्येतानि कारयेत् ॥
शान्तिकर्म्मविधानेन सर्व्वकामार्थसिद्धये।
शिरःस्थाने तु देवस्य आचार्य्यो होममाचरेत्
ऐशान्यां केचिदिच्छन्ति उपलिप्यावनीं शुभा
द्वाराणि चैव चत्वारि कृत्वा वै तोरणान्तिके
न्यग्रोधोडुम्बराश्वत्थ-वैल्व-पालाश-खादिरा
तोरणाः पञ्चहस्ताश्च वस्त्रपुष्पाद्यलङ्कृताः।
निखनेद्धस्तमेकैकं चत्वारश्चतुरो दिशः ॥ ८
पूर्व्वद्वारे मृगेन्द्रन्तु हयराजन्तु दक्षिणे।
पश्चिमे गोपतिर्नाम सुरशार्द्दूलमुत्तरे ॥ १०
अग्निमीलेति मन्त्रेण प्रथमं पूर्व्वतो न्यसेत्।
इषे त्वेति च मन्त्रेण दक्षिणस्यां द्वितीयकम् ॥
अग्न आयाहि मन्त्रेण पश्चिमस्यां तृतीयकम्।
शन्नो देवीति मन्त्रेण उत्तरस्यां चतुर्थकम् ॥
पूर्व्वे अम्बुदवत् कार्य्या आग्नेय्यां धूमरूपिणी।
याम्यां वै कृष्णरूपा तु नैरृत्यां धूसरा(क)भवेत्
वारुण्यां पाण्डरा ज्ञेया वायव्यां पीतवर्णिका।
उत्तरे रक्तवर्णा तु शुक्लैशी च पताकिका।
बहुरूपा तथा मध्ये इन्द्रवियेति पूर्व्विका ॥
अग्निं संसुप्तिमन्त्रेण यमो नागेति दक्षिणा।
पूज्या रक्षोहनावेति पश्चिमे उत्तरेऽपि च ॥
वात इत्यभिषिच्याथ आप्यायस्वेति चोत्तरा।
तमीशानमतश्चैव विष्णुर्लोकेति मध्यमा ॥ १६
कलशौ तु ततो द्वौ द्वौ निवेश्यौ तोरणान्तिके
वस्त्रयुग्मसमायुक्ताश्चन्दनाद्यैः स्वलङ्कृताः ॥
पुष्पैर्वितानैर्वज्रलैरादिवर्णाभिमन्त्रिताः।
दिक्पालाश्च ततः पूज्याः शास्त्रदृष्टेन कर्म्मणा
त्रातारमिन्द्रमन्त्रेण अग्निर्मूर्द्धेति चापरे।

(क) श्यामलेति वा पाठः।

अस्मिन् रुच इतश्चैव प्रचारीति परा स्मृता ॥ १९
किञ्चिद्देशांतु स्था च त्वा भिन्ना द्वैवीति सप्तमी ।
इमा रुद्रेति दिक्पालान् पूजयित्वा विचक्षणः ।
होमद्रव्याणि वायव्ये कुर्य्यात् सोपस्कराणि च ॥२०
शङ्खान् शाखोदितान् श्वेतान् नेत्राख्यां विन्यसेद्गुरुः ।
आलोकनेन द्रव्याणि शुद्धिं यान्ति न संशयः ॥ २१
हृदयादीनि चाङ्गानि व्याहृतिप्रणवेन च ।
अस्त्रश्चैव समस्तानां न्यासोऽयं सर्व्वकामिकः ॥२२
अक्षतान् विष्टरश्चैव अस्त्रेणैवाभिमन्त्रितान् ।
विष्टरेण समेद्रव्यान् यागमण्डपसंयुतान् ।
अक्षतान् विकिरेत् पश्चादस्त्रपूतान् समन्ततः ॥ २३
प्राक्षीं दिशमथारभ्य यावदीशानगोचरम् ।
अवकीर्य्याक्षतान् सर्व्वान् लेपयेन्मण्डपं ततः ॥ २४
गन्धाद्यैरर्घ्यपात्रे च मन्त्रग्रामं न्यसेद्गुरुः ।
तेनार्घ्यपात्रतोयेन प्रोक्षयेद्यागमण्डपम् ॥ २५
प्रतिष्ठा यस्य देवस्य तदाख्यं कलसं न्यसेत् ।
ऐशान्यां पूजयेद्याम्ये अस्त्रेणैव च वर्द्धनीम् ।
कलसं वर्द्धनीञ्चैव ग्रहान् वास्तोष्पतिं तथा ॥ २६
आसने तानि सर्व्वाणि प्रणवाख्यं जपेद्गुरुः ।
रत्नग्रीवं रत्नगर्भं वस्त्रयुग्मेण वेष्टितम् ।
सर्व्वौषधिगन्धलिप्तं पूजयेत् कलसं गुरुः ॥ २७
वस्तु कलसे पूज्यो वर्द्धन्या वस्त्रमुत्तमम् ।
था तु समायुक्तं कलसं भ्रामयेद्गुरु ॥ २८
नीधारया सिञ्चन्नग्रतो धारयेत् ततः ।
अभ्यर्च्य वर्द्धनीं कुम्भं स्थण्डिले देवमर्च्चयेत् ॥ २९
टश्चावाह्य वायव्यां गणानान्त्वेति सद्गणम् ।
देवमीशानकोणे तु जपेद्वास्तुपतिं बुधः ।
वास्तोष्पतीतिमन्त्रेण वास्तुदोषोपशान्तये ॥ ३०
कुम्भस्य पूर्व्वतो भूतं गणदेवं बलिं हरेत् ।
ठेदेति च विद्याश्च कुर्य्याद्दालभनं बुधः ॥ ३१
योगायोगीति मन्त्रेण संस्तरन् ज्वलनैः कुशैः ।
आचार्य्य ऋत्विजैः सार्द्धं स्नानपीठेरुचस्तथा ॥ ३२
वेविधैर्ब्रह्मघोषैश्च पुण्याहजयमङ्गलैः ।
त्वा ब्रह्मरथे देवं प्रतिष्ठन्ति ततो द्विजाः ॥ ३३
ऐशान्यामानयेत् पीठं मण्डपे विन्यसेद्गुरुः ।
द्रं कर्णौत्यथ स्नात्वा सूत्रबन्धनजेन तु ।

संस्थाप्य लक्षणोद्धारं कुर्य्यात् तूर्य्याभिवादनैः ॥ ३४
मधुसर्पिःसमायुक्तं कांस्ये वा ताम्रभाजने ।
अक्षिणी चाञ्जयेच्चास्य सुवर्णस्य शलाकया ॥ ३५
अग्निर्ज्योतीतिमन्त्रेण नेत्रोद्घाटन्तु कारयेत् ।
लक्षणे क्रियमाणे तु नामैकं स्थापको वदेत् ॥ ३६
इमं मे गङ्गे मन्त्रेण नेत्रयोः शीतलक्रिया ।
अग्निर्मूर्द्धेतिमन्त्रेण दद्याद्वल्मीकमृत्तिकाम् ॥ ३७
बिल्वोदुम्बरमश्वत्थं वटं पालाशमेव च ।
यज्ञायज्ञेति मन्त्रेण दद्यात् पञ्चकषायकम् ॥ ३८
पञ्चगव्यैः स्नापयेच्च सहदेव्यादिभिस्ततः ।
सहदेवी बला चैव शतमूली शतावरी ॥ ३९
कुमारी च गुडूची च सिंही व्याघ्री तथैव च ।
या ओषधीति मन्त्रेण स्नानमोषधिमज्जलैः ।
याः फलिनीति मन्त्रेण फलस्नानं विधीयते ॥ ४०
द्रुपदादिवेति मन्त्रेण कार्य्यमुद्वर्त्तनं बुधैः ।
कलसेषु च विन्यस्य उत्तरादिष्वनुक्रमात् ।
रत्नानि चैव धान्यानि ओषधीं शतपुष्पिकाम् ॥ ४१
समुद्रांश्चैव विन्यस्य चतुरश्चतुरो दिशः ।
क्षीरं दधि क्षीरोदस्य घृतोदस्येति वा पुनः ॥ ४२
आप्यायस्व दधिक्राव्णो या ओषधीरितीति च ।
तेजोऽसीति च मन्त्रैश्च कुम्भश्चैवाभिमन्त्रयेत् ।
समुद्राख्यैश्चतुर्भिश्च स्नापयेत् कलसैः पुनः ॥ ४३
स्नातश्चैव सुवेशश्च धूपो देयश्च गुग्गलुः ।
अभिषेकाय कुम्भेषु तत्तत्तीर्थानि विन्यसेत् ॥ ४४
पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ।
या ओषधीतिमन्त्रेण कुम्भश्चैवाभिमन्त्रयेत् ।
तेन तोयेन यः स्नायात् स मुच्येत् सर्व्वपातकैः ॥ ४५
अभिषिच्य समुद्रैश्च चार्घ्यं दद्यात् ततः पुनः ।
गन्धद्वारेति गन्धञ्च न्यासं वै वेदमन्त्रकैः ॥ ४६
समाख्यविहितैः प्राप्तैरिमं वस्त्रेति वस्त्रकम् ।
कविर्हाविति मन्त्रेण आनयेन्मण्डपं शुभम् ॥ ४७
शम्भवायेति मन्त्रेण शय्यायां विनिवेशयेत् ।
विश्वतश्चक्षुर्मन्त्रेण कुर्य्यात् सकलनिष्कलम् ॥ ४८
स्थिता चैव परे तत्त्वे मन्त्रन्यासन्तु कारयेत् ।
समाख्यविहितो मन्त्रो न्यासस्तस्मिंस्तयोदितः ॥४९
वस्त्रेणाच्छादयित्वा तु पूजनीयः स्वभावतः ।

यथाशास्त्रं निवेद्यानि पादमूले तु दापयेत् ॥ ५०
अथ प्रणवसंयुक्तं वस्त्रयुग्मेण वेष्टितम्।
कलसं सहिरण्यञ्च शिरःस्थाने निवेदयेत् ॥ ५१
स्थित्वा कुण्डसमीपेऽथ अग्नेः स्थापनमाचरेत्।
स्वशास्त्रविहितैर्मन्त्रैर्वेदोक्तैर्वाथवा गुरुः ॥ ५२
श्रीसूक्तं पावमानञ्च वासं दास्यं सहाजिनम्।
वृषाकपिञ्च मित्रञ्च बह्वृचः पूर्व्वतो जपेत् ॥ ५३
रुद्रं पुरुषसूक्तञ्च श्लोकाध्यायञ्च सत्क्रियः।
ब्राह्मणं पितृमैत्रञ्च अध्वर्य्युर्दक्षिणे जपेत् ॥ ५४
वेदव्रतं वामदेव्यं ज्येष्ठसाम रथन्तरम्।
भारुण्डानि च सामानि छन्दोगः पश्चिमे जपेत् ॥ ५५
अथर्व्वशिरसश्चैव कुम्भसूक्तमथर्व्वणः।
नीलरुद्रांश्च मैत्रञ्च अथर्व्वश्चोत्तरे जपेत् ॥ ५६
कुण्डशास्त्रेण सम्प्रोक्ष्य आचार्य्यस्तु विशेषतः।
ताम्रपात्रे शरावे वा यथाविभवतोऽपि वा।
जातवेदं समानीय अग्रतस्तन्निवेशयेत् ॥ ५७
अस्त्रेण ज्वालयेद्वह्निं कवचेन तु वेष्टयेत्।
अमृतीकृत्य तं पश्चान्मन्त्रैः सर्व्वैश्च देशिकः ॥ ५८
पालं गृह्य कराभ्याञ्च कुण्डं भ्रामय ततः पुनः।
वैष्णवेन तु योगेन परं तेजस्तु निक्षिपेत् ॥ ५९
दक्षिणे स्थापयेद्ब्रह्म प्रणीताञ्चोत्तरेण तु।
साधारणेन मन्त्रेण स्वशास्त्रविहितेन वा।
दिक्षु दिक्षु ततो दद्यात् परिधिं विष्टरैः सह ॥ ६०
ब्रह्म-विष्णु-हरेशानाः पूज्याः साधारणेन तु।
दर्भेषु स्थापयेद्वह्निं दर्भैश्च परिवेष्टितम्।
दर्भतोयेन संस्पृष्टो मन्त्रहीनोऽपि शुध्यति ॥ ६१
प्रागग्रैरुदगग्रैश्च प्रत्यगग्रैरखण्डितैः।
विततैर्वेष्टितो वह्निः स्वयं सान्निध्यतां व्रजेत् ॥ ६२
अग्नेस्तु रक्षणार्थाय यदुक्तं कर्म्म मन्त्रवत्।
आचार्य्याः केचिदिच्छन्ति जातकर्म्मादनन्तरम् ॥ ६३
पवित्रन्तु ततः कृत्वा कुर्य्यादाज्यस्य संस्कृतिम्।
आचार्य्योऽथ निरीक्ष्यापि नीराजममभिमन्त्रितम् ॥ ६४
आज्यभागाभिघारान्तमवेक्षिताज्यसिद्धये।
पञ्च पञ्चाहुतीर्हुत्वा आज्येन तदनन्तरम् ॥ ६५
गर्भाधानादितस्तावद्यावद्गोदानिकं भवेत्।
स्वशास्त्रविहितैर्मन्त्रैः प्रणवेनाथ होमयेत् ॥ ६६

ततः पूर्णाहुतिं दत्त्वा पूर्णात् पूर्णमनोरथ
एवमुत्पादितो वह्निः सर्व्वकर्मसु सिद्धिदः
पूजयित्वा ततो वह्निं कुण्डेषु विहरेत् तथा
इन्द्रादीनां स्वमन्त्रैश्च अथाहुतिशतं शतम्
पूर्णाहुतिं शतस्यान्ते सर्व्वेषाञ्चैव होमयेत्
स्वामाहुतिमथान्येषु होता तत्कलसे न्यसेत्
देवताश्चैव मन्त्रांश्च तथैव जातवेदसम्।
आत्मानमेकतः कृत्वा ततः पूर्णां प्रदापयेत्।
निष्क्रम्य वहिराचार्य्यो दिक्पालानां वलिं
भूतानाञ्चैव देवानां नागानाञ्च प्रयोगतः॥
तिलाश्च समिधश्चैव होमद्रव्यं द्वयं स्मृतम्।
आज्यं तयोः सहकारि तत्प्रधानं यदृचयो
पुरुषसूक्तं पूर्व्वेणैव रुद्रञ्चैव तु दक्षिणे।
जेष्ठसाम च भारुण्डं तन्न यामीति पश्चिमे
नीलरुद्रो महामन्त्रः कुम्भसूक्तमथर्व्वणः।
हुत्वा सहस्रमेकैकं देवं शिरसि कल्पयेत्॥
एवं मध्ये तथा पादे पूर्णाहुत्या तथा पुनः।
शिरःस्थानेषु जुहुयादविशेषादनुक्रमात्॥
देवानामादिमन्त्रैर्वामन्त्रैर्वा अथवा पुनः।
स्वशास्त्रविहितैर्वापि गायत्र्या वाथ ते द्विज
गायत्र्या वाथ वाचार्य्यो व्याहृतिप्रणवेन तु
एवं होमविधिं कृत्वा न्यसेन्मन्त्रांस्तु देशिकः
चरणावग्निमीले तु इषे त्वो गुल्फयोः स्थिताः
अग्न आयाहि जङ्घे द्वे शन्नो देवीति जानुनो
बृहद्रथन्तरे ऊरू उदरेष्वातिलो न्यसेत्॥
दीर्घायुष्ट्वाय हृदये श्रीश्च ते गलके न्यसेत्
त्रातारमिन्द्रं वक्षे च नेत्राभ्यान्तु त्रियुग्मक
मूर्द्धा भवं तथा मूर्ध्नि आ लग्नाद्धोममाचरे
उत्थापयेत् ततो देवमुत्तिष्ठ ब्रह्मणः पते।
वेदपुण्याहशब्देन प्रासादानां प्रदक्षिणम्।
पिण्डिकालभनं कृत्वा देवस्य त्वेति मन्त्रवि
दिक्पालान् सह रत्नैश्च धातूनोषधयस्त
लौहवीजानि सिद्धानि पश्चाद्देवन्तु विन्य
न गर्भे स्थापयेद्देवं न गर्भन्तु परित्यजेत्।
ईषन्मध्यं परित्यज्य ततो दोषापनत्तु तत्
तिलस्य तु समावन्तु उत्तरं किञ्चिदाश्रयेत्

ओँ स्थिरो भव शिवो भव प्रजाभ्यश्च नमो नमः॥८३
देवस्य त्वा सवितुर्वः षड्भ्यो वै विन्यसेद्गुरुः ।
तत्त्ववर्णकलामात्रं प्रजानि भुवनात्मजे ॥ ८४
षड्भ्यो विन्यस्य सिद्धार्थं ध्रुवार्थैरभिमन्त्रयेत् ।
सम्पातकलसेनैव स्नापयेत् सुप्रतिष्ठितम् ॥ ८५
दीप-धूप-सुगन्धैश्च नैवेद्यैश्च प्रपूजयेत् ।
अर्घ्यं दत्त्वा नमस्कृत्य ततो देवं क्षमापयेत् ॥ ८६
पात्रं वस्त्रयुगं छत्रं तथा दिव्याङ्गुरीयम् ।
ऋत्विग्भ्यश्च प्रदातव्या दक्षिणा चैव शक्तितः ॥८७
चतुर्थीं जुहुयात् पश्चाद्यजमानः समाहितः ।
आहुतीनां शतं हुत्वा ततः पूर्णां प्रदापयेत् ॥ ८८
निष्क्रम्य वहिराचार्य्यो दिक्पालानां वलिं हरेत् ।
आचार्य्यः पुष्पहस्तस्तु क्षमस्वेति विसर्ज्जयेत् ॥८९
यागान्ते कपिलां दद्यादाचार्य्याय च चामरम् ।
कुटं कुण्डलं छत्रं केयूरं कटिसूत्रकम् ।
जनं ग्रामवस्त्रादीन् सोपस्कारं समण्डपम् ॥ ९०
जनञ्च महत् कुर्य्यात् कृतकृत्योपजायते ।
जमानो विमुक्तः स्यात् स्थापकस्य प्रसादतः ॥९१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे प्रतिष्ठा-
प्रकरणं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः ।

ब्रह्मोवाच ।

ंदिक्कृद्धरिश्चैव पूज्यः स्वायम्भुवादिभिः ।
ाद्यैः स्वेन धर्म्मेण तद्धर्म्मं व्यास वै शृणु ॥ १
नं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ।
यापनञ्चाध्ययनं षट् कर्म्माणि द्विजोत्तम ॥ २
नमध्ययनं यज्ञो धर्म्मः क्षत्रिय-वैश्ययोः ।
डस्तथा क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥ ३
षैव द्विजातीनां शूद्राणां धर्म्मसाधनम् ।
रुकर्म्म तथाजीवः पाकयज्ञोऽपि धर्म्मतः ॥ ४
ाचर्य्याथ शुश्रूषा गुरोः स्वाध्याय एव च ।
यासकर्म्माग्निकार्य्यञ्च धर्म्मोऽयं ब्रह्मचारिणः ॥ ५
र्षामाश्रमाणाञ्च द्वैविध्यन्तु चतुर्व्विधम् ।
चार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्परः ॥ ६

योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ।
उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥ ७
अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्च्चनम् ।
गृहस्थस्य समासेन धर्म्मोऽयं द्विजसत्तम ॥ ८
उदासीनः साधकश्च गृहस्थो द्विविधो भवेत् ।
कुटुम्बभरणे युक्तः साधकोऽसौ गृही भवेत् ॥ ९
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्याधनादिकम् ।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥ १०
भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च ।
संविभागो यथान्यायं धर्म्मोऽयं वनवासिनः ॥ ११
तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च ।
स्वाध्याये चैव निरतो वनस्थस्तापसोत्तमः ॥ १२
तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ।
सन्न्यासी स हि विज्ञेयो वाणप्रस्थाश्रमे स्थितः ॥ १३
योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः ।
ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥ १४
यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ।
सम्यक् च दमसम्पन्नः स योगी भिक्षुरुच्यते ॥ १५
भैक्ष्यं श्रुतञ्च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यक् च ज्ञानवैराग्यं धर्म्मोऽयं भिक्षुके मतः ॥ १६
ज्ञानसन्न्यासिनः केचिद्वेदसन्न्यासिनोऽपरे ।
कर्म्मसन्न्यासिनः केचित् त्रिविधः पारमेष्ठिकः ॥१७
योगी च त्रिविधो ज्ञेयो भौतिको मोक्ष एव च ।
तृतीयोऽन्त्याश्रमी प्रोक्तो योगमूर्त्तिसमाश्रितः ॥१८
प्रथमा भावना पूर्व्वे मोक्षे त्वक्षरभावना ।
तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥ १९
धर्म्मात् संजायते मोक्षो ह्यर्थात् कामोऽभिजायते॥२०
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म्म वैदिकम् ।
ज्ञानपूर्व्वं निवृत्तं स्यात् प्रवृत्तञ्चाग्निवेदकृत् ॥ २१
क्षमा दमो दया दानमलोभोऽभ्यास एव च ।
आर्ज्जवञ्चानसूया च तीर्थानुसरणं तथा ॥ २२
सत्यं सन्तोष आस्तिक्यं तथा चेन्द्रियनिग्रहः ।
देवताभ्यर्च्चनं पूजा ब्राह्मणानां विशेषतः ॥ २३
अहिंसा प्रियवादित्वमपैशुन्यमरूक्षता ।
एते आश्रमिका धर्म्मास्चातुर्व्वर्ण्यं ब्रवीम्यतः ॥ २४
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ।

स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम्।
वैश्यानां मारुतं स्थानं स्वधर्म्ममनुवर्त्तताम्॥ २५
गान्धर्व्वं शूद्रजातीनां परिचारे च वर्त्तताम्।
अष्टाशीतिसहस्राणामृषीणामूर्द्ध्वरेतसाम्॥ २६
स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनाम्॥ २७
सप्तर्षीणान्तु यत् स्थानं स्थानं तद्वै वनौकसाम्॥ २८
यतीनां यतचित्तानां न्यासिनामूर्द्ध्वरेतसाम्।
आनन्दं ब्रह्म तत् स्थानं यस्मान्नावर्त्तते मुनिः॥ २९
योगिनाममृतस्थानं व्योमाख्यं परमक्षरम्।
आनन्दमैश्वरं यस्मान्मुक्तो नावर्त्तते नरः॥ ३०
मुक्तिरष्टाङ्गविज्ञानात् संक्षेपात् तद्वदे शृणु।
यमाः पञ्च त्वहिंसाद्या अहिंसा प्राण्यहिंसनम्॥ ३१
सत्यं भूतहितं वाक्यमस्तेयं स्वाग्रहं परम्।
अमैथुनं ब्रह्मचर्य्यं सर्व्वत्यागोऽपरिग्रहः॥ ३२
नियमाः पञ्च सत्याद्या वाह्यमाभ्यन्तरं द्विधा।
शौचं सत्यञ्च सन्तोषस्तपश्चेन्द्रियनिग्रहः॥ ३३
स्वाध्यायः स्यान्मन्त्रजापः प्रणिधानं हरेर्यजिः।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः॥ ३४
मन्त्रध्यानयुतो गर्भो विपरीतो ह्यगर्भकः।
अगर्भात् तु सगर्भस्थः प्राणायामस्ततोऽधिकः॥ ३५
एवं द्विधा त्रिधाप्युक्तं पूरणात् पूरकः स च।
कुम्भको निश्चलत्वाच्च रेचनाद्रेचकस्त्रिधा॥ ३६
लघुर्द्वादशमात्रः स्याच्चतुर्व्विंशतिकः परः।
षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम्॥ ३७
ब्रह्मात्मचिन्ता ध्यानं स्याद्धारणा मनसो धृतिः।
अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः॥ ३८
अहमात्मा परंब्रह्म सत्यं ज्ञानमनन्तकम्।
अहमात्मा परंब्रह्म सत्यं ज्ञानमनन्तकम्।
ब्रह्मविज्ञानमानन्दः स तत्त्वमसि केवलम्॥ ३९
अहं ब्रह्मास्म्यहं ब्रह्म अशरीरमनिन्द्रियम्।
अहं मनो-बुद्धि-महदहङ्कारादिवर्ज्जितम्॥ ४०
जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं ज्योतिस्तदीयकम्।
नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम्॥ ४१
योऽसावादित्यपुरुषः सोऽसावहमखण्डितम्।
इति ध्यायन् विमुच्येत ब्राह्मणो भवबन्धनात्॥ ४२
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डेऽष्टाङ्ग-
योगो नामैकोनपञ्चाशोऽध्यायः॥ ४९॥

## पञ्चाशोऽध्यायः।

ब्रह्मोवाच।

अहन्यहनि यः कुर्य्यात् क्रियां स ज्ञानभाक्
ब्राह्मे मुहूर्त्ते चोत्थाय धर्म्ममर्थञ्च चिन्तयेत्
चिन्तयेद्धृदिपद्मस्थमानन्दमजरं हरिम्।
उषःकाले तु सम्प्राप्ते कृत्वा चावश्यकं बुधः
स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि
प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः
तस्मात् सर्व्वप्रयत्नेन प्रातःस्नानं समाचरेत्
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्
मुखात् सुप्तस्य सततं लालाद्याः संस्रवन्ति
अतो नैवाचरेत् कर्म्माण्यकृत्वा स्नानमादितो
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्व्विचिन्तितं
प्रातःस्नानेन पापानि धूयन्ते नात्र संशयः।
न च स्नानं विना पुंसां प्रशस्तं कर्म्म संस्कृत
होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत्
अशक्तावशिरस्कन्तु स्नानमस्य विधीयते।
आर्द्रेण वाससा वापि मार्ज्जनं कायिकं स्मृतं
ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च।
वारुणं यौगिकं तद्वत् षड़ङ्गं स्नानमाचरेत्
ब्राह्मन्तु मार्ज्जनं मन्त्रैः कुशैः सोदकविन्दुभि
आग्नेयं भस्मना पादमस्तकाद्देहधूननम्॥ १०
गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमं
यत् तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते॥
वारुणञ्चावगाहस्तु मानसन्त्वात्मवेदनम्।
यौगिकं स्नानमाख्यातं योगेन हरिचिन्तनं
आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः
क्षीरवृक्षसमुद्भूतं मालतीसम्भवं शुभम्।
अपामार्गञ्च विल्वञ्च करवीरञ्च धावने॥
उदङ्मुखः प्राङ्मुखो वा भक्षयेद्दन्तधावनम्
प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे समाहि
स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा
आचम्य विधिवन्नित्यं पुनराचम्य वाग्यतः
सम्मार्ज्ज्य मन्त्रैरात्मानं कुशैः सोदकविन्दु
आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणै

ओङ्कारव्याहृतियुतां गायत्रीं वेदमातरम् ।
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥ १७
प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति श्रुतिः ॥१८
या सन्ध्या सा जगत्सुतिर्मायातीता हि निष्कला ।
ऐश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥ १९
ध्यात्वा रक्तां सितां कृष्णां गायत्रीं वै जपेद्बुधः ।
प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ॥ २०
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्मसु ।
यदन्यत् कुरुते किञ्चिन्न तस्य फलभाग्भवेत् ॥ २१
अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः ।
उपास्य विधिवत् सन्ध्यां प्राप्ताः पूर्व्वे परां गतिम्॥२२
योऽन्यत्र कुरुते यत्नं धर्म्मकार्य्ये द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥ २३
तस्मात् सर्व्वप्रयत्नेन सन्ध्योपासनमाचरेत् ।
उपासितो भवेत् तेन देवो योगतनुः परः ॥ २४
सहस्रपरमां नित्यां शतमध्यां दशावराम् ।
सावित्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः शुचिः ॥ २५
अथोपतिष्ठेदादित्यमुदयस्थं समाहितः ।
मन्त्रैस्तु विविधैः सारैर्ऋग्यजुःसामसंज्ञितैः ॥ २६
उपस्थाय महायोगं देवदेवं दिवाकरम् ।
कुर्वीत प्रणतिं भूमौ मूर्द्धानमभिमन्त्रितः ॥ २७
...खोल्काय शान्ताय कारणत्रयहेतवे ।
...यामि चात्मानं नमस्ते ज्ञानरूपिणे ॥ २८
...व ब्रह्म परममापो ज्योती रसोऽमृतम् ।
...वःस्वस्त्वमोङ्कारः सर्व्वो रुद्रः सनातनः ॥ २९
...वै सूर्य्यहृदयं जप्त्वा स्तवनमुत्तमम् ।
...ःकाले च मध्याह्ने नमस्कुर्य्याद्दिवाकरम् ॥ ३०
...गम्य गृहं विप्रः समाचम्य यथाविधि ।
...ाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥ ३१
...क् पुत्रोऽथ पत्नी वा शिष्यो वापि सहोदरः ।
...यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि ।
... तान् कारयेत् कर्म्म नामन्त्रेह फलप्रदम् ॥ ३२
...तानि नमस्कुर्य्यादुपहारान् निवेदयेत् ।
...श्चैवाप्युपासीत हितश्चास्य समाचरेत् ॥ ३३
...स्यासं ततः कुर्य्यात् प्रयत्नाच्छक्तितो द्विजः ।
... धारयेद् विचारयेत् ॥ ३४
जपेदध्यापयेच्छिष्यान् धारयेद् विचारयेत् ॥ ३४

जपेदध्यापयेच्छिष्यान् धारयेच्च द्विजोत्तम ।
अवेक्षेत च शास्त्राणि धर्म्मादीनि द्विजोत्तम ।
वैदिकांश्चैव निगमान् वेदाङ्गानि च सर्व्वशः ॥ ३५
उपेयादीश्वरञ्चैव योगक्षेमप्रसिद्धये ।
साधयेद्विविधानर्थान् कुटुम्बार्थं ततो द्विजः ॥ ३६
ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।
पुष्पाक्षतान् तिलकुशान् गोमयं शुद्धमेव च ॥ ३७
नदीषु देवखातेषु तड़ागेषु सरःसु च ।
स्नानं समाचरेन्नैव परकीये कदाचन ॥ ३८
पञ्च पिण्डाननुद्धृत्य स्नानं दुष्यन्ति नित्यशः ।
मृदेकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ॥ ३९
अधश्च तिसृभिः क्षाल्यं पादौ षड्भिस्तथैव च ।
मृत्तिका च समुद्दिष्टा त्वार्द्रामलकमात्रिका ॥ ४०
गोमयस्य प्रमाणन्तु तेनाङ्गं लेपयेत् ततः ।
प्रक्षाल्याचम्य विधिवत् ततः स्नायात् समाहितः ॥४१
लेपयित्वा तु तीरस्थस्तल्लिङ्गैरेव मन्त्रतः ।
अभिमन्त्र्य जलं मन्त्रैरब्लिङ्गैर्वारुणैः शुभैः ।
स्नानकाले स्मरेद्विष्णुमापो नारायणो यतः ॥ ४२
प्रेक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ।
आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ॥ ४३
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥४४
द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिप्रणवान्विताम् ।
सावित्रीं वा जपेद्विद्वांस्तथा चैवाघमर्षणम् ॥ ४५
ततः सम्मार्ज्जनं कुर्य्यादापोहिष्ठामयो भुवः ।
इदमापः प्रवहत व्याहृतिभिस्तथैव च ॥ ४६
ततोऽभिमन्त्रितं तोयमापोहिष्ठादिमन्त्रकैः ।
अन्तर्जलमवाङ्मग्नो जपेत् त्रिरघमर्षणम् ॥ ४७
द्रुपदां वाथ सावित्रीं तद्विष्णोः परमं पदम् ।
आवर्त्तयेद्वा प्रणवं देवदेवं स्मरेद्धरिम् ॥ ४८
आपः पाणौ समादाय जप्त्वा वै मार्ज्जने कृते ।
विन्यस्य मूर्द्ध्नि तत् तोयं मुच्यते सर्व्वपातकैः ॥ ४९
सन्ध्यामुपास्य चाचम्य संस्मरेन्नित्यमीश्वरम् ।
अथोपतिष्ठेदादित्यमूर्द्ध्वं पुष्पान्विताञ्जलिः ॥ ५०
प्रक्षिप्यालोकयेद्देवमुदयन्तं न शस्यते ।
उदुत्यं चित्रमित्येव तच्चक्षुरिति मन्त्रतः ॥ ५१

हंसः शुचिसदित्येन सावित्र्या च विशेषतः।
अन्यैः सौरैर्वैदिकैश्च गायत्रीञ्च ततो जपेत्॥ ५२
मन्त्रांश्च विविधान् पश्चात् प्राक्कूले च कुशासने।
तिष्ठंश्च वीक्षमाणोऽर्कं जपं कुर्य्यात् समाहितः॥ ५३
स्फटिकाब्जाक्षरुद्राक्षैः पुत्रञ्जीवसमुद्भवैः।
कर्त्तव्या त्वक्षमाला स्यादन्तरा तत्र सा स्मृता॥ ५४
यदि स्यात् क्लिन्नवासा वै वारिमध्यगतश्चरेत्।
अन्यथा च शुचौ भूम्यां दर्भेषु च समाहितः॥ ५५
प्रदक्षिणं समावृत्य नमस्कुर्य्यात् ततः क्षितौ।
आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत्॥ ५६
ततः सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा।
आदावोङ्कारमुच्चार्य्य नामान्ते तर्पयामि च॥ ५७
देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः।
पितृन् देवान् मुनीन् भक्त्या स्वसूत्रोक्तविधानतः।
देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितृन्॥ ५८
यज्ञोपवीती देवानां निवीती ऋषितर्पणे।
प्राचीनावीती पित्र्ये तु तेन तीर्थेन भावतः॥ ५९
निष्पीड्य स्नानवस्त्रं वै समाचम्य च वाग्यतः।
स्वैर्मन्त्रैरर्च्चयेद्देवान् पुष्पैः पत्रैस्तथाम्बुभिः॥ ६०
ब्रह्माणं शङ्करं सूर्य्यं तथैव मधुसूदनम्।
अन्यांश्चाभिमतान् देवान् भक्त्या चाक्रोधनोऽत्वरः॥ ६१
प्रदद्यादथ पुष्पाणि सूक्तेन पुरुषेण तु।
आपो वा देवताः सर्व्वास्तेन सम्यक् समर्च्चिताः॥ ६२
ध्यात्वा प्रणवपूर्व्वं वै देवं परिसमाहितः।
नमस्कारेण पुष्पाणि विन्यसेद्वै पृथक् पृथक्॥ ६३
नर्त्ते ह्याराधनां पुण्यं विद्यते कर्म्म वैदिकम्।
तस्मात् तत्रादिमध्यान्ते चेतसा धारयेद्धरिम्॥ ६४
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु।
निवेदयेच्च आत्मानं विष्णावेऽमलतेजसे॥ ६५
तदा ध्यातमनाः शान्तस्तद्विष्णोरिति मन्त्रतः।
अप्रोतमस्मि वावेति यजेद्वा पुष्पकैर्हरिम्॥ ६६
देवयज्ञं भूतयज्ञं पितृयज्ञं तथैव च।
मानुषं ब्रह्मयज्ञञ्च पञ्च यज्ञान् समाचरेत्॥ ६७
यदि स्यात् तर्पणादर्व्वाग्ब्रह्मयज्ञः कृतो भवेत्।
कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत्॥ ६८
कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत्॥ ६८
वैश्वदेवस्तु कर्त्तव्यो देवयज्ञः स तु स्मृतः।

भूतयज्ञः स वै ज्ञेयो भूतेभ्यो यस्त्वयं बलिः।
श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च।
दद्याद्भूमौ बहिस्त्वन्नं पक्षिभ्यश्च द्विजोत्तम।
एकन्तु भोजयेद्विप्रं पितृनुद्दिश्य सत्तमः।
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः॥
उद्धृत्य वा यथाशक्ति कियदन्नं समाहितः।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत्॥
पूजयेदतिथिं नित्यं नमस्येदर्च्चयेद्द्विजम्।
मनोवाक्कर्म्मभिः शान्तं स्वागतैः स्वगृहं
भिक्षामाहुर्ग्रासमात्रमन्नं तस्य चतुर्गुणम्।
पुष्कलं हन्तमात्रन्तु तच्चतुर्गुणमुच्यते॥
गोदोहमात्रकालं वै प्रतीक्षेदतिथिः स्वयं
अभ्यागतान् यथाशक्ति पूजयेदतिथिं तथा
भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे
दद्यादन्नं यथाशक्त्यतिथिभ्यो (क) लोभवर्जितः
भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन्।
अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तम
भुङ्क्ते स हि विमूढात्मा तिर्य्यग्योनिञ्च गच्छति
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमा
नाशयन्त्याशु पापानि देवानामर्च्चनं तथा॥
यो मोहादथवालस्यादकृत्वा देवतार्च्चनम्।
भुङ्क्ते स याति नरकान् शूकरेष्वेव जायते॥
अशौचं सम्प्रवक्ष्यामि अशुचिः पातकी सदा।
अशौचञ्चैव संसर्गाच्छुचिः संसर्गवर्ज्जनात्।
दशाहं प्राहुराशौचं सपिण्डेषु विपश्चितः।
मृतेषु वाथ जातेषु ब्राह्मणानां द्विजोत्तम।
आ दन्तजननात् सद्य आ चूड़ादेकरात्रकम्।
त्रिरात्रमोपनयनाद्दशरात्रमतः परम्॥
क्षत्रियो द्वादशाहेन दशभिः पञ्चभिर्विशः।
शुध्येन्मासेन वै शूद्रो यतीनां नास्ति पातकम्।
रात्रिभिर्मासतुल्याभिर्गर्भस्रावेऽप्यशौचकम्।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
पञ्चाशोऽध्यायः॥ ५०॥

(क) यथाशक्ति व्यर्थिभ्य इति क्वचित्।

## एकपञ्चाशोऽध्यायः ।

ब्रह्मोवाच ।

अथातः सम्प्रवक्ष्यामि दानधर्ममनुत्तमम् ।
अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् ॥ १
दानन्तु कथितं तज्ज्ञैर्भुक्तिमुक्तिफलप्रदम् ।
यायेनोपार्ज्जयेद्वित्तं दानभोगफलञ्च तत् ॥ २
ध्यापनं याजनञ्च वृत्तमाहुः प्रतिग्रहम् ।
शीदं कृषि-वाणिज्यं चत्रवृत्तोऽथवार्ज्जयेत् ॥ ३
दीयते तु पात्रेभ्यस्तद्दानं परिकीर्त्तितम् ।
त्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ॥ ४
हन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे ।
द्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यकम् ॥ ५
तु पापोपशान्त्यै च दीयते विदुषां करे ।
मित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥ ६
त्य-विजयैश्वर्य्य-स्वर्गार्थं यत् प्रदीयते ।
तत् काम्यमाख्यातमृषिभिर्धर्म्मचिन्तकैः ॥ ७
रप्रीणनार्थाय ब्रह्मवित्सु प्रदीयते ।
ा सत्त्वयुक्तेन दानं तद्विमलं शिवम् ॥ ८
ः सन्ततां भूमिं यवगोधूमशालिनीम् ।
ति वेदविदुषि स न भूयोऽभिजायते ॥ ९
नात् परं दानं न भूतं न भविष्यति ।
दत्त्वा ब्राह्मणाय ब्रह्मलोके महीयते ॥ १०
द्दहरहस्तास्तु श्रद्धया ब्रह्मचारिणे ।
ापविनिर्म्मुक्तो ब्रह्मस्थानमवाप्नुयात् ॥ ११
ां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च च ।
ाभ्यर्च्चयेद्विद्वान् मधुना तिलपिष्टकैः ।
दिभिः समभ्यर्च्च्य वाचयेद्वा स्वयं वदेत् ॥ १२
ां धर्म्मराजेति यथा मनसि वर्त्तते ।
ीवं कृतं पापं तत्क्षणादेव नश्यति ॥ १३
जिने तिलान् कृत्वा हिरण्यमधुसर्पिषा ।
यस्तु विप्राय सर्व्वं तरति दुष्कृतम् ॥ १४
ुदकुम्भञ्च वैशाख्याञ्च विशेषतः ।
धर्म्मराजाय विप्रेभ्यो मुच्यते भयात् ॥ १५
मर्च्चयेद्विष्णुमुपोष्याघप्रणाशनम् ।
पविनिर्म्मुक्तो नरो भवति निश्चितम् ॥ १६

यो हि यां देवतामिच्छेत् समाराधयितुं नरः ।
ब्राह्मणान् पूजयेद्यत्नात्तद्योगाय तोषिताः सुराः ॥ १७
सन्तानकामः सततं पूजयेद्वै पुरन्दरम् ।
ब्रह्मवर्च्चसकामास्तु ब्राह्मणान् ब्रह्मनिश्चयात् ॥ १८
आरोग्यकामोऽथ रविं धनकामो हुताशनम् ।
कर्म्मणां सिद्धिकामस्तु पूजयेद्वै विनायकम् ॥ १९
भोगकामो हि शशिनं बलकामः समीरणम् ।
मुमुक्षुः सर्व्वसंसारात् प्रयत्नेनार्च्चयेद्धरिम् ।
अकामः सर्व्वकामो वा पूजयेत् तु गदाधरम् ॥ २०
वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ २१
भूमिदः सर्व्वमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥ २२
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य पिष्टपम् ॥ २३
यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ॥२४
वेदवित्सु ददज्ज्ञानं स्वर्गलोके महीयते ।
गवां घासप्रदानेन सर्व्वपापैः प्रमुच्यते ।
इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥ २५
औषधं स्नेहमाहारं रोगिरोगप्रशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च ॥ २६
असिपत्रवनं मार्गं क्षुरधारसमन्वितम् ।
तीक्ष्णातपञ्च तरति छत्रोपानत्प्रदानतः ॥ २७
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत् तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ २८
अयने विषुवे चैव ग्रहणे चन्द्र-सूर्य्ययोः ।
संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥ २९
प्रयागादिषु तीर्थेषु गयायाञ्च विशेषतः ।
दानधर्म्मात् परो धर्म्मो भूतानां नेह विद्यते ॥ ३०
स्वर्गादच्युतिकामेन देवं पापोपशान्तये ।
दीयमानन्तु यो मोहाद्गो-विप्राग्नि-सुरेषु च ।
निवारयति पापात्मा तिर्य्यग्योनिं व्रजेन्नरः ॥ ३१
यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति ।
म्रियमाणेषु विप्रेषु ब्रह्महा स तु गर्हितः ॥ ३२
इति श्रीगारुड़े पूर्व्वखण्डे एकपञ्चाशोऽध्यायः॥५१॥

## द्विपञ्चाशोऽध्यायः।

ब्रह्मोवाच।

अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं द्विजाः।
ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः॥ १
पञ्चपातकिनस्त्वेते तत्संयोगी च पञ्चमः।
उपपापानि गोहत्याप्रभृतीनि सुरा जगुः॥ २
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।
कुर्य्यादनशनं वाथ भृगोः पतनमेव च।
ज्वलन्तं वा विशेदग्निं जलं वा प्रविशेत् स्वयम्॥३
ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत्।
दत्त्वा चान्नञ्च विदुषे ब्रह्महत्यां व्यपोहति ॥ ४
अश्वमेधावभृथके स्नात्वा वा शुच्यते द्विजः।
सर्व्वस्वं वा वेदविदे ब्राह्मणाय प्रदापयेत्॥ ५
सरस्वत्यास्तरङ्गिण्याः सङ्गमे लोकविश्रुते।
शुध्येत् त्रिसवनस्नातस्त्रिरात्रोपोषितो द्विजः॥ ६
सेतुबन्धे नरः स्नात्वा मुच्यते ब्रह्महत्यया।
कपालमोचने स्नात्वा वाराणस्यां तथैव च॥ ७
सुरापस्तु सुरां पीत्वा अग्निवर्णां द्विजोत्तमः।
पयो घृतं वा गोमूत्रं तस्मात् पापात् प्रमुच्यते॥ ८
स्वर्णस्तेयी च मुक्तः स्यान्मुषलेन हतो नृपैः।
चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम्॥ ९
गुरुभार्य्यां समारुह्य ब्राह्मणः काममोहितः।
अवगूहेत् स्त्रियं तप्तां दीप्तां कार्ष्णायसीकृताम्॥१०
गुर्व्वङ्गनागामिनश्च चरेयुर्ब्रह्मचव्रतम्।
चान्द्रायणानि वा कुर्य्यात् पञ्च चत्वारि वा पुनः॥११
पतितेन च संसर्गं कुरुते यस्तु वै द्विजः।
स तत्पापापनोदार्थं तस्यैव व्रतमाचरेत्॥ १२
तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः।
सर्व्वस्वदानं विधिवत् सर्व्वपापविशोधनम्॥ १३
चान्द्रायणञ्च विधिना कृच्छ्रञ्चैवातिकृच्छ्रकम्।
पुण्यक्षेत्रे गयादौ च गमनं पापनाशनम्॥ १४
अमावस्यां तिथिं प्राप्य यः समाराधयेच्छिवम्।
ब्राह्मणान् भोजयित्वा तु सर्व्वपापैः प्रमुच्यते॥ १५
उपोषितश्चतुर्द्दश्यां कृष्णपक्षे समाहितः।
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्व्वभूतक्षयाय
प्रत्येकं तिलसंयुक्तान् दद्यात् सप्त जल
स्नात्वा नद्यान्तु पूर्व्वाह्णे मुच्यते सर्व्व
ब्रह्मचर्य्यमधःशय्यामुपवासं द्विजार्च्चन
व्रतेष्वेतेषु कुर्व्वीत शान्तः संयतमानस
षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहि
सप्तम्यामर्च्चयेद्भानुं मुच्यते सर्व्वपातकैः
एकादश्यां निराहारः समभ्यर्च्च जना
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमु
तपो जपस्तीर्थसेवा देवब्राह्मणपूजनम्
ग्रहणादिषु कालेषु महापातकनाशनम्
यः सर्व्वपापयुक्तोऽपि पुण्यतीर्थेषु मानू
नियमेन त्यजेत् प्राणान् मुच्यते सर्व्व
ब्रह्मघ्नं वा कृतघ्नं वा महापातकदू
भर्त्तारमुद्धरेन्नारी प्रविष्टा सह पावक
पतिव्रता तु या नारी भर्त्तुः शुश्रूषणो
न तस्या विद्यते पापमिह लोके पर
यथा रामस्य सुभगा सीता त्रैलोक्यवि
पत्नी दाशरथेर्द्देवी विजिग्ये राक्षसेश्वर
फल्गुतीर्थादिषु स्नातः सर्व्वाचारफलं
इत्याह भगवान् विष्णुः पुरा मम यतव्र

इति श्रीगारुड़े महापुराणे प्रायश्चि
नाम द्विपञ्चाशोऽध्यायः॥ ५२॥

---

## त्रिपञ्चाशोऽध्यायः।

सूत उवाच।

एवं ब्रह्माब्रवीच्छ्रुत्वा हरेरष्टनिधींस्त
तत्र पद्ममहापद्मौ तथा मकरकच्छ
मुकुन्दनन्दौ नीलश्च शङ्खश्चैवापरो नि
सत्या वृद्धौ भवन्त्येते स्वरूपं कथया
पद्मेन लक्षितश्चैव सात्त्विको जायते
दाक्षिण्यसारः पुरुषः सुवर्णादिक
रूप्यादि कुर्य्याद्दद्यात् तु यतिदेवादि
महापद्माङ्कितो दद्याद्धनाद्यं धार्म्मि

निधी पद्म-महापद्मौ सात्त्विकौ पुरुषौ स्मृतौ ।
मकरेणाङ्कितः खड्गवाणकुन्तादिसंग्रही ॥ ५
दद्याच्छ्रुताय मैत्रीञ्च याति नित्यञ्च राजभिः ।
द्रव्यार्थं शत्रुणा नाशं संग्रामे चापि संव्रजेत् ॥ ६
मकरः कच्छपश्चैव तामसौ तु निधी स्मृतौ ।
कच्छपी विश्वसेन्नैव न भुङ्क्ते न ददाति च ॥ ७
निधानमुर्व्व्यां कुरुते निधिः सोऽप्येकपूरुषः ।
राजसेन मुकुन्देन लक्षितो राज्यसंग्रही ॥ ८
मुक्तभोगी गायनेभ्यो दद्याद्वेश्यादिकासु च ।
रजस्तमो महानन्दी आधारः स्यात् कुलस्य च ॥ ९
स्तुतः प्रीतो भवति वै बहुभार्य्या भवन्ति च ।
र्व्वमित्रेषु शैथिल्यं प्रीतिमन्यः करोति च ॥ १०
नीलेन चाङ्कितः सत्त्वतेजसा संयुतो भवेत् ।
स्वधान्यादिसंग्राही तड़ागादि करोति च ॥ ११
पौरुषो निधिश्चैव आम्रारामादि कारयेत् ॥ १२
कस्य स्यान्निधिः शङ्खः स्वयं भुङ्क्ते धनान्तकम् ।
न्नभुक् परिजनो न च शोभनवस्त्रधृक् ॥ १३
पोषणपरः शङ्खी दद्यात् परनरे वृथा ।
श्यावलोकनान्मिश्रे स्वभावफलदायिनः ॥ १४
धीनां रूपमुक्तन्तु हरिणापि हरादिके ।
रिर्भुवनकोषादि यथोवाच तथा वदे ॥ १५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशोऽध्यायः ।

हरिरुवाच ।

ग्नीध्रश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा ।
धा मेधातिथिर्भव्यः शबलः पुत्र एव च ।
ज्योतिष्मान् दशमो जातः पुत्रा ह्येते प्रियव्रतात् ॥ १
धाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः ।
जातिस्मरा महाभागा न राज्याय मनो दधुः ॥ २
विभज्य सप्त द्वीपानि सप्तानां प्रददौ नृपः ॥ ३
योजनानां प्रमाणेन पञ्चाशत्कोटिराप्लुता ।
जलोपरि मही याता नौरिवास्ते सरिज्जले ॥ ४
जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो हर ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥ ५
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
लवणेक्षु-सुरा-सर्पिर्दधि दुग्ध-जलान्तकाः ॥ ६
द्वीपात् तु द्विगुणो द्वीपः समुद्रश्च वृषध्वज ।
जम्बूद्वीपे स्थितो मेरुर्लक्षयोजनविस्तृतः ॥ ७
चतुरशीतिसाहस्रैर्योजनैरस्य चोच्छ्रयः ।
प्रविष्टः षोड़शाधस्ताद्द्वात्रिंशन्मूर्द्ध्नि विस्तृतः ॥ ८
अधः षोड़शसाहस्रः कर्णिकाकारसंस्थितः ।
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्व्वताः ॥ ९
प्लक्षादिषु नरा रुद्र ये वसन्ति सनातनाः ।
सङ्करोऽथ न तेष्वस्ति युगावस्था कथञ्चन ॥ १०
जम्बूद्वीपेश्वरात् पुत्रा ह्यग्नीध्रादभवन् नव ।
नाभिः किम्पुरुषश्चैव हरिवर्ष इलावृतः ॥ ११
रम्यो हिरण्वान् षष्ठश्च कुरुर्भद्राश्व एव च ।
केतुमालो नृपस्तेभ्यस्तत्संज्ञान् खण्डकान् ददौ ॥ १२
नाभेस्तु मेरुदेव्यान्तु पुत्रोऽभूदृषभो हर ।
तत्पुत्रो भरतो नाम शालग्रामे स्थितो व्रती ॥ १३
सुमतिर्भरतस्याभूत् तत्पुत्रस्तेजसोऽभवत् ।
इन्द्रद्युम्नश्च तत्पुत्रः परमेष्ठी ततः स्मृतः ।
प्रतीहारश्च तत्पुत्रः प्रतिहर्त्ता तदात्मजः ॥ १४
सुतस्तस्मादथो जातः प्रस्तारस्तत्सुतो विभुः ।
पृथुश्च तत्सुतो नक्तो नक्तस्यापि गयः स्मृतः ॥ १५
नरो गयस्य तनयस्तत्पुत्रो बुद्धिराट् ततः ।
ततो धीमान् महातेजा भौवनस्तस्य चात्मजः ॥ १६
त्वष्टा त्वष्टुश्च विरजा रजास्तस्याप्यभूत् सुतः ।
शतजिद्रजसस्तस्य विश्वग्ज्योतिः सुतः स्मृतः ॥ १७

इति श्रीगारुड़े महापुराणे पूर्व्व-
खण्डे भुवनकोषवर्णने चतुः-
पञ्चाशोऽध्यायः ॥ ५४ ॥

---

## पञ्चपञ्चाशोऽध्यायः ।

हरिरुवाच ।

मध्ये त्विलावृतो वर्षो भद्राश्वः पूर्व्वतो भवेत् ।
पूर्व्वदक्षिणतो वर्षो हिरण्वान् वृषभध्वज ॥ १

ततः किम्पुरुषो वर्षो मेरोर्दक्षिणतः स्मृतः।
भारतो दक्षिणे प्रोक्तो हरिर्दक्षिणपश्चिमे ॥ २
पश्चिमे केतुमालश्च रम्यकः पश्चिमोत्तरे।
उत्तरे च कुरोर्वर्षः कल्पवृक्षसमावृतः ॥ ३
सिद्धिः स्वाभाविकी रुद्र वर्ज्जयित्वा तु भारतम्।
इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् ॥ ४
नागद्वीपः कटाहश्च सिंहलो वारुणस्तथा।
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ५
पूर्व्वे किरातास्तस्यास्ते पश्चिमे यवनाः स्थिताः।
अन्ध्रा दक्षिणतो रुद्र तुरुष्कास्त्वपि चोत्तरे।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्तरवासिनः ॥ ६
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः।
विन्ध्यश्च पारिभद्रश्च सप्तात्र कुलपर्व्वताः ॥ ७
वेदस्मृतिर्नर्म्मदा च वरदा सुरसा शिवा।
तापी पयोष्णी सरयूः कावेरा गोमती तथा ॥ ८
गोदावरी भीमरथी कृष्णवेणी महानदी।
केतुमाला ताम्रपर्णी चन्द्रभागा सरस्वती ॥ ९
ऋषिकुल्या च कावेरी मर्त्त्यगङ्गा पयस्विनी।
विदर्भा च शतद्रुश्च नद्यः पापहराः शुभाः।
आसां पिबन्ति सलिलं मध्यदेशादयो जनाः ॥ १०
पाञ्चालाः कुरवो मत्स्या यौधेयाः सपटच्चराः।
कुन्तयः शूरसेनाश्च मध्यदेशजनाः स्मृताः ॥ ११
वृषध्वज जनाः पाद्माः सूत-मागध-चेदयः।
काशायाश्च विदेहाश्च पूर्व्वस्यां कोशलास्तथा ॥ १२
कलिङ्ग-वङ्ग-पुण्ड्राङ्गा वैदर्भा मूलकास्तथा।
विन्ध्यान्तर्निलया देशाः पूर्व्वदक्षिणतः स्मृताः ॥ १३
पुलिन्दाश्मकजीमूत-नयराष्ट्रनिवासिनः।
कार्णाटाः कम्बोजघण्टा दक्षिणापथवासिनः ॥ १४
काम्बोजा स्त्रीमुखाः शकाः।
अम्बष्ठा द्रविड़ा लाटाः काम्बोजा स्त्रीमुखाः शकाः।
आनर्त्तवासिनश्चैव ज्ञेया दक्षिणपश्चिमे ॥ १५
स्त्रैराज्याः सैन्धवा म्लेच्छा नास्तिका यवनास्तथा।
पश्चिमेन च विज्ञेया माथुरा नैषधैः सह ॥ १६
माण्डव्याश्च तुषाराश्च मूलिकाश्च मुखाः खशाः।
महाकेशा महानादा देशास्तूत्तरपश्चिमे ॥ १७
लम्बकाः स्तननागाश्च माद्रगान्धारवाह्लिकाः।
हिमाचलालया म्लेच्छा उदीचीं दिशमाश्रिताः ॥ १८

त्रिगर्त्त-नील-कोलाभ-ब्रह्मपुत्राः सटङ्कणाः।
अभीषाहाः सकाश्मीरा उदक्पूर्व्वेण कीर्त्तिताः ॥ १९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशोऽध्यायः।

हरिरुवाच।

सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य च।
ज्येष्ठः शान्तभवो (क) नाम शिशिरस्तदनन्तरः।
सुखोदयस्तथा नन्दः शिवः क्षेमक एव च।
ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा हि ते ॥
गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा।
सोमकः सुमनाः शैलो वैभ्राजश्चात्र सप्तमः।
अनुतप्ता शिखी चैव विपाशा त्रिदिवा क्रमुः।
अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः।
वपुष्मान् शाल्मलस्येशस्तत्सुता वर्षनामकाः।
श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा।
वैद्युतो मानसश्चैव सुप्रभश्चापि सप्तमः ॥ ५
कुमुदश्चोन्नतो द्रोणो महिषोऽथ बलाहकः।
कङ्कः ककुद्मान् ह्येते वै गिरयः सरितस्त्विमाः।
योनिस्तोया वितृष्णा च चन्द्रा शुक्ला विमोचनी।
विधृतिः सप्तमी तासां स्मृताः पापप्रशान्तिदाः।
ज्योतिष्मतः कुशद्वीपे सप्त पुत्राः शृणुष्व तान्।
उद्भिदो वेणुमांश्चैव वैरथो लम्बनो धृतिः।
प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः ॥ ८
विद्रुमो हेमशैलश्च द्युतिमान् पुष्पवांस्तथा।
कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ ९
धूतपापा शिवा चैव पवित्रा सम्मतिस्तथा।
विद्युदम्भा मही काशा सर्व्वपापहरास्त्विमाः।
क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः।
कुशलो मन्दगश्चोष्णः पीवरोऽथान्धकारकः।
मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता हर ॥ ११
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः।
क्रौञ्चश्च महाशैलो दुन्दुभिः पुण्डरीकवान्।
देवावृच्च महाशैलो दुन्दुभिः पुण्डरीकवान्।

(क) शान्तभय इति विष्णुपुराणसम्मतः पाठः।

गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ।
ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः ॥ १३
शाकद्वीपेश्वराद्भव्यात् सप्त पुत्राः प्रजज्ञिरे ।
जलदश्च कुमारश्च सुकुमारो मनीचकः ।
कुसुमोदः समोदाकिः सप्तमश्च महाद्रुमः ॥ १४
सुकुमारी कुमारी च नलिनी धेनुका च या ।
इक्षुश्च वेणुका चैव गभस्ती सप्तमी तथा ॥ १५
शबलात् पुष्करेशाच्च महावीरश्च धातकिः ।
अभूद्वर्षद्वयञ्चैव मानसोत्तरपर्व्वतः ॥ १६
योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः ।
तावच्चैव च विस्तीर्णः सर्व्वतः परिमण्डलः ॥ १७
स्वादूदकेनोदधिना पुष्करः परिवेष्टितः ।
स्वादूदकस्य पुरतो दृश्यते लोकसंस्थितिः ॥ १८
द्विगुणा काञ्चनी भूमिः सर्व्वजन्तुविवर्ज्जिता ॥ १९
लोकालोकस्ततः शैलो योजनायुतविस्तृतः ।
तमसा पर्व्वतो व्याप्तस्तमोऽप्यण्डकटाहतः ॥ २०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

## सप्तपञ्चाशोऽध्यायः ।

हरिरुवाच ।

[illegible]तिस्तु सहस्राणि भूम्युच्छ्रायोऽपि कथ्यते ।
[illegible]शसाहस्रमेकैकं पातालं वृषभध्वज ॥ १
[illegible]तलं वितलञ्चैव नितलञ्च गभस्तिमत् ।
[illegible]हाख्यं सुतलञ्चाग्र्यं पातालञ्चापि सप्तमम् ॥ २
[illegible]ष्णा शुक्लारुणा पीता शर्करा शैलकाञ्चना ।
[illegible]मयस्तत्र दैतेया वसन्ति च भुजङ्गमाः ॥ ३
[illegible]ैद्रे तु पुष्करद्वीपे नरकाः सन्ति तान् शृणु ।
[illegible]ौरवः शूकरो रोधस्तालो विशसनस्तथा ॥ ४
[illegible]हाज्वालस्तप्तकुम्भो लवणोऽथ विमोहितः ।
[illegible]धिरान्धो वैतरणी कृमीशः कृमिभोजनः ॥ ५
[illegible]सिपत्रवनं कृष्णो लालाभक्षश्च दारुणः ।
[illegible]था पूयवहः पापो वह्निज्वालो ह्यधःशिराः ॥ ६
[illegible]न्दंशः कृष्णसूत्रञ्च (क) तमश्चावीचिरेव च ।
श्वभोजनोऽथाप्रतिष्ठोऽप्यवीचिर्नरकाः स्मृताः ।
पापिनस्तेषु पच्यन्ते विषशस्त्राग्निदायिनः ॥ ७
उपर्य्युपरि वै लोका रुद्र भूतादयः स्थिताः ।
वारिवह्न्यनिलाकाशैर्वृतं भूतादिना च तत् ॥ ८
तदण्डं महता रुद्र प्रधानेन च वेष्टितम् ।
अण्डं दशगुणं व्याप्तं व्याप्य नारायणः स्थितः ॥ ९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशोऽध्यायः ।

हरिरुवाच ।

वक्ष्ये प्रमाणसंस्थाने सूर्य्यादीनां शृणुष्व मे ।
योजनानां सहस्राणि भास्करस्य रथो नव ॥ १
ईशादण्डस्तथैवास्य द्विगुणो वृषभध्वज ।
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि च ।
योजनानान्तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥ २
त्रिनाभिमति पञ्चारे षण्नेमिन्यक्षयात्मके ।
संवत्सरमये कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥ ३
चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः ।
पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य वृषध्वज ॥ ४
अक्षप्रमाणमुभयोः प्रमाणन्तु युगार्द्धयोः ।
ह्रस्वोऽक्षस्तद्युगार्द्धञ्च ध्रुवाधारं रथस्य वै ।
द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ॥ ५
गायत्री सबृहत्युष्णिग्जगती त्रिष्टुबेव च ।
अनुष्टुप् पङ्क्तिरित्युक्ताश्छन्दांसि हरयो रवेः ॥ ६
धाता क्रतुस्थला चैव पुलस्त्यो वासुकिस्तथा ।
रथकृद्ग्रामणीर्हेतिस्तुम्बुरुश्चैत्रमासके ॥ ७
अर्य्यमा पुलहश्चैव रथौजाः पुञ्जिकस्थला ।
प्रहेतिः कच्छनीरश्च नारदश्चैव माधवे ॥ ८
मित्रोऽत्रिस्तक्षको रक्षः पौरुषेयोऽथ मेनका ।
हाहा रथस्वनश्चैव ज्यैष्ठे भानो रथे स्थिताः ॥ ९
वरुणो वशिष्ठो रम्भा च सहजन्या हुहूर्बुधः ।
रथचित्रस्तथा शुक्रो वसन्त्याषाढसंज्ञिते ॥ १०
इन्द्रो विश्वावसुः स्रोत एलापत्रस्तथाङ्गिराः ।
प्रम्लोचा च नभस्येते सर्पाश्चार्के तु सन्ति वै ॥ ११

(क) कालसूत्रश्चेति क्वचित् पाठः ।

विवस्वानुग्रसेनश्च भृगुरापूरणस्तथा ।
अनुम्लोचा शङ्खपालो व्याघ्रो भाद्रपदे तथा ॥ १२
पूषा च सुरुचिर्वातो गौतमोऽथ धनञ्जयः ।
सुषेणोऽन्यो घृताची च वसन्त्याश्वयुजे रवौ ॥ १३
विश्वावसुर्भरद्वाजः पर्ज्जन्यैरावतौ तदा ।
विश्वाची सेनजिच्चापः कार्त्तिके चाधिकारिणः ॥ १४
अंशुकाश्यपताक्ष्याश्च महापद्मस्तथोर्व्वशी ।
चित्रसेनस्तथा विद्युन्मार्गशीर्षाधिकारिणः ॥ १५
क्रतुर्भगस्तथोर्णायुः स्फूर्ज्जः कर्कोटकस्तथा ।
अरिष्टनेमिश्चैवान्या पूर्व्वचित्तिर्वराप्सराः ।
पौषमासे वसन्त्येते सप्त भास्करमण्डले ॥ १६
त्वष्टाथ जमदग्निश्च कम्बलोऽथ तिलोत्तमा ।
ब्रह्मापेतोऽथ ऋतजिद्धृतराष्ट्रश्च सप्तमः ।
माघमासे वसन्त्येते सप्त भास्करमण्डले ॥ १७
विष्णुरश्वतरो रम्भा सूर्य्यवर्च्चाश्च सत्यजित् ।
विश्वामित्रस्तथा रक्षो यज्ञापेतो हि फाल्गुने ॥ १८
सवितुर्मण्डले ब्रह्मन् विष्णुशक्त्युपबृंहिताः ।
स्तुवन्ति मुनयः सूर्य्यं गन्धर्व्वैर्गीयते पुरः ॥ १९
नृत्यन्त्योऽप्सरसो यान्ति सूर्य्यस्यानु निशाचराः ।
वहन्ति पन्नगा यक्षैः क्रियतेऽभीषुसंग्रहः ॥ २०
बालिखिल्यास्तथैवैनं परिवार्य्य समासते ॥ २१
रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ।
वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ २२
वार्य्यग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च ।
पिशङ्गैस्तुरगैर्युक्तः सोऽष्टाभिर्वायुवेगिभिः ॥ २३
सवरूथः सानुकर्षो युक्तो भूमिभवैर्हयैः ।
सोपासङ्गपताकस्तु शुक्रस्यापि रथो महान् ॥ २४
रथो भूमिसुतस्यापि तप्तकाञ्चनसन्निभः ।
अष्टाश्वः काञ्चनः श्रीमान् भौमस्यापि रथो महान् ।
पद्मरागारुणैरश्वैः संयुक्तो वह्निसम्भवैः ॥ २५
अष्टाभिः पाण्डरैर्युक्तैर्वाजिभिः काञ्चने रथे ।
तिष्ठंस्तिष्ठति वर्षं वै राशौ राशौ वृहस्पतिः ॥ २६
आकाशसम्भवैरश्वैः शवलैः स्यन्दनं युतम् ।
समारुह्य शनैर्याति मन्दगामी शनैश्चरः ॥ २७
स्वर्भानोस्तुरगा ह्यष्टौ भृङ्गाभा धूसरं रथम् ।
सकृद्युक्तास्तु भूतेश वहन्त्यविरतं सदा ॥ २८
तथा केतुरथस्याश्वा अष्टौ ते वातरंहसः ।
पलालधूमवर्णाभा लाक्षारसनिभारुणाः ॥
द्वीपनद्यद्रुशद्वन्तो भुवनानि हरेस्तनुः ॥ ३

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
कोषो नामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः ।

सूत उवाच ।

ज्योतिश्चक्रं भुवो मानमुक्त्वा प्रोवाच केशवः ।
चतुर्लक्षं ज्योतिषस्य सारं रुद्राय सर्व्वदः ॥

हरिरुवाच ।

कृत्तिकास्त्वग्निदैवत्या रोहिण्यो ब्रह्मणः स्मृ
इल्वलाः सोमदैवत्या रौद्रश्चार्द्रमुदाहृतम् ।
पुनर्व्वसुस्तथादित्यस्तिष्यश्च गुरुदैवतः ।
अश्लेषाः सर्पदैवत्या मघाश्च पितृदेवता ॥ ३
भाग्याश्च पूर्व्वफल्गुन्यः आर्य्यमाश्च तथोत्तरा
सावित्री च तथा हस्ता चित्रा त्वाष्ट्री प्रकीर्ति
स्वाती च वायुदैवत्यं नक्षत्रं परिकीर्त्तितम् ।
इन्द्राग्निदेवता प्रोक्ता विशाखा वृषभध्वज ।
मैत्रमृक्षमनुराधा ज्येष्ठा शाक्रं प्रकीर्त्तितम् ।
तथा निर्ऋतिदैवत्यो मूलस्तज्ज्ञैरुदाहृतः ।
आप्यास्त्वाषाढपूर्व्वास्तु उत्तरा वैश्वदेवता
ब्राह्मी चैवाभिजित् प्रोक्ता श्रवणा वैष्णवी
वासवन्तु तथा ऋक्षं धनिष्ठा प्रोच्यते बुधैः ।
तथा शतभिषा प्रोक्तं नक्षत्रं वारुणं शिव ।
आज्यं भाद्रपदा पूर्व्वा आहिर्बुध्ना तथोत्तर
पौष्णञ्च रेवती ऋक्षमश्वयुक् चाश्वदैवतम् ।
भरण्यश्च तथा याम्याः प्रोक्तास्ता ऋक्षदेव
ब्रह्माणी संस्थिता पूर्व्वे प्रतिपन्नवमीतिथौ ।
माहेश्वरी चोत्तरे च द्वितीयादशमीतिथौ ।
स्थिताग्नेय्यां च कौमारी तृतीयैकादशीतिथौ ।
नारायणी च नैर्ऋत्यां चतुर्थीद्वादशीतिथौ ।
पञ्चम्याञ्च त्रयोदश्यां वाराही दक्षिणे स्थि
षष्ठ्याञ्चैव चतुर्द्दश्यामिन्द्राणी पश्चिमे स्थिता ।
सप्तम्यां पौर्णमास्याञ्च चामुण्डा वायुगोच

अष्टम्यमावास्ययोश्च महालक्ष्मीप्रगोचरे ॥ १३
योगिनीसम्मुखे नैव गमनादिं प्रकारयेत् ॥ १४
अश्विनी-मैत्र-रेवत्यो मृग-मूला-पुनर्व्वसुः ।
पुष्या हस्ता तथा ज्येष्ठा प्रस्थानश्रेष्ठमुच्यते ॥ १५
हस्तादिपञ्चऋक्षाणि उत्तरात्रयमेव च ।
अश्विनी रोहिणी पुष्या धनिष्ठा च पुनर्व्वसुः ।
वस्त्रप्रावरणे श्रेष्ठो नक्षत्राणां गणः स्मृतः ॥ १६
कृत्तिका भरण्यश्लेषा मघा मूलविशाखयोः ।
त्रीणि पूर्व्वा तथा चैव अधोवक्त्राः प्रकीर्त्तिताः ॥ १७
एषु वापी-तड़ागादि-कूप-भूमि-तृणानि च ।
देवागारस्य खननं निपानखननं तथा ॥ १८
गणितं ज्योतिषारम्भं खनिविलप्रवेशनम् ।
कुर्य्यादधोगतान्येव अन्यानि च वृषध्वज ॥ १९
रेवती चाश्विनी चित्रा स्वाती हस्ता पुनर्व्वसुः ।
अनुराधा मृगो ज्येष्ठा एते पार्श्वमुखाः स्मृताः ॥ २०
गजोष्ट्राश्ववलीवर्द्ददमनं महिषस्य च ।
वीजानां वपनं कुर्य्याद्गमनागमनादिकम् ॥ २१
चक्र-यन्त्र-रथानाञ्च नावादीनां प्रवाहणम् ।
गवां दमनकर्म्माणि कुर्य्यादेतेषु तान्यपि ॥ २२
रोहिण्यार्द्रा तथा पुष्या धनिष्ठा चोत्तरात्रयम् ।
वारुणं श्रवणञ्चैव नव चोर्द्ध्वमुखाः स्मृताः ॥ २३
एषु राज्याभिषेकञ्च पट्टबन्धञ्च कारयेत् ।
ऊर्द्ध्वमुख्यान्युच्छ्रितानि सर्व्वाण्येतेषु कारयेत् ॥ २४
चतुर्थी चाशुभा षष्ठी अष्टमी नवमी तथा ।
अमावस्या पूर्णिमा च द्वादशी च चतुर्द्दशी ॥ २५
अशुक्ला प्रतिपच्छ्रेष्ठा द्वितीया चन्द्रसूनुना ।
तृतीया भूमिपुत्त्रेण चतुर्थी च शनैश्चरे ॥ २६
गुरौ शुभा पञ्चमी स्यात् षष्ठी मङ्गलशुक्रयोः ।
सप्तमी सोमपुत्त्रेण अष्टमी कुजभास्करौ ॥ २७
नवमी चन्द्रवारेण दशमी तु गुरौ शुभा ।
एकादश्यां गुरुः शुक्रो द्वादश्याञ्च पुनर्बुधः ॥ २८
त्रयोदशी शुक्रभौमौ शनौ श्रेष्ठा चतुर्द्दशी ।
पौर्णमास्यप्यमावास्या श्रेष्ठा स्याच्च वृहस्पतौ ॥ २९
द्वादशीं दहते भानुः शशी चैकादशीं दहेत् ।
कुजो दहेच्च दशमीं नवमीञ्च बुधो दहेत् ॥ ३०
अष्टमीं दहते जीवः सप्तमीं भार्गवो दहेत् ।
सूर्य्यपुत्त्रो दहेत् षष्ठीं गमनं तासु नास्ति वै ॥ ३१
प्रतिपन्नवमीष्वेव चतुर्द्दश्यष्टमीषु च ।
बुधवारे च प्रस्थानं दूरतः परिवर्ज्जयेत् ॥ ३२
मेषे कर्कटके षष्ठी कन्यायां मिथुनेऽष्टमी ।
वृषे कुम्भे चतुर्थी च द्वादशी मकरे तुले ॥ ३३
दशमी वृश्चिके सिंहे धनुर्मीने चतुर्द्दशी ।
एता दग्धा न गन्तव्यं किल जीवादिमानवैः ॥ ३४
विशाखात्रयमादित्ये पूर्व्वाषाढ़ात्रये शशी ।
धनिष्ठात्रितयं भौमे बुधे वै रेवतीत्रयम् ॥ ३५
रोहिण्यादित्रयं जीवे शुक्रे पुष्यात्रयं शिव ।
शनिवारे वर्ज्जयेच्च उत्तराफल्गुनीत्रयम् ।
एष औत्पातिको योगो मृत्युरोगादिकं भवेत् ॥ ३६
मूलेऽर्कः श्रवणे चन्द्रः प्रोष्ठपद्युत्तरे कुजः ।
कृत्तिकासु बुधश्चैव गुरौ रुद्र पुनर्व्वसू ॥ ३७
पूर्व्वफल्गुनी शुक्रे च स्वातिश्चैव शनैश्चरे ।
एते चामृतयोगाः स्युः सर्व्वकार्य्यप्रसाधकाः ॥ ३८
विष्कुम्भे घटिकाः पञ्च शूले सप्त प्रकीर्त्तिताः ।
षड़्गण्डे चातिगण्डे च नव व्याघात-वज्रयोः ॥ ३९
व्यतीपाते परीघे च वैधृतौ च दिनं तथा ।
एते मृत्युकरा ह्येषु सर्व्वकर्म्माणि वर्ज्जयेत् ॥ ४०
हस्तेऽर्कश्च गुरुः पुष्ये अनुराधा बुधे शुभा ।
रोहिणी च शनौ श्रेष्ठा सौमं सोमेन वै शुभम् ॥ ४१
शुक्रे च रेवती श्रेष्ठा अश्विनी मङ्गले शुभा ।
एतेषु सिद्धियोगा वै सर्व्वदोषविनाशनाः ॥ ४२
भार्गवे भरणी चैव सोमे चित्रा वृषध्वज ।
भौमे चैवोत्तराषाढ़ा धनिष्ठा च बुधे हर ॥ ४३
गुरौ शतभिषा रुद्र शुक्रे वै रोहिणी तथा ।
शनौ च रेवती शम्भो विषयोगाः प्रकीर्त्तिताः ॥ ४४
पुष्यः पुनर्व्वसुश्चैव रेवती चित्रया सह ।
श्रवणा च धनिष्ठा च हस्ताश्विनी मृगस्तथा ।
कुर्य्याच्छतभिषायाञ्च जातकर्म्मादि मानवः ॥ ४५
विशाखा चोत्तरात्रीणि मघार्द्रा भरणी तथा ।
अश्लेषा कृत्तिका रुद्र प्रस्थाने मरणप्रदाः ॥ ४६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः।

हरिरुवाच।

षड़ादित्ये दशा ज्ञेया सोमे पञ्चदश स्मृताः।
अष्टावङ्गारके चैव बुधे सप्तदश स्मृताः ॥ १
शनैश्चरे दश ज्ञेया गुरोरेकोनविंशतिः।
राहोर्द्वादश वर्षाणि एकविंशति भार्गवे ॥ २
रवेर्दशा दुःखदा स्यादुद्वेगनृपनाशकृत्।
विभूतिदा सोमदशा सुखमिष्टान्नदा तथा ॥ ३
दुःखप्रदा कुजदशा राज्यादेः स्याद्विनाशिनी।
दिव्यस्त्रीदा बुधदशा राज्यदा कोषवृद्धिदा ॥ ४
शनेर्दशा राज्यनाश-बन्धुदुःखकरी भवेत्।
गुरोर्दशा राज्यदा स्यात् सुखधर्म्मादिदायिनी।
राहोर्दशा राज्यनाश-व्याधिदा दुःखदा भवेत् ॥ ५
हस्त्यश्वदा शुक्रदशा राज्यस्त्रीलाभदा भवेत् ॥ ६
मेषस्त्वङ्गारकक्षेत्रं वृषः शुक्रस्य कीर्त्तितः।
बुधस्य मिथुनं ज्ञेयं सोमस्य कर्कटस्तथा ॥ ७
सूर्य्यक्षेत्रं भवेत् सिंहः कन्या क्षेत्रं बुधस्य च।
भार्गवस्य तुला क्षेत्रं वृश्चिकोऽङ्गारकस्य च ॥ ८
धनुः सुरगुरोश्चैव शनेर्मकर-कुम्भकौ।
मीनः सुरगुरोश्चैव ग्रहक्षेत्रं प्रकीर्त्तितम् ॥ ९
पौर्णमास्या द्वयं यत्र पूर्व्वाषाढ़ाद्वयं भवेत्।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ १०
अश्विनी रेवती चित्रा धनिष्ठा स्यादलङ्कृतौ ॥ ११
मृगाहि-कपि-मार्ज्जार-श्वानः शूकर-पक्षिणः।
नकुलो मूषिकश्चैव यात्रायां दक्षिणे शुभाः ॥ १२
विप्रकन्या शवा रुद्र शङ्ख-भेरी-वसुन्धराः।
वेणुस्त्रीपूर्णकुम्भानां यात्रायां दर्शनं शुभम् ॥ १३
जम्बुकोष्ट्रखराद्याश्च यात्रायां वामके शुभाः ॥ १४
कार्पासौषधितैलञ्च पक्काङ्गारभुजङ्गमाः।
मुक्तकेशी रक्तमाल्यं नग्नाद्यशुभमीक्षितम् ॥ १५
छिक्काया लक्षणं वक्ष्ये लभेत् पूर्व्वे महाफलम्।
आग्नेये शोक-सन्तापौ दक्षिणे हानिमाप्नुयात् ॥ १६
नैर्ऋत्ये शोक-सन्तापौ मिष्टान्नञ्चैव पश्चिमे।
अर्थं प्राप्नोति वायव्ये उत्तरे कलहो भवेत्।
ईशाने मरणं प्रोक्तं छिक्कायाश्च फलाफलम् ॥ १७
लिख्यते रविचक्रन्तु भास्करो नरसन्निभः।
यस्मिनृक्षे वसेद्भानुस्तदादित्रीणि मस्तके ॥
त्रयं वक्त्रे प्रदातव्यमेकैकं स्कन्धयोर्न्यसेत्।
एकैकं बाहुयुग्मे तु एकैकं हस्तयोर्द्वयोः ॥
हृदये पञ्च ऋक्षाणि एकं नाभौ प्रदापयेत्।
ऋक्षमेकं न्यसेद्गुह्ये एकैकं जानुके न्यसेत् ॥
नक्षत्राणि च शेषाणि रविपादे नियोजयेत्।
चरणस्थेन ऋक्षेण अल्पायुर्जायते नरः ॥ २
विदेशगमनं जानौ गुह्यस्थे परदारवान्।
नाभिस्थेनाल्पसन्तुष्टो हृत्स्थेन स्यान्महेश्वरः।
पाणिस्थेन भवेच्चौरः स्थानभ्रष्टो भवेद्भुजे।
स्कन्धस्थिते धनपतिर्मुखे मिष्टान्नमाप्नुयात्।
मस्तके पट्टवस्त्रन्तु नक्षत्रं स्याद्यदि स्थितम्

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
षष्टितमोऽध्यायः ॥६०॥

---

## एकषष्टितमोऽध्यायः।

हरिरुवाच।

सप्तमोपचयाद्यस्थश्चन्द्रः सर्व्वत्र शोभनः।
शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा ॥ १
संपूज्यमानो लोकैस्तु गुरुवद्दृश्यते शशी ॥ २
चन्द्रस्य द्वादशावस्था भवन्ति शृणु ता अपि।
त्रिषु त्रिषु च ऋक्षेषु अश्विन्यादि वदाम्यहं
प्रवासस्थं पुनर्नष्टं मृतावस्थं जयावहम्।
हास्यावस्थं क्रीड़ावस्थं प्रमोदावस्थमेव च ॥ ४
विषादावस्थभोगस्थे ज्वरावस्थं व्यवस्थितम्।
कम्पावस्थं स्वस्थावस्थं द्वादशावस्थगं भवेत् ॥
प्रवासो हानिमृत्यू च जयो हासो रतिः सुखं
शोको भोगो ज्वरः कम्पः सुस्थावस्थाक्रमात् फ
जन्मस्थः कुरुते तुष्टिं द्वितीये नास्ति निर्वृतिः।
तृतीये राजसम्मानं चतुर्थे कलहागमः ॥ ७
पञ्चमेन मृगाङ्केण स्त्रीलाभो वै तथा भवेत्।
धनधान्यागमः षष्ठे रतिः पूजा च सप्तमे ॥ ८
अष्टमे प्राणसन्देहो नवमे कोषसञ्चयः।
दशमे कार्य्यनिष्पत्तिध्रुवमेकादशे जयः।

द्वादशेन शशाङ्केन मृत्युरेव न संशयः ॥ ९
कृत्तिकादौ च पूर्व्वेण सप्तर्क्षाणि च वै व्रजेत् ।
मघादौ दक्षिणे गच्छेदनुराधादि पश्चिमे ॥ १०
प्रशस्ता चोत्तरे यात्रा धनिष्ठादिषु सप्तसु ।
अश्विनी रेवती चित्रा धनिष्ठा समलङ्कृतौ ॥ ११
मृगाश्विचित्रापुष्याश्च मूला हस्ता शुभाः सदा ।
कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्म्मसु ॥ १२
शुक्रचन्द्रौ जन्मसंस्थौ शुभदौ च द्वितीयकौ ।
शशि-ज्ञ-शुक्र-जीवाश्च राशौ चाथ तृतीयके ॥ १३
भौममन्दशशाङ्कार्का बुधः श्रेष्ठश्चतुर्थके ।
शुक्रजीवौ पञ्चमौ च श्रेष्ठौ सद्भिरुदाहृतौ ॥ १४
मन्दार्केन्दु-कुजाः षष्ठे गुरु-चन्द्रौ च सप्तमे ।
ज्ञ-शुक्रावष्टमे श्रेष्ठौ नवमस्थो गुरुः शुभः ॥ १५
अर्कार्किचन्द्रा दशमे एकादशेऽखिला ग्रहाः ।
बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत् ॥ १६
सिंहेन मकरोऽश्रेष्ठः मेषश्च कन्ययाधमः ।
तुलया सह मीनस्तु कुम्भेन सह कर्कटः ॥ १७
धनुषा वृषभोऽश्रेष्ठो मिथुनेन च वृश्चिकः ।
एतत् षड़ष्टकं रिष्फे भवत्येव न संशयः ॥ १८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ।

हरिरुवाच ।

उदयात् तु समारभ्य राशौ भानुः स्थितो हर ।
चराश्याद्यैर्व्रजेदह्नि षड़्भिः षड़्भिस्तथा निशाम् ॥ १
मीने मेषे च पञ्च स्युश्चतस्रो वृषकुम्भयोः ।
मकरे मिथुने तिस्रः पञ्च चापे च कर्कटे ॥ २
सिंहे च वृश्चिके षट् च सप्त कन्यातुले तथा ।
एता लग्नप्रमाणेन घटिकाः परिकीर्त्तिताः ॥ ३
रसपूर्व्वावसानेषु रसाब्धीष्वरिसागराः ।
लङ्कोदया हि तद्वत् तु लग्ना मेषादयोऽथवा ॥ ४
मेषलग्ने भवेद्वन्ध्या वृषे भवति कामिनी ।
मिथुने सुभगा कन्या वेश्या भवति कर्कटे ॥ ५
सिंहे चैवाल्पपुत्रा च कन्यायां रूपसंयुता ।
तुलायां रूपमैश्वर्य्यं वृश्चिके कर्कशा भवेत् ॥ ६
सौभाग्यं धनुषि स्याच्च मकरे नीचगामिनी ।
कुम्भे चैवाल्पपुत्रा स्यान्मीने वैराग्यसंयुता ॥ ७
तुलाकर्कटको मेषो मकरश्चैव राशयः ।
चरकार्य्याणि कुर्य्याच्च स्थिरकार्य्याणि चैव हि ॥ ८
पञ्चाननो वृषः कुम्भो वृश्चिकः स्युः स्थिराणि हि ।
कन्या धनुश्च मीनश्च मिथुनं द्विस्वभावतः ॥ ९
द्विस्वभावानि कर्म्माणि कुर्य्यादेषु विचक्षणः ।
यात्रा चरेण कर्त्तव्या प्रवेष्टव्यं स्थिरेण तु ।
देवस्थापनवैवाह्यं द्विस्वभावेन कारयेत् ॥ १०
प्रतिपच्चाथ षष्ठी च नन्दा चैकादशी स्मृता ।
द्वितीया सप्तमी भद्रा द्वादशी च वृषध्वज ॥ ११
जयाष्टमी तृतीया च स्मृता रुद्र त्रयोदशी ।
चतुर्थी नवमी रिक्ता सा वर्ज्याथ चतुर्द्दशी ।
पञ्चमी दशमी पूर्णा पूर्णिमा च शुभाः स्मृताः ॥ १२
चरः सौम्यो गुरुः क्षिप्रो मृदुः शुक्रो रविर्ध्रुवः ।
शनिश्च दारुणो ज्ञेयो भौम उग्रः शशी समः ॥ १३
चरक्षिप्रैः प्रयातव्यं प्रवेष्टव्यं मृदुध्रुवैः ।
दारुणोग्रैश्च योद्धव्यं क्षत्रियैर्जयकाङ्क्षिभिः ।
नृपाभिषेकोऽग्निकार्य्यं सूर्य्यवारे प्रशस्यते ॥ १४
सोमे तुले प्रयाणञ्च कुर्य्याच्चैव गृहादिकम् ।
सैनापत्यं शौर्य्ययुद्धं शस्त्राभ्यासः कुजे स्मृतः ॥ १५
सिद्धिकार्य्यञ्च मन्त्रश्च यात्रा चैव बुधे स्मृता ।
पठनं देवपूजा च वस्त्राद्याभरणं गुरौ ॥ १६
कन्यादानं गजारोहः शुक्रे स्यात् समयः स्त्रियाः ।
स्थाप्यं गृहप्रवेशश्च गजबन्धः शनौ शुभः ॥ १७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## त्रिषष्टितमोऽध्यायः ।

हरिरुवाच ।

नरस्त्रीलक्षणं वक्ष्ये संक्षेपाच्छृणु शङ्कर ।
अस्वेदिनौ मृदुतलौ कमलोदरसन्निभौ ॥ १
श्लिष्टाङ्गुली ताम्रनखौ सुगुल्फौ शिरयोज्झितौ ।
कूर्म्मोन्नतौ च चरणौ स्यातां नृपवरस्य हि ॥ २

विरूद्वपाण्डुरनखौ वक्रौ चैव शिरान्वितौ ।
शूर्पाकारौ च चरणौ संशुष्कौ विरलाङ्गुली ।
दुःखदारिद्र्यदौ स्यातां नात्र कार्य्या विचारणा ॥ ३
अल्परोमयुता श्रेष्ठा जङ्घा हस्तिकरोपमा ।
रोमैकैकं कूपके स्याद्भूपानान्तु महात्मनाम् ॥ ४
द्वे द्वे रोमे पण्डितानां श्रोत्रियाणां तथैव च ।
रोमत्रयं दरिद्राणां रोगी निर्म्मांसजानुकः ॥ ५
अल्पलिङ्गे च धनवान् स्याच्च पुत्रादिवर्ज्जितः ।
स्थूललिङ्गी दरिद्रः स्याद्दुःखैकवृषणी भवेत् ॥ ६
विषमे स्त्रीचञ्चलो वै नृपः स्याद्वृषणे समे ।
प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यः श्रमणिर्भवेत् ।
पाण्डुरैर्मलिनैश्चैव मणिभिश्च सुखी नरः ॥ ७
निःस्वाः सशब्दमूत्राः स्युर्नृपा निःशब्दधारया ।
भोगाढ्याः समजठरा निःस्वाः स्युर्घटसन्निभाः ॥ ८
सर्पोदरा दरिद्राः स्यू रेखाभिश्चायुरुच्यते ।
ललाटे यस्य दृश्यन्ते तिस्रो रेखाः समाहिताः ॥ ९
सुखी पुत्रसमायुक्तः स षष्टिं जीवते नरः ॥ १०
चत्वारिंशच्च वर्षाणि द्विरेखादर्शनान्नरः ।
विंशत्यब्दसैकरेखा आकर्णान्ता गतायुषः ॥ ११
आकर्णान्तरिता रेखास्तिस्रश्च स्युः शतायुषः ।
सप्तत्यायुर्द्विरेखा तु षष्ट्यायुस्तिसृभिर्भवेत् ॥ १२
व्यक्ताव्यक्ताभी रेखाभिर्विंशत्यायुर्भवेन्नरः ।
चत्वारिंशच्च वर्षाणि हीनरेखस्तु जीवति ।
भिन्नाभिश्चैव रेखाभिरपमृत्युर्नरस्य हि ॥ १३
त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते ।
धनपुत्रसमायुक्तः स जीवेच्छरदः शतम् ॥ १४
तर्ज्जन्या मध्यमाङ्गुल्या आयूरेखा तु मध्यतः ।
तज्जन्या मध्यमाङ्गुल्या आयूरेखा तु मध्यतः ।
सम्प्राप्ता या भवेद्रुद्र स जीवेच्छरदः शतम् ॥ १५
प्रथमा ज्ञानरेखा तु अङ्गुष्ठादनुवर्त्तते (क) ।
मध्यमामूलगा रेखा आयूरेखा अतः परम् ॥ १६
कनिष्ठिकां समाश्रित्य आयूरेखा समाविशेत् ।
अच्छिन्ना वा विभक्ता वा स जीवेच्छरदः शतम् ॥ १७
यस्य पाणितले रेखा आयुस्तस्य प्रकाशयेत् ।
यस्य पाणितले रेखा आयुस्तस्य प्रकाशयेत् ।
शतं वर्षाणि जीवेच्च भोगी रुद्र न संशयः ॥ १८

कनिष्ठिकां समाश्रित्य मध्यमायामुपागता ।
षष्टिवर्षायुषं कुर्य्यादायूरेखा तु मानवम् ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः ।

हरिरुवाच ।

यस्यास्तु कुञ्चिताः केशा मुखञ्च परिमण्डलं
नाभिश्च दक्षिणावर्त्तः सा कन्या कुलवर्द्धिनी ।
या च काञ्चनवर्णाभा रक्तहस्तसरोरुहा ।
सहस्राणान्तु नारीणां भवेत् सापि पतिव्र
वक्रकेशा च या कन्या मण्डलाक्षी च या
भर्त्ता च म्रियते तस्या नियतं दुःखभागिनी
पूर्णचन्द्रमुखी कन्या बालसूर्य्यसमप्रभा ।
विशालनेत्रा विम्बौष्ठी सा कन्या लभते सुख
रेखाभिर्बहुभिः क्लेशं स्वल्पाभिर्धनहीनता ।
रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां व्रजे
कार्य्येऽपि मन्त्री पत्नी स्यात् सखी स्यात् करणे
स्नेहेषु भार्य्या माता स्याद्वेश्या च शयने शुभा
अङ्कुशं कुण्डलं चक्रं यस्याः पाणितले भवेत् ।
पुत्रं प्रसूयते नारी नरेन्द्रं लभते पतिम् ॥
यस्यास्तु रोमशौ पार्श्वौ रोमशौ च पयोधरौ
उन्नतौ चाधरोष्ठौ च क्षिप्रं मारयते पतिम्
यस्याः पाणितले रेखा प्राकारतोरणं भवेत्
अपि दासकुले जाता राज्ञीत्वमुपगच्छति ॥
उद्वृत्ता कपिला यस्या रोमराजी निरन्तरम्
अपि राजकुले जाता दासीत्वमुपगच्छति ॥
यस्या अनामिकाङ्गुष्ठौ पृथिव्यां नैव तिष्ठतः ।
पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥
यस्या गमनमात्रेण भूमिकम्पः प्रजायते ।
पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥
चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् ।
त्वचः स्नेहेन शय्याश्च पादस्नेहेन वाहनम् ॥
स्निग्धोन्नतौ ताम्रनखौ नार्य्याश्च चरणौ शुभौ
मत्स्याङ्कुशाब्जचिह्नौ च चक्रलाङ्गललक्षितौ ।

---

(क) ज्ञानरेखा तु प्रथमा अङ्गुष्ठादनुवर्त्तते इति पाठान्तरम् ।

अस्वेदिनौ मृदुतलौ प्रशस्तौ चरणौ स्त्रियाः ॥ १५
शुभे जङ्घे विरोमे च ऊरू हस्तिकरोपमौ ।
अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ॥ १६
नाभिः प्रशस्ता गम्भीरा दक्षिणावर्त्तिका शुभा ।
अरोमा त्रिवली नार्य्या वृत्तस्तनौ रोमवर्ज्जितौ ॥१७

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ।

हरिरुवाच ।

समुद्रोक्तं प्रवक्ष्यामि नरस्त्रीलक्षणं शुभम् ।
येन विज्ञातमात्रेण अतीतानागतप्रमा ॥ १
अस्वेदिनौ मृदुतलौ कमलोदरसन्निभौ ।
श्लिष्टाङ्गुली ताम्रनखौ पादावुष्णौ शिरोज्झितौ ।
कूर्म्मोन्नतौ गूढगुल्फौ सुपार्ष्णी नृपतेः स्मृतौ ॥ २
शूर्पाकारौ विरूक्षौ च वक्रौ पादौ शिरालकौ ।
संशुष्कौ पाण्डरनखौ निःस्वस्य विरलाङ्गुली(क) ॥३
मार्गायोत्कटकौ पादौ कषायसदृशौ तथा ।
विच्छित्तिदौ च वंशस्य ब्रह्मघ्नौ शङ्कुसन्निभौ ॥ ४
युगस्यायतने तुल्या जङ्घा विरलरोमिका ।
मृदुरोमा समा जङ्घा तथा करिकरप्रभा ॥ ५
ऊरवो जानवस्तुल्या नृपस्योपचिताः स्मृताः ।
निःस्वस्य शृगालजङ्घा रोमैकैकञ्च कूपके ॥ ६
नृपाणां श्रोत्रियाणाञ्च द्वे द्वे शिये च धीमताम् ।
त्र्याद्यैर्निःस्वा मानवाः स्युर्दुःखभाजश्च निन्दिताः ॥ ७
केशाश्चैव कुञ्चिताश्च प्रवासे म्रियते नरः ॥ ८
निर्म्मांसजानुः सौभाग्यमल्पैर्निम्ने रतः स्त्रियाम् ।
विकटैश्च दरिद्राः स्युः समांसे राज्यमेव च ॥ ९
महद्भिरायुराख्यातं ह्यल्पलिङ्गो धनी नरः ।
अपत्यरहितश्चैव स्थूललिङ्गो धनोज्झितः ॥ १०
मेढ्रे वामनते चैव सुतार्थरहितो भवेत् ।
वक्रेऽन्यथा पुत्रवान् स्याद्दारिद्र्यं विनते त्वधः ॥११
अल्पे तु तनयो लिङ्गे शिरालेऽथ सुखी नरः ।
स्थूलग्रन्थियुते लिङ्गे भवेत् पुत्रादिसंयुतः ॥ १२

(क) विपुलाङ्गुली इति वा पाठः ।

कोषगूढे नृपो दीर्घैर्भुग्नैश्च धनवर्ज्जितः ।
बलवान् युद्धशीलश्च (क) लघुशिफः स एव च ॥ १३
दुर्ब्बलस्त्वेकवृषणो विषमाभ्यां चलः स्त्रियाम् ।
समाभ्यां क्षितिपः प्रोक्तः प्रलम्बेन शताब्दवान् ॥१४
ऊर्द्ध्वं द्वाभ्यां बह्वायू रक्तैर्मणिभिरीश्वराः ।
पाण्डरैर्मणिभिर्निःस्वा मलिनैः सुखभागिनः ॥ १५
सशब्दनिःशब्दमूत्राः स्युर्दरिद्राश्च मानवाः ।
एकद्वित्रिचतुःपञ्चषड्धारादिभिरेव च ॥ १६
दक्षिणावर्त्तवलितमूत्राभिश्च नृपाः स्मृताः ।
विकीर्णमूत्रा निःस्वाश्च प्रधानसुखदायिकाः ॥ १७
एकधाराश्च वनिताः स्निग्धैर्मणिभिरुन्नतैः ।
समैः स्त्रीरत्नधनिनो मध्ये निम्नैश्च कन्यकाः ॥ १८
शुक्रैर्निःस्वा विशुष्कैश्च दुर्भगाश्च प्रकीर्त्तिताः ।
पुष्पगन्धे नृपाः शुक्रे मधुगन्धे धनं बहु ॥ १९
पुत्राः शुक्रे मत्स्यगन्धे तनुशुक्रे च कन्यकाः ।
महाभोगी मांसगन्धे यज्वा स्यान्मांसगन्धिनि ॥ २०
दरिद्रः क्षारगन्धे च दीर्घायुः शीघ्रमैथुनी ।
अशीघ्रमैथुन्यल्पायुः स्थूलस्फिक् स्याद्धनोज्झितः॥२१
मांसलस्फिक् सुखी स्याच्च सिंहस्फिक् भूपतिः स्मृत
भवेत् सिंहकटी राजा निःस्वः कपिकटिर्नरः ॥ २२
सर्पोदरा दरिद्राः स्युः पिठरैश्च घटैः समाः ।
धनिनो विकलैः पार्श्वैर्निःस्वा वक्रैश्च निम्नगैः ॥ २३
समकक्षाश्च भोगाढ्या निम्नकक्षा धनोज्झिताः ।
नृपाश्चोन्नतकक्षाः स्युर्जिह्मा विषमकक्षकाः ॥ २४
मत्स्योदरा बहुधना नाभिभिः सुखिनः स्मृताः ।
विस्तीर्णाभिर्वर्त्तुलाभिर्निम्नाभिः क्लेशभागिनः ॥२५
वलिमध्यगता नाभिः शूलबाधां करोति हि ।
वामावर्त्तश्च शाठ्यं वै मेधां दक्षिणतस्तथा ॥ २६
पार्श्वायता चिरायुः स्यात् तूपरिष्टाद्धनेश्वरम् ।
अधो गवाढ्यं कुर्य्याच्च नृपत्वं पद्मकर्णिका ॥ २७
एकवलिः शतायुः स्याच्छ्रीभोगी द्विवलिः स्मृतः ।
त्रिवलिः स्त्राप आचार्य्य ऋजुभिर्वलिभिः सुखी ।
अगम्यागामी जिह्मवलिर्भूपाः पार्श्वैश्च मांसलैः ॥२८
मृदुभिः सुषमैश्चैव दक्षिणावर्त्तरोमभिः ।
विपरीतैः परप्रेष्या निर्द्रव्याः सुखवर्ज्जिताः ॥ २९

(क) धनवन्तो युद्धवन्त इति वा पाठः ।

अनुन्नतैश्चूचुकैश्च भवन्ति सुभगा नराः।
निर्धना विषमैर्दीर्घैः पीतोपचितकैर्नृपाः॥ ३०
समोन्नतञ्च हृदयमकम्पं मांसलं पृथु।
नृपाणामधमानाञ्च खररोमशिरालकम्॥ ३१
अर्थवान् समवक्षाः स्यात् पीनैर्वक्षोभिरूर्ज्जितः।
वक्षोभिर्विषमैर्निःस्वाः शस्त्रेण निधनास्तथा॥ ३२
विषमैर्जत्रुभिर्निःस्वा अस्थिनद्धैश्च मानवाः।
उन्नतैर्भोगिनो निम्नैर्निःस्वाः पीनैर्धनान्विताः॥ ३३
निःस्वश्चिपिटकण्ठः स्याच्छिराशुष्कगलः सुखी।
शूरः स्यान्महिषग्रीवः शस्त्रान्तो मृगकण्ठकः॥ ३४
कम्बुग्रीवश्च नृपतिर्लम्बकण्ठोऽतिभक्षकः।
अरोमशो भुग्नपृष्ठं शुभञ्चाशुभमन्यथा॥ ३५
कक्षा चाखर्वला श्रेष्ठा सुगन्धिर्मगरोमिका।
अन्यथा त्वर्थहीनानां दारिद्र्यस्य च कारणम्॥ ३६
समांसौ चैव भुग्नाल्पौ श्लिष्टौ च विपुलौ भुजौ।
आजानुलम्बितौ बाहू वृत्तौ पीनौ नृपेश्वरे।
निःस्वानां रोमशौ ह्रस्वौ श्रेष्ठौ करिकरप्रभौ॥ ३७
हस्ताङ्गुलय एव स्युर्वायुद्वारनिभाः शुभाः।
मेधाविनाञ्च सूक्ष्माः स्युर्भृत्यानां चिपिटाः स्मृताः।
स्थूलाङ्गुलीभिर्निःस्वाः स्युर्नताः स्युः सुकर्म्मिस्तदा॥ ३८
कपितुल्यकरा निःस्वा व्याघ्रतुल्यकरैर्धनम्।
पितृवित्तविनाशश्च निम्नात् करतलान्नराः॥ ३९
मणिबन्धैर्निगूढैश्च सुश्लिष्टैः शुभगन्धिभिः।
नृपा हीनैः करच्छेदैः सशब्दैर्धनवर्ज्जिताः॥ ४०
संवृतैश्चैव निम्नैश्च धनिनः परिकीर्त्तिताः।
प्रोत्तानकरदातारो विषमैर्विषमा नराः॥ ४१
करैः करतलैश्चैव लाक्षाभैरीश्वर स्तनैः।
परदाररताः पीते रूक्षैर्निःस्वा नरा मताः॥ ४२
तुषतुल्यनखाः क्लीवाः कुटिलैः स्फुटितैर्नराः।
निःस्वाश्चक्रनखैस्तद्वद्विवर्णैः परतर्क्कंकाः॥ ४३
ताम्रैर्भूपा धनाढ्याश्च अङ्गुष्ठैः यवैस्तथा।
अङ्गुष्ठमूलजैः पुत्री स्याद्दीर्घाङ्गुलिपर्व्वकः॥ ४४
दीर्घायुः शुभगश्चैव निर्धनो विरलाङ्गुलिः।
घनाङ्गुलिश्च सधनस्तिस्रो रेखाश्च यस्य वै।
नृपतेः करतलगा मणिबन्धात् समुत्थिताः॥ ४५
युगमीनाङ्कितकरो भवेत् सत्रप्रदो नरः।
वज्राकाराश्च धनिनां मत्स्यपुच्छनिभा बुधे।
शङ्खातपत्र-शिविका-गज-पद्मोपमा नृपे।
कुम्भाङ्कुशपताकाभा मृणालाभा निधीश्वरे।
दामाभाश्च गवाढ्यानां स्वस्तिकाभा नृपेश्वरे।
चक्रासि-तोमर-धनुः-कुन्ताभा नृपतेः करे।
उदूखलाभा यज्वाढ्ये वेदीभाश्चाग्निहोत्रिणि।
वापीदेवकुल्याभाश्च त्रिकोणाभाश्च धार्म्मिके।
अङ्गुष्ठमूलगा रेखाः पुत्राश्च सुखदायकाः।
प्रदेशिनीगता रेखा कनिष्ठामूलगामिनी।
शतायुषञ्च कुरुते छिन्नाच्च तरुतो भयम्॥
निःस्वाश्च बहुरेखाः स्युर्निर्द्रव्याश्चिबुकैः कृ[illegible]
मांसलैश्च धनोपेता आरक्तै (क) रधरैर्नृपाः।
बिम्बोपमैश्च स्फुटितैरोष्ठै रूक्षैश्च खण्डितैः।
विवर्णैर्धनहीनाश्च दन्ताः स्निग्धा घनाः शुभ[illegible]
तीक्ष्ण दन्ताः समाः श्रेष्ठा जिह्वा रक्ता समा[illegible]
श्लक्ष्णा दीर्घा च विज्ञेया तालुः श्वेतो धन[illegible]
कृष्णा च परुषा वक्त्रं समं सौम्यञ्च संवृतम्।
भूपानाममलं श्लक्ष्णं विपरीतञ्च दुःखिनाम्।
महादुःखं दुर्भगाणां स्त्रीमुखं पुत्रमाप्नुयात्।
आढ्यानां वर्त्तुलं वक्त्रं निर्द्रव्याणाञ्च दीर्घकम्।
भीरुवक्त्रः पापकर्म्मा धूर्त्तानां चतुरस्रकम्।
निम्नं वक्त्रमपुत्राणां कृपणानाञ्च ह्रस्वकम्।
सम्पूर्णं भोगिनां कान्तं श्मश्रु स्निग्धं शुभं [illegible]
संहतञ्चास्फटिताग्रं रक्तश्मश्रुश्च चौरकः॥
रक्ताल्पपरुषश्मश्रुः कर्णाः स्युः पापमृत्यवः।
निर्म्मांसैश्चिपिटैर्भोगाः कृपणा ह्रस्वकर्णकाः।
शङ्कुकर्णाश्च राजानो रोमकर्णाः शतायुषः।
बृहत्कर्णाश्च धनिनो राजानः परिकीर्त्तिताः।
कर्णैः स्निग्धैरनद्धैश्च व्यालम्बैर्मांसलैर्नृपाः।
भोगी वै निम्नगण्डः स्यान्मन्त्री सम्पूर्णगण्डकः।
शुकनासः सुखी स्याच्च शुष्कनासोऽतिजीवनः।
छिन्नाग्रकूपनासः स्यादगम्यागमने रतः॥
दीर्घनासे च सौभाग्यं चौरश्चाकुञ्चितेन्द्रियः।
मृत्युश्चिपिटनासः स्याद्धीनभाग्यवतां भवेत्॥
स्वल्पच्छिद्रा च सुपुटा अवक्रा च नृपेश्वरे।

(क) अवक्रैरिति क्वचित् पाठः।

क्रूरे दक्षिणवक्रा स्याद्दक्षिणाच्च च्युतं सकृत् ॥ ६३
स्यादिनिष्पिण्डितं क्रादी सानुनादञ्च जीवकृत् ॥६४
वक्रान्तैः पद्मपत्राभैर्लोचनैः सुखभागिनः ।
मार्ज्जारलोचनैः पापा दुरात्मा मधुपिङ्गलैः ॥ ६५
क्रूराः कैकरनेत्राश्च हरिताक्षाः सकल्मषाः ।
जिह्मैश्च लोचनैः शूराः सेनान्यो गजलोचनाः ॥६६
गम्भीराक्षा ईश्वराः स्युर्मन्त्रिणः स्थूलचक्षुषः ।
नीलोत्पलाक्षा विद्वांसः सौभाग्यं श्यामचक्षुषाम् ॥६७
स्यात् कृष्णतारकाक्षाणामक्ष्णामुत्पाटनं किल ।
मण्डलाक्षाश्च पापाः स्युर्निःस्वाः स्युर्दीनलोचनाः॥६८
ह्रस्वस्निग्धा विपुला भोगा अल्पायुर्नाभिरुन्नता ।
विशालोन्नताः सुखिनो दरिद्रा विषमभ्रुवः ॥ ६९
नी दीर्घासंसक्तभ्रूर्बालेन्दून्नतसुभ्रुकः ।
ाढ्यो निःस्वश्च खण्डभ्रूर्मध्ये च विनतभ्रुवः ।
त्रीष्वगम्यासु आसक्ताः स्युः सौभाग्यपरिवर्ज्जिताः ॥७०
न्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा ।
र्धना धनवन्तश्च अर्द्धेन्दुसदृशैर्नराः ॥ ७१
चार्य्याः शुक्तिविशालैः शिरालैः पापकारिणः ।
नताभिः शिराभिश्च स्वस्तिकाभिर्धनेश्वराः ॥ ७२
न्नैर्ललाटैर्वधार्हाः क्रूरकर्मरतास्तथा ।
तैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥ ७३
श्रुस्निग्धरुदितमदीनमशुभं नृणाम् ।
ुराश्रुयुतं दीनं रुदितञ्च सुखावहम् ॥ ७४
कम्पं हसितं श्रेष्ठं निमीलितमघावहम् ।
क्रहसितं दुष्टं सोन्मादस्य ह्यनेकधा ॥ ७५
ाटोपसृतास्तिस्रो रेखाः स्युः शतवर्षिणाम् ।
लं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥ ७६
खिणायुर्नवतिर्विच्छिन्नाभिश्च पुंश्चलाः ।
ान्तोपगताभिश्च अशीत्यायुर्नरो भवेत् ॥ ७७
भिः सप्तभिः षड्भिः पञ्चाशद्वङ्भिस्तथा ।
ारिंशच्च वक्राभिस्त्रिंशद्भूलग्नगामिभिः ।
तिर्वामवक्राभिरायुः क्षुद्राभिरल्पकम् ॥ ७८
ाकारैः शिरोभिस्तु नृपः शिवमयो धनी ।
पिटैश्च पितुर्मृत्युर्धनाढ्यः (क) परिमण्डलैः ।
मूर्द्धा पापरुचिर्धनाद्यैः परिवर्ज्जितः ॥७९

(क) गवाढ्य इति वा पाठः।

कृष्णैराकुञ्चितैः केशैः स्निग्धैरेकैकसम्भवः ।
अभिन्नाग्रैश्च मृदुभिर्न चातिबहुभिर्नृपाः ॥ ८०
बहुमूलैश्च विषमैः स्थूलाग्रैः कपिलैस्तथा ।
निःस्वाश्चैवातिकुटिलैर्घनैरसितमूर्द्धजैः ॥ ८१
यद्यद्गात्रं महारूक्षं शिरालं मांसवर्ज्जितम् ।
तत् तत् स्यादशुभं सर्व्वं शुभं सर्व्वं ततोऽन्यथा ॥ ८२
विपुलस्त्रिषु गम्भीरो दीर्घः सूक्ष्मश्च पञ्चसु ।
षडुन्नतश्चतुर्ह्रस्वो रक्तः सप्त नृपैः समः ॥ ८३
नाभिः स्वरश्च बुद्धिश्च त्रयं गम्भीरमीरितम् ।
पुंसः स्यादतिविस्तीर्णं ललाटं वदनं उरः ॥ ८४
चक्षुः-कक्ष-दन्त-नासाः षट् स्युर्मुखकृकाटिकाः ।
उन्नतानि च ह्रस्वानि जङ्घा ग्रीवा च लिङ्गकम् ॥८५
पृष्ठं चत्वारि रक्तानि करताल्वधरा नखाः ।
नेत्रान्त-पाद-जिह्वौष्ठाः पञ्च सूक्ष्माणि सन्ति वै ॥८६
दशनाङ्गुलिपर्व्वाणि नख-केश-त्वचः शुभाः ।
दीर्घाः स्तनान्तरं बाहु-दन्त-लोचन-नासिकाः ॥ ८७
नराणां लक्षणं प्रोक्तं वदामि स्त्रीषु लक्षणम् ॥ ८८
रक्ताग्राः स्निग्धौ समौ पादौ तलौ ताम्रौ नखौ तथा ।
श्लिष्टाङ्गुली चोन्नताग्रौ तां प्राप्य नृपतिर्भवेत् ॥ ८९
निगूढ़गुल्फोपचितौ पद्मकान्तितलौ शुभौ ।
अस्वेदिनौ मृदुतलौ मत्स्याङ्क-मकराङ्कितौ ।
वज्राब्जहलचिह्नौ च दास्याः पादौ ततोऽन्यथा ॥ ९०
जङ्घे च रोमरहिते सुवृत्ते विशिरे शुभे ।
अनुल्वणं सन्धिदेशं समं जानुद्वयं शुभम् ॥ ९१
ऊरू करिकराकारावरोमौ च समौ शुभौ ।
अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ॥ ९३
श्रोणीललाटकं स्त्रीणामुरः कूर्म्मोन्नतं शुभम् ।
गूढ़ो मणिश्च शुभदो नितम्बश्च गुरुः शुभः ॥ ९३
विस्तीर्णा मांसोपचिता गम्भीरा विपुला शुभा ।
नाभिः प्रदक्षिणावर्त्ता मध्यं त्रिवलिशोभितम् ॥ ९४
अरोमशौ स्तनौ पीनौ घनाववविषमौ शुभौ ।
कठिनारोमशा शस्ता मृदुग्रीवा च कम्बुभाः ॥९५
आरक्तावधरौ श्रेष्ठौ मांसलं वर्त्तुलं मुखम् ।
कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ॥ ९६
दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ।
नासा समा समपुटा स्त्रीणान्तु रुचिरा शुभा ॥ ९७

नीलोत्पलनिभं चक्षुर्नासिलनं शुभावहम् ॥ ९८
न पृथू बालेन्दुनिभे भ्रुवौ चाथ ललाटकम्।
शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यादलोमकम् ॥ ९९
अमांसलं कर्णयुगं समं मृदु समाहितम्।
स्निग्धनीलाश्च मृदवो मूर्द्धजाः कुञ्चिताः शुभाः ॥१००
स्त्रीणां समं शिरः श्रेष्ठं पादे पाणितलेऽथवा।
वाजि-कुञ्जर-श्रीवृक्ष-यूपेषु-यव-तोमरैः ॥ १०१
ध्वज-चामर-मालाभिः शैल-कुण्डल-वेदिभिः।
शङ्खातपत्रपद्मैश्च मत्स्य-स्वस्तिक-सद्रथैः।
लक्षणैरङ्कुशाद्यैश्च स्त्रियः स्यू राजवल्लभाः ॥ १०२
निगूढमणिबन्धौ च पद्मगर्भोपमौ करौ।
न निम्नं नोन्नतं स्त्रीणां भवेत् करतलं शुभम् ॥ १०३
रेखान्वितन्त्वविधवां कुर्य्यात् सम्भोगिनीं स्त्रियम्।
रेखा या मणिबन्धोत्था गता मध्याङ्गुलीं करे ॥१०४
गता पाणितले या च यार्द्धपादतले स्थिता।
स्त्रीणां पुंसां तथा सा स्याद्राज्याय च सुखाय च॥१०५
कनिष्ठिकामूलभवा रेखा कुर्य्याच्छतायुषम्।
प्रदेशिनीमध्यमाभ्यामन्तरालगता सती ॥ १०६
ऊना जनायुषं कुर्य्याद्रेखा चाङ्गुष्ठमूलगा।
वृहत्यः पुत्रास्ताः क्षीणाः प्रमदाःपरिकीर्त्तिताः॥१०७
स्वल्पायुषो बहुच्छिन्ना दीर्घाच्छिन्ना महायुषः।
शुभन्तु लक्षणं स्त्रीणां प्रोक्तान्त्वशुभमन्यथा ॥ १०८
कनिष्ठिकानामिका वा यस्या न स्पृशते महीम्।
अङ्गुष्ठं वा गतातीत्य तर्ज्जनी कुलटा च सा ॥ १०९
ऊर्द्ध्वं हाभ्यां पिण्डिकाभ्यां जङ्घे चातिशिरालके।
रोमशे चातिमांसे च कुम्भाकारं तथोदरम्।
वामावर्त्तं निम्नमल्पं दुःखितानाञ्च गुह्यकम् ॥ ११०
ग्रीवया ह्रस्वया निःस्वा दीर्घया तु कुलक्षयः।
पृथुलया प्रचण्डाश्च स्त्रियः स्युर्नात्र संशयः ॥ १११
केकरे पिङ्गले नेत्रे श्यावे लोलेक्षणा सती।
स्मिते कूपे गण्डयोश्च सा ध्रुवं व्यभिचारिणी ॥ ११२
प्रलम्बिनि ललाटे तु देवरं हन्ति चाङ्गना।
उदरे श्वशुरं हन्ति पतिं हन्ति स्फिचोदयोः ॥ ११३
या तु रोमोत्तरौष्ठी स्यान्न शुभा भर्त्तुरेव हि।
स्तनौ सरोमावशुभौ कर्णौ च विषमौ तथा ॥ ११४
कराला विषमा दन्ताः क्लेशाय च भयाय च।
चौर्य्याय कृष्णमांसाश्च दीर्घा भर्त्तुश्च मृत्यवे।
क्रव्यादरूपैर्हस्तैश्च वृककाकादिसन्निभैः।
शिरालैर्विषमैः शुष्कैर्वित्तहीना भवन्ति हि।
समुन्नतोत्तरौष्ठी या कलहे रूक्षभाषिणी।
स्त्रीषु दोषा विरूपासु यत्राकारो गुणास्तत्र
नरस्त्रीलक्षणं प्रोक्तं वक्ष्ये तु ज्ञानदायक

इति श्रीगारुड़े महापुराणे नरस्त्री
नाम पञ्चषष्टितमोऽध्यायः ॥६५॥

---

## षट्षष्टितमोऽध्यायः।

हरिरुवाच।

निर्लक्षणा शुभा स्याच्च चक्राङ्कितशिलाः
आदौ सुदर्शनो मूर्त्तिर्लक्ष्मीनारायणः प
त्रिचक्रोऽसावच्युतः स्याच्चतुश्चक्रश्चतुर्भुजः।
वासुदेवश्च प्रद्युम्नस्ततः सङ्कर्षणः स्मृतः ॥
पुरुषोत्तमश्चाष्टमः स्यान्नवव्यूहो दशात्मकः
एकादशोऽनिरुद्धः स्याद्द्वादशो द्वादशात्मक
अत ऊर्द्ध्वमनन्तः स्याच्चक्रे रेखादिकैः श्रण
सुदर्शना लक्षिताश्च पूजिताः सर्व्वकामदाः
शालग्रामशिला यत्र देवो द्वारवतीभवः।
उभयोः सङ्गमो यत्र तत्र मुक्तिर्न संशयः॥
शालग्रामो द्वारका च नैमिषं पुष्करं गया
वाराणसी प्रयागञ्च कुरुक्षेत्रञ्च शूकरम्।
गङ्गा च नर्म्मदा गोदा चन्द्रभागा सरस्व
श्रीक्षेत्रञ्च महाकालस्तीर्थान्येतानि शङ्क
सर्व्वपापहराण्येव भुक्तिमुक्तिप्रदानि वै
प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापति
अङ्गिराः श्रीमुखो भावी पूषा धाता तथै
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृष
चित्रभानुः सुभानुश्च दारुणः पार्थिवोऽव्य
सर्व्वजित् सर्व्वधारी च विरोधी विकृतः
नन्दनो विजयश्चैव जयो मन्मथ-दुर्मुखौ।
हेमलम्बो विलम्बश्च विकारी शर्व्वरी प्ल
शुभकृच्छोभनः क्रोधी विश्वावसुः परा
प्लवङ्गः कीलकः सौम्यः साधारणविरोध

रात्तसो नलः ॥ १२ (… राचसो नलः ॥ १२)

परिधावी प्रमादी च आनन्दी राचसो नलः ॥ १२
पिङ्गलः कामसिद्धार्थौ दुर्म्मतिः सुमतिस्तथा ।
दुन्दुभी रुधिरोद्गारी रक्ताचः क्रोधनोऽचयः ।
शोभनाशोभना ज्ञेया नाम्नैते हि वत्सराः ॥ १३
कालं वच्यामि संचिप्तं रुद्र पञ्चस्वरोदयात् ।
राजा साजा उदासा च पीड़ा मृत्युस्तथैव च ॥१४
आ ई ऊ ऐ औ स्वराणि च लिखेत् पञ्चाग्निकोष्ठके ।
ऊर्द्धतिर्य्यग्गते रेखैः षड्वह्निक्रममागतैः ॥ १५
तिथौ एकाग्निकोष्ठेषु त्रयो राजाथ साजया ।
उदासपीड़ामृत्युश्च कुजः सोमसुतः क्रमात् ॥ १६
गुरु-शुक्र-शनैश्वरा रविचन्द्रौ यथोदितम् ।
रेवत्यादिशिवान्ताश्च ऋचे च प्रथमा कला ॥ १७
पञ्चपञ्चान्यत्र भानि चैत्राद्य उदयस्तथा ।
द्वादशाचो द्विमासैश्च नाम्न आद्यचरं तथा ॥ १८
कलाखिङ्गा च या तिष्ठेत् पञ्चमस्तस्य वै मृतिः ।
कला तिथिस्तथा वारो नचत्रं माससेव च ।
नामोदयस्य पूर्व्वञ्च तथा भवति नान्यथा ॥ १९
ओं चौं शिवाय नमः ॥ २०
चामाद्यङ्गं शिरसि चौं विषग्रहमतेर्हर ।
त्रलोक्यमोहनं वीजं नृसिंहस्य तु पन्नगम् ॥ २१
मृत्यञ्जयो गणो लक्ष्मी रोचनाद्यैस्तु लेखिताः ।
भूर्ज्ज तु धारिताः कण्ठे बाहौ चेति जयादिदाः॥२२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
ज्योतिःशास्त्रसमाप्तिर्नाम षट्-
षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ।

सूत उवाच ।

हरेः श्रुत्वा हरो गौरीं देहस्थं ज्ञानमब्रवीत् ।
कुजो वह्नी रविः पृथ्वी शौरिरापः प्रकीर्त्तितः ॥ १
वायुसंस्थः स्थितो राहुर्दचरन्ध्रावभासकः ।
गुरुः शुक्रस्तथा सौम्यश्चन्द्रश्चैव चतुर्थकः ॥ २
वामनाड्यान्तु मध्यस्थान् कारयेदात्मनस्तथा ।
यदा चार इड़ायुक्तास्तदा कर्म्म समाचरेत् ॥ ३
स्नानसेवां तथा ध्यानं वाणिज्यं राजदर्शनम् ।
अन्यानि शुभकर्म्माणि कारयेत प्रयत्नतः ॥ ४
दचनाड़ीप्रवाहे तु शनिर्भौमश्च सैंहिकः ।
इनश्चैव तथाप्येव पापानामुदयो भवेत् ॥ ५
शुभाशुभविवेको हि ज्ञायते तु स्वरोदयात् ॥ ६
देहमध्ये स्थिता नाड्यो बहुरूपाः सविस्तराः ।
नाभेरधस्ताद्यः स्कन्धः अङ्कुरास्तत्र निर्गताः ॥ ७
द्विसप्ततिसहस्राणि नाभिमध्ये व्यवस्थिताः ।
चक्रवच्च स्थितास्तास्तु सर्व्वाः प्राणहराः स्मृताः ॥८
तासां मध्ये त्रयः श्रेष्ठा वाम-दचिणा-मध्यमाः ॥ ९
वामा सोमात्मिका प्रोक्ता दचिणा रविसन्निभा ।
मध्यमा च भवेदग्निः फलतां कालरूपिणी ॥ १०
वामा ह्यमृतरूपा च जगदाप्यायने स्थिता ।
दचिणा रौद्रभागेण जगच्छोषयते सदा ॥ ११
द्वयोर्वाहे तु मृत्युः स्यात् सर्व्वकार्य्यविनाशिनी ।
निर्गमे तु भवेद्वामा प्रवेशे दचिणा स्मृता ॥ १२
ईडाचारे तथा सौम्यं चन्द्रसूर्य्यगतस्तथा ।
कारयेत् क्रूरकर्म्माणि प्राणे पिङ्गलसंस्थिते ॥ १३
यात्रायां सर्व्वकार्य्येषु विषापहरणे इड़ा ।
भोजने मैथुने युद्धे पिङ्गला सिद्धिदायिका ॥ १४
उच्चाटमारणाद्येषु कर्म्मस्वेतेषु पिङ्गला ।
मैथुने चैव संग्रामे भोजने सिद्धिदायिका ॥ १५
शोभनेषु च कार्य्येषु यात्रायां विषकर्म्मणि ।
शान्तिमुक्त्यर्थसिद्धौ च ईड़ा योज्या नराधिपैः ॥ १६
द्वाभ्याञ्चैव प्रवाहे च क्रूरसौम्यविवर्ज्जने ।
विषुवं तन्तु जानीयात् संस्मरेत् तु विचचणः ॥ १७
सौम्यादिशुभकार्य्येषु लाभादिजयजीविते ।
गमनागमने चैव वामा सर्व्वत्र पूजिता ॥ १८
युद्धाभिभोजने घाते स्त्रीणाञ्चैव तु सङ्गमे ।
प्रशस्ता दचिणा नाड़ी प्रवेशे चुद्रकर्म्मणि ॥ १९
शुभाशुभानि कार्य्याणि लाभालाभौ जयाजयौ ।
जीवो जीवाय यत् पृच्छेत् न सिध्यति च मध्यमा॥२०
वामाचारेऽथवा दचे प्रत्यये यत्र नायकः ।
तत्रस्थः पृच्छते यस्तु तत्र सिद्धिर्न संशयः ॥ २१
वैच्छन्दो वामदेवस्तु यदा वहति चात्मनि ।
तत्र भागे स्थितः पृच्छेत् सिद्धिर्भवति निष्फला ॥२२
वामे वा दचिणे वापि यत्र संक्रमते शिवा ।

चौरे घोराणि कार्य्याणि सौम्ये वै मध्यमानि च ॥२३
प्रस्थिते भागतो हंसे द्वाभ्यां वै सर्व्ववाहिणि।
तदा मृत्युं विजानीयाद्दयोगी योगविशारदः ॥२४
यत्र यत्र स्थितः पृच्छेद्वामदक्षिणसम्मुखः।
तत्र तत्र समं दिश्याद्दातस्योदयनं सदा ॥ २५
अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा।
वामेन वामिका प्रोक्ता दक्षिणे दक्षिणा शुभा ॥ २६
जीवो जीवति जीवेन यच्छून्यं स स्वरो भवेत् ॥२७
यत् किञ्चित् कार्य्यमुद्दिष्टं जयादिशुभलक्षणम्।
तत् तत्र्वं पूर्णनाड्यान्तु जायते निर्व्विकल्पतः ॥ २८
अन्यनाड्यादिपर्य्यन्तं पक्षत्रयमुदाहृतम्।
यावत् षष्ठीन्तु पृच्छायां पूर्णायां प्रथमो जयेत्।
रिक्तायान्तु द्वितीयस्तु कथयेत् तदशङ्कितः ॥ २९
वामाचारसमो वायुर्जायते कर्म्मसिद्धिदः।
प्रवर्त्ते दक्षिणे मार्गे विषमे विषमाक्षरम् ॥ ३०
अन्यत्र वामवाहे तु नाम वै विषमाक्षरम्।
तदासौ जयमाप्नोति योधः संग्राममध्यतः ॥ ३१
दक्षवातप्रवाहे तु यदि नाम समाक्षरम्।
जायते नात्र सन्देहो नाड़ीमध्ये तु लक्षयेत् ॥ ३२
पिङ्गलान्तर्गते प्राणे शमनीयाहवं जयेत्।
यावन्नाड्योदयं चारस्तां दिशं यावदापयेत्।
न दातुं जायते सोऽपि नात्र कार्य्या विचारणा ॥३३
अथ संग्राममध्ये तु यत्र नाड़ी सदा वहेत्।
सा दिशा जयमाप्नोति शून्ये भङ्गं विनिर्द्दिशेत् ॥३४
जातचारे जयं विद्यान्मतके मृतमादिशेत्।
जयं पराजयञ्चैव यो जानाति स पण्डितः ॥ ३५
वामे वा दक्षिणे वापि यत्र सञ्चरते शिवम्।
कृत्वा तत् पादमादौ तु यात्रा सन्ततशोभना ॥ ३६
शशिसूर्य्यप्रवाहे तु सति युद्धं समाचरेत्।
तत्रस्थः पृच्छते यस्तु स साधुर्जयते ध्रुवम् ॥ २७
यां दिशं वहते वायुस्तां दिशं यावदाजयेत्।
जयते नात्र सन्देह इन्द्रो यद्यग्रतः स्थितः ॥ ३८
मैथ्याद्या दश या नाड्यो दक्षिणा वामसंस्थिताः।
चरस्थिरद्विमार्गे तास्लाट्टशी ताद्दशः क्रमात् ॥ ३९
निर्गमे निर्गमं याति संग्रहे संग्रहं विदुः।
प्रच्छकस्य वचः श्रुत्वा घण्टाकारेण लक्षयेत् ॥ ४०

वामे वा दक्षिणे वापि पञ्चतत्त्वस्थितः शिवे।
ऊर्द्ध्वेऽग्निरधः आपश्च तिर्य्यक्संस्थः प्रभञ्जनः।
मध्ये तु पृथिवी ज्ञेया नभः सर्व्वत्र सर्व्वदा।
ऊर्द्ध्वे मृत्युरधः शान्तिं तिर्य्यक् चोच्चाटयेत्
मध्ये स्तम्भं विजानीयान्मोक्षः सर्व्वत्र सर्व्वदा।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
पवनविजयादिर्नाम सप्तषष्टि-
तमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः।

सूत उवाच।

परीक्षां वच्मि रत्नानां बलो नामासुरोऽभवत्
इन्द्राद्या निर्ज्जितास्तेन निर्ज्जेतुं तैर्न शक्यते
वरव्याजेन पशुतां याचितः स सुरैर्मखे।
बलो ददौ स्वपशुतामतिसत्त्वो मखे हतः।
पशुवत् प्राविशत् स्तम्भे स्ववाक्यापनियन्त्रितः
बलो लोकोपकाराय देवानां हितकाम्यया
तस्य सर्व्वविशुद्धस्य विशुद्धेन च कर्म्मणा।
कायस्यावयवाः सर्व्वे रत्नवीजत्वमाययुः।
देवानामथ यक्षाणां सिद्धानां पवनाशिनाम्
रत्नवीजमयं ग्राहः सुमहानभवत् तदा।
तेषान्तु पततां वेगाद्विमानेन विहायसा।
यद्यत् पपात रत्नानां वीजं क्वचन किञ्चन
महोदधौ सरिति वा पर्व्वते कानने़ऽपि वा।
तत्तदाकरतां यातं स्थानमाधेयगौरवात्।
तेषु रक्षो-विषव्याल-व्याधिघ्नान्यघहानि च।
प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च ॥ ८

वज्रञ्च मुक्ता मणयः
सपद्मरागा मरकताः प्रोक्ताः।
अपि चेन्द्रनीलमणि-
वरवैदूर्य्याश्च पुष्परागाश्च ॥ ९
कर्क्केतनं सपुलकं
रुधिराख्यसमन्वितं तथा स्फटिकम्।
विद्रुममणिश्च यत्ना
दुद्दिष्टं संग्रहे तज्ज्ञैः ॥ १०

आकारवर्णौ प्रथमं
गुणदोषौ तत्‌फलं परीच्य च।
मूल्यञ्च रत्नकुशलै-
र्विज्ञेयं सर्व्वशास्त्राणाम्॥ ११
कुलन्नेषूपजायन्ते यानि चोपहतेऽहनि।
दोषैस्तानुपयुज्यन्ते हीयन्ते गुणसम्पदा॥ १२
परीचापरिशुद्धानां रत्नानां पृथिवीभुजा।
धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता॥ १३
शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीचकाः।
त एव मूल्यमात्राया वेत्तारः परिकीर्त्तिताः॥ १४
महाप्रभावं विबुधैर्यस्मादव्जमुदाहृतम्।
वज्रपूर्व्वा परीचेयं ततोऽस्माभिः प्रकीर्त्यते॥ १५
तस्यास्थिलेशो निपतात येषु
भुवः प्रदेशेषु कथञ्चिदेव।
वज्राणि वज्रायुधनिर्ज्जिगीषो-
र्भवन्ति नानाकृतिमन्ति तेषु॥ १६
हैम-मातङ्ग-सौराष्ट्राः पौण्ड्र-कालिङ्ग-कोशलाः।
वेखातटाः ससौवीरा वज्रस्याष्टविहारकाः॥ १७
आताम्रा हिमशैलजाश्च शशिभा-
वेखातटीयाः स्मृताः
सौवीरे त्वसिताब्जमेघसदृशा-
स्ताम्राश्च सौराष्ट्रजाः।
कालिङ्गाः कनकावदातरुचिराः
पीतप्रभाः कोशले
श्यामाः पुण्ड्रभवा मतङ्गविषये
नात्यन्तपीतप्रभाः॥ १८
अत्यर्थं लघु वर्णतश्च गुणवत्
पार्श्वेषु सम्यक् समम्।
रेखाविन्दुकलङ्ककाकपदक-
त्रासादिभिर्वर्ज्जितम्।
लोकेऽस्मिन् परमाणुमात्रमपि यद्-
वज्रं क्वचिद्दृश्यते
तस्मिन् देवसमाश्रयो ह्यवितथं
तीक्ष्णाग्रधारं यदि॥ १९
वेषु वर्णयुक्त्या देवानामपि विग्रहः प्रोक्तः।
स्यैश्च विभागः कार्य्यो वर्णाश्रयादेव॥ २०

हरित्-श्वेत-पीत-पिङ्ग-
श्याम-ताम्राः स्वभावतो रुचिराः।
हरि-वरुण-शक्र-हुतवह-
पितृपति-मरुतां स्वका वर्णाः॥ २१
विप्रस्य शङ्खकुमुदस्फटिकावदातः
स्यात् चत्रियस्य शशबभ्रुविलोचनाभः।
वैश्यस्य कान्तकदलीदलसन्निकाशः
शूद्रस्य धौतकरवालसमानदीप्तिः॥ २२
द्वौ वज्रवर्णौ पृथिवीपतीनां
सद्भिः प्रदिष्टौ न तु सार्व्वजन्यौ।
यः स्याज्जवाविद्रुमभङ्गशोणो
यो वा हरिद्रारससन्निकाशः॥ २३
ईशत्वात् सर्व्ववर्णानां गुणवत् सार्व्ववर्णिकम्।
कामतो धारयेद्राजा न त्वन्योऽन्यः कथञ्चन॥ २४
अधरोत्तरवृत्तो हि यादृक् स्याद्वर्णसङ्करः।
ततः कष्टतरो वज्री वर्णानां सङ्करो मतः॥ २५
न च मार्गविभागमात्रवृत्त्या
विदुषां वज्रपरिग्रहो विधेयः।
गुणवद्गुणसम्पदां विभूति-
र्विपरीतो व्यसनोदयस्य हेतुः॥ २६
एकमपि यस्य शृङ्गं
विदलितमवलोक्यते विशीर्णं वा।
गुणवदपि तन्न धार्य्यं
वज्रं श्रेयोऽर्थिभिर्भवने॥ १७
स्फुटिताग्निविशीर्णशृङ्गदेशं
मलवर्णैः पृषतैरुपेतमध्यम्।
न हि वज्रभृतोऽपि वज्रमाशु
श्रियमन्याश्रयलालसां न कुर्य्यात्॥ २८
यस्यैकदेशः चतजावभासो
यद्वा भवेल्लोहितवर्णचित्रम्।
न तन्न कुर्य्याद्ध्रियमाणमाशु
स्वच्छन्दमृत्योरपि जीवितान्तम्॥ २९
कोट्यः पार्श्वानि धाराश्च षड़ष्टौ द्वादशेति च।
उत्तुङ्गसमतीक्ष्णाग्रा वज्रस्याकरजा गुणाः॥ ३०
षट्कोटिशुद्धममलं स्फुटतीक्ष्णधारं
वर्णान्वितं लघु सुपार्श्वमपेतदोषम्।

इन्द्रायुधांशुविसृतिच्छुरितान्तरीच-
मेवंविधं भुवि भवेत् सुलभं न वज्रम् ॥ ३१
तीक्ष्णाग्रं विमलमपेतसर्व्वदोषं
धत्ते यः प्रयततनुः सदव वज्रम् ।
वृद्धिस्तं प्रतिदिनमेति यावदायुः
स्त्री-सम्पत्सुत-धन-धान्य-गो-पशूनाम् ॥ ३२
व्याल-वह्नि-विष-व्याघ्र-तस्कराम्बुभयानि च ।
दूरात् तस्य निवर्त्तन्ते कर्म्माण्याथर्व्वणानि च ॥ ३३
यदि वज्रमपेतसर्व्वदोषं
बिभृयात् तण्डुलविंशतिं गुरुत्वे ।
मणिशास्त्रविदो वदन्ति तस्य
द्विगुणं रूपकलक्षणञ्च मूल्यम् ॥ ३४
त्रिभागहीनार्द्धतदर्द्धशेषं
त्रयोदशं त्रिंशदतोऽर्द्धभागाः ।
अशीतिभागोऽथ शतांशभागः
सहस्रभागोऽल्पसमानयोगः ॥ ३५
यत्तण्डुलैर्द्वादशभिः कृतस्य
वज्रस्य मूल्यं प्रथमं प्रदिष्टम् ।
द्वाभ्यां क्रमाद्धानिमुपागतस्य
तेकावसानस्य विनिश्चयोऽयम् ॥ ३६
न चापि तण्डुलैरेव वज्राणां धारणक्रमः ।
अष्टाभिः सर्षपैर्गौरैस्तण्डुलं परिकल्पयेत् ॥ ३७
यत् तु सर्व्वगुणैर्युक्तं वज्रं तरति वारिणि ।
रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥ ३८
अल्पेनापि हि दोषेण लक्ष्यालक्ष्येण दूषितम् ।
स्वमूल्याद्दशमं भागं वज्रं लभति मानवः ॥ ३९
प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि वा ।
स्वमूल्याच्छतशो भागो वज्रस्य न विधीयते ॥ ४०
स्पष्टदोषमलङ्कारे वज्रं यद्यपि दृश्यते ।
रत्नानां परिकल्पार्थं मूल्यं तस्य भवेल्लघु ॥ ४१
प्रथमं गुणसम्पदाभ्युपेतं
प्रतिबद्धं समुपति यच्च दोषम् ।
अलमाभरणेन तस्य राज्ञो
गुणहीनोऽपि मणिर्न भूषणाय ॥ ४२
नार्य्या वज्रमधार्य्यं
गुणवदपि सुतप्रसूतिमिच्छन्त्या ।
अन्यत्र दीर्घचिपिट-
त्र्यस्राद्गुणैर्विमुक्ताच्च ॥ ४३
अयसा पुष्परागेण तथा गोमेदकेन च ।
वैदूर्य्यस्फटिकाभ्याञ्च काचैश्चापि पृथग्विधैः ।
प्रतिरूपाणि कुर्व्वन्ति वज्रस्य कुशला जना
परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः ।
क्षारोल्लेखनशालाभिस्तेषां कार्य्यं परीक्षण
पृथिव्यां यानि रत्नानि ये चान्ये लोहधातव
सर्व्वाणि विलिखेद्वज्रं तच्च तैर्न विलिख्यते ।
गुरुता सर्व्वरत्नानां गौरवाधारकारणम् ।
वज्रे तां वैपरीत्येन सूरयः परिचक्षते ॥
जातिरजातिं विलिखति
जातिं विलिखन्ति वज्रकुरुविन्दाः ।
वज्रैर्वज्रं विलिखति
नान्येन विलिख्यते वज्रम् ॥ ४८
वज्राणि मुक्तामणयो ये च केचन जातयः ।
न तेषां प्रतिबद्धानां भा भवत्यूर्द्धगामिनी ॥
तिर्य्यक्क्षततलात् केषाञ्चित् कथञ्चिद्यदि द
तिर्य्यगालिख्यमानानां स पार्श्वेषु विहन्यते ।
यद्यपि विशीर्णकोटिः
सबिन्दुरेखान्वितो विवर्णो वा ।
तदपि धनधान्यं पुत्रान्
करोति सेन्द्रायुधो वज्रः ॥ ५१
सौदामिनीविस्फुरिताभिरामं
राजा यथोक्तं कुलिशं दधानः ।
पराक्रमाक्रान्तपरप्रतापः
समस्तसामन्तभुवं भुनक्ति ॥ ५२

इति श्रीगारुड़े महापुराणे पूर्व्वख
वज्रपरीक्षा नामाष्टषष्टि-
तमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः ।

सूत उवाच ।

द्विपेन्द्र-जीमूत-वराह-शङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजानि ।

## एकोनसप्ततितमोऽध्यायः ।

मुक्ताफलानि प्रथितानि लोके
तेषाञ्च शुक्त्युद्भवमेव भूरि ॥ १
तत्रैव चैकस्य हि मूलमात्रा
निविश्यते रत्नपरस्य जातु ।
वेध्यन्तु शुक्त्युद्भवमेव तेषां
शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः ॥ २
लक्ष्मारनागेन्द्रतिमिप्रसूतं
वच्छुद्भजं यच्च वराहजातम् ।
प्रायो विमुक्तानि भवन्ति भासा
शस्तानि माङ्गल्यतया तथापि ॥ ३
या मौक्तिकानामिह जातयोऽष्टौ
प्रकीर्त्तिता रत्नविनिश्चयज्ञैः ।
कम्बूद्भवं तेष्वधमं प्रदिष्ट-
मुत्पद्यते यच्च गजेन्द्रकुम्भात् ॥ ४
स्वयोनिमध्यच्छवितुल्यवर्णा
शाङ्खं बृहत्कोलफलप्रमाणम् ।
उत्पद्यते वारणकुम्भमध्या-
दापीतवर्णं प्रभया विहीनम् ॥ ५
ये कम्बवः शाङ्गमुखावमर्ष
पीतस्य शङ्खप्रवरस्य गोत्रे ।
मतङ्गजाश्चापि विशुद्धवंश्या-
स्ते मौक्तिकानां प्रवराः प्रदिष्टाः ।
उत्पद्यते मौक्तिकमेषु वृत्त-
मापीतवर्णं प्रभया विहीनम् ॥ ६
पाठीनपृष्ठस्य समानवर्णं
मीनात् सुवृत्तं लघु चातिसूक्ष्मम् ।
उत्पद्यते वारिचराननेषु
मत्स्याश्च ते मध्यचराः पयोधेः ॥ ७
वराहदंष्ट्राप्रभवं प्रदिष्टं
तस्यैव दंष्ट्राङ्कुरतुल्यवर्णम् ।
क्वचित् कथञ्चित् स भुवः प्रदेशे
प्रजायते शूकरवद्विशिष्टः ॥ ८
वर्षोपलानां समवर्णशोभं
त्वक्सारपर्व्वप्रभवं प्रदिष्टम् ।
ते वेणवो दिव्यजनोपभोग्ये
स्थाने प्ररोहन्ति न सार्व्वजन्ये ॥ ९

शौजङ्गमं मीनविशुद्धवृत्तं
संस्थानतोऽत्युज्ज्वलवर्णशोभम् ।
नितान्तधौतप्रविकम्पमान-
निस्त्रिंशधारासमवर्णकान्ति ॥ १०
प्राप्येति रत्नानि महाप्रभाणि
राज्यं श्रियं वा महतीं दुरापाम् ।
पात्रं हि नापुण्यकृतो भवन्ति
मुक्ताफलस्याहिशिरोभवस्य ॥ ११
जिज्ञासया रत्नधनं विधिज्ञैः
शुभे मुहूर्त्ते प्रयतैः प्रयत्नात् ।
रक्षाविधानं सुमहद्विधाय
हर्म्योपरिष्ठं क्रियते यदा तत् ॥ १२
तदा महादुन्दुभिमन्द्रघोषै-
र्विद्युल्लताविस्फुरितान्तरालैः ।
पयोधराक्रान्तिविलम्बिनम्र-
र्घनैर्घनैराव्रियतेऽन्तरीक्षम् ॥ १३
न तं भुजङ्गा न च जातुधाना
न व्याधयो नाप्युपसर्गदोषाः ।
हिंसन्ति यस्याहिशिरःसमुत्थं
मुक्ताफलं तिष्ठति कोषमध्ये ॥ १४
नाश्येति मेघप्रभवं धरित्रीं
वियद्गतं तद्विबुधा हरन्ति ।
शश्चिःप्रभानावृतदिग्विभाग-
मादित्यवद्दुःखविभाव्यविम्बम् ॥ १५
तेजस्तिरस्कृत्य हुताशनेन्दु-
नक्षत्रताराप्रभवं समग्रम् ।
दिवा यथा दीप्तिकरं तथैव
तमोऽवगाढास्वपि तन्निशासु ॥ १६
विचित्ररत्नद्युतिचारुतोय-
चतुःसमुद्रा भवनाभिरामा ।
मूल्यं न वा स्यादिति निश्चयो मे
कृत्स्ना मही तस्य सुवर्णपूर्णा ॥ १७
हीनोऽपि यस्तल्लभते कदाचिद्-
विपाकयोगान्महतः शुभस्य ।
सपत्नहीनां स महीं समग्रां
भुनक्ति तत् तिष्ठति यावदेव ॥ १८

न केवलं तच्छुभकृन्नृपस्य
भाग्यैः प्रजानामपि तस्य जन्म ।
तद्वयोजनानां परितः सहस्रं
सर्व्वाननर्थान् विमुखीकरोति ॥ १९

नक्षत्रमालेव दिवो विशीर्णा
दन्तावली तस्य महासुरस्य ।
विचित्रवर्णेषु विशुद्धवर्णा
पयःसु पत्युः पयसां पपात ॥ २०

सम्पूर्णचन्द्रांशुकलापकान्ते-
र्मणिप्रवेकस्य महागुणस्य ।
तच्छुक्तिमत्सु स्थितिमाप वीज-
मासन् पुराण्यन्यभवानि यानि ॥ २१

यस्मिन् प्रदेशेऽम्बुनिधौ पपात
सुचारुमुक्तामणिरत्नवीजम् ।
तस्मिन् पयस्तोयधरावकीर्णं
शुक्तौ स्थितं मौक्तिकतामवाप ॥ २२

सैंहलिक-पारलौकिक-
सौराष्ट्रिक-ताम्रपर्णी-पारशवाः ।
कौबेर-पाण्ड्य-हाटक-
हैमका इत्याकरास्त्वष्टौ ॥ २३

शुक्त्युद्भवं नातिनिकृष्टवर्णं
प्रमाणसंस्थानगुणप्रभाभिः ।
उत्पद्यते वर्द्धनपारसीक-
पाताललोकान्तरसिंहलेषु ॥ २४

चिन्त्या न तस्याकरजा विशेषा
रूपे प्रमाणे च यतेत विद्वान् ।
न च व्यवस्थास्ति गुणागुणेषु
सर्व्वत्र सर्व्वाकृतयो भवन्ति ॥ २५

एकस्य शुक्तिप्रभवस्य मुक्ता-
फलस्य माषेण समुन्मितस्य ।
मूल्यं सहस्राणि तु रूपकाणां
त्रिभिः शतैरप्यधिकानि पञ्च ॥ २६

यन्माषकार्द्धेन ततो विहीनं
तत् पञ्चभागद्वयहीनमूल्यम् ।
यन्माषकांस्त्रीन् बिभृयात् सहस्रे
द्वे तस्य मूल्यं परमं प्रदिष्टम् ॥ २७

अर्द्धाधिकौ द्वौ वहतोऽस्य मूल्यं
त्रिभिः शतैरप्यधिकं सहस्रम् ।
द्विमाषकोन्मापितगौरवस्य
शतानि चाष्टौ कथितानि मूल्यम् ॥ २८

अर्द्धाधिकं माषकमुन्मितस्य
स पञ्चविंशत् त्रितयं शतानाम् ।
गुञ्जाश्च षड् धारयतः शते द्वे
मूल्यं परं तस्य वदन्ति तज्ज्ञाः ।
अध्यर्द्धमुन्मापकृतं शतं स्या-
न्मूल्यं गुणैस्तस्य समन्वितस्य ॥ २९

यदि षोड़शभिर्भवेदनूनं
धरणं तत् प्रवदन्ति दार्व्विकाख्यम् ।
अधिकं दशभिः शतञ्च मूल्यं
समवाप्नोत्यपि बालिशस्य हस्तात् ॥ ३०

द्विगुणैर्दशभिर्भवेदनूनं
धरणं तद्भवकं वदन्ति तज्ज्ञाः ।
नवसप्ततिमाप्नुयात् स्वमूल्यं
यदि न स्याद्गुणसम्पदा विहीनम् ॥ ३१

त्रिंशता धरणं पूर्णं शिक्यं तस्येति कीर्त्त्यते ।
चत्वारिंशद्भवेत् तस्याः परो मूल्यविनिश्चयः ॥ ३२

चत्वारिंशद्भवेच्छिकुथो त्रिंशन्मूल्यं लभेत सा ।
षष्टिर्निकरशीर्षं स्यात् तस्य मूल्यं चतुर्द्दश ॥ ३३

अशीतिर्नवतिश्चैव कुप्येति परिकीर्त्तिता ।
एकादश स्यान्नव च तयोर्मूल्यमनुक्रमात् ॥ ३४

आदाय तत् सकलमेव ततोऽन्नभाण्डं
जम्बीरजातरसयोजनया विपक्वम् ।
घृष्टं ततो मृदुतनूकृतपिण्डमूलैः
कुर्य्याद्यथेष्टमनुमौक्तिकमाशु विद्धम् ॥ ३५

मृल्लिप्तमत्स्यपुटमध्यगतन्तु कृत्वा
पश्चात् पचेत् तनु ततश्च वितानपच्या ।
दुग्धे ततः पयसि तं विपचेत् सुरायां
पक्वं ततोऽपि पयसा शुचिचिक्कणेन ॥ ३६

शुद्धं ततो विमलवस्त्रनिघर्षणेन
स्यान्मौक्तिकं विपुलसद्गुणकान्तियुक्तम् ।
व्याड़िर्जगाद जगतां हि महाप्रभाव-
सिद्धो विदग्धहिततत्परया दयालुः ॥ ३७

श्वेतकाचसद्म तारं श्वेमांश्मतयोजितम् ।
रसमध्ये प्रधार्ष्यत मौक्तिकं देहभूषणम् ।
एवं हि सिंहले देशे कुर्व्वन्ति कुशला जनाः ॥ ३८
यस्मिन् कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके ।
उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले ॥ ३९
व्रीहिभिर्मर्द्दनीयं वा शुष्कवस्त्रोपवेष्टितम् ।
यत् तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥ ४०
सितं प्रमाणवत् स्निग्धं गुरु स्वच्छं सुनिर्म्मलम् ।
तेजोऽधिकं सुवृत्तञ्च मौक्तिकं गुणवत् स्मृतम् ॥ ४१
प्रमाणवद्गौरवरश्मियुक्तं
सितं सुवृत्तं समसूक्ष्मवेधम् ।
अक्रेतुरप्यावहति प्रमोदं
यन्मौक्तिकं तद्गुणवत् प्रदिष्टम् ॥ ४२
एवं समस्तेन गुणोदयेन
यन्मौक्तिकं योगमुपागतं स्यात् ।
न तस्य भर्त्तारमनर्थजात
एकोऽपि कश्चित् समुपैति दोषः ॥ ४३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
मुक्ताफलपरीक्षा नामैकोनसप्तति-
तमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः ।

सूत उवाच ।

दिवाकरस्तस्य महामहिम्नो
महासुरस्योत्तमरत्नबीजम् ।
असृग्गृहीत्वा चरितुं प्रतस्थे
निस्त्रिंशनीलेन नभस्तलेन ॥ १
जेता सुराणां समरेष्वजस्रं
वीर्य्यावलेपोद्धतमानसेन ।
लङ्काधिपेनार्द्धपथं समेत्य
स्वर्भानुनेव प्रसभं निरुद्धः ॥ २
तत् सिंहलीचारुनितम्बविम्ब-
विक्षोभिताागाधमहाह्रदायाम् ।
पूगद्रुमाबद्धतटद्वयायां
मुमोच सूर्य्यः सरिदुत्तमायाम् ॥ ३
ततः प्रभृति सा गङ्गा-तुल्यपुण्यफलोदया ।
नाम्ना रावणगङ्गेति प्रथिमानमुपागता ॥ ४
ततः प्रभृत्येव च शर्व्वरीषु
कूलानि रत्नैर्निचितानि तस्याः ।
सुवर्णनाराचशतैरिवान्त-
र्वह्निःप्रदीप्तैर्निचितानि भान्ति ॥ ५
तस्यास्तटेषूज्ज्वलचारुरागा
भवन्ति तोयेषु च पद्मरागाः ।
सौगन्धिकोत्थाः कुरुविन्दजाश्च
महागुणाः स्फाटिकसम्प्रसूताः ॥ ६
बन्धूकगुञ्जासकलेन्द्रगोप-
जवासमासृक्समवर्णशोभाः ।
भ्राजिष्णवो दाड़िमबीजवर्णा-
स्तथापरे किंशुकपुष्पभासः ॥ ७
सिन्दूर-पद्मोत्पल-कुङ्कुमानां
लाक्षारसस्यापि समानवर्णाः ।
सान्द्रेऽपि रागे प्रभया स्वयैव
भान्ति स्वलक्ष्या स्फुटमध्यशोभाः ॥ ८
भानोश्च भासामनुवेधयोग-
मासाद्य रश्मिप्रकरेण दूरम् ।
पार्श्वानि सर्व्वाण्यनुरञ्जयन्ति
गुणोपपन्नाः स्फटिकप्रसूताः ॥ ९
कुसुम्भनीलव्यतिमिश्रराग-
प्रत्यग्ररक्ताम्बुजतुल्यभासः ।
तथापरेऽसृक्करकण्टकारी-
पुष्पत्विषो हिङ्गुलवत्त्विषोऽन्ये ॥ १०
चकोर-पुंस्कोकिल-सारसानां
नेत्रावभासश्च भवन्ति केचित् ।
अन्ये पुनर्नातिविपुष्पितानां
तुल्यत्विषः कोकनदोत्तमानाम् ॥ ११
प्रभाव-काठिन्य-गुरुत्वयोगैः
प्रायः समानाः स्फटिकोद्भवानाम् ।
आनीलरक्तोत्पलचारुभासः
सौगन्धिकोत्था मणयो भवन्ति ॥ १२
कामन्तु रागः कुरुविन्दजेषु
स नैव यादृक् स्फटिकोद्भवेषु ।

निरर्च्चिषोऽन्तर्बहुला भवन्ति
प्रभाववन्तोऽपि न तैः समस्तैः ॥ १३
ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः ।
पद्मरागघनं रागं बिभ्राणाः स्फटिकार्च्चिषः ॥ १४
वर्णानुयायिनस्तेषामन्ध्रदेशे तथापरे ।
न जायन्ते हि ये केचिन्मूल्यलेशमवाप्नुयुः ॥ १५
तद्वत् स्फाटिकोत्थानां देशे तुम्बुरुसंज्ञके ।
[illegible]ः प्रजायन्ते स्वल्पमूल्या हि ते स्मृताः ॥ १६
वर्णाधिक्यं गुरुत्वञ्च स्निग्धता समताच्छता ।
अर्च्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥ १७
ये कर्करच्छिद्रमलोपदिग्धाः
प्रभाविमुक्ताः परुषा विवर्णाः ।
न ते प्रशस्ता मणयो भवन्ति
समानतो जातिगुणैः समस्तैः ॥ १८
दोषोपसृष्टं मणिमप्रबोधा-
द्बिभर्त्ति यः कश्चन कश्चिदेव ।
तं शोकचिन्तामयमृत्युवित्त-
नाशादयो दोषगणा भजन्ति ॥ १९
आशं चारुतराः सन्ति(क)जातीनां प्रतिरूपकाः ।
विजातयः प्रयत्नेन विद्वांस्तानुपलक्षयेत् ॥ २०
कलसपुरोद्भव-सिंहल-
तुम्बुरुदेशोत्थमुक्तपानीयाः ।
श्रीपूर्णकाश्च सदृशा
विजातयः पद्मरागाणाम् ॥ २१
तुषोपसर्गात् कलसाभिधान-
माताम्रभावादपि तुम्बुरूत्थम् ।
कार्ष्ण्यात् तथा सिंहलदेशजातं
मुक्ताभिधानं नभसः स्वभावात् ॥ २२
श्रीपूर्णकं दीप्तिविनाकृतत्वाद्-
विजातिलिङ्गाश्रय एष भेदः ।
यस्ताम्रिकां पुष्यति पद्मरागो
योगात् तुषाणामिव पूर्णमध्यः ॥ २३
स्नेहप्रदिग्धः प्रतिभाति यश्च
यो वा प्रमृष्टः (ख) प्रजहाति दीप्तिम् ।

आक्रान्तमूर्द्धा च तथाङ्गुलिभ्यां
यः कालिकां पार्श्वगतां बिभर्त्ति ॥ २४
सम्प्राप्य चोत्क्षेपपथानुवृत्तिं
बिभर्त्ति यः सर्व्वगुणानतीव ।
तुल्यप्रमाणस्य च तुल्यजाते-
र्यो वा गुरुत्वेन भवेत् तु तुल्यः ।
प्राप्यापि रत्नाकरजां स्वजातिं
लक्षेद्गुरुत्वेन गुणेन विद्वान् ॥ २५
अप्रणश्यति सन्देहे शालायां परिलेखयेत् ।
स्वजातकसमुत्थेन लिखित्वापि परस्परम् ॥
वज्रं वा कुरुविन्दं वा विमुच्यानेन केनचित् ।
नाशक्यं लेखनं कर्त्तुं पद्मरागेन्द्रनीलयोः ॥
जातस्य सर्व्वोऽपि मणेर्न जातु
विजातयः सन्ति समानवर्णाः ।
तथापि नामाकरणार्थमेव
भेदप्रकारः परमः प्रदिष्टः ॥ २८
गुणोपपन्नेन सहावबद्धो
मणिस्तु धार्य्यो विगुणोऽपि जात्यः ।
न कौस्तुभेनापि सहावबद्धं
विद्वान् विजातिं बिभृयात् कदाचित् ॥
चण्डाल एकोऽपि यथा द्विजातीन्
समेत्य भूरीनपि हन्त्ययत्नात् ।
तथा मणीन् भूरिगुणोपपन्नान्
शक्नोति विप्लावयितुं विजातिः ॥ ३०
सपत्नमध्येऽपि कृताधिवासं
प्रमादवृत्तावपि वर्त्तमानम् ।
न पद्मरागस्य महागुणस्य
भर्त्तारमापत् स्पृशतीह काचित् ॥ ३१
दोषोपसर्गप्रभवाश्च ये ते
नोपद्रवास्तं समभिद्रवन्ति ।
गुणैः समुत्तेजितचारुरागं
यः पद्मरागं प्रयतो बिभर्त्ति ॥ ३२
वज्रस्य यत् तण्डुलसंख्ययोक्तं
मूल्यं समुत्पादितगौरवस्य ।
तत् पद्मरागस्य महागुणस्य
तन्माषकस्याकलितस्य मूल्यम् ॥ ३३

(क) पद्मेति क्वचित् पुस्तके पाठः ।
(ख) प्रदृष्ट इति वा पाठः ।

वर्णदोषत्रयपन्नं हि मणिरत्नं प्रशस्यते ।
ताभ्यामीषदपि भ्रष्टं मणिर्मूल्यात् प्रहीयते ॥ ३४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
पद्मरागपरीक्षा नाम सप्तति-
तमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः ।

सूत उवाच ।

दानवाधिपतेः पित्तमादाय भुजगाधिपः ।
द्विधा कुर्व्वन्निव व्योम सत्वरं वासुकिर्ययौ ॥ १
स तदा स्वशिरोरत्न-प्रभादीप्ते नभोऽम्बुधौ ।
राजतः स महानेकः खण्डसेतुरिवाबभौ ॥ २
ततः पक्षनिपातेन संहरन्निव रोदसी ।
गरुत्मान् पन्नगेन्द्रस्य प्रहर्त्तुमुपचक्रमे ॥ ३
सहसैव मुमोच तत् फणीन्द्रः
सुरसाभ्युन्नततुरुष्कपादपायाम् ।
नलिकावनगन्धवासितायां
वरमाणिक्यगिरेरुपत्यकायाम् ॥ ४
तस्य प्रपातसमनन्तरकालमेव
तद्दरालयमतीत्य रमासमीपे ।
स्थानं क्षितेरुपपयोनिधितीरलेखं
तत्प्रत्ययान्मरकताकरतां जगाम ॥ ५
तत्रैव किञ्चित् पततस्तु पित्ता-
दुपेत्य जग्राह ततो गरुत्मान् ।
मूर्च्छापरीतः सहसैव घोणा-
रन्ध्रद्वयेन प्रमुमोच सर्व्वम् ॥ ६
तत्राकठोरशुककण्ठ-शिरीषपुष्प-
खद्योतपृष्ठचरशाद्वलशैवलानाम् ।
कह्लार-शसक-भुजङ्गभुजाञ्च पत्र-
प्रान्तत्विषो मरकताः शुभदा भवन्ति ॥ ७
तद्वयत्र भोगीन्द्रभुजाभिमुक्तं
पपात पित्तं दितिजाधिपस्य ।
तस्याकरस्याततरां स देशो
दुःखोपलभ्यश्च गुणैश्च युक्तः ॥ ८
तस्मिन् मरकतस्थाने यत् किञ्चिदुपजायते ।
तत् सर्व्वं विषरोगाणां प्रशमाय प्रकीर्त्त्यते ॥ ९
सर्व्वमन्त्रौषधिगणैर्यन्न शक्यं चिकित्सितुम् ।
महाहिदंष्ट्राप्रभवं विषं तत् तेन शाम्यति ॥ १०
अन्यदप्याकरे तत्र यद्दोषैरुपवर्ज्जितम् ।
जायते तत् पवित्राणामुत्तमं परिकीर्त्तितम् ॥ ११
अत्यन्तहरितवर्णं
कोमलमर्च्चिर्विभेदजटिलञ्च ।
काञ्चनचूर्णस्यान्तः
पूर्णमिव लक्ष्यते यच्च ॥ १२
युक्तं संस्थानगुणैः
समरागं गौरवेण चाहीनम् ।
सवितुः करसंस्पर्शा-
च्छुरयति सर्व्वाश्रयं दीप्त्या ॥ १३
हित्वा च हरितभासं
यस्यान्तर्विनिहिता भवेद्दीप्तिः ।
अचिरप्रभाप्रभाहत-
शाद्वलसन्निभा भाति ॥ १४
यच्च मनसः प्रसादं
विदधाति निरीक्षितमतिमात्रम् ।
तन्मरकतं महागुण-
मिति रत्नविदां मनोवृत्तिः ॥ १५
वर्णस्यातिबहुत्वाद्
यस्यान्तःस्वच्छकिरणपरिधानम् ।
सान्द्रस्निग्धविशुद्धं
कोमलवर्हप्रभादिसमकान्ति ॥ १६
वर्णोज्ज्वलया कान्त्या
सान्द्राकारो विभासया भाति ।
तदपि न गुणवत्संज्ञा-
माप्नोति हि यादृशीं पूर्व्वम् ॥ १७
शबलकठोरमलिनं
रूक्षं पाषाणकर्करोपेतम् ।
दिग्धञ्च शिलाजतुना
मरकतमेवंविधं विगुणम् ॥ १८
यत्सन्धिशेषितं रत्नमन्यन्मरकताद्भवेत् ।
श्रेयस्कामैर्न तद्धार्य्यं क्रेतव्यं वा कथञ्चन ॥ १९
भल्लातकी पुत्त्रिका च तद्वर्णसमयोगतः ।

मणेर्मरकतस्यैते लक्षणीया विजातयः ॥ २०
क्षौमेण वाससा मृष्टा दीप्तिं त्यजति पुत्रिका ।
लाघवेनैव काचस्य शक्या कर्त्तुं विभावना ॥ २१
कस्यचिदनेकरूपैर्मरकतमनुगच्छतोऽपि गुणवर्णैः ।
भल्लातकस्यानिलैर्वैषम्यमुपैति वर्णस्य ॥ २२
वज्राणि मुक्ताः सन्त्यन्ये ये च केचिद्विजातयः ।
तेषां नाप्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी ॥ २३
ऋजुत्वाच्चैव केषाञ्चित् कथञ्चिदुपजायते ।
तिर्य्यगालोच्यमानानां सद्यस्त्वेव प्रणश्यति ॥ २४
स्नानाचमनजप्येषु रक्षामन्त्रक्रियाविधौ ।
ददद्भिर्गोहिरण्यानि कुर्व्वद्भिः साधनानि च ॥ २५
दैवपित्रातिथेयेषु गुरुसम्पूजनेषु च ।
बाध्यमानेषु विविधैर्दोषजातैर्विषाङ्गवैः ॥ २६
दोषैर्हीनं गुणैर्युक्तं काञ्चनप्रतियोजितम् ।
संग्रामे विचरद्भिश्च धार्य्यं मरकतं बुधैः ॥ २७
तुलया पद्मरागस्य यन्मूल्यमुपजायते ।
लभतेऽप्यधिकं तस्माद्गुणैर्मरकतं युतम् ॥ २८
तथा च पद्मरागाणां दोषैर्मूल्यं प्रहीयते ।
तस्माद्दाप्यधिका हानिर्दोषैर्मरकते भवेत् ॥ २९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
मरकतपरीक्षा नामैकसप्तति-
तमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ।

सूत उवाच ।

तत्रैव सिंहलवधूकरपल्लवाग्र-
व्यालूनबाललवलीकुसुमप्रवाले ।
देशे पपात दितिजस्य नितान्तकान्तं
प्रोत्फुल्लनीरजसमद्युति नेत्रयुग्मम् ॥ १
तत्प्रत्ययादुभयशोभनवीचिभासा
विस्तारिणी जलनिधेरुपकच्छभूमिः ।
प्रोद्भिन्नकेतकवनप्रतिबद्धलेखा
सान्द्रेन्द्रनीलमणिरत्नवती विभाति ॥ २
तत्रासिताब्ज-हलभृद्वसनासि-भृङ्ग-
शार्ङ्गायुधाङ्ग-हरकण्ठ-कलायपुष्पैः ।
शुभ्रेतरैश्च कुसुमैर्गिरिकर्णिकाया-
स्तस्माद्भवन्ति मणयः सदृशावभासः ।
अन्ये प्रसन्नपयसः पयसां निधातु-
रम्बुत्विषः शिखिगलप्रतिमास्तथान्ये
नीलीरसप्रभवबुद्बुदभाश्च केचित्
केचित् तथा समदकोकिलकण्ठभासः
एकप्रकारा विसृष्टवर्णशोभावभासिनः ।
जायन्ते मणयस्तस्मिन्निन्द्रनीला महागुणाः
मृत्-पाषाण-शिला-रन्ध्र-कर्करा-त्राससंयुताः
अभ्रिकापटलच्छायावर्णदोषैश्च दूषिताः ॥
तत एव हि जायन्ते मणयस्तत्र भूरयः ।
शास्त्रसम्बोधितधियस्तान् प्रशंसन्ति सूरयः
धार्य्यमाणस्य ये दृष्टा पद्मरागमणेर्गुणाः ।
धारणादिन्द्रनीलस्य तानेवाप्नोति मानवः ।
यथा च पद्मरागाणां जातकत्रितयं भवेत् ।
इन्द्रनीलेष्वपि तथा द्रष्टव्यमविशेषतः ॥ ८
परीक्षाप्रत्ययैर्यैश्च पद्मरागः परीक्ष्यते ।
तत्रैव प्रत्यया दृष्टा इन्द्रनीलमणेरपि ॥ १०
यावन्तं चंक्रमेदग्निं पद्मरागोपयोगतः ।
इन्द्रनीलमणिस्तस्मात् क्रमेत सुमहत्तरम् ॥ ११
तथापि न परीक्षार्थं गुणानामभिवृद्धये ।
मणिरग्नौ समाधेयः कथञ्चिदपि कश्चन ॥ १२
अग्निमात्रापरिज्ञाने दाहदोषैश्च दूषितः ।
सोऽनर्थाय भवेद्भर्त्तुः कर्त्तुः कारयितुस्तथा ॥ १३
काचोत्पलकरवीर-
स्फटिकाद्या इह बुधैः सवैदूर्य्याः ।
कथिता विजातय इमे
सदृशा मणिनेन्द्रनीलेन ॥ १४
गुरुभाव-कठिनभावा-
वेतेषां नित्यमेव विज्ञेयौ ।
काचाद्दयथावदुत्तर-
विवर्द्धमानौ विशेषेण ॥ १५
इन्द्रनीलो यथा कश्चिद्बिभर्त्त्याताम्रवर्णताम् ।
रक्षणीयौ तथा ताम्रौ करवीरोत्पलावुभौ ॥
यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा ।
तमिन्द्रनीलमित्याहुर्महार्हं भुवि दुर्लभम् ॥ १६

यस्तु वर्णस्य भूयस्त्वात् क्षीरे शतगुणे स्थितः।
नीलतां तन्नयेत् सर्व्वं महानीलः स उच्यते ॥ १८
यत् पद्मरागस्य महागुणस्य
मूल्यं भवेन्माषसमन्वितस्य।
तदिन्द्रनीलस्य महागुणस्य
वर्णस्य संख्याकुलितस्य मूल्यम् ॥ १९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
इन्द्रनीलपरीक्षा नाम द्विसप्तति-
तमोऽध्यायः ॥ ७२ ॥

---

## त्रिसप्ततितमोऽध्यायः।

सूत उवाच।

वैदूर्य्यपुष्परागाणां कर्कैत-भीष्मके वदे।
परीक्षां ब्रह्मणा प्रोक्तां व्यासेन कथितां द्विज ॥ १
कल्पान्तकालक्षुभिताम्बुराशे-
निर्ह्रादकल्पाद्दितिजस्य नादात्।
वैदूर्य्यमुत्पन्नमनेकवर्णं
शोभाभिरामद्युतिवर्णबीजम् ॥ २
अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः।
कामभूतिकसीमानमनु तस्याकरो भवेत् (क) ॥ ३
स्य नामसमुत्थत्वादाकरः सुमहागुणः।
अभूदुत्तरितो लोके लोकत्रयविभूषणः ॥ ४
तस्यैव दानवपतेर्निनदानुरूपाः
प्रावृट्पयोदवरदर्शितचारुरूपाः।
वैदूर्य्यरत्नमणयो विविधावभास-
स्तस्मात् स्फुलिङ्गनिवहा इव सम्बभूवुः ॥ ५
पद्मरागमुपादाय मणिवर्णा हि ये क्षितौ।
सर्व्वांस्तान् वर्णशोभाभिर्वैदूर्य्यमनुगच्छति ॥ ६
तेषां प्रधानं शिखिकण्ठनीलं
यद्वा भवेद्वेणुदलप्रकाशम्।
चाषाग्रपक्षप्रतिमश्रियो ये
न ते प्रशस्ता मणिशास्त्रविद्भिः ॥ ७
गुणवान् वैदूर्य्यमणि-
र्योजयति स्वामिनं वरभाग्यैः।
दोषैर्युक्तो दोषै-
स्तस्माद्यत्नात् परीक्षेत ॥ ८
गिरिकाचकशिशुपालौ
काचस्फटिकाश्च धूमनिर्भिन्नाः।
वैदूर्य्यमणेरेते
विजातयः सन्निभाः सन्ति ॥ ९
लिख्याभावात् काचं
लघुभावाच्छैशुपालकं विद्यात्।
गिरिकाचमदीप्तित्वात्
स्फटिकं वर्णोज्ज्वलत्वेन ॥ १०
यदिन्द्रनीलस्य महागुणस्य
सुवर्णसंख्याकलितस्य मूल्यम्।
तदेव वैदूर्य्यमणेः प्रदिष्टं
पलद्वयोन्मापितगौरवस्य ॥ ११
जात्यस्य सर्व्वेऽपि मणेस्तु यादृग्-
विजातयः सन्ति समानवर्णाः।
तथापि नानाकरणानुमेय-
भेदप्रकारः परमः प्रदिष्टः ॥ १२
सुखोपलक्ष्यश्च सदा विचार्य्यौ
ह्ययं प्रभेदो विदुषा नरेण।
स्नेहप्रभेदो लघुता मृदुत्वं
विजातिलिङ्गं खलु सार्व्वजन्यम् ॥ १३
कुशलाकुशलैः प्रपूर्य्यमाणाः
प्रतिबद्धाः प्रतिसत्क्रियाप्रयोगैः।
गुणदोषसमुद्भवं लभन्ते
मणयोऽर्थान्तरमूल्यमेव भिन्नाः ॥ १४
क्रमशः समतीतवर्त्तमानाः
प्रतिबद्धा मणिबन्धकेन यत्नात्।
यदि नाम भवन्ति दोषहीना
मणयः षड्गुणमाप्नवन्ति मूल्यम् ॥ १५
आकारान् समतीतानामुदधेस्तीरसन्निधौ।
मूल्यमेतत् मणीनान्तु न सर्व्वत्र महीतले ॥ १६
सुवर्णो मनुना यस्तु प्रोक्तः षोड़शमाषकः।
तस्य सप्ततमो भागः संज्ञारूपं करिष्यति ॥ १७

(क) काकनालीयसीमान्ते मणीनामाकरो भवे- इति कुमारसम्भवटीकायां मल्लिनाथेन पठितम्।

आणश्चतुर्म्माषमानो माषकः पञ्चकृष्णलः।
फलस्य दशमो भागो धरणः परिकीर्त्तितः।
इति मणिविधिः प्रोक्तो रत्नानां मूल्यनिश्चये ॥ १८

इति श्रीगारुड़े पूर्व्वखण्डे वैदूर्य्यपरीक्षा नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः।

सूत उवाच।

पतिता या हिमाद्रौ तु त्वचस्तस्य सुरद्विषः।
प्रादुर्भवन्ति ताभ्यस्तु पुष्परागा महागुणाः ॥ १
आपीतपाण्डुरुचिरः
पाषाणः पुष्परागसंज्ञस्तु।
कौरुण्डकनामा स्यात्
स एव यदि लोहितापीतः ॥२
आलोहितस्तु पीतः
स्वच्छः काषायकः स एवोक्तः।
आनीलशुक्लवर्णः
स्निग्धः सोमानकः सगुणः ॥ ३
अत्यन्तलोहितो यः
स एव खलु पद्मरागसंज्ञः स्यात्।
अपि चेन्द्रनीलसंज्ञः
स एव कथितः सुनीलः सन् ॥ ४
मूल्यं वैदूर्य्यमणे-
रिव गदितं ह्यस्य रत्नशास्त्रविदा।
धारणफलञ्च तद्वत्
किन्तु स्त्रीणां सुतप्रदो भवति ॥ ५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पुष्परागपरीक्षा नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

## पञ्चसप्ततितमोऽध्यायः।

सूत उवाच।

वायुर्नखान् दैत्यपतेर्गृहीत्वा
चिक्षेप सत्पद्मवनेषु हृष्टः।
ततः प्रसूतं पवनोपपन्नं
कर्क्केतनं पूज्यतमं पृथिव्याम् ॥ १
वर्णेन तद्रुधिर-सोम-मधुप्रकाश-
माताम्रपीतदहनोज्ज्वलितं विभाति।
नीलं पुनः खलु सितं परुषं विभिन्नं
वेधादिदोषकरणे न च तद्विभाति ॥ २
स्निग्धा विशुद्धाः समरागिणश्च
आपीतवर्णा गुरवो विचित्राः।
त्रासव्रणव्यालविवर्ज्जिताश्च
कर्क्केतनास्ते परमं पवित्राः ॥ ३
पात्रेण काञ्चनमयेन तु वेष्टयित्वा
तप्तं यदा हुतवहेर्भवति प्रकाशम्।
रोगप्रणाशनकरं कलिनाशनं त-
दायुष्करं कुलकरञ्च सुखप्रदञ्च ॥ ४
एवंविधं बहुगुणं मणिमावहन्ति
कर्क्केतनं शुभमलङ्कृतये नरा ये।
ते पूजिता बहुधना बहुबान्धवाश्च
नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति
एकोऽपरस्य विकृताकुलनीलभासः
प्रम्लानरागकलुलिताः कलुषा विरूपाः।
तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः
कर्क्केतनस्य सदृशं वपुरुद्वहन्ति ॥ ६
कर्क्केतनं यदि परीक्षितवर्णरूपं
प्रत्यग्रभास्करदिवाकरसुप्रकाशम्।
तस्योत्तमस्य मणिशास्त्रविदा महिम्ना
तुल्यन्तु मूल्यमुदितं तुलितस्य कार्य्यम् ॥ ७

इति श्रीगारुड़े पूर्व्वखण्डे कर्क्केतनपरीक्षा नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः।

सूत उवाच।

हिमवत्युत्तरे देशे
वीर्य्यं पतितं सुरद्विषस्तस्य।
सम्प्राप्तमुत्तमाना-
माकरतां भीष्मरत्नानाम् ॥ १

शुक्लाः शङ्खाञ्जनिभाः
श्योनाकसन्निभाः प्रभावन्तः ।
प्रभवन्ति ततस्तरुणा
वज्रनिभा भीष्मपाषाणाः ॥ २
हेमादिप्रतिबद्धाः
शुद्धमपि श्रद्धया विधत्ते यः ।
भीष्ममणिं ग्रीवादिषु
सम्पदं सर्व्वदा लभते ॥ ३
निरीक्ष्य पलायन्ते ये
तमरण्यनिवासिनः समीपेऽपि
द्वीपि-वृक-शरभ-कुञ्जर-
सिंह-व्याघ्रादयो हिंस्राः ॥ ४
तस्योल्लवलितञ्चतिनो
भवति भयं नचापि संसुपस्थितम् ।
भीष्ममणिर्गुणयुक्तः
सम्यक् प्राप्तोऽङ्गुलीयकत्वलम् ॥ ५
पितृतर्पणापि पितॄणां
तृप्तिर्बहुवार्षिकी भवति ।
शाम्यन्त्यनुज्ञतान्यपि
सर्पाण्डजाखुवृश्चिकविषाणि ॥ ६
सलिलाग्नि-वैरि-तस्करभयानि भीमानि नश्यन्ति ।
शैवलवलाहकाभं परुषं पीतप्रभं प्रभाहीनम् ।
मलिनद्युति च विवर्णं दूरात् परिवर्ज्जयेत् प्राज्ञः ॥ ७
मूल्यं प्रकल्प्यमेषां
विबुधवरैर्देशकालविज्ञानात् ।
दूरे भूतानां बहु
किञ्चिन्निकटप्रसूतानाम् ॥ ८
इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
वैदूर्य्यपरीक्षा नाम षट्सप्तति
तमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः ।

सूत उवाच ।
पुण्येषु पर्व्वतवरेषु च निम्नगासु
स्थानान्तरेषु च तथोत्तरदेशगासु ।
संस्थापिताश्च नखरा भुजगः प्रकामं
सम्पूज्य दानवपतिं प्रथिते प्रदेशे ॥ १
दाशार्णवाग्दवमेकलकालगादौ
गुञ्जाञ्जनक्षौद्रमृणालवर्णाः ।
गन्धर्व्ववह्निकदलीसदृशावभासा
एते प्रशस्ताः पुलकाः प्रसूताः ॥ २
शङ्खाब्जभृङ्गार्कविचित्रभङ्गाः
सूत्रैर्व्यपेताः परमाः पवित्राः ।
मङ्गल्ययुक्ता बहुभक्तिचित्रा-
वृद्धिप्रदास्ते पुलका भवन्ति ॥ ३
काक-श्व-रासभ-शृगाल-वृकोग्ररूपै-
र्गृध्रैः समांसरुधिरार्द्रमुखैरुपेताः ।
मृत्युप्रदाश्च विदुषा परिवर्ज्जनीया
मूल्यं पलस्य कथितञ्च शतानि पञ्च ॥ ४
इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
पुलकपरीक्षा नाम सप्तसप्तति-
तमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः ।

सूत उवाच ।
हुतभुग्रूपमादाय दानवस्य यथेप्सितम् ।
नर्म्मदायां निचिक्षेप किञ्चिच्चीनादिभूमिषु ॥ १
तत्रेन्द्रगोपकलितं शुकवक्त्रवर्णं
संस्थानतः प्रकटपीलुसमानमात्रम् ।
नानाप्रकारविहितं रुधिराख्यरत्न-
मुद्यत्य तस्य खलु सर्व्वसमानमेव ॥ २
मध्येन्दुपाण्डरमतीव विशुद्धवर्णं
तच्चेन्द्रनीलसदृशं पटलं तुले स्यात् ।
सैश्वर्य्यभृत्यजननं कथितं तदेव
पक्वञ्च तत् किल भवेत् सुरवज्रवर्णम् ॥ ३
इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
रुधिराख्यपरीक्षा नामाष्टसप्तति-
तमोऽध्यायः ॥ ७८ ॥

---

## एकोनाशीतितमोऽध्यायः ।

सूत उवाच ।

कावेरविन्ध्ययवनचीननेपालभूमिषु ।
लाङ्गली व्यकिरन्मेदो दानवस्य प्रयत्नतः ॥ १
आकाशशुद्धं तैलाख्यमुत्पन्नं स्फटिकं ततः ।
मृणालशङ्खधवलं किञ्चिद्वर्णान्तरान्वितम् ॥ २
न तत्तुल्यं हि रत्नञ्च अथवा पापनाशनम् ।
संस्कृतं शिल्पिना सद्यो मूल्यं किञ्चिल्लभेत् ततः ॥ ३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
स्फटिकपरीक्षा नामैकोनाशीति-
तमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ।

सूत उवाच ।

आदाय शेषस्तस्यान्त्रं वलस्य केरलादिषु ।
चिक्षेप तत्र जायन्ते विद्रुमाः सुमहागुणाः ॥ १
तत्र प्रधानं शशलोहिताभं
गुञ्जाजवापुष्पनिभं प्रदिष्टम् ।
सनीसकं देवकरोमकञ्च
स्थानानि तेषु प्रभवं सुरागम् ॥ २
अन्यत्र जातञ्च न तत् प्रधानं
मूल्यं भवेच्छिल्पिविशेषयोगात् ॥ ३
प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत् ।
धनधान्यकरं लोके विषार्त्तिभयनाशनम् ॥ ४
परीक्षा पुलकस्योक्ता रुधिराख्यस्य वै मणेः ।
स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनक ॥ ५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे रत्न-
परीक्षा नामाशीतितमोऽध्यायः ॥ ८० ॥

---

## एकाशीतितमोऽध्यायः ।

सूत उवाच ।

सर्व्वतीर्थानि वक्ष्यामि गङ्गातीर्थोत्तमोत्तमा ।
सर्व्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभाः ॥ १
हरिद्वारे प्रयागे च गङ्गासागरसङ्गमे ।
प्रयागं परमं तीर्थं मृतानां भुक्तिमुक्तिदम् ॥ २
सेवनात् कृतपिण्डानां पापभित् कामदं नृणाम् ।
वाराणसी परं तीर्थं विश्वेशो यत्र केशवः ॥ ३
कुरुक्षेत्रं परं तीर्थं दानाद्यैर्भुक्तिमुक्तिदम् ।
प्रभासं परमं तीर्थं सोमनाथोऽपि तत्र च ॥ ४
द्वारका च पुरी रम्या भुक्तिमुक्तिप्रदायिका ।
प्राची सरस्वती पुण्या सप्तसारस्वतं परम् ॥ ५
केदारं सर्व्वपापघ्नं शम्भलग्राम उत्तमम् ।
नरनारायणं तीर्थं मुक्त्यै वदरिकाश्रमम् ॥ ६
श्वेतद्वीपं पुरी माया नैमिषं पुष्करं परम् ।
अयोध्या चार्घ्यतीर्थन्तु चित्रकूटञ्च गोमती ॥ ७
वैनायकं महातीर्थं रामगिर्य्याश्रमं परम् ।
काञ्चीपुरी तुङ्गभद्रा श्रीशैलं सेतुबन्धनम् ॥ ८
रामेश्वरं परं तीर्थं कार्त्तिकेयं तथोत्तमम् ।
भृगुतुङ्गं कामतीर्थं चामरकण्टकं तथा ॥ ९
उज्जयिन्यां महाकालः कुब्जके श्रीधरो हरिः ।
कुब्जाम्रकं महातीर्थं कालसर्पिश्च कामदम् ॥ १०
महाकेशी च कावेरी चन्द्रभागा विपाशया ।
एकाम्रञ्च तथा तीर्थं ब्रह्मेशं देवकोटकम् ॥ ११
मथुरा च पुरी रम्या शोणश्चैव महानदः ।
जम्बूसरो महातीर्थं तानि तीर्थानि विद्धि च ॥
सूर्य्यः शिवो गणो देवी हरिर्यत्र च तिष्ठति ।
एतेषु च तथान्येषु स्नानदानं जपस्तपः ॥ १३
पूजा श्राद्धं पिण्डदानं सर्व्वं भवति चाक्षयम् ।
शालग्रामं सर्व्वदं स्यात् तीर्थं पशुपतेः परम् ।
कोकामुखञ्च वाराहं भाण्डीरं स्वामिसंज्ञकम् ।
मोहदण्डे महाविष्णुर्मन्दारे मधुसूदनः ॥ १५
कामरूपं महातीर्थं कामाख्या यत्र तिष्ठति ।
पुण्ड्रवर्द्धनकं तीर्थं कार्त्तिकेयश्च यत्र च ॥ १६
विरजन्तु महातीर्थं तीर्थं श्रीपुरुषोत्तमम् ।
महेन्द्रपर्व्वतस्तीर्थं कावेरी च नदी परा ॥ १७
गोदावरी महातीर्थं पयोष्णी वरदानदी ।
विन्ध्यः पापहरं तीर्थं नर्म्मदाभेद उत्तमः ॥ १८
गोकर्णं परमं तीर्थं तीर्थं माहिष्मतीपुरी ।
कालञ्जरं महातीर्थं शुक्रतीर्थमनुत्तमम् ॥ १९

कृतशौचं मुक्तिदञ्च शार्ङ्गधारी च दण्डके ।
विरजं सर्व्वदं तीर्थं स्वर्णाख्यं तीर्थमुत्तमम् ॥ २०
नन्दितीर्थं मुक्तिदञ्च कोटितीर्थफलप्रदम् ।
नासिक्यञ्च महातीर्थं गोवर्द्धनमतः परम् ॥ २१
कृष्णावेणी भीमरथा गण्डकी या लिरावती ।
तीर्थं विन्दुसरः पुण्यं विष्णुपादोदकं परम् ॥ २२
ब्रह्मध्यानं परं तीर्थं तीर्थमिन्द्रियनिग्रहः ।
दमस्तीर्थन्तु परमं भावशुद्धिः परं मता ॥ २३
ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ।
यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥२४
इदं तीर्थमिदं नेति ये नरा भेददर्शिनः ।
तेषां विधीयते तीर्थगमनं तत्फलञ्च यत् ।
सर्व्वं ब्रह्मेति योऽवैति नातीर्थं तस्य किञ्चन ॥ २५
एतेषु स्नानदानानि श्राद्धं पिण्डमथाक्षयम् ।
सर्व्वा नद्यः सर्व्वशैलास्तीर्थं देवादिसेवितम् ॥ २६
श्रीरङ्गञ्च हरेस्तीर्थं तापी श्रेष्ठा महानदी ।
सप्तगोदावरं तीर्थं तीर्थं कोणगिरिः परम् ॥ २७
महालक्ष्मीर्यत्र देवी प्रणीता परमा नदी ।
सह्याद्रौ देवदेवेश एकवीरः सुरेश्वरी ॥ २८
गङ्गाद्वारे कुशावर्त्ते विन्ध्यके नीलपर्व्वते ।
स्नात्वा कनखले तीर्थे स भवेन्न पुनर्भवे ॥ २९
एतान्यन्यानि तीर्थानि स्नानाद्यैः सर्व्वदानि हि ।
श्रुत्वाब्रवीद्धरेर्ब्रह्मा व्यासं दक्षादिसंयुतम् ॥ ३०
एतान्युक्त्वा च तीर्थानि पुनस्तीर्थोत्तमोत्तमम् ।
गयाख्यं प्राह सर्व्वेषामक्षयं ब्रह्मलोकदम् ॥ ३१

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे सर्व्वतीर्थ-माहात्म्यं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः ।

ब्रह्मोवाच ।

सारात्सारतरं व्यास गयामाहात्म्यमुत्तमम् ।
प्रवक्ष्यामि समासेन भुक्तिमुक्तिप्रदं शृणु ॥१
गयासुरोऽभवत् पूर्व्वं वीर्य्यवान् परमः स च ।
तपोऽतप्यन्महाघोरं सर्व्वभूतोपतापनम् ॥ २
तत्तपस्तापिता देवास्तद्वधार्थं हरिं गताः ।
शरणं हरिरूचे तान् भवितव्यं शिवात्मभिः ॥३
पातितेऽस्य महादेहे तथेत्यूचुः सुरा हरिम् ।
कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥ ४
आनीय कीकटे देशे शयनञ्चाकरोद्बली ।
विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥ ५
अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः ।
तस्य देहे लिङ्गरूपी स्थितः शुद्धे पितामहः ॥ ६
जनार्द्दनश्च कालेशस्तथान्यः प्रपितामहः ।
विष्णुराहात्र मर्य्यादां पुण्यक्षेत्रं भविष्यति ॥ ७
यत्र श्राद्धं पिण्डदानं स्नानादि कुरुते नरः ।
स स्वर्गं ब्रह्मलोकञ्च गच्छेन्न नरकं नरः ॥ ८
गयातीर्थं परं ज्ञात्वा यागं चक्रे पितामहः ।
ब्राह्मणान् पूजयामास ऋत्विगर्थमुपागतान् ॥ ९
महानदीं रसवहां सृष्ट्वा वाप्यादिकं तथा ।
भक्ष्यभोज्यफलादींश्च कामधेनुं तथासृजत् ।
पञ्चक्रोशं गयाक्षेत्रं ब्राह्मणेभ्यो ददौ प्रभुः ॥ १०
धर्म्मयागेषु लोभात् तु प्रतिगृह्य धनादिकम् ।
स्थिता विप्रास्तदा शप्ता गयायां ब्राह्मणास्ततः ॥११
मा भूत् त्रैपुरुषी विद्या मा भूत् त्रैपुरुषं धनम् ।
युष्माकं स्याद्वारिवहा नदी पाषाणपर्व्वतः ॥ १२
शप्तैस्तु प्रार्थितो ब्रह्मानुग्रहं कृतवान् प्रभुः ।
लोकाः पुण्या गयायां हि श्राद्धिनो ब्रह्मलोकगाः ।
युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥ १३
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्व्विधा ॥ १४
समुद्राः सरितः सर्व्वा वापीकूपह्रदानि च ।
स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥ १५
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
पापं तत्सङ्गजं सर्व्वं गयाश्राद्धाद्विनश्यति ॥ १६
असंस्कृता मृता ये च पशुचौरहताश्च ये ।
सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥ १७
गयायां पिण्डदानेन यत् फलं लभते नरः ।
न तच्छक्यं मया वक्तुं वर्षकोटिशतैरपि ॥ १८

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे गया-माहात्म्ये द्व्यशीतितमोऽध्यायः ॥८२॥

---

## त्र्यशीतितमोऽध्यायः।

ब्रह्मोवाच।

कीकटेषु गया पुण्या पुण्यं राजगृहं वनम्।
विषयश्चारणः पुण्यो नदीनाञ्च पुनः पुनः॥ १
मुण्डपृष्ठन्तु पूर्व्वस्मिन् पश्चिमे दक्षिणोत्तरे।
सार्द्धक्रोशद्वयं मानं गयायां परिकीर्त्तितम्॥ २
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः।
तत्र पिण्डप्रदानेन तृप्तिर्भवति शाश्वती॥ ३
नगाज्जनार्द्दनाच्चैव कूपाच्चोत्तरमानसात्।
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते॥ ४
तत्र पिण्डप्रदानेन पितॄणां परमा गतिः।
गयागमनमात्रेण पितॄणामनृणो भवेत्॥ ५
गयायां पितृरूपेण देवदेवो जनार्द्दनः।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात्॥ ६
रथमार्गं गयातीर्थं दृष्ट्वा रुद्रपदादिके।
कालेश्वरञ्च केदारं पितॄणामनृणो भवेत्॥ ७
दृष्ट्वा पितामहं देवं सर्व्वपापैः प्रमुच्यते।
लोकन्त्वनामयं याति दृष्ट्वा च प्रपितामहम्॥ ८
तथा गदाधरं देवं माधवं पुरुषोत्तमम्।
तं प्रणम्य प्रयत्नेन न भूयो जायते नरः॥ ९
मौनादित्यं महात्मानं कनकार्कं विशेषतः।
दृष्ट्वा मौनेन विप्रर्षे पितॄणामनृणो भवेत्॥ १०
ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात्।
गायत्रीं प्रातरुत्थाय यस्तु पश्यति मानवः॥ ११
सन्ध्यां कृत्वा प्रयत्नेन सर्व्ववेदफलं लभेत्।
सावित्रीञ्चैव मध्याह्ने दृष्ट्वा यज्ञफलं लभेत्॥ १२
सरस्वतीञ्च सायाह्ने दृष्ट्वा दानफलं लभेत्।
नगस्थमीश्वरं दृष्ट्वा पितॄणामनृणो भवेत्॥ १३
धर्म्मारण्यं धर्म्ममीशं दृष्ट्वा स्यादृणनाशनम्।
देवं गृध्रेश्वरं दृष्ट्वा को न मुच्येत बन्धनात्॥ १४
धेनुं दृष्ट्वा धेनुवने ब्रह्मलोकं नयेत् पितॄन्।
प्रभासेशं प्रभासे च दृष्ट्वा याति परां गतिम्॥ १५
कोटीश्वरञ्चाश्वमेधं दृष्ट्वा स्यादृणनाशनम्।
स्वर्गद्वारेश्वरं दृष्ट्वा मुच्यते भवबन्धनात्॥ १६
रामेश्वरं गदालोलं दृष्ट्वा स्वर्गमवाप्नुयात्।
ब्रह्मेश्वरं तथा दृष्ट्वा मुच्यते ब्रह्महत्यया॥
मुण्डपृष्ठे महाचण्डीं दृष्ट्वा कामानवाप्नुयात्॥
फल्ग्वीशं कलुचण्डीञ्च गौरीं दृष्ट्वा च मह
गोमकं गोपतिं देवं पितॄणामनृणो भवेत्॥
अङ्गारेशञ्च सिद्धेशं गयादित्यं गजं तथा।
मार्कण्डेयेश्वरं दृष्ट्वा पितॄणामनृणो भवेत्॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्।
एतेन किं न पर्य्याप्तं नृणां सुकृतिकारिणाम्।
ब्रह्मलोकं प्रयान्तीह पुरुषा ह्येकविंशतिः॥
पृथिव्यां यानि तीर्थानि ये समुद्राः सरांसि
फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने॥
पृथीव्याञ्च गया पुण्या गयायाञ्च गयाशिरः।
श्रेष्ठं तथा फल्गुतीर्थं तन्मुखञ्च सुरस्य हि॥
उदीचि कनका नद्यो नाभितीर्थन्तु मध्यतः।
पुण्यं ब्रह्मसदस्तीर्थं स्नानात् स्याद्ब्रह्मलोकद
कूपे पिण्डादिकं कृत्वा पितॄणामनृणो भवेत्।
तथाक्षयवटे श्राद्धी(क) ब्रह्मलोकं नयेत् पितॄ
हंसतीर्थे नरः स्नात्वा सर्व्वपापैः प्रमुच्यते।
कोटीतीर्थे गदालोले वैतरण्याञ्च गोमके।
ब्रह्मलोकं नयेच्छ्राद्धी पुरुषानेकविंशतिम्॥
ब्रह्मतीर्थे रामतीर्थे आग्नेये सोमतीर्थके।
श्राद्धी रामह्रदे ब्रह्मलोकं पितृकुलं नयेत्॥
उत्तरे मानसे श्राद्धी न भूयो जायते नरः।
दक्षिणे मानसे श्राद्धी ब्रह्मलोकं नयेत् पितॄ
स्वर्गद्वार्य्यां नरः श्राद्धी ब्रह्मलोकं नयेत् पितॄ
भीष्मतर्पणकृद्गृध्रकूटे तारयते पितॄन्॥ २८
गृध्रेश्वरे तथा श्राद्धी पितॄणामनृणो भवेत्।
श्राद्धी च धेनुकारण्ये ब्रह्मलोकं पितॄन् नयेत्
तिलधेनुप्रदः स्नात्वा दृष्ट्वा धेनुं न संशयः॥
ऐन्द्रे वा नरतीर्थे च वासवे वैष्णवे तथा
महानद्यां कृतश्राद्धो ब्रह्मलोकं नयेत् पितॄ
गायत्त्रे चैव सावित्रे तीर्थे सारस्वते तथा।
स्नानसन्ध्यातर्पणकृच्छ्राद्धी चैकोत्तरं शतम्।
पितॄनान्तु कुलं ब्रह्मलोकं नयति मानवः॥
ब्रह्मयोनिं विनिर्गच्छेत् प्रयतः पितृमानसः।

(क) श्राद्धमिति वा पाठः।

तर्पयित्वा पितॄन् देवान् न विशेद्‌योनिसङ्कटे ॥ ३४

तर्पणे काकजङ्घायां पितॄणां तृप्तिरक्षया।
धर्म्मारण्ये मतङ्गस्य वाप्यां श्राद्धाद्दिवं व्रजेत् ॥ ३५

धर्म्मयूपे च कूपे च पितॄणामनृणो भवेत्।
प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः।
मयागत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता ॥३६

रामतीर्थे नरः स्नात्वा श्राद्धं कृत्वा प्रभासके।
शिलायां प्रेतभावात् तु मुक्ताः पितृगणाः किल ॥३७

श्राद्धकृच्च स्वपुष्टायां त्रिःसप्तकुलमुद्धरेत्।
श्राद्धकृन्मुण्डपृष्ठादौ ब्रह्मलोकं नयेत् पितॄन् ॥ ३८

गयायां न हि तत् स्थानं यत्र तीर्थं न विद्यते।
पञ्चक्रोशे गयाक्षेत्रे यत्र तत्र तु पिण्डदः।
अक्षयं फलमाप्नोति ब्रह्मलोकं नयेत् पितॄन् ॥ ३९

जनार्द्दनस्य हस्ते तु पिण्डं दद्यात् स्वकं नरः।
एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ॥ ४०

परलोकं गते मोक्षमक्षय्यमुपतिष्ठताम्।
ब्रह्मलोकमवाप्नोति पितृभिः सह निश्चितम् ॥ ४१

गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥ ४२

धर्म्मारण्यं धर्म्मपृष्ठं धेनुकारण्यमेव च।
दृष्ट्वैतानि पितॄंश्चार्च्य वंश्यान् विंशतिमुद्धरेत् ॥ ४३

ब्रह्मारण्यं महानद्याः पश्चिमो भाग उच्यते।
पूर्व्वो ब्रह्मसदो भागो नागाद्रिर्भरताश्रमः ॥ ४४

भरतास्याश्रमे श्राद्धी मतङ्गस्य पदे भवेत् ॥ ४५

गयाशीर्षाद्दक्षिणतो महानद्याश्च पश्चिमे।
तत् स्मृतं चम्पकवनं तत्र पाण्डुशिलास्ति हि ॥ ४६

श्राद्धी तत्र तृतीयायां निश्चिरायाश्च मण्डले।
महाह्रदे च कौशिक्यामक्षयं फलमाप्नुयात् ॥ ४७

वतरण्याश्चोत्तरतस्तृतीयाख्यो जलाशयः।
पदानि तत्र क्रौञ्चस्य श्राद्धी स्वर्गं नयेत् पितॄन् ॥ ४८

क्रौञ्चपादादुत्तरतो निश्चिराख्यो जलाशयः।
सकृद्‌याभिगमनं सकृत् पिण्डप्रपातनम्।
दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ॥ ४९

महानद्यामपः स्पृश्य तर्पयेत् पितृदेवताः।
अक्षयान् प्राप्नुयाल्लोकान् कुलञ्चापि समुद्धरेत् ॥ ५०

सावित्रे पठ्यते सन्ध्या कृता स्याद्द्वादशाब्दिकी ॥ ५१

शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः।
पुनात्यासप्तमञ्चैव कुलं नास्त्यत्र संशयः ॥ ५२

गयायां मुण्डपृष्ठञ्च अरविन्दञ्च पर्व्वतम्।
तृतीयं क्रौञ्चपादञ्च दृष्ट्वा पापैः प्रमुच्यते ॥ ५३

मकरे वर्त्तमाने च ग्रहणे चन्द्र-सूर्य्ययोः।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ ५४

महाह्रदे च कौशिक्यां मूलक्षेत्रे विशेषतः।
गुहायां गृध्रकूटस्य श्राद्धं दत्तं महाफलम् ॥ ५५

यत्र माहेश्वरी धारा श्राद्धी तत्रानृणो भवेत्।
पुण्यां विशालामासाद्य नदीं त्रैलोक्यविश्रुताम्।
अग्निष्टोममवाप्नोति श्राद्धी प्रायाद्दिवं नरः ॥ ५६

श्राद्धी मासपदे स्नात्वा वाजपेयफलं लभेत्।
रविपादे पिण्डदानात् पतितोद्धारणं भवेत् ॥ ५७

यो गयास्थो ददात्यन्नं पितरस्तेन पुत्रिणः।
काङ्क्षन्ते पितरः पुत्रान् नरकाद्भयभीरवः ॥ ५८

गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति।
गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत्।
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किल दास्यति ॥ ५९

आत्मजो वा तथान्यो वा गयाकूपे यदा तदा।
यन्नाम्ना पातयेत् पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥ ६०

पुण्डरीकं विष्णुलोकं प्राप्नुयात् कोटितीर्थगः।
या सा वैतरणी नाम त्रिषु लोकेषु विश्रुता।
सावतीर्णा गयाक्षेत्रे पितॄणां तारणाय हि ॥ ६१

श्राद्धदः पिण्डदस्तत्र गोप्रदानं करोति यः।
एकविंशतिवंश्यान् स तारयेन्नात्र संशयः ॥ ६२

यदि पुत्रो गयां गच्छेत् कदाचित् कालपर्य्यये।
तानेव भोजयेद्विप्रान् ब्रह्मणा ये प्रकल्पिताः ॥ ६३

तेषां ब्रह्मसदः स्थानं सोमपानं तथैव च।
ब्रह्मप्रकल्पितं स्थानं विप्रा ब्रह्मप्रकल्पिताः।
पूजितैः पूजिताः सर्व्वे पितृभिः सह देवताः ॥ ६४

तर्पयेत् तु गयाविप्रान् हव्यकव्यैर्विधानतः।
स्थानं देहपरित्यागे गयायान्तु विधीयते ॥ ६५

यः करोति वृषोत्सर्गं गयाक्षेत्रे ह्यनुत्तमे।
अग्निष्टोमशतं पुण्यं लभते नात्र संशयः ॥ ६६

आत्मनोऽपि महाबुद्धिर्गयायान्तु तिलैर्विना।
पिण्डनिर्व्वपनं कुर्य्यादन्येषामपि मानवः ॥ ६७

आवन्तो ज्ञातयः पित्र्या बान्धवाः सुहृदस्तथा ।
तेभ्यो व्यास गयाभूमौ पिण्डो देयो विधानतः ॥ ६८
रामतीर्थे नरः स्नात्वा गोशतस्याप्नुयात् फलम् ।
मतङ्गवाप्यां स्नात्वा च गोसहस्रफलं लभेत् ॥ ६९
निश्चिरासङ्गमे स्नात्वा ब्रह्मलोकं नयेत् पितॄन् ।
वशिष्ठस्याश्रमे स्नात्वा वाजपेयञ्च विन्दति ।
महाकौश्यां समावासादश्वमेधफलं लभेत् ॥ ७०
पितामहस्य सरसः प्रसृतः लोकपावनी ।
समीपे कपिलधारेति विश्रुता कपिला हि सा ।
अग्निष्टोमफलं श्राद्धी स्नात्वात्र कृतकृत्यता ॥ ७१
श्राद्धी कुमारधारायामश्वमेधफलं लभेत् ।
कुमारमभिगम्याथ नत्वा मुक्तिमवाप्नुयात् ॥ ७२
सोमकुण्डे नरः स्नात्वा सोमलोकञ्च गच्छति ।
संवर्त्तस्य नरो वाप्यां सुभगः स्यात् तु पिण्डदः ॥ ७३
धौतपापो नरो याति प्रेतकुण्डे च पिण्डदः ।
देवनद्यां लेलिहाने मथने जानुगर्त्तके ॥ ७४
एवमादिषु तीर्थेषु पिण्डदस्तारयेत् पितॄन् ।
नत्वा देवान् वशिष्ठेशप्रभृतीनृणसंक्षयम् ॥ ७५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे गया-
माहात्म्ये त्र्यशीतितमोऽध्यायः ॥८३॥

---

## चतुरशीतितमोऽध्यायः ।

ब्रह्मोवाच ।

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटं वेशं ग्रामस्यापि प्रदक्षिणम् ॥ १
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
कृत्वा प्रदक्षिणं गच्छेत् प्रतिग्रहविवर्ज्जितः ॥ २
दिनादचलितमात्रस्य गयायां गमनं प्रति ।
स्वर्गारोहणसोपानं पितॄणान्तु पदे पदे ॥ ३
मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः ।
वर्ज्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ ४
दिवा च सर्व्वदा रात्रौ गयायां श्राद्धकृद्भवेत् ।
वाराणस्यां कृतं श्राद्धं तीर्थे शोणनदे तथा ।
पुनः पुनर्महानद्यां श्राद्धी स्वर्गं पितॄन् नयेत् ॥ ५
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ।
तस्मिन् निवर्त्तयेच्छ्राद्धं स्नानञ्चैव निवर्त्तयेत् ।
कामान् स लभते दिव्यान् मोक्षोपायञ्च सर्व्वशः ।
दक्षिणं मानसं गत्वा मौनी पिण्डादि कारयेत् ।
ऋणत्रयापाकरणं लभेद्दक्षिणमानसे ॥ ७
सिद्धानां प्रीतिजननैः पापानाञ्च भयङ्करैः ।
लेलिहानैर्महाघोरैरक्षतैः पन्नगोत्तमैः ॥ ८
नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् ।
उदीच्यां मुण्डपृष्ठस्य देवर्षिगणसेवितम् ॥ ९
तत्र स्नात्वा दिवं याति श्राद्धं दत्तमथाक्षयम् ।
सूर्य्यं नत्वा लिदं कुर्य्यात् कृतपिण्डादिसत्क्रियः ।
कव्यवाहास्तथा सोमो यमश्चैवार्य्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥
आगच्छन्तु महाभागा युष्माभी रक्षितस्त्विह ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ।
तेषां पिण्डप्रदाताहमागतोऽस्मि गयामिह ॥
कृतपिण्डः फल्गुतीर्थे पश्येद्देवं पितामहम् ।
गदाधरं ततः पश्येत् पितॄणामनृणो भवेत् ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ।
आत्मानं तारयेत् सद्यो दश पूर्व्वान् दशावरान् ।
प्रथमेऽह्नि विधिः प्रोक्तो द्वितीयदिवसे व्रजेत् ।
धर्म्मारण्यं मतङ्गस्य वाप्यां पिण्डादिकृद्भवेत् ॥
धर्म्मारण्यं समासाद्य वाजपेयफलं लभेत् ।
राजसूयाश्वमेधाभ्यां फलं स्याद्ब्रह्मतीर्थके ॥ १६
श्राद्धं पिण्डोदकं कार्य्यं मध्ये वै कूपयूपयोः ।
कूपोदकेन तत् कार्य्यं पितॄणां दत्तमक्षयम् ॥ १
तृतीयेऽह्नि ब्रह्मसदो गत्वा स्नात्वाथ तर्पणम् ।
कृत्वा श्राद्धादिकं पिण्डं मध्ये वै यूपकूपयोः ॥ १
गोप्रचारसमीपस्था आब्रह्म ब्रह्मकल्पिताः ।
तेषां सेवनमात्रेण पितरो मोक्षगामिनः ।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥ १९
फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम् ।
कृत्वा श्राद्धं गयाशीर्षे कुर्य्याद्रुद्रपदादिषु ॥ २०
पिण्डान् देहि मुखे व्यास पञ्चाग्नौ च पदत्रये ।
सूर्य्येन्दुकार्त्तिकेयेषु कृतं श्राद्धं तथाक्षयम् ।
श्राद्धन्तु नवदैवत्यं कुर्य्याद्द्वादशदैवतम् ॥ २१
अन्वष्टकासु वृद्धौ च गयायां मृतवासरे ।

अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ २२
स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम् ।
रुद्रपादं नरः स्पृष्ट्वा न चेहावर्त्तते पुनः ॥ २३
त्रिर्वित्तपूर्णां पृथिवीं दत्त्वा यत् फलमाप्नुयात् ।
स तत् फलमवाप्नोति कृत्वा श्राद्धं गयाशिरे ॥ २४
शमीपत्रप्रमाणेन पिण्डं दत्त्वा गयाशिरे ।
पितरो यान्ति देवत्वं नात्र कार्य्या विचारणा ॥ २५
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ।
अल्पेन तपसा तत्र महापुण्यमवाप्नुयात् ॥ २६
गयाशीर्षे तु यः पिण्डान् यासां येषान्तु(क) निर्व्वपेत्
नरकस्था दिव्यं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥ २७
पञ्चमेऽह्नि गदालोले स्नात्वा वटतले ततः ।
पिण्डान् दद्यात् पितृणाञ्च सकलं तारयेत् कुलम्२८
वटमूलं समासाद्य शाकेनोष्णोदकेन च ।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥२९
कृते श्राद्धेऽक्षयवटे दृष्ट्वा च प्रपितामहम् ।
अक्षयाँल्लभते लोकान् कुलानामुद्धरेच्छतम् ॥ ३०
एष्टव्या बहवः पुत्त्रा यद्येकोऽपि गयां व्रजेत् ।
यजेद्वा अश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ३१
प्रेतः कश्चित् समुद्दिश्य वणिजं कश्चिदब्रवीत् ।
मम नाम्ना गयाशीर्षे पिण्डनिर्व्वपनं कुरु ।
प्रेतभावाद्विमुक्तः स्यां स्वर्गदो दातुरेव च ॥ ३२
श्रुत्वा वणिग्गयाशीर्षे प्रेतराजाय पिण्डकम् ।
प्रददावनुजैः सार्द्धं स्वपितृभ्यस्ततो ददौ ॥ ३३
सर्व्वे मुक्ता विशालोऽपि सपुत्त्रोऽभूच्च पिण्डदः ।
विशालायां विशालोऽभूद्राजपुत्त्रोऽब्रवीद्द्विजान् ॥३४
कथं पुत्त्रादयः स्युर्मे विप्राश्चोचुर्विशालकम् ।
गयायां पिण्डदानेन तव सर्व्वं भविष्यति ।
विशालोऽथ गयाशीष पिण्डदोऽभूच्च पुत्त्रवान् ॥ ३५
दृष्ट्वाकाशे सितं रक्तं कृष्णं पुरुषमब्रवीत् ।
के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् ॥ ३६
अहं सितस्ते जनक इन्द्रलोकं गतः शुभात् ।
मम पुत्त्र पिता रक्तो ब्रह्महा पापकृत् परः ॥ ३७
अयं पितामहः कृष्ण ऋषयोऽनेन घातिताः ।
अवीचिं नरकं प्राप्तौ मुक्तौ जातौ च पिण्डतः ॥३८

(क) नाम्ना येषामिति वा पाठः ।

मुक्तीकृतास्ततः सर्व्वे व्रजामः स्वर्गमुत्तमम् ।
कृतकृत्यो विशालोऽपि राज्यं कृत्वा दिवं ययौ ॥३९
येऽस्मत्कुले तु पितरो लुप्तपिण्डोदकक्रियाः ।
ये चाप्यकृतचूड़ास्तु ये च गर्भाद्विनिःसृताः ॥ ४०
येषां दाहो न क्रियते येऽग्निदग्धास्तथापरे ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ ४१
पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥ ४२
तथा मातामहश्चैव प्रमातामह एव च ।
वृद्धप्रमातामहश्चाथ तथा मातामही मम ॥ ४३
प्रमातामही च तथा वृद्धप्रमातामहीति वै ।
अन्येषाञ्चैव पिण्डोऽयमक्षय्यमुपतिष्ठताम् ॥ ४४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
गयामाहात्म्ये चतुरशीति-
तमोऽध्यायः ॥८४॥

---

## पञ्चाशीतितमोऽध्यायः ।

ब्रह्मोवाच ।

स्नात्वा प्रेतशिलादौ तु वरुणास्थामृतेन च ।
पिण्डं दद्यादिमैर्मन्त्रैरावाह्य च पितॄन् परान् ॥ १
अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामावाहयिष्यामि दर्भपृष्ठे (क) तिलोदकैः ॥ २
पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३
मातामहकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४
अजातदन्ता ये केचिद्ये च गर्भे प्रपीड़िताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ५
बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्ज्जिताः ।
स्वगोत्रे परगोत्रे वा गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ६
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥७
अग्निदाहे मृता ये च सिंहव्याघ्रहताश्च ये ।

(क) दर्भपीठ इति पाठान्तरम् ।

दंष्ट्रिभिः शृङ्गिभिर्वापि तेषां पिण्डं ददाम्यहम् ॥ ८
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे ।
विद्युच्चौरहता ये च तेषां पिण्डं ददाम्यहम् ॥ ९
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १०
असिपत्रवने घोरे कुम्भीपाके च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ११
अन्येषां यातनास्थानां प्रेतलोकनिवासिनाम् ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १२
पशुयोनिं गता ये च पक्षि-कीट-सरीसृपाः ।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥ १३
असंख्ययातनासंस्था ये नीता यमशासने ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १४
जात्यन्तरसहस्रेषु भ्रमन्ते स्वेन कर्म्मणा ।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥ १५
ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा ॥ १६
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा ॥ १७
ये मे पितृकुले जाताः कुले मातुस्तथैव च ।
गुरु-श्वशुर-बन्धूनां ये चान्ये बान्धवा मृताः ॥ १८
ये मे कुले लुप्तपिण्डाः पुत्त्रदारविवर्ज्जिताः ।
क्रियालोपगता ये च जातान्धाः पङ्गवस्तथा ॥ १९
विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले मम ।
तेषां पिण्डं मया दत्तमक्षय्यमुपतिष्ठताम् ॥ २०
साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मया गयां समासाद्य पितृणां निष्कृतिः कृता ॥ २१
आगतोऽहं गयां देव पितृकार्य्ये गदाधर ।
त्वं मे साक्षी भवस्वाद्य अनृणोऽहमृणत्रयात् ॥ २२
महानदी ब्रह्मसरोऽक्षयो वटः
प्रभाससुद्यन्तमहो गयाशिरः ।
सरस्वती-धर्म्मक-धेनुपृष्ठा
एते कुरुक्षेत्रगता गयायाम् ॥ २३
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे गया-
माहात्म्ये पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## षड़शीतितमोऽध्यायः ।

ब्रह्मोवाच ।

येयं प्रेतशिला ख्याता गयायां सा त्रिधा स्थि
प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि ॥ १
धर्म्मेण धारिता भूत्यै सर्व्वदेवमयी शिला ।
प्रेतत्वं ये गता नृणां मित्राद्या बान्धवादयः ।
तेषामुद्धरणार्थाय यतः प्रेतशिला ततः ॥ २
अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा ।
तस्यां शिलायां श्राद्धादिकर्त्तारो ब्रह्मलोक
गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः ।
मुण्डपृष्ठो गिरिस्तस्मात् सर्व्वदेवमयो ह्ययम्
मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः ।
अरविन्दं वनं तेषु तेन चैवोपलक्षितः ॥ ५
अरविन्दो गिरिर्नाम क्रौञ्चपादाङ्कितो यतः ।
तस्माद्गिरिः क्रौञ्चपादः पितृणां ब्रह्मलोकदः ।
गदाधरादयो देवा आद्या आदौ व्यवस्थिताः ।
शिलारूपेण चाव्यक्तास्तस्माद्देवमयी शिला ।
गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला ।
कालान्तरेण व्यक्तश्च स्थित आदिर्गदाधरः ॥
महारुद्रादिदेवैस्तु अनादिनिधनो हरिः ।
धर्म्मसंरक्षणार्थाय अधर्म्मादिविनष्टये ॥ ९
दैत्यराक्षसनाशार्थं मत्स्यः पूर्व्वं यथाभवत् ।
कूर्म्मो वराहो नृहरिर्वामनो राम ऊर्ज्जितः ॥
यथा दाशरथी रामः कृष्णो बुद्धोऽथ कल्क्यपि
तथा व्यक्तोऽव्यक्तरूपी आसीदादौ गदाधरः ।
आदिरादौ पूजितोऽत्र देवैर्ब्रह्मादिभिर्यतः ।
पाद्यार्घ्यगन्धपुष्पाद्यैरत आदिर्गदाधरः ॥ १२
गदाधरं सुरैः सार्द्धमाद्यं गत्वा ददाति यः ।
अर्घ्यपात्रञ्च पाद्यञ्च गन्धपुष्पञ्च धूपकम् ॥ १३
दीपं नैवेद्यमुत्कृष्टं माल्यानि विविधानि च ।
वस्त्राणि मुकुटं घण्टा चामरं प्रेक्षणीयकम् ॥
अलङ्कारादिकं पिण्डमन्नदानादिकं तथा ।
तेषां तावद्धनं धान्यमायुरारोग्यसम्पदः ॥ १५
पुत्त्रादिसन्ततिः श्रेयो विद्यार्थं काम ईप्सितः ।
भार्य्या स्वर्गादिवासश्च स्वर्गादागत्य राज्यकम्

कुलीनः सत्त्वसम्पन्नो रथी मर्द्दितशात्रवः ।
वधबन्धविनिर्म्मुक्तश्चान्ते मोक्षमवाप्नुयात् ॥ १७
श्राद्धपिण्डादिकर्त्तारः पितृभिर्ब्रह्मलोकगाः ॥ १८
जगन्नाथं येऽर्च्चयन्ति सुभद्रां बलभद्रकम् ।
ज्ञानं प्राप्य श्रियं पुत्त्रान् व्रजन्ति पुरुषोत्तमम् ॥ १९
पुरुषोत्तमराजस्य सूर्य्यस्य च गणस्य च ।
पुरतस्तत्र पिण्डादि पितॄणां ब्रह्मलोकदः ॥ २०
नत्वा कपर्द्दि-विघ्नेशं सर्व्वविघ्नैः प्रमुच्यते ।
कार्त्तिकेयं पूजयित्वा ब्रह्मलोकमवाप्नुयात् ॥ २१
द्वादशादित्यमभ्यर्च्च्य सर्व्वरोगैः प्रमुच्यते ।
वैश्वानरं समभ्यर्च्च्य उत्तमां दीप्तिमाप्नुयात् ॥ २२
रेवन्तं पूजयित्वाथ अश्वानाप्नोत्यनुत्तमान् ।
अभ्यर्च्च्येन्द्रं महैश्वर्य्यं गौरीं सौभाग्यमाप्नुयात् ॥ २३
विद्यां सरस्वतीं प्रार्च्च्य लक्ष्मीं सम्पूज्य च श्रियम् ।
गरुड़ञ्च समभ्यर्च्च्य विघ्नवृन्दात् प्रमुच्यते ॥ २४
क्षेत्रपालं समभ्यर्च्च्य ग्रहवृन्दैः प्रमुच्यते ।
मुण्डपृष्ठां समभ्यर्च्च्य सर्व्वकाममवाप्नुयात् ॥ २५
नागाष्टकं समभ्यर्च्च्य नागदष्टो विमुच्यते ।
ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात् ॥ २६
बलभद्रं समभ्यर्च्च्य बलारोग्यमवाप्नुयात् ।
सुभद्रां पूजयित्वा तु सौभाग्यं परमाप्नुयात् ॥ २७
सर्व्वान् कामानवाप्नोति सम्पूज्य पुरुषोत्तमम् ।
नारायणन्तु सम्पूज्य नराणामधिपो भवेत् ॥ २८
स्पृष्ट्वा नत्वा नारसिंहं संग्रामे विजयी भवेत् ।
वराहं पूजयित्वा तु भूमिराज्यमवाप्नुयात् ॥ २९
माला-विद्याधरौ स्पृष्ट्वा विद्याधरपदं भवेत् ।
सर्व्वान् कामानवाप्नोति सम्पूज्यादिगदाधरम् ॥ ३०
सोमनाथं समभ्यर्च्च्य शिवलोकमवाप्नुयात् ।
रुद्रेश्वरं नमस्कृत्य रुद्रलोके महीयते ॥ ३१
रामेश्वरं नरो नत्वा रामवत् सुप्रियो भवेत् ।
ब्रह्मेश्वरं नरः स्तुत्वा ब्रह्मलोकाय कल्पते ॥ ३२
कालेश्वरं समभ्यर्च्च्य नरः कालञ्जयो भवेत् ॥ ३३
केदारं पूजयित्वा तु शिवलोके महीयते ।
सिद्धेश्वरञ्च सम्पूज्य सिद्धो ब्रह्मपुरं व्रजेत् ॥ ३४
आद्यै रुद्रादिभिः सार्द्धं दृष्ट्वा ह्यादिगदाधरम् ।
कुलानां शतमुद्धृत्य नयेद्ब्रह्मपुरं नरः ॥ ३५
धर्म्मार्थी प्राप्नुयाद्धर्म्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी मोक्षार्थी मोक्षमाप्नुयात् ३६
राज्यार्थी राज्यमाप्नोति शान्त्यर्थी शान्तिमाप्नुयात् ।
सर्व्वार्थी सर्व्वमाप्नोति सम्पूज्यादिगदाधरम् ॥ ३७
पुत्त्रान् पुत्त्रार्थिनी स्त्री च सौभाग्यञ्च तदर्थिनी ।
वंशार्थिनी च वंशलं प्राप्नाच्चादिगदाधरम् ॥ ३८
श्राद्धेन पिण्डदानेन अन्नदानेन वारिदः ।
ब्रह्मलोकमवाप्नोति सम्पूज्यादिगदाधरम् ॥ ३९
पृथिव्यां सर्व्वतीर्थेभ्यो यथा श्रेष्ठा गया पुरी ।
तथा शिलादिरूपश्च श्रेष्ठ आदिगदाधरः ।
तस्मिन् दृष्टे शिला दृष्टा यतः सर्व्वं गदाधरः ॥ ४०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
गयामाहात्म्यं नाम षड़शीति-
तमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः ।

हरिरुवाच ।

चतुर्द्दश मनून् वक्ष्ये तत्सुतांश्च सुरादिकान् ।
मनुः स्वायम्भुवः पूर्व्वमग्नीध्राद्याश्च तत्सुताः ॥ १
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वशिष्ठश्च महातेजा ऋषयः सप्त कीर्त्तिताः ॥ २
जयाख्याश्चामिताख्याश्च शुक्रा यामास्तथैव च ।
गणा द्वादशकाश्चेति चत्वारः सोमपायिनः ॥ ३
विश्वभुग्वामदेवेन्द्रो वाष्कलिस्तदरिर्ह्यभूत् ।
स हतो विष्णुना दैत्यश्चक्रेण सुमहात्मना ॥ ४
मनुः स्वारोचिषश्चाथ तत्पुत्त्रा मण्डलेश्वराः ।
चित्रको विनतश्चैव (क) कर्णान्तो विद्युतो रविः ।
बृहद्गुणो नभश्चैव महाबलपराक्रमः ॥ ५
ऊर्ज्जस्तम्बस्तथा प्राण ऋषभो निश्चरस्तथा ।
दत्तोलिश्चार्व्वरीवांश्च ऋषयः सप्त कीर्त्तिताः ॥६(ख)
तुषिता द्वादश प्रोक्तास्तथा पारावताश्च ये ॥ ७

---

(क) चैत्रः किम्पुरुषश्चैवेति पाठ न्तरम् ।

(ख) निश्चर इत्यत्र निश्चलः, दत्तोलिरित्यत्र दम्भोलिः अर्व्वरीवानित्यत्र ऊर्व्वीर इति बहुषु दृश्यते पुराणान्तर-विसंवादितया चोपेक्षितम् ।

इन्द्रो विपश्चिद्देवानां तद्रिपुः पुरुकुत्सरः ।
जघान हस्तिरूपेण भगवान् मधुसूदनः ॥ ८
औत्तमस्य मनोः पुत्रा आजश्च परशुस्तथा ।
विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः ॥ ९
देवो देवावृधो रुद्र महोत्साहाजितस्तथा ।
रथौजा ऊर्द्ध्वबाहुश्च शरणश्चानघो मुनिः ।
सुतपाः शङ्कुरित्येते ऋषयः सप्त कीर्त्तिताः ॥ १०
वशवर्त्ति-सुधामानः शिवाः सत्याः प्रतर्द्दनाः ।
पञ्च देवगणाः प्रोक्ताः सर्व्वे द्वादशकास्तु ते ॥ ११
इन्द्रः सुशान्तिस्तच्छत्रुः प्रलम्बो नाम दानवः ।
मत्स्यरूपी हरिर्विष्णुस्तं जघान च दानवम् ॥ १२
तामसस्य मनोः पुत्रा जानुजङ्घोऽथ निर्भयः ।
नरः ख्यातिर्नयश्चैव प्रियभृत्यो विविक्षिपः ।
दृढेषुधिः प्रस्तलाक्षः कृतबन्धुः कृतस्तथा ॥ १३
ज्योतिर्द्धामा पृथुः काव्यश्चैत्रश्वेताग्निहेमकाः ॥(क)१४
मुनयः कीर्त्तिताः सप्त सुरागाः (ख) सुधियस्तथा ।
हरयो देवतानाञ्च चत्वारः सप्तविंशकाः (ग) ॥ १५
गणा इन्द्रः शिविस्तस्य शत्रुर्भीमरथः स्मृतः ।
हरिणा कूर्म्मरूपेण हतो भीमरथोऽसुरः ॥ १६
रैवतस्य मनोः पुत्रा महाप्राणश्च साधकः ।
वलबन्धुर्निरमित्रः प्रत्यङ्गः परहा शुचिः ॥ १७
दृढव्रतः केतुशृङ्ग ऋषयस्तस्य वर्ण्यते ।
वेदश्री (घ) र्वेदबाहुश्च ऊर्द्ध्वबाहुस्तथैव च ।
हिरण्यरोमा पर्ज्जन्यः सत्यनेत्रः सुधाम च ॥ १८
अभूतरजसश्चैव तथा देवाः सुमेधसः ।
वैकुण्ठाश्चामृताश्चैव चत्वारो देवतागणाः ॥ १९
गणे चतुर्द्दश सुरा विभुरिन्द्रः प्रतापवान् ।
शान्तः शत्रुर्हतो दैत्यो हंसरूपेण विष्णुना ॥ २०
चाक्षुषस्य मनोः पुत्रा ऊरुः पूरुर्महाबलः ।
शतद्युम्नस्तपस्वी च सत्यवाक्यः कृतिस्तथा ॥ २१
अग्निष्णुरतिरात्रश्च सुद्युम्नश्च तथा नरः ।
हविष्मानुत्तमः (क)श्रीमान् सुधामा विरजास्तथा ।
अतिशमी सहिष्णुश्च मधुश्रीर्ऋषयः स्मृताः ॥ २२
आर्य्या प्रभूता भाव्याश्च लेखाश्च पृथुकास्तथा ।
अष्टकस्य गणाः पञ्च तथा प्रोक्ता दिवौकसाम् ।
इन्द्रो मनोजवः शत्रुर्महाशानो महाभुजः ।
अश्वरूपेण स हतो हरिणा लोकधारिणा ॥ २३
मनोर्वैवस्वतस्यैते पुत्रा विष्णुपरायणाः ।
इक्ष्वाकुरथ नाभागो धृष्टः शर्यातिरेव च ॥ २४
नरिष्यस्तथा प्रांशुर्नभो नेदिष्ठ एव च ।
करूषश्च पृषध्रश्च सुद्युम्नश्च मनोः सुताः ॥ २५
अत्रिर्वशिष्ठो भगवान् जमदग्निश्च कश्यपः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ सप्तमः ॥ २६
तथाश्चैकोनपञ्चाशन्मरुतः परिकीर्त्तिताः ।
आदित्या वसवः साध्या गणा द्वादशकास्त्रयः ॥ २७
एकादश तथा रुद्रा वसवोऽष्टौ प्रकीर्त्तिताः ।
द्वावश्विनौ विनिर्द्दिष्टौ विश्वेदेवास्तथा दश ।
दशैवाङ्गिरसो देवा नव देवगणानि च ॥ २८
तेजस्वी नाम वै शक्रो हिरण्याक्षो रिपुः स्मृतः ।
हतो वराहरूपेण हिरण्याक्षोऽथ विष्णुना ॥ २९
वक्ष्ये मनोर्भविष्यस्य सावर्ण्याख्यस्य वै सुतान् ।
विरजाश्चाव्वरीवांश्च (ख) निर्म्मोहः सत्यवाक् कृ
वरिष्ठश्च गरिष्ठश्च वाचः स्वगतिरेव च ॥ ३१
अश्वत्थामा कृपो व्यासो गालवो दीप्तिमानथ ।
ऋष्यशृङ्गस्तथा राम ऋषयः सप्त कीर्त्तिताः ॥
सुतपा अमृताभाश्च मुख्याश्चापि तथा सुराः ।
तेषां गणस्तु देवानामेकैको विंशकः स्मृतः ॥
विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यति ।
दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ।
ऋद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ ३
वारुणेर्दक्षसावर्णेर्नवमस्य सुतान् शृणु ।
धृतिकेतुर्दीप्तिकेतुः पञ्चहस्तो निरामयः (ग) ।

(क) ज्योतिर्द्धामा धृष्टकाव्यश्चैत्रः श्वेताग्निहेमकावित्येनाऽस्मिन् पाठे ऋषीणां सप्तसंख्यानुपपत्तिः । ज्योतिर्द्धामा पृथुः काव्यश्चैत्रोऽग्निवनपीवरा इति पाठो विष्णुपुराणादिसम्मतः ।

(ख) सुरूपा इति पुराणान्तरसंवादी पाठः ।

(ग) पञ्चविंशका इति पाठस्तु न समीचीनः ।

(घ) देवश्रीरिति पाठान्तरम् ।

(क) हविष्मान् सुतनुरिति पाठान्तरम् ।

(ख) विजयश्चार्व्ववीरश्चेति क्वचित् पाठः ।

(ग) निराकृतिरिति पाठः क्वाचित्कः ।

पृथुश्रवा वृहद्युम्न ऋचीको वृहतो गुणः ॥ ३५
मेधातिथिर्द्युतिश्चैव शवलो वसुरेव च।
ज्योतिष्मान् हव्यकव्यौ च(क)ऋषयोविभुरीश्वरः ३६
शारा मरीचिगर्भाश्च सुधर्म्माणाश्च ते त्रयः।
भविष्यन्ति तदा देवा एकैको द्वादशो गणः ॥ ३७
तेषामिन्द्रो महावीर्य्यो भविष्यत्यद्भुतो हर (ख)।
देवशत्रुः कालकाद्यस्तद्धन्ता पद्मनाभकः ॥ ३८
धर्म्मपुत्त्रस्य पुत्त्रांस्तु दशमस्य मनोः शृणु।
सुक्षेत्रश्चोत्तमौजाश्च भूरिश्रेण्यश्च वीर्य्यवान् ॥ ३९
शतानीको निरमित्रो वृषसेनो जयद्रथः।
भुरिद्युम्नः सुवर्चाश्च शान्तिरिन्द्रः प्रतापवान् ॥४०
अयोमूर्त्तिर्हविष्मांश्च सुकृतिश्चाव्ययस्तथा।
नाभागोऽप्रतिमौजाश्च सौरभ ऋषयस्तथा ॥ ४१
प्राणाख्याः शतसंख्यास्तु देवतानां गणास्तथा।
तेषामिन्द्रश्च भविता शान्तिर्नाम महाबलः (ग)।
बलिः शत्रुस्तं हरिश्च गदया घातयिष्यति ॥ ४२
रुद्रपुत्त्रस्य ते पुत्त्रान् वच्म्यास्येकादशस्य तु।
सर्व्वत्रगः सुशर्म्मा च देवानीकः पुरुर्गुरुः ॥ ४३
क्षेत्रवर्णो दृढ़ेषुश्च आर्द्रकः पुत्त्रकस्तथा।
हविष्मांश्च हविष्यश्च वपुष्मान् विष्णुवारुणिः ॥ ४४
नश्वरश्चाग्नितेजाश्च ऋषयः सप्त कीर्त्तिताः।
विहङ्गमाः कामगमा निर्म्माणरुचयस्तथा ॥ ४५
एकैकस्त्रिंशकस्तेषां गणश्चेन्द्रश्च वै वृषः।
दशग्रीवो रिपुस्तस्य श्रीरूपी घातयिष्यति ॥ ४६
मनोस्तु दक्षपुत्त्रस्य द्वादशस्यात्मजान् शृणु।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥ ४७
मित्रवान् मित्रदेवश्च मित्रविन्दश्च वीर्य्यवान्।
मित्रवाहः सुवर्चाश्च दक्षपुत्त्रमनोः सुताः ॥ ४८
तपस्वी सुतपाश्चैव तपोमूर्त्तिस्तपोरतिः।
तपोधृतिर्द्युतिश्चान्यः सप्तमश्च तपोधनः ॥ ४९
सुधर्म्माणः सुतपसो हरिता रोहितास्तथा।
सुरारश्चैव गणाः पञ्च प्रत्येकं दशको गणः ॥ ५०

(क) मेधाधृतिरिति भव्यसत्याविति च पुराणान्तर-संवादी पाठः।
(ख) इदं पादचतुष्टयं बहुषु पुस्तकेषु नोपलभ्यते।
(ग) श्लोकार्द्धमेतद्बहुषु पुस्तकेषु नोपलभ्यते।

ऋतधामा च तत्रेन्द्रस्तारको नाम तद्रिपुः।
हरिर्नपुंसको भूत्वा घातयिष्यति शङ्कर ॥ ५१
त्रयोदशस्य रौच्यस्य मनोः पुत्त्रान् निबोध मे ॥ ५२
चित्रसेनो विचित्रश्च तपोधर्म्मरतो धृतिः।
सुनेत्रः क्षेत्रवृत्तिश्च सुनयो धर्म्मपो दृढ़ः ॥ ५३
धृतिमानव्ययश्चैव निशारूपो (क) निरुत्सुकः।
निर्म्मोहस्तत्त्वदर्शी च ऋषयः सुतपास्तथाः ॥ ५४
सुरोमाणः सुधर्म्माणः सुकर्म्माणस्तथामराः।
त्रयस्त्रिंशद्विभेदास्ते देवानां तत्र वै गणाः ॥ ५५
इन्द्रो दिवस्पतिः शत्रुष्टिट्टिभो नाम दानवः।
मायूरेण च रूपेण घातयिष्यति माधवः ॥ ५६
चतुर्द्दशस्य भौत्यस्य शृणु पुत्त्रान् मनोर्मम।
उरुर्गभीरो धृष्टश्च तरस्वी ग्रह एव च ॥ ५७
अभिमानी प्रवीरश्च जिष्णुः संक्रन्दनस्तथा।
तेजस्वी दुलभश्चैव भौत्यस्यैते मनोः सुताः ॥ ५८
अग्नीध्रश्चाग्निबाहुश्च मागधश्च तथा शुचिः।
अजितो मुक्तशुक्रौ च ऋषयः सप्त कीर्त्तिताः ॥ ५९
चाक्षुषाः कर्म्मनिष्ठाश्च (ख) पवित्रा भ्राजिनस्तथा।
वचोवृद्धा देवगणाः पञ्च प्रोक्तास्तु सप्तकाः ॥ ६०
शुचिरिन्द्रो महादैत्यो रिपुर्हन्ता हरिः स्वयम्।
एको वेदश्चतुर्द्धा तु व्यासरूपेण विष्णुना ॥ ६१
कृतस्ततः पुराणानि विद्याश्चाष्टादशैव तु।
अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ॥ ६२
पुराणं धर्म्मशास्त्रञ्च आयुर्व्वेदार्थशास्त्रकम्।
धनुर्व्वेदश्च गान्धर्व्वो विद्या ह्यष्टादशैव ताः ॥ ६३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
मन्वन्तरनिर्णये सप्ताशीति-
तमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः।

सूत उवाच।
हरिर्मन्वन्तराण्याह ब्रह्मादिभ्यो हराय च।
मार्कण्डेयः पितृस्तोत्रं क्रौष्टुकिं प्राह तच्छृणु ॥ १

(क) निष्प्रकम्प इति पुराणान्तरसंवादी पाठः।
(ख) चाक्षुषाश्च कनिष्ठाश्चेति पुराणान्तरसंवादी पाठः।

मार्कण्डेय उवाच।

रुचिः प्रजापतिः पूर्व्वं निर्म्ममो निरहङ्कृतिः।
अत्रस्तो मितभायी च चचार पृथिवीमिमाम्॥ २
अनग्निमनिकेतं तमेकाहारमनाश्रमम्।
विमुक्तसङ्गं तं दृष्ट्वा प्रोचुः स्वपितरो मुनिम्॥ ३

पितर ऊचुः।

वत्स कस्मात् त्वया पुण्यो न कृतो दारसंग्रहः।
स्वर्गापवर्गहेतुत्वाद्बन्धस्तेनानिशं विना॥ ४
गृही समस्तदेवानां पितॄणाञ्च तथार्हणम्।
ऋषीणामर्थिनाञ्चैव कुर्व्वन् लोकानवाप्नुयात्॥ ५
स्वाहोच्चारणतो देवान् स्वधोच्चारणतः पितॄन्।
विभजत्यन्नदानेन भूताद्यानतिथीनपि॥ ६
स त्वं दैवादृणाद्बन्धमिममस्मदृणादपि।
अवाप्तोऽसि मनुष्यर्षे भूतेभ्यश्च दिने दिने॥ ७
अनुत्पाद्य सुतान् देवानसन्तर्प्य पितॄंस्तथा।
अकृत्वा च कथं मौढ्यात् स्वगतिं गन्तुमिच्छसि॥ ८
क्लेशवोधैककं पुत्त्र अन्यायेन भवेत् तव।
मृतस्य नरकं त्यक्त्वा क्लेश एवान्यजन्मनि॥ ९

रुचिरुवाच।

परिग्रहोऽतिदुःखाय पापायाधोगतेस्तथा।
भवत्यतो मया पूर्व्वं न कृतो दारसंग्रहः॥ १०
आत्मनः संश्रयोपायः क्रियते यणमन्त्रणात्॥ (क)
स्वमुक्तिहेतुर्न भवत्यसावपि परिग्रहात्॥ ११
प्रक्षाल्यतेऽनुदिवसं य आत्मा निष्परिग्रहः।
ममत्वपङ्कदिग्धोऽपि विद्याम्भोभिर्वरं हि तत्॥ १२
अनेकभवसम्भूत-कर्म्मपङ्काङ्कितो बुधैः।
आत्मा सद्वासनातोयैः प्रक्षाल्यो नियतेन्द्रियैः॥ १३

पितर ऊचुः।

युक्तं प्रक्षालनं कर्त्तुमात्मनोऽपि यतेन्द्रियैः।
किन्तु नोपायमार्गोऽयं यतस्त्वं पुत्त्र वर्त्तसे॥ १४
पञ्चयज्ञैस्तपोदानैरशुभं नुदतस्तव।
फलाभिसन्धिरहितैः पूर्व्वकर्म्मशुभाशुभैः॥ १५
एवं न बन्धो भवति कुर्व्वतः करुणात्मकम्।
न च बन्धाय तत् कर्म्म भवत्यनभिसंहितम्॥ १६
पूर्व्वकर्म्म कृतं भोगैः क्षीयते ह्यनिशं तथा।
सुखदुःखात्मकैर्वत्स पुण्यापुण्यात्मकं नृणाम्।
एवं प्रक्षाल्यते प्राज्ञैरात्मा बन्धाच्च रक्ष्यते।
रक्ष्यश्च स्वविवेकेन पापपङ्केन दह्यते॥ १८

रुचिरुवाच।

अविद्या पठ्यते वेदे कर्म्ममार्गः पितामहाः।
तत् कथं कर्म्मणो मार्गे भवन्तो योजयन्ति माम्॥

पितर ऊचुः।

अविद्या सत्यमेवैतत् कर्म्म नैतन्मृषा वचः।
किन्तु विद्या परिव्याप्तौ हेतुः कर्म्म न संशयः।
विहिताकरणात् पुंभिरसद्भिः क्रियते तु यः।
संयमो मुक्तये सोऽन्ते प्रत्युताधोगतिप्रदः॥
प्रक्षालयामीति भवान् यदेतन्मन्यते वरम्।
विहिताकरणोद्भूतैः पापैस्त्वमसि दह्यसे॥
अविद्याप्युपकाराय विषवज्जायते नृणाम्।
अनुष्ठानाभ्युपायेन बन्धयोग्यापि नो हि सा।
तस्माद्वत्स कुरुष्व त्वं विधिवद्दारसंग्रहम्।
मा जन्म विफलं तेऽस्तु असम्प्राप्यान्यलौकिकम्।

रुचिरुवाच।

वृद्धोऽहं साम्प्रतं को मे पितरः सम्प्रदास्यति।
भार्य्यां तथा दरिद्रस्य दुष्करो दारसंग्रहः॥

पितर ऊचुः।

अस्माकं पतनं वत्स भवतश्चाप्यधोगतिः।
नूनं भावि भवित्री च नाभिनन्दसि नो वचः।
इत्युक्त्वा पितरस्तस्य पश्यतो मुनिरुत्तम।
बभूवुः सहसादृश्या दीपा वातहता इव॥
मुनिः क्रौष्टुकये प्राह मार्कण्डेयो महातपाः।
रुचिवृत्तान्तमखिलं पितृसंवादलक्षणम्॥

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
अष्टाशीतितमोऽध्यायः॥ ८८॥

---

## एकोननवतितमोऽध्यायः।

सूत उवाच।

पृष्टः क्रौष्टुकिनोवाच मार्कण्डेयः पुनश्च तम्।
स तेन पितृवाक्येन भृशमुद्विग्नमानसः।

---

(क) आत्मनः संयमोपायः क्रियते सुनियन्त्रणादिति पाठान्तरम्।

कन्याभिलाषी विप्रर्षिः परिबभ्राम मेदिनीम् ॥ १
कन्यामलभमानोऽसौ पितृवाक्याग्निदीपितः ।
चिन्तामवाप महतीमतीवोद्विग्नमानसः ॥ २
किं करोमि क्व गच्छामि कथं मे दारसंग्रहः ।
किं भवेन्मत्पितृणाञ्च ममाभ्युदयकारकम् ॥ ३
इति चिन्तयतस्तस्य मतिर्जाता महात्मनः ।
तपसाराधयाम्येनं ब्रह्माणं कमलोद्भवम् ॥ ४
ततो वर्षशतं दिव्यं तपस्तेपे महामनाः ।
तत्र स्थितश्चिरं कालं वनेषु नियमस्थितः ॥ ५
आराधनाय स तदा परं नियममास्थितः ॥ ६
ततः स्वं दर्शयामास ब्रह्मा लोकपितामहः ।
उवाचाथ प्रसन्नोऽस्मीत्युच्यतामभिवाञ्छितम् ॥ ७
ततोऽसौ प्रणिपत्याह ब्रह्माणं जगतो गतिम् ।
पितृणां वचनात् तेन यत् कर्त्तुमभिवाञ्छितम् ॥ ८

ब्रह्मोवाच ।

प्रजापतिस्त्वं भविता स्रष्टव्या भवता प्रजाः ।
सृष्ट्वा प्रजाः सुतान् विप्र समुत्पाद्य क्रियास्तथा ॥ ९
कृत्वा कृताधिकारस्त्वं ततः सिद्धिमवाप्स्यसि ।
स त्वं यथोक्तं पितृभिः कुरु दारपरिग्रहम् ॥ १०
कामञ्चेममभिध्याय क्रियतां पितृपूजनम् ।
त एव तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम् ।
पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामहाः ॥ ११

मार्कण्डेय उवाच ।

इत्यृषिर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ।
नद्या विविक्ते पुलिने चकार पितृतर्पणम् ॥ १२
तुष्टाव च पितॄन् विप्र स्तवैरेभिरथादृतः ।
एकाग्रः प्रयतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ १३

रुचिरुवाच ।

नमस्येऽहं पितॄन् भक्त्या ये वसन्त्यधिदेवताः ।
देवैरपि हि तर्प्यन्ते ये श्राद्धेषु स्वधोत्तरैः ॥ १४
नमस्येऽहं पितॄन् स्वर्गे ये तर्प्यन्ते महर्षिभिः ।
श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥ १५
नमस्येऽहं पितॄन् स्वर्गे सिद्धाः सन्तर्पयन्ति यान् ।
श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥ १६
नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते गुह्यकैर्दिवि ।
तन्मयत्वेन वाञ्छद्भिरृद्धिमात्यन्तिकीं पराम् ॥ १७
नमस्येऽहं पितॄन् मर्त्यैरर्च्यन्ते भुवि ये सदा ।
श्राद्धेषु श्रद्धयाभीष्ट-लोकपुष्टिप्रदायिनः ॥ १८
नमस्येऽहं पितॄन् विप्रैरर्च्यन्ते भुवि ये सदा ।
वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥ १९
नमस्येऽहं पितॄन् ये वै तर्प्यन्तेऽरण्यवासिभिः ।
वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकल्मषैः ॥ २०
नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकैर्धर्मचारिभिः ।
ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥ २१
नमस्येऽहं पितॄन् श्राद्धे राजन्यास्तर्पयन्ति यान् ।
कव्यैरशेषैर्विधिवल्लोकद्वयफलप्रदान् ॥ २२
नमस्येऽहं पितॄन् वैश्यैरर्च्यन्ते भुवि ये सदा ।
स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥ २३
नमस्येऽहं पितॄन् श्राद्धे शूद्रैरपि च भक्तितः ।
सन्तर्प्यन्ते जगत्यत्र नाम्ना ख्याताः सुकालिनः ॥ २४
नमस्येऽहं पितॄन् श्राद्धे पाताले ये महासुरैः ।
सन्तर्प्यन्ते स्वधाहारास्त्यक्तदम्भमदैः सदा ॥ २५
नमस्येऽहं पितॄन् श्राद्धैरर्च्यन्ते ये रसातले ।
भोगैरशेषैर्विधिवन्नागैः कामानभीप्सुभिः ॥ २६
नमस्येऽहं पितॄन् श्राद्धैः सर्पैः सन्तर्पितान् सदा ।
तत्रैव विधिवन्मन्त्र-भोगसम्पत्समन्वितैः ॥ २७

पितॄन् नमस्ये निवसन्ति साक्षाद्-
ये देवलोकेऽथ महीतले वा ।
तथान्तरीक्षे च सुरारिपूज्या-
स्ते मे प्रतीच्छन्तु मयोपनीतम् ॥ २८
पितॄन् नमस्ये परमात्मभूता
ये वै विमाने निवसन्त्यमूर्त्ताः ।
यजन्ति यानस्तमलैर्मनोभि-
र्योगीश्वराः क्लेशविमुक्तिहेतून् ॥ २९
पितॄन् नमस्ये दिवि ये च मूर्त्ताः
स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां
विमुक्तिदा येऽनभिसंहितेषु ॥ ३०
तृप्यन्तु तेऽस्मिन् पितरः समस्ता
इच्छावतां ये प्रदिशन्ति कामान् ।
सुरत्वमिन्द्रत्वमितोऽधिकं वा
गजाश्व-रत्नानि महागृहाणि ॥ ३१

सोमस्य ये रश्मिषु येऽर्कविम्बे
शुक्ले विमाने च सदा वसन्ति।
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयै-
र्गन्धादिना पुष्टिमितो व्रजन्तु ॥ ३२
येषां हुतेऽग्नौ हविषा च तृप्ति-
र्ये भुञ्जते विप्रशरीरसंस्थाः।
ये पिण्डदानेन मुदं प्रयान्ति
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ॥ ३३
ये खड्गमांसेन सुरैरभीष्टैः
कृष्णैस्तिलैर्दिव्यमनोहरैश्च।
कालेन शाकेन महर्षिवर्य्यैः
सम्प्रीणितास्ते मुदमत्र यान्तु ॥ ३४
कव्यान्यशेषाणि च यान्यभीष्टा-
न्यतीव येषाममरार्च्चितानाम्।
तेषाञ्च सान्निध्यमिहास्तु पुष्प-
गन्धाम्बुभोज्येषु मया कृतेषु ॥ ३५
दिने दिने ये प्रतिगृह्णतेऽर्च्चां
मासान्तपूज्या भुवि येऽष्टकासु।
ये वत्सरान्तेऽभ्युदये च पूज्याः
प्रयान्तु ते मे पितरोऽत्र तृप्तिम् ॥ ३६
पूज्या द्विजानां कुमुदेन्दुभासो
ये क्षत्रियाणां ज्वलनार्कवर्णाः।
तथा विशां ये कनकावदाता
नीलीनिभाः शूद्रजनस्य ये च ॥ ३७
तेऽस्मिन् समस्ता मम पुष्पगन्ध-
धूपाम्बुभोज्यादिनिवेदनेन।
तथाग्निहोमेन च यान्तु तृप्तिं
सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥ ३८
ये देवपूर्व्वाण्यभितृप्तिहेतो-
रश्नन्ति कव्यानि शुभाहृतानि।
तृप्ताश्च ये भूतिसृजो भवन्ति
तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥ ३९
रक्षांसि भूतान्यसुरांस्तथोग्रान्
निर्णाशयन्तस्त्वशिवं प्रजानाम्।
आद्याः सुराणाममरेशपूज्या-
स्तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥ ४०

अग्निष्वात्ता वर्हिषद आज्यपाः सोमपास्तथा।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया ॥
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्।
तथा वर्हिषदः पान्तु याम्यां मे पितरः सदा ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः।
रक्षो-भूत-पिशाचेभ्यस्तथैवासुरदोषतः।
सर्व्वतः पितरो रक्षां कुर्व्वन्तु मम नित्यशः ॥
विश्वो विश्वभुगाराध्यो धर्म्मो धन्यः शुभाननः।
भूतिदो भूतिकृद्भूतिः पितृणां ये गणा नव ॥
कल्याणः कल्यदः कल्यतरः कल्यतराश्रयः।
कल्यताहेतुरनघः षडिमे ते गणाः स्मृताः ॥
वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा।
विश्वपाता तथा धाता सप्तैते च गणाः स्मृताः ॥
महान् महात्मा महितो महिमावान् महाबलः।
गणाः पञ्च तथैवैते पितृणां पापनाशनाः ॥
सुखदो धनदश्चान्यो धर्म्मदोऽन्यश्च भूतिदः।
पितृणां कथ्यते चैव तथा गणचतुष्टयम् ॥
एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत्।
ते मेऽत्र तृप्तास्तुष्यन्तु दिशन्तु च सदा हितम् ॥

मार्कण्डेय उवाच।

एवन्तु स्तुवतस्तस्य तेजसो राशिरुच्छ्रितः।
प्रादुर्ब्बभूव सहसा गगनव्याप्तिकारकः ॥ ५०
तद्दृष्ट्वा सुमहत् तेजः समाच्छाद्य स्थितं जगत्।
जानुभ्यामवनीं गत्वा रुचिः स्तोत्रमिदं जगौ ॥

रुचिरुवाच।

अर्च्चितानाममूर्त्तानां पितृणां दीप्ततेजसाम्।
नमस्यामि सदा तेषां ध्यानिनां दिव्यचक्षुषाम् ॥
इन्द्रादीनाञ्च नेतारो दक्ष-मारीचयोस्तथा।
सप्तर्षीणां तथान्येषां तान् नमस्यामि कामदान् ॥
मन्वादीनाञ्च नेतारः सूर्य्याचन्द्रमसोस्तथा।
तान् नमस्याम्यहं सर्व्वान् पितॄनप्युदधावपि ॥
नक्षत्राणां ग्रहाणाञ्च वाय्वग्न्योर्नभसस्तथा।
द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥
देवर्षीणां जनितॄंश्च सर्व्वलोकनमस्कृतान्।
अभयस्य सदा दातॄन् नमस्यामि कृताञ्जलिः ॥
प्रजापतेः कश्यपाय सोमाय वरुणाय च।

योगीश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ॥ ५७
नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ।
स्वयम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे ॥ ५८
सोमाधारान् पितृगणान् योगमूर्त्तिधरांस्तथा ।
नमस्यामि तथा सोमं पितरं जगतामहम् ॥ ५९
अग्निरूपांस्तथैवान्यान् नमस्यामि पितॄनहम् ।
अग्नीषोममयं विश्वं यत एतदशेषतः ॥ ६०
ये च तेजसि ये चैते सोमसूर्य्याग्निमूर्त्तयः ।
जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः ॥ ६१
तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः ।
नमो नमो नमस्ते मे प्रसीदन्तु स्वधाभुजः ॥ ६२

मार्कण्डेय उवाच ।

एवं स्तुतास्ततस्तेन तेजसो मुनिसत्तमाः ।
निश्चक्रमुस्ते पितरो भासयन्तो दिशो दश ॥ ६३
निवेदितञ्च यत् तेन पुष्पगन्धानुलेपनम् ।
भूषितानथ स तान् ददृशे पुरतः स्थितान् ॥ ६४
प्रणिपत्य रुचिर्भक्त्या पुनरेव कृताञ्जलिः ।
नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ॥ ६५
ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तमम् ।
वरं वृणीष्वेति स तानुवाचानतकन्धरः ॥ ६६

रुचिरुवाच ।

प्रजानां सर्गकर्त्तृत्वमादिष्टं ब्रह्मणा मम ।
सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीम्॥६७

पितर ऊचुः ।

अत्रैव सद्यः पत्नी ते भवत्वतिमनोरमा ।
तस्याञ्च पुत्रो भविता भवतो मनुरुत्तमः ॥ ६८
मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः ।
रुचे रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये ॥ ६९
तस्यापि बहवः पुत्रा महाबलपराक्रमाः ।
भविष्यन्ति महात्मानः पृथिवीपरिपालकाः ॥ ७०
त्वञ्च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा चतुर्व्विधाः ।
क्षीणाधिकारो धर्म्मज्ञस्ततः सिद्धिमवाप्स्यसि ॥ ७१
स्तोत्रेणानेन च नरो योऽस्मांस्तोष्यति भक्तितः ।
तस्य तुष्टा वयं भोगानात्मजं ज्ञानमुत्तमम् ॥ ७२
आयुरारोग्यमर्थञ्च पुत्रपौत्रादिकं तथा ।
वाञ्छद्भिः सततं स्तव्याः स्तोत्रेणानेन वै यतः ॥ ७३
श्राद्धेषु य इमं भक्त्या अस्मत्प्रीतिकरं स्तवम् ।
पठिष्यति द्विजाग्र्याणां भुञ्जतां पुरतः स्थितः ॥ ७४
स्तोत्रश्रवणसम्प्रीत्या सन्निधाने परे कृते ।
अस्माभिरक्षयं श्राद्धं तद्भविष्यत्यसंशयम् ॥ ७५
यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ।
अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ॥ ७६
अश्राद्धार्हैरुपहृतैरुपहारैस्तथा कृतम् ।
अकालेऽप्यथवा देशे विधिहीनमथापि वा ॥ ७७
अश्रद्धया वा पुरुषैर्दम्भमाश्रित्य यत् कृतम् ।
अस्माकं तृप्तये श्राद्धं तथाप्येतदुदीरणात् ॥ ७८
यत्रैतत् पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहम् ।
अस्माकं जायते तृप्तिस्तत्र द्वादशवार्षिकी ॥ ७९
हेमन्ते द्वादशाब्दानि तृप्तिमेतत् प्रयच्छति ।
शिशिरे द्विगुणाब्दानि तृप्तिं स्तोत्रमिदं शुभम् ॥ ८०
वसन्ते षोड़श समास्तृप्तये श्राद्धकर्म्मणि ।
ग्रीष्मे च षोड़शैवैतत् पठितं तृप्तिकारकम् ॥ ८१
विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन साधिते ।
वर्षासु तृप्तिरस्माकमक्षया जायते रुचे ॥ ८२
शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति ।
अस्माकमेतत् पुरुषैस्तृप्तिं पञ्चदशाब्दिकीम् ॥ ८३
यस्मिन् गेहे च लिखितमेतत् तिष्ठति नित्यदा ।
सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति ॥ ८४
तस्मादेतत् त्वया श्राद्धे विप्राणां भुञ्जतां पुरः ।
श्रावणीयं महाभाग अस्माकं पुष्टिकारकम् ॥ ८५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पितृ-
स्तोत्रे रुचिस्तोत्रं नामैकोननवति-
तमोऽध्यायः ॥ ८९ ॥

---

## नवतितमोऽध्यायः ।

मार्कण्डेय उवाच ।

ततस्तस्मान्नदीमध्यात् समुत्तस्थौ मनोरमा ।
प्रम्लोचा नाम तन्वङ्गी तत्समीपे वराप्सराः ॥ १
सा चोवाच महात्मानं रुचिं सुमधुराक्षरम् ।
प्रसादयामास भूयः प्रम्लोचा च वराप्सराः ॥ २
अतीव रूपिणी कन्या मत्सुता वराङ्गना ।

जाता वरुणपुत्त्रेण पुष्करेण महात्मना। ॥ ३
तां ब्रह्माण मया दत्तां भार्य्यार्थे वरवर्णिनीम्।
मनुर्महामतिस्तस्यां समुत्पत्स्यति ते सुतः ॥ ४

मार्कण्डेय उवाच।

तथेति तेन साप्युक्ता तस्मात् तोयाद्दपुस्सतीम्।
उद्दधार ततः कन्यां मानिनीं नाम नामतः ॥ ५
नद्याश्च पुलिने तस्मिन् स मुनिर्मुनिसत्तम।
जग्राह पाणिं विधिवत् समानीय महामुनिः ॥६
तस्यां तस्य सुतौ जज्ञे महावीर्य्यौ महाद्युतिः।
रुचे रौच्य इति ख्यातो यो मया पूर्व्वमीरितः ॥ ७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पितृस्तोत्रं नाम नवतितमोऽध्यायः ॥९०॥

---

## एकनवतितमोऽध्यायः।

हरिरुवाच।

स्वायम्भुवाद्या मनवो हरिं ध्यायन्ति कर्म्मगाः।
व्रताचारार्च्चनाध्यान-स्तुतिजप्यपरायणाः ॥ १
देहेन्द्रिय-मनो-बुद्धि-प्राणाहङ्कारवर्ज्जितम्।
आकाशेन विहीनं वै तेजसा परिवर्ज्जितम् ॥ २
उदकेन विहीनं वै तद्धर्म्मपरिवर्ज्जितम्।
पृथिवीरहितञ्चैव सर्व्वभूतविवर्ज्जितम् ॥ ३
भूताध्यक्षं तथा बुद्धं नियन्तारं प्रभुं विभुम्।
चतन्यरूपतारूपं सर्व्वाध्यक्षं निरञ्जनम् ॥ ४
मुक्तसङ्गं महेशानं सर्व्वदेवप्रपूजितम्।
तेजोरूपमसत्त्वञ्च तमसा परिवर्ज्जितम् ॥ ५
रहितं रजसा नित्यं व्यतिरिक्तं गुणैस्त्रिभिः।
सर्व्वरूपविहीनं वै कर्त्तृत्वादिविवर्ज्जितम् ॥ ६
वासनारहितं शुद्धं सर्व्वदोषविवर्ज्जितम्।
पिपासावर्ज्जितं तद्वच्छोकमोहविवर्ज्जितम् ॥ ७
जरामरणहीनं वै कूटस्थं मोहवर्ज्जितम्।
उत्पत्तिरहितञ्चैव प्रलयेन विवर्ज्जितम् ॥ ८
स्थित्या च रहितं सत्यं निष्कलं परमेश्वरम्।
जाग्रत्स्वप्नसुषुप्त्यादिवर्ज्जितं नामवर्ज्जितम् ॥ ९
अध्यक्षं जाग्रदादीनां शान्तरूपं सुरेश्वरम्।
जाग्रदादिस्थितं नित्यं कार्य्यकारणवर्ज्जितम् ॥ १०
सर्व्वदृष्टं तथा मूर्त्तं सूक्ष्मं सूक्ष्मतरं परम्।
ज्ञानदृक् श्रोत्रविज्ञानं परमानन्दरूपकम् ॥
विश्वेन रहितं तद्वत् तैजसेन विवर्ज्जितम्।
प्राज्ञेन रहितञ्चैव तुरीयं परमाक्षरम् ॥ १२
सर्व्वगोप्तृ सर्व्वहन्तृ सर्व्वभूतात्मरूपि च।
बुद्धिधर्म्मविहीनं वै निराधारं शिवं हरिम्।
विक्रियारहितञ्चैव वेदान्तैर्वेद्यमेव च।
वेदरूपं परं भूतमिन्द्रियेभ्यः परं शुभम् ॥
शब्देन वर्ज्जितञ्चैव रसेन च विवर्ज्जितम्।
स्पर्शेन रहितं देवं रूपमात्रविवर्ज्जितम् ॥
रूपेण रहितञ्चैव गन्धेन परिवर्ज्जितम्।
अनादि च ध्रुवं शान्तमहं ब्रह्मास्मि केवलम्।
एवं ज्ञात्वा महादेव ध्यानं कुर्य्याज्जितेन्द्रियः।
ध्यानं यः कुरुते ह्येवं स भवेद्ब्रह्म मानवः।
इति ध्यानं समाख्यातमीश्वरस्य मया तव।
अधुना कथयाम्यन्यत् किं तद्ब्रूहि वृषध्वज।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे ध्यानं नामैकनवतितमोऽध्यायः ॥९१॥

---

## द्विनवतितमोऽध्यायः।

रुद्र उवाच।

विष्णोर्ध्यानं पुनर्ब्रूहि शङ्ख-चक्र-गदाधर।
येन विज्ञातमात्रेण कृतकृत्यो भवेन्नरः ॥ १

हरिरुवाच।

प्रवक्ष्यामि हरेर्ध्यानं मायातत्त्वविमर्द्दकम्।
मूर्त्तामूर्त्तादिभेदेन तद्ध्यानं द्विविधं हर ॥
अमूर्त्तं रुद्र कथितं हन्त मूर्त्तं ब्रवीम्यहम्।
सूर्य्यकोटिप्रतीकाशो जिष्णुर्भ्राजिष्णुरेकलः
कुन्द-गोक्षीरधवलो हरिर्ध्येयो मुमुक्षुभिः
विशालेन सुसौम्येन शङ्खेन च समन्वितः।
सहस्रादित्यतुल्येन ज्वालामालोग्ररूपिणा
चक्रेण चान्वितः शान्तो गदाहस्तः शुभानन
किरीटेन महार्हेण रत्नप्रज्वलितेन च।
सायुधः सर्व्वगो देवः सरोरुहधरस्तथा।
वनमालाधरः शुभ्रः समांसो हेमभूषणः।

सुवक्त्रः शुद्धदेहश्च सुकर्णः पद्मसंस्थितः ॥ ७
हिरण्मयशरीरश्च चारुहारी शुभाङ्गदः।
केयूरेण समायुक्तो वनमालासमन्वितः ॥ ८
श्रीवत्सकौस्तुभयुतो लक्ष्मीवन्योक्षणान्वितः।
अणिमादिगुणैर्युक्तः सृष्टिसंहारकारकः ॥ ९
मुनिध्येयोऽसुरध्येयो देवध्येयोऽतिसुन्दरः।
ब्रह्मादिस्तम्बपर्य्यन्त-भूतजातहृदि स्थितः ॥ १०
सनातनोऽव्ययो मेध्यः सर्व्वानुग्रहकृत् प्रभुः।
नारायणो महादेवः स्फुरन्मकरकुण्डलः ॥ ११
सन्तापनाशनोऽध्यक्षो मङ्गल्यो दुष्टनाशनः।
सर्व्वात्मा सर्व्वरूपश्च सर्व्वगो ग्रहनाशनः ॥ १२
चार्व्वङ्गुलीयसंयुक्त-सुदीप्तनख एव च।
शरण्यः सुखकारी च सौम्यरूपो महेश्वरः ॥ १३
सर्व्वालङ्कारसंयुक्तश्चारुचन्दनचर्च्चितः।
सर्व्वदेवसमायुक्तः सर्व्वदेवप्रियङ्करः ॥ १४
सर्व्वलोकहितैषी च सर्व्वेशः सर्व्वभावनः।
आदित्यमण्डले संस्थो ह्यग्निस्थो वारिसंस्थितः ॥१५
वासुदेवो जगद्धाता ध्येयो विष्णुर्मुमुक्षुभिः।
वासुदेवोऽहमस्मीति आत्मा ध्येयो हरिर्हर ॥ १६
ध्यायन्त्येवञ्च ये विष्णुं ते यान्ति परमां गतिम्।
याज्ञवल्क्यः पुरा ह्येवं ध्यात्वा विष्णुं सुरेश्वरम्।
धर्म्मोपदेशकर्त्तृत्वं सम्प्राप्यागात् परं पदम् ॥ १७
तस्मात् त्वमपि देवेशं विष्णुं चिन्तय शङ्कर।
विष्णुध्यानं पठेद्यस्तु प्राप्नोति परमां गतिम् ॥ १८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे विष्णु-
ध्यानं नाम द्विनवतितमोऽध्यायः ॥९२॥

---

## त्रिनवतितमोऽध्यायः।

महेश्वर उवाच।

याज्ञवल्क्येन व पूर्व्वं धर्म्मः प्रोक्तः कथं हरे।
तन्मे कथय केशिघ्न यथा तत्त्वेन माधव ॥ १

हरिरुवाच।

याज्ञवल्क्यं नमस्कृत्य मिथिलायां समास्थितम्।
अपृच्छन् ऋषयो गत्वा वर्णधर्म्मानशेषतः।
तेभ्यः स कथयामास विष्णुं ध्यात्वा जितेन्द्रियः ॥ २

याज्ञवल्क्य उवाच।

यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्म्मं निबोधत।
पुराण-न्याय-मीमांसा-धर्म्मशास्त्रार्थमिश्रिताः ॥ ३
वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्द्दश।
वक्तारो धर्म्मशास्त्राणां मनुर्विष्णुयमोऽङ्गिराः ॥ ४
वशिष्ठ-दक्ष-संवर्त्त-शातातप-पराशराः।
आपस्तम्बोशनोव्यासाः कात्यायन-बृहस्पती ॥ ५
गौतमः शङ्खलिखितौ हारीतोऽत्रिरहं तथा।
एते विष्णुं समाराध्य जाता धर्म्मोपदेशकाः ॥ ६
देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम्।
पात्रे प्रदीयते यत् तत् सकलं धर्म्मलक्षणम् ॥ ७
इज्याचारो दमोऽहिंसा दानं स्वाध्यायकर्म्म च।
अयन्तु परमो धर्म्मो यद्योगेनात्मदर्शनम् ॥ ८
चत्वारो वेदधर्म्मज्ञाः पर्षत्त्रैविद्यमेव वा।
स ब्रूते यत् स धर्म्मः स्यादेको वाध्यात्मवित्तमः ॥ ९
ब्रह्म-क्षत्रिय-विट्-शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रिया ॥१०
गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा।
षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म्म च ॥ ११
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूड़ां कुर्य्याद्यथाकुलम् ॥ १२
एवमेनःशमं याति वीजगर्भसमुद्भवम्।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः॥१३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे वर्ण-
धर्म्मो नाम त्रिनवतितमोऽध्यायः ॥९३॥

---

## चतुनवतितमोऽध्यायः।

याज्ञवल्क्य उवाच।

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ २
दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः।
कुर्य्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ ३
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतर्जलैः।

गन्धलेपक्षयकरं शौचं कुर्य्यान्महाव्रताः ॥ ४
अन्तर्ज्जानु शुचौ देश उपविष्ट उदङ्मुखः।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ ५
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापति-पितृ-ब्रह्म-दैवतीर्थान्यनुक्रमात् ॥ ६
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ ७
हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ ८
स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः।
सूर्य्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ ९
गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्व्विकाम्।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ १०
प्राणायामस्य संशुद्धिस्तृचेनाब्दैवतेन तु।
जपेन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ ११
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठन्नासूर्य्यदर्शनात्।
अग्निकार्य्यं ततः कुर्य्यात् सन्ध्ययोरुभयोरपि ॥१२
ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्।
गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ १३
आहूतश्चाप्यधीयीत लब्धञ्चास्मै निवेदयेत्।
हितञ्चास्याचरेन्नित्यं मनोवाक्कायकर्म्मभिः ॥ १४
दण्डाजिनोपवीतानि मेखलाञ्चैव धारयेत्।
द्विजेषु चारयेद्भैक्ष्यमनिन्द्येष्वात्मवृत्तये ॥ १५
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मण-क्षत्रिय-विशां भैक्षचर्य्या यथाक्रमम् ॥ १६
कृताग्निकार्य्यो भुञ्जीत विनीतो गुर्व्वनुज्ञया।
आपोशानक्रियापूर्व्वं सत्कृत्यान्नमकुत्सयन्।
ब्रह्मचर्य्यास्थितोऽनेकमन्नमद्यादनापदि ॥ १७
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यन्।
मधु मांसं तथा खिन्नमित्यादि परिवर्ज्जयेत्। १८
स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय ददात्येनमाचार्य्यः स प्रकीर्त्तितः ॥ १९
एकदेश उपाध्याय ऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथापूर्व्वमेभ्यो माता गरीयसी ॥ २०
प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोड़शे ॥ २१

आ षोड़शाद्द्विविंशाच्च चतुर्व्विंशाच्च वत्सरात्।
ब्रह्म-क्षत्र-विशां काल औपनायनिकः परः॥
अत ऊर्द्धं पतन्त्येते सर्व्वधर्म्मविवर्ज्जिताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनम्।
ब्राह्मण-क्षत्रिय-विशस्तस्मादेते द्विजातयः॥
यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्म्मणाम्।
वेद एव द्विजातीनां निःश्रेयसकरः परः॥
मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः।
पितॄन् मधु-घृताभ्याञ्च ऋचोऽधीते हि योऽन्व
यजुः,साम पठेत् तद्वदथर्व्वाङ्गिरसं द्विजः।
सन्तर्पयेत् पितॄन् देवान् सोऽन्वहं हि घृतामृ
वेदवाक्यं पुराणञ्च नराशंसीश्च गाथिकाः।
इतिहासांस्तथा वेदान् योऽधीते शक्तितोऽन्व
सन्तर्पयेत् पितॄन् देवान् मांस-क्षीरोदनादि
ते तृप्तास्तर्पयन्त्येनं सर्व्वकामफलैः शुभैः॥
यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम्।
भूमिदानस्य तपसः स्वाध्यायफलभाग्द्विजः॥
नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा॥
अनेन विधिना देहं साधयेद्विजितेन्द्रियः।
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः॥

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
वर्णधर्म्मो नाम चतुर्नवति-
तमोऽध्यायः ॥९४॥

---

## पञ्चनवतितमोऽध्यायः।

याज्ञवल्क्य उवाच।

शृण्वन्तु मुनयो धर्म्मान् गृहस्थस्य यतव्रताः।
गुरवे च धनं दत्त्वा स्नात्वा च तदनुज्ञया॥
अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा॥
द्विपञ्चनवविख्याताच्छ्रोत्रियाणां महाकुलात्

सवर्णः श्रोत्रियो विद्वान् वरो दोषान्वितो न च ॥ ४
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात् तत्रायं जायते स्वयम् ॥ ५
तिस्रो वर्णानुपूर्व्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मण-क्षत्रिय-विशां भार्य्याः स्वा शूद्रजन्मनः ॥ ६
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ७
यज्ञस्थायर्त्त्विजे दैवमादायार्षस्तु गोयुगम् ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ८
इत्युक्ता चरतां धर्म्मं सह या दीयतेऽर्थिने ।
सकायः पावयेत् तज्जः षड्वंश्यानात्मना सह ॥ ९
आसुरो द्रविणादानाद्गान्धर्व्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥ १०
चत्वारो ब्राह्मणस्याद्यास्तथा गान्धर्व्व-राक्षसौ ।
राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ ११
पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने चाग्रजन्मनः ॥ १२
पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः ॥ १३
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
एषामभावे दातॄणां कन्या कुर्य्यात् स्वयंवरम् ॥ १४
सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
अदुष्टां हि त्यजन् दण्ड्यः सुदुष्टान्तु परित्यजेत्॥१५
अपुत्रां गुर्व्वनुज्ञातो देवरः पुत्त्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥१६
आगर्भसम्भवं गच्छेत् पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रपस्य भवेत् सुतः ॥ १७
हृताधिकारां मलिनां पिण्डमात्रोपसेविनीम् (क) ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ १८
सोमः शौचं ददौ तासां गन्धर्व्वश्च शुभां गिरम् ।
पावकः सर्व्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ १९
व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्त्तृवधादौ च तथा महति पातके ॥ २०
सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ।

(क) पिण्डमात्रोपजीविनीमिति संहितासम्मतः पाठः ।

अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत् ॥ २१
यत्राविरोधं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ २२
मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ॥ २३
शुद्धां त्यजंस्तृतीयांशं दद्याद्दाभरणां स्त्रियाः ।
स्त्रीभिर्भर्त्तृवचः कार्य्यमेष धर्म्मः परः स्त्रियाः ॥ २४
षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचारी च पर्व्वाण्याद्याश्चतस्रस्तु वर्ज्जयेत् ॥ २५
एवं गच्छन् स्त्रियं क्षामां मघां मूलाञ्च वर्ज्जयेत् ।
लक्षण्यं जनयेदेवं पुत्त्रं रोगविवर्ज्जितम् ॥ २६
यथाकामी भवेद्वापि स्त्रीणां स्मरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतस्ततः ॥ २७
भर्त्तृ-भ्रातृ-पितृ-ज्ञाति-श्वश्रू-श्वशुर-देवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ २८
संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
श्वश्रू-श्वशुरयोः कुर्य्यात् पादयोर्वन्दनं सदा ॥ २९
क्रीड़ा-शरीरसंस्कार-समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्त्तृका ॥ ३०
रक्षेत् कन्यां पिता बाल्ये यौवने पतिरेव ताम् ।
वार्द्धक्ये रक्षते पुत्त्रो ह्यन्यथा ज्ञातयस्तथा ॥ ३१
पतिं विना न तिष्ठेत दिवा वा यदि वा निशि ।
ज्येष्ठां धर्म्मविधौ कुर्य्यान्न कनिष्ठां कदाचन ॥ ३२
दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बितः ।
हिता भर्त्तुर्दिवं गच्छेदिह कीर्त्तीरवाप्य च ॥ ३३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
गृहस्थधर्म्मनिर्णयो नाम पञ्चनवति-
तमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

वक्ष्ये सङ्करजात्यादि गृहस्थादिविधिं परम् ।
विप्रान्मूर्द्धाभिषिक्तो हि क्षत्रियायां विशःस्त्रियाम्॥१
जातोऽम्बष्ठस्तु शूद्रायां निषादः पर्व्वतोऽपि वा (क)।

(क) पारशवोऽपि वेति संहितानुबन्धी पाठः ।

माहिषः क्षत्रियाज्जातो वैश्यायां म्लेच्छसंज्ञितः॥२
माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्।
शूद्रायां करणो वैश्याद्विहानेष विधिः स्मृतः॥ ३
ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद्वैदेहकस्तथा।
शूद्राज्जातस्तु चाण्डालः सर्व्ववर्णविगर्हितः॥ ४
क्षत्रिया मागधं वैश्याच्छूद्रा क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्॥ ५
माहिष्येण करण्यान्तु रथकारः प्रजायते।
असंसन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः॥ ६
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।
व्यत्यये कर्म्मणां साम्यं पूर्व्ववच्चोत्तरावरम्॥ ७
कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही।
दायकालकृतेनापि श्रौतं वैवाहिकाग्निषु॥ ८
शरीरचिन्तां निर्व्वर्त्य कृतशौचविधिर्द्विजः।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्व्वकम्॥ ९
हुत्वाग्नौ सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च॥ १०
योगक्षेमादिसिद्ध्यर्थमुपेयादीश्वरं गृही।
स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्च्चयेत् तथा॥ ११
वेदानथ पुराणानि सेतिहासानि शक्तितः।
जप-यज्ञानुसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्॥१२
बलिकर्म्म-स्वधाहोम-स्वाध्यायातिथिसत्क्रियाः।
भूत-पित्रमर-ब्रह्म-मनुष्याणां महामखाः॥ १३
देवेभ्यस्तु हुतच्चाग्नौ क्षिपेत् भूतबलिं हरेत्।
अन्नं भूमौ न चाण्डाल-वायसेभ्यश्च निक्षिपेत्॥ १४
अन्नं पितृ-मनुष्येभ्यो देयमप्यन्वहं जलम्।
स्वाध्यायमन्वहं कुर्य्यान्न पचेच्चान्नमात्मने॥ १५
बाल-स्ववासिनी-वृद्ध-गर्भिण्यातुर-कन्यकाः।
सम्भोज्यातिथि-भृत्यांश्च दम्पत्योः शेषभोजनम्॥१६
प्राणाग्निहोमविधिनाश्नीयादन्नमकुत्सयन्।
मितं त्रिपक्वञ्च हितं भक्ष्यं बालादिपूर्व्वकम्॥ १७
आपोशानेनोपरिष्टादधस्ताच्चैव भुञ्जता।
अनग्नममृतञ्चैव कार्य्यमन्नं द्विजन्मना॥ १८
अतिथिभ्यस्तु वर्णेभ्यो देयं शक्त्यानुपूर्व्वशः।
अप्रणोद्योऽतिथिः सायमपि नात्र विचारणा॥ १९
सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च।

आगतान् भोजयेत् सर्व्वान् मद्योचं श्रोत्रि
प्रतिसंवत्सरन्त्वर्च्याः स्नातकाचार्य्य-पार्थिवाः
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः
अध्वनीनोऽतिथिः प्रोक्तः श्रोत्रियो वेदपारगः
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः।
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते।
वाक्-पाणि-पादचापल्यं वर्ज्जयेच्चातिभोजन
श्रोत्रियं वातिथिं तृप्तमासीमान्तादनुव्रजेत्।
अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः॥
उपास्य पश्चिमां सन्ध्यां हुत्वाग्नौ भोजनं च
कुर्य्याद्भृत्यैः समायुक्तश्चिन्तयेदात्मनो हितम्
ब्राह्मे मुहूर्त्ते चोत्थाय मान्यो विप्रो धनादि
वृद्धार्त्तानां समादेयः पन्था वै भारवाहिन
इज्याध्ययन-दानादि वैश्यस्य क्षत्रियस्य
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा
प्रधानं क्षत्रिये धर्म्मः प्रजानां प्रतिपालनम्
कुसीद-कृषि-वाणिज्यं पाशुपाल्यं विशः स्मृ
शूद्रस्य द्विजशुश्रूषा द्विजो यज्ञं न हापयेत्
अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः॥
दमः क्षमार्ज्जवं दानं सर्व्वेषां धर्म्मसाधनम्।
आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथा।
त्रैवार्षिकाधिकान्नो यः स सोमं पातुमर्हति।
स्यादन्नंवार्षिकंयस्य कुर्य्यात्प्राक्सौमिकीं क्रि
प्रतिसंवत्सरं सोमः पशुप्रत्ययनं तथा।
कर्त्तव्याग्रयणेष्टिश्च चातुर्म्मास्यानि यत्नतः।
एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं द्विजः।
हीनद्रव्यं न कुर्व्वीत सति द्रव्येऽफलप्रदम्॥
चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षिता
यज्ञार्थलब्धमददद्भासः काकोऽपि वा भवेत्
कुशूलकुम्भीधान्यो वा त्र्यैहिकोऽश्वस्तनोऽपि
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः।
न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः।
राजान्तेवासिगोत्रेभ्यः सीदन्निच्छेद्धनं क्षुधा
दम्भहैतुक-पाषण्डि-वकवृत्तींश्च वर्ज्जयेत्।
शुक्लाम्बरधरो नीचं केश-श्मश्रु-नखः शुचिः
न भार्य्यादर्शनेऽश्नीयात् नकवासा न संस्थिते

अप्रियं न वदेज्जातु ब्रह्मसूत्री विनीतवान् ॥ ३८
अप्रियं न वदेज्जातु ब्रह्मसूत्री विनीतवान् । 
देवादीन् दक्षिणान् कुर्य्याद्यष्टिमान् सकमण्डलुः ।
न तु मेहेन्नदीच्छाया-भस्म-गोष्ठाम्बु-वर्त्मसु ।
न प्रत्यग्न्यर्क-गो-सोम-सन्ध्याम्बु-स्त्री-द्विजन्मनाम् ॥ ३९
नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।
न च मूत्रं पुरीषं वा स्पृशेत् प्रत्यक्शिरा न च ॥ ४०
ष्ठीवनासृक्शकृन्मूत्र-विषाण्यप्सु न संक्षिपेत् ।
पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ ४१
पिबेन्नाञ्जलिना तोयं न शयानं प्रबोधयेत् ।
नाक्षैः क्रीडेच्च कितवैर्व्याधितैश्च न संविशेत् ॥ ४२
विरुद्धं वर्ज्जयेत् कर्म्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारं कपालेषु च संस्थितिम् ॥ ४३
नाचक्षीत धयन्तीं गां नाद्वारेणाविशेत् क्वचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः ॥ ४४
अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा ।
हस्ते चौषधिभावे वा पञ्चम्यां श्रावणस्य च ॥ ४५
पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः ॥ ४६
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्त्विग्गुरुबन्धुषु ।
उपाकर्म्मणि चोत्सर्गे स्वशाखश्रोत्रिये मृते ॥ ४७
सन्ध्यागर्ज्जितनिर्घात भूकम्पोल्कानिपातनात् ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ ४८
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ ४९
पशु-मण्डूक-नकुल-श्वाहि-मार्ज्जार-शूकरैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ ५०
श्व-क्रोष्टु-गर्द्दभोलूक-सामबालार्त्तनिस्वने ।
अमेध्यशवशूद्रान्त्य-श्मशानपतितान्तिके ॥ ५१
देशेऽशुचौ वर्त्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते ॥ ५२
दिग्दाहे पांशुवर्षेषु सन्ध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ ५३
खरोष्ट्रयान-हस्त्यश्व-नौ-वृक्ष-गिरिरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः ॥ ५४
देवर्त्त्विक्स्नातकाचार्य्य-राज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्र-ष्ठीवनोद्वर्त्तनानि च ॥ ५५

विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन ।
दूरादुच्छिष्टविण्मूत्र-पादाम्भांसि समुत्सृजेत् ॥ ५६
श्रुतिस्मृत्युक्तमाचारं कुर्य्यान्मर्म्मणि न स्पृशेत् ।
न निन्दा-ताड़ने कुर्य्यात् सुतं शिष्यञ्च ताड़येत् ॥ ५७
आचरेत् सर्व्वदा धर्म्मं तद्विरुद्धन्तु नाचरेत् ।
माताधितिथीध्यापैर्विवादं नाचरेद्गृही ॥ ५८
पञ्च पिण्डाननुद्धृत्य न स्नायात् परवारिषु ।
स्नायान्नदी-प्रस्रवण-देवखात-ह्रदेषु च ॥ ५९
वर्ज्जयेत् परशय्यादि न चाश्नीयादनापदि ।
कदर्य्यबद्धवैराणां तथा चानग्निकस्य च ॥ ६०
वैणाभिशस्तवार्द्धुष्य-गणिकागणदीक्षिणाम् ।
पात्रान्तरचिकित्सानां क्लीवरङ्गोपजीविनाम् ॥ ६१
क्रूरोग्रपतितव्रात्य-दाम्भिकोच्छिष्टभोजिनाम् ।
शास्त्रविक्रयिणश्चैव स्त्रीजित-ग्रामयाजिनाम् ॥ ६२
नृशंस-राज-रजक-कृतघ्न-वधजीविनाम् ।
पिशुनानृतिनोश्चैव सोमविक्रयिणस्तथा ॥ ६३
वन्दिनां स्वर्णकाराणामन्नमेषां कदाचन ।
न भोक्तव्यं वृथामांसं केश-कीटसमन्वितम् ॥ ६४
भक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ।
उदक्यास्पृष्टसंघुष्टं पर्य्यायान्नञ्च वर्ज्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पादस्पृष्टञ्च कामतः ॥ ६५
शूद्रेषु दासगोपाल-कुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ ६६
अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंस्कृतम् ।
अस्नेहा अपि गोधूम-यव-गोरसविक्रियाः ॥ ६७
सन्धिन्यनिर्द्दशाऽवत्सगोः पयः परिवर्ज्जयेत् ।
औष्ट्रमैकशफं स्त्रीणां पयश्च परिवर्ज्जयेत् ॥ ६८
क्रव्याद-पक्षि-दात्यूह-शुकमांसानि वर्ज्जयेत् ।
सारसैकशफान् हंसान् बलाक-वक-टिट्टिभान् ॥ ६९
वृथाकृसर-संयाव-पायसापूप-शष्कुलीः ।
कुररं जालपादञ्च खञ्जरीटमृगद्विजान् ॥ ७०
चाषान् मत्स्यान्रक्तपादान् जग्ध्वा वै कामतो नरः ।
वस्तुरं कामतो जग्ध्वा सोपवासस्त्र्यहं भवेत् ॥ ७१
पलाण्डु-लशुनादीनि जग्ध्वा चान्द्रायणं चरेत् ।
श्राद्धे देवान् पितॄन् प्राच्यंखादन्मांसं नदोषभाक् ॥ ७२
वसेत् स नरके घोरे दिनानि पशुरोमभिः ।

सम्मितानि दुराचारी यो हन्त्यविधिना पशून्॥ ७३
मांसं सन्त्यज्य सम्प्राप्य कामान् याति ततो हरिम्॥७४

इति श्रीगारुड़े षणवतितमोऽध्यायः॥९६॥

---

## सप्तनवतितमोऽध्यायः।

याज्ञवल्क्य उवाच।

द्रव्यशुद्धिं प्रवक्ष्यामि तां निबोधत सत्तमाः।
सौवर्ण-राजताब्जानां शाकरज्ज्वादिचर्म्मणाम्।
पात्राणाञ्चासनानाञ्च वारिणा शुद्धिरिष्यते॥ १
उष्णवार्भिः स्रुक्स्रुवयोर्धान्यादेः प्रोक्षणेन च।
तक्षणाद्दारुशृङ्गादेर्यज्ञपात्रस्य मार्ज्जनात्॥ २
सोष्णैरुदकगोमूत्रैः शुध्यत्याविककौषिकम्।
भैक्ष्यं योषिन्मुखं पुण्यं पुनः पाकान्महीमयम्॥ ३
गोघ्रातेऽन्ने तथा केश-मक्षिका-कीटदूषिते।
भस्मक्षेपादिशुद्धिः स्याद्भूशुद्धिर्मार्ज्जनादिना॥ ४
त्रपु-सीसक-ताम्राणां क्षाराम्लोदकवारिभिः।
भस्माद्भिर्लोहकांस्यानामच्छातञ्च सदा शुचि॥ ५
अमेध्याक्तस्य मृत्तोयैर्गन्धलेपापकर्षणात्॥ ६
शुचि गोतृप्तिदं तोयं प्रकृतिस्थं महीगतम्।
तथा मांसं श्वचाण्डाल-क्रव्यादादिनिपातितम्॥ ७
रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः।
विप्रुषो मक्षिका मेध्यास्तथाचमनबिन्दवः॥ ८
स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे।
आचान्तः पुनराचामेद्वासोऽन्यत् परिधाय च॥ ९
क्षुते निष्ठीवने स्वापे परिधानेऽश्रुपातने।
पञ्चस्वेतेषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्।
तिष्ठन्त्यग्न्यादयो देवा विप्रकर्णे तु दक्षिणे॥ १०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे द्रव्य-शुद्धिर्नाम सप्तनवतितमोऽध्यायः॥९७॥

---

## अष्टनवतितमोऽध्यायः।

याज्ञवल्क्य उवाच।

अथ दानविधिं वक्ष्ये तन्मे शृणुत सुव्रताः।
अन्येभ्यो ब्राह्मणाः श्रेष्ठास्तेभ्यश्चैव क्रियापराः॥ १
ब्रह्मवेत्ता च तेभ्योऽपि पात्रं विद्यातपोऽन्वितः।
गो-भू-धान्य-हिरण्यादि पात्रे दातव्यमर्चितम्॥
विद्या-तपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च॥ ३
दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः।
याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः॥ ४
हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा।
दशसौवर्णिकं शृङ्गं शफं सप्तपलैः कृतम्।
पञ्चाशत्पलिकं पात्रं कांस्यं वत्सस्य कीर्त्यते॥ ६
स्वर्णपिप्पलपात्रेण वत्सो वा वत्सिकापि वा।
अस्या अपि च दातव्यमपत्यं रोगवर्ज्जितम्॥ ७
दाता स्वर्गमवाप्नोति वत्सरान् रोमसम्मितान्।
कपिला चेत् तारयति भूयश्चासप्तमं कुलम्॥ ८
यावत् वत्सस्य द्वौ पादौ मुखं योन्यां प्रदृश्यते।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति॥ ९
तथा कथञ्चिद्दत्त्वा गां धेनूं वाऽधेनुमेव वा।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते॥ १०
श्रान्तसंवाहनं रोगिपरिचर्य्या सुरार्चनम्।
पादशौचं द्विजोच्छिष्टमार्ज्जनं गोप्रदानवत्॥ ११
द्विजाय यदभीष्टन्तु दत्त्वा स्वर्गमवाप्नुयात्।
भूदीपांश्चान्नवस्त्राणि सर्पिर्दत्त्वा व्रजेत् श्रियम्।
गृह-धान्य-च्छत्र-माल्य-वृक्ष-यान-घृतं जलम्।
शय्यानुलेपनं दत्त्वा स्वर्गलोके महीयते॥ १३
ब्रह्मदाता ब्रह्मलोकं प्राप्नोति सुरदुर्लभम्।
वेदार्थयज्ञशास्त्राणि धर्म्मशास्त्राणि चैव हि।
मूल्येनापि लिखित्वापि ब्रह्मलोकमवाप्नुयात्॥
एतन्मूलं जगद्यस्मादसृजत् पूर्व्वमीश्वरः।
तस्मात् सर्व्वप्रयत्नेन कार्य्यो वेदार्थसंग्रहः॥ १५
इतिहासं पुराणं वा लिखित्वा यः प्रयच्छति।
ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणोन्नतिम्॥ १६
लोकायतं कुतर्कञ्च प्राकृतं म्लेच्छभाषितम्।
न श्रोतव्यं द्विजेनैतदधो नयति तं द्विजम्॥ १७
समर्थो यो न गृह्णीयाद्दातृलोकानवाप्नुयात्।
कुशाः शाकं पयो गन्धाः प्रत्याख्येया न वारि च।
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः।

अन्यत्र कुलटा-षण्ढ-पतितेभ्यो द्विषस्तथा ॥ १९
देवातिथ्यर्च्चनकृते पितृकृत्यार्थमेव च।
सर्व्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २०

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे
दानधर्म्मो नामाष्टनवति-
तमोऽध्यायः ॥९८॥

---

## नवनवतितमोऽध्यायः।

याज्ञवल्क्य उवाच।

अथ श्राद्धविधिं वक्ष्ये सर्व्वपापप्रणाशनम्।
अमावस्याष्टकावृद्धि-कृष्णपक्षायनद्वयम् ॥ १
द्रव्यब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः।
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालः प्रकीर्त्तितः ॥ २
अग्र्यो यः सर्व्ववेदेषु श्रोत्रियो वेदविद्युवा।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः ॥ ३
स्वस्रीयऋत्विग्जामातृयाज्य-श्वशुर-मातुलाः।
त्रिणाचिकेत-दौहित्र-शिष्य-सम्बन्धि-बान्धवाः ॥ ४
कर्म्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धदेवताः ॥ ५
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा।
अवकीर्ण्यादयो ये च ये चाचारविवर्ज्जिताः ॥ ६
अवैष्णवाश्च ये सर्व्वे श्राद्धार्हा न कदाचन।
निमन्त्रयेच्च पूर्व्वेद्युर्द्विजैर्भाव्यञ्च संयतैः ॥ ७
आचान्तांश्चैव पूर्व्वाह्णे ह्यासनेषूपवेशयेत्।
युग्मान् दैवे तथा पित्र्ये सुप्रदेशेषु शक्तितः ॥ ८
द्वौ दैवे प्रागुदक् पित्र्ये त्रीनेकं वोभयोः पृथक्।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ ९
हस्तप्रक्षालनं दत्त्वा विष्टरार्थे कुशानपि।
आवाह्य तदनुज्ञातो विश्वे देवास इत्यृचा ॥ १०
यवैरन्नं विकीर्य्याथ भाजने सपवित्रके।
शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥ ११
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्।
गन्धोदके तथा धूपं माल्यं वासः प्रदीपकम् ॥ १२
अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम्।
द्विगुणांस्तु कुशान् दत्त्वा उशन्तस्त्वेत्यृचा पितॄन् ॥ १३
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः।
यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्व्ववत् ॥ १४
दत्त्वार्घ्यं संस्रवं ह्येषां पात्रे कृत्वा विधानतः।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥ १५
अग्नौ करिष्ये आदाय पृच्छत्यन्नं घृतप्लुतम्।
कुरुष्वेति तथोक्तोऽग्नौ हुत्वासौ पितृयज्ञवत् ॥ १६
हुतशेषं प्रदद्याच्च भाजनेषु समाहितः।
यथालाभोपपन्नेषु रौप्येषु च विशेषतः ॥ १७
दत्त्वान्नं पृथिवी पात्रमिति पात्राभिमन्त्रणम्।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ १८
सव्याहृतिञ्च गायत्रीं मधुवातेत्यृचं तथा।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ १९
अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः।
आ तृप्तेस्तु पवित्राणि जप्त्वा पूर्व्वजपं तथा ॥ २०
अन्नमादाय तृप्ताः स्थ शेषञ्चैवानुमन्त्य च।
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् ॥ २१
सर्व्वमन्नमुपादाय सतिलं दक्षिणामुखः।
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् ॥ २२
मातामहानामप्येवं दद्याच्चाचमनं ततः।
स्वस्तिवाच्य ततो दद्यादक्षय्योदकमेव च ॥ २३
दत्त्वा च दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥ २४
वाच्यतामित्यनुज्ञातः पितृभ्यश्च स्वधोच्यताम्।
विप्रैस्तु स्वधेत्युक्तो भूमौ सिञ्चेत् ततो जलम् ॥ २५
प्रीयन्तामिति चाहैवं विश्वे देवा जलं ददत्।
दातारो नोऽभिवर्द्धन्तां वेदाः (क) सन्ततिरेव च ॥ २६
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति।
इत्युक्त्वापि प्रियं वाचं प्रणिपत्य विसर्ज्जयेत् ॥ २७
वाजे वाजे इति प्रीत्या पितृपूर्व्वं विसर्ज्जनम्।
यस्मिंस्ते संस्रवाः पूर्व्वमर्घ्यपात्रे निपातिताः।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्ज्जयेत् ॥ २८
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्।
ब्रह्मचारी भवेत् तान्तु रजनीं भार्य्यया सह ॥ २९
एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखानपि।
यजेत दधि-कर्कन्धुमिश्राः पिण्डा यवैः श्रिताः ॥ ३०

---

(क) वेद इति रघुनन्दनभट्टाचार्य्यसम्मतः पाठः।

एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ ३१
उपतिष्ठतामित्यक्षय्यस्थाने विप्रान् विसर्जयेत् ।
अभिरम्यतां प्रब्रूयाद्ब्रूयुस्तेऽभिरताः स्म ह ॥ ३२
गन्धोदकतिलैर्मिश्रं कुर्य्यात् पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ ३३
ये समाना इति द्वाभ्यां शेषं पूर्व्ववदाचरेत् ।
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ ३४
अर्व्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विजे ।
पिण्डांश्च गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥ ३५
हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।
मात्स्य-हारिण-औरभ्र-शाकुन-च्छाग-पार्षतैः ॥ ३६
ऐण-रौरव-वाराह-शाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्यापि तुष्यन्ति दत्तैरिह पितामहाः ॥ ३७
दद्याद्वर्षात्रयोदश्यां मघासु च न संशयः ।
प्रतिपत्प्रभृतिष्वेवं कन्यादीन् श्राद्धदो लभेत् ॥ ३८
शस्त्रेण निहतानान्तु चतुर्द्दश्यां प्रदीयते ।
स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ॥ ३९
पुत्रान् श्रैष्ठ्यञ्च सौभाग्यं समृद्धिं मुख्यतां शुभम् ।
प्रवृत्तचक्रताञ्चैव वाणिज्यप्रभृतीनपि ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ ४०
धनं विद्यां भिषक् सिद्धिं कुप्यं गा अप्यजाविकम् ।
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ ४१
कृत्तिकादिभरण्यन्तं स कामी प्राप्नुयादिमान् ।
आस्तिकाः प्रीणयन्त्येव नवं श्राद्धं कृतं द्विजाः ॥ ४२
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नित्यं पितामहाः ॥ ४३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे श्राद्ध-
विधिर्नाम नवनवतितमोऽध्यायः ॥ ९९ ॥

---

## शततमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

विनायकोपसृष्टस्य लक्षणानि निबोधत ।
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ १
विमना विफलारम्भः संसीदत्यनिमित्ततः ।
राजा राज्यं कुमारी च पतिं पुत्रञ्च गुर्व्विणी ॥
नाप्नुयात् स्नपनं तस्य पुण्येऽह्नि विधिपूर्व्वकम् ।
गौरसर्षपकल्केन साज्येनोत्सादितस्य तु ॥ ३
सर्व्वौषधैः सर्व्वगन्धैर्विलिप्तशिरसस्तथा ।
भद्रासनोपविष्टस्य स्वस्तिवाच्य द्विजान् शुभान् ॥ ४
मृत्तिकां रोचनां गन्धान् गुग्गुलुञ्चाप्सु निक्षिपेत् ।
या आहृता ह्येकवर्णैश्चतुर्भिः कलसैर्ह्रदात् ॥ ५
चर्म्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं तथा ॥ ६
सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ ७
भगं ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ ८
यत् ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा ॥ ९
स्नातस्य सार्षपं तैलं स्रुवेणौडुम्बरेण तु ।
जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च ॥ १०
मितश्च संमितश्चैव तथा शालकटङ्कटौ ।
कूष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ ११
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य्य सर्व्वशः ।
कृताकृतं तथा चैव पललौदनमेव च ॥ १२
पुष्पं चित्रं सुगन्धञ्च सुराञ्च त्रिविधामपि ।
मूलकं पूरिकापूपास्तथैवोण्डेरकास्रजः ।
दधिपायसमन्नञ्च गुड़पिष्टं समोदकम् ॥ १३
एतान् सर्व्वानुपाकृत्य भूमौ कृत्वा ततः शिरः ।
अम्बिकामुपतिष्ठेच्च दद्यादर्घ्यं कृताञ्जलिः ॥ १४
दूर्व्वा-सर्षप-पुष्पैश्च पुत्रजन्मभिरन्ततः ।
कृतस्वस्त्ययनञ्चैव प्रार्थयेदम्बिकां सतीम् ॥ १५
रूपं देहि यशो देहि भाग्यं भवति देहि मे ।
पुत्रान् देहि श्रियं देहि सर्व्वान् कामांश्च देहि मे ॥
ब्राह्मणांस्तोषयेत् पश्चाच्छुक्लवस्त्रानुलेपनैः ।
वस्त्रयुग्मं गुरोर्दद्यात् सम्पूज्यश्च ग्रहस्तथा ।
श्रेयः कर्म्मफलं विन्देत् सूर्य्यार्च्चनरतस्तथा ॥ १७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
विनायकोपसृष्टलक्षणं नाम
शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

श्रीकामः शान्तिकामो वा ग्रहवृष्ट्यभिचारवान् ।
ग्रहयागं समं कुर्य्याद्ग्रहाश्चैते बुधैः स्मृताः ॥ १
सूर्य्यः सोमो मङ्गलश्च बुधश्चैव बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुर्ग्रहगणाः स्मृताः ॥ २
ताम्र-कांस्य-स्फाटिकाच्च रक्तचन्दन-स्वर्णकात् ।
रजतादयसः सीसात् कांस्याद्दृष्टिः प्रशाम्यति ॥ ३
रक्तः शुक्लस्तथा रक्तः पीतः पीतः सितोऽसितः ।
कृष्णः कृष्णः क्रमाद्वर्णा द्रव्याणि मुनयस्ततः ॥ ४
स्थापयेद्ग्रहवर्णानि होमार्थं प्रलिखेत् पटे ।
स्ववर्णानि प्रदेयानि वासांसि कुसुमानि च ॥ ५
गन्धादिबलयश्चैव धूपो देयश्च गुग्गुलुः ।
कर्त्तव्यास्तत्र मन्त्रैश्च चरवः प्रतिदैवतम् ॥ ६
आ कृष्णेन इमं देवा अग्निर्मूर्द्धा दिवः ककुत् ।
उद्बुध्यस्वेति जुहुयाद्दृग्भिरेव यथाक्रमम् ॥ ७
बृहस्पते परिदीयेति अन्नात् परिस्रुतो रसम् ।
शन्नो देवी कयानश्च केतुं कृण्वन्निति क्रमात् ॥ ८
अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
उडुम्बरः शमी दूर्व्वा कुशाश्च समिधः क्रमात् ।
होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥ ९
गुड़ौदनो पायसञ्च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं हविः पूपान् मांसं चित्रान्नमेव च ॥ १०
दद्याद्ग्रहक्रमादेतान् द्विजेभ्यो भोजनं ततः ।
धेनुः शङ्खस्तथानड्वान् हेम वासो ह्यस्तथा ॥ ११
कृष्णा गौरायसं छाग एता वै दक्षिणाः क्रमात् ।
ग्रहाः पूज्याः सदा यस्माद्राज्यादि प्राप्यते फलम् ॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे ग्रहशान्तिर्नामैकाधिकशततमोऽध्यायः ॥१०१॥

---

## द्व्यधिकशततमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

वानप्रस्थाश्रमं वक्ष्ये तच्छृण्वन्तु महर्षयः ।
पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा ॥ १
वानप्रस्थो ब्रह्मचारी साग्निः शमदमक्षमी ।
अर्च्चयेत् साग्निकान् विप्रान् पितृदेवातिथींस्तथा ॥ २
भृत्यांस्तु तर्पयेत् श्मश्रु-जटा-लोमभृदात्मवान् ।
दान्तस्त्रिसवनं स्नायात् निवृत्तश्च प्रतिग्रहात् ॥ ३
स्वाध्यायवान् ध्यानशीलः सर्व्वभूतहिते रतः ।
अह्नो मासस्य षण्णां वा कुर्य्याद्वान्नपरिग्रहम् ॥ ४
कृतं त्यजेदाश्वयुजे नयेत् कालं व्रतादिना ।
निराश्रयं स्वपेद्भूमौ कर्म्म कुर्य्यात् फलादिना ॥ ५
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।
आर्द्रवासास्तु हेमन्ते योगाभ्यासाद्दिनं नयेत् ॥ ६
यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धः परितुष्टश्च समस्तस्य च तस्य च ॥ ७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे वानप्रस्थधर्म्मो नाम द्व्यधिकशततमोऽध्यायः ॥१०२॥

---

## त्र्यधिकशततमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

भिक्षोर्धर्म्मं प्रवक्ष्यामि तं निबोधत सत्तमाः ।
वनात् प्रव्रज्य कृत्वेष्टिं सर्व्ववेदसदक्षिणाम् ॥ १
प्राजापत्यं तदन्तेऽपि अग्निमारोप्य चात्मनि ।
सर्व्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
सर्व्वारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥ २
अप्रमत्तश्चरेद्भैक्ष्यं सायाह्ने नाभिलक्षितः ।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ॥ ३
भवेत् परमहंसो वा एकदण्डी यमादिकृत् ।
सिद्धयोगस्त्यजन् देहममृतत्वमिहाप्नुयात् ॥ ४
योगमभ्यस्य मितभुक् परां सिद्धिमवाप्नुयात् ।
दातातिथिप्रियो ज्ञानी गृही श्राद्धेऽपि मुच्यते ॥ ५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे त्र्यधिकशततमोऽध्यायः ॥१०३॥

---

## चतुरधिकशततमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

नरकात् पातकोद्भूतात् पापस्य कर्म्मणः क्षयात् ।
ब्रह्महा श्वा खरोष्ट्रः स्याद्भेकोलूकाः सुराप्यपि ।

स्वर्णचौरः कृमिः कीटस्तृणादिर्गुरुतल्पगः ॥ १
क्षयरोगी स्यावदन्तः कुनखी शिपिविष्टकः ।
ब्रह्महत्याक्रमात् स्युश्च तत् सर्व्वं वा शिरीर्भवेत् ॥२
अन्नहर्त्ता लामयावी मूको वागपहारकः ।
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ॥ ३
तैलहारी तैलपायी पूतिवक्त्रस्तु सूचकः ।
ब्रह्मस्वकन्याहृद्दाथ वने स्याद्ब्रह्मराक्षसः ॥ ४
रत्नहृद्धीनजातिः स्यात् पत्रशाकहरः शिखी ।
गन्धांश्छुच्छुन्दुरिर्हृत्वा धान्यहृन्मूषिको भवेत् ॥ ५
फलं कपिः पशुं हृत्वा अजा काकः पयस्तथा ।
मांसं गृध्रः पटं श्वित्री चौरी लवणहारकः ॥ ६
यथाकर्म्म फलं प्राप्य तिर्य्यक्त्वं कालपर्य्ययात् ।
जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ ७
ततो निष्कल्मषीभूताः कुले महति योगिनः ।
जायन्ते लक्षणोपेता धनधान्यसमन्विताः ॥ ८

इति श्रीगारुड़े चतुरधिकशततमोऽध्यायः ॥१०४॥

---

## पञ्चाधिकशततमोऽध्यायः ।

### याज्ञवल्क्य उवाच ।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ १
तस्माद्यत्नेन कर्त्तव्यं प्रायश्चित्तं विशुद्धये ।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २
प्रायश्चित्तमकुर्व्वाणाः पश्चात्तापविवर्ज्जिताः ।
नरकान् यान्ति पापा वै महारौरव-रौरवान् ॥ ३
तामिस्रं लोहशङ्कुञ्च पूतिगन्धसमाकुलम् ।
संघातं लोहितोदञ्च सञ्जीवनमहापथम् ॥ ४
महानरककाकोलमन्धतामिस्रतापनम् ।
अवीचीं कुम्भीपाकञ्च यान्ति पापान्विता नराः ॥५
ब्रह्महा मद्यपः स्तेयी संयोगी गुरुतल्पगः ।
गुरुनिन्दा वेदनिन्दा ब्रह्महत्यासमे ह्युभे ॥ ६
निषिद्धभक्षणं जिह्मक्रियाचरणमेव च ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥ ७
अश्वरत्नादिहरणं सुवर्णस्तेयसम्मितम् ॥ ८
सखिभार्य्याकुमारीषु स्वयोनिष्वन्त्यजादिषु ।
सगोत्रासु तथा स्त्रीषु गुरुतल्पसमं स्मृतम् ।
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ।
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया...
गोवधो व्रात्यता स्तेयमृणानाञ्च परिक्रिया...
अनाहिताग्निता पण्यविक्रयः परिवेदनम् ॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ।
स्त्रीशूद्रविट्क्षत्त्रवधो निन्दितार्थोपजीविता ।
नास्तिक्यं व्रतलोपश्च मूलं गोश्चैव विक्रयः ।
पितृ-मातृ-सुहृत्त्यागस्तड़ागारामविक्रयः ।
कन्याया दूषणञ्चैव परिविन्दकयाजनम् ॥
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ।
आत्मनोऽर्थं क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ।
असच्छास्त्राभिगमनं भार्य्यात्मपरिविक्रयः ।
उपपापानि चोक्तानि प्रायश्चित्तं निबोधत ।
शिरःकपालध्वजवान् भिक्षाशी कर्म्म वेदयन्
ब्रह्महा द्वादश समा मितभुक् शुद्धिमाप्नुयात् ।
लोमभ्यः स्वाहेत्येवं लोमप्रभृति वै तनुम् ।
मज्जान्तं जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ।
शुद्धिः स्याद्ब्राह्मणत्राणात् कृत्वैवं शुद्धिरेव च ।
निरातङ्कं द्विजं गाञ्च ब्राह्मणार्थे हतोऽपि वा
अरण्ये नियतो जप्त्वा त्रिकृत्वो वेदसंहिताम् ।
सरस्वतीं वा संसेव्य धनं पात्रे समर्प्य वा ॥
यागस्थक्षत्त्रविड्घाते चरेद्ब्रह्महणो व्रतम् ॥
गर्भहा वा यथावर्णं तथात्रेयीनिसूदनः ।
चरेद्व्रतमहत्वापि घातार्थञ्चेदुपागतः ॥ २३
द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमाचरेत् ।
सुराम्बुघृतगोमूत्रं पीत्वा शुद्धिः सुरापिणः ॥
अग्निवर्णं मृते वापि चीरवासा जटी भवेत् ।
व्रतं ब्रह्महणः कुर्य्यात् पुनः संस्कारमर्हति ॥
रेतोविण्मूत्रपानाच्च सुरापा ब्राह्मणी तथा ।
पतिलोकपरिभ्रष्टा गृध्री स्याच्छूकरी शुनी ॥
स्वर्णहारी द्विजो राज्ञे दत्त्वा तु मुषलं तथा ।

कर्म्मणः ख्यापनं कृत्वा हतो मुक्तोऽपि वा शुचिः ।
आत्मतुल्यं सुवर्णं वा दत्त्वा शुद्धिमियाद्द्विजः ॥ २७
तप्तेऽयःशयने सार्द्धमायस्या योषिता स्वपेत् ।
उत्क्षिप्य लिङ्गं वृषणौ नैर्ऋत्यामुत्सृजेत् तनुम् ॥ २८
प्राजापत्यं चरेत् कृच्छ्रं समा वा गुरुतल्पगः ।
चान्द्रायणं वा त्रीन् मासानभ्यसेद्वेदसंहिताम् ॥ २९
एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः ॥ ३०
पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति ॥ ३१
उपपातकशुद्धिः स्याच्चान्द्रायणव्रतेन च ।
पयसा वापि मासेन पराकेणापि वा पुनः ॥ ३२
ऋषभैकसहस्रं गा दद्यात् क्षत्रवधे पुमान् ।
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥ ३३
वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् ।
षण्मासान् शूद्रहा चैतद्दद्याद्धेनूर्दशापि वा ।
अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ॥ ३४
मार्ज्जार-गोधा-नकुल-पशु-मण्डूक-घातनात् ।
पिबेत् क्षीरं त्र्यहं पापी कृच्छ्रं वाप्यधिकं चरेत् ॥ ३५
गजे नीलान् वृषान् पञ्च शुके वत्सो द्विहायनः ।
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ ३६
वृक्ष-गुल्म-लता-वीरुच्छेदने जप्यमृक्शतम् ।
अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितम् ॥ ३७
गर्द्दभं पशुमालभ्य नैर्ऋतञ्च विशुध्यति ।
मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च ॥ ३८
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति ।
कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियेत प्रहितो यदि ॥ ३९
क्रियमाणोपकारे च मृते विप्रे न पातकम् ॥ ४०
महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् ।
अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥ ४१
अनियुक्तो भ्रातृभार्य्यां गच्छंश्चान्द्रायणं चरेत् ।
त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत् ॥ ४२
गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रती ।
गायत्रीजप्यनिरतो मुच्यतेऽसत्प्रतिग्रहात् ॥ ४३
त्रिः कृच्छ्रमाचरेद्व्रात्ये याजकोऽभिचरन्नपि ।
पठेद्वेदं यथाशक्ति त्यक्त्वा च शरणागतान् ॥ ४४
प्राणायामत्रयं कुर्य्यात् खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च शुध्येत गत्वा चैव दिवा स्त्रियम् ॥ ४५
गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः ।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥ ४६
विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने ॥ ४७
देशं कालं वयः शक्तिं पापञ्चावेक्ष्य यत्नतः ।
प्रायश्चित्तप्रकल्पः स्याद्यत्र चोक्ता न निष्कृतिः ॥ ४८
गर्भत्यागो भर्त्तृनिन्दा स्त्रीणां पतनकारणम् ।
वासो गृहान्तिको देयमन्नं वासः सरक्षणम् ॥ ४९
विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतम् ।
असंविख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ ५०
त्रिरात्रोपोषणो जप्त्वा ब्रह्महा त्वघमर्षणम् ।
अन्तर्ज्जले विशुध्येच्च दत्त्वा गाञ्च पयस्विनीम् ॥ ५१
लोमभ्यः स्वाहेति ऋचा दिवसं मारुताशनः ।
जले स्थित्वा तु जुहुयाच्चत्वारिंशद्घृताहुतीः ।
त्रिरात्रोपोषणो हुत्वा कुष्माण्डीभिर्घृतं शुचिः ॥ ५२
सुरापः स्वर्णहारी च रुद्रजापी जले स्थितः ।
सहस्रशीर्षाजप्येन मुच्यते गुरुतल्पगः ॥ ५३
अज्ञानकृतपापस्य नाशः सन्ध्यात्रये कृते ।
रुद्रैकादशजप्याद्धि पापनाशो भवेद्द्विजाः ॥ ५४
प्राणायामशतं कुर्य्यात् सर्व्वपापापनुत्तये ॥ ५५
ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत् ।
कृत्वोपवासं रेतोविण्मूत्राणां प्राशने द्विजः ॥ ५६
वेदाभ्यासरतं शान्तं पञ्चयज्ञक्रियापरम् ।
न स्पृशन्ति हि पापानि महापातकजान्यपि ॥ ५७
वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्य्यदृक् ।
जप्त्वा सहस्रगायत्रीं शुचिर्ब्रह्महणादृते ॥ ५८
ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता ।
अहिंसा-स्तेय-माधुर्य्य-दमाश्चेते यमाः स्मृताः ॥ ५९
स्नानमौनोपवासेज्या-स्वाध्यायेन्द्रियनिग्रहाः ।
तपोऽक्रोधो गुरोर्भक्तिः शौचञ्च नियमाः स्मृताः ॥ ६०
पञ्चगव्यन्तु गोक्षीरं दधिमूत्रशकृद्घृतम् ।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन् ॥ ६१
पृथक् सान्तपनैर्द्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ६२
पर्णोडुम्बर-राजीव-विल्वपत्र-कुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥ ६३

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्रश्च पावनः ॥ ६४
एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥ ६५
यथाकथञ्चित् त्रिगुणः प्राजापत्योऽयमुच्यते ।
अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनात् ॥ ६६
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ।
द्वादशाहोपवासैश्च पराकः समुदाहृतः ॥ ६७
पिण्याकाचामतक्राम्बु-शक्तूनां प्रतिवासरम् ।
एकैकमुपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ६८
एषां त्रिरात्रमभ्यासादेकैकं स्याद्यथाक्रमात् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ ६९
तिथिवृद्ध्याचरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान् ।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन् ॥ ७०
यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ७१
कुर्य्यात् त्रिषवणं स्नानं कृच्छ्रं चान्द्रायणं चरेत् ।
पवित्राणि जपेत् पिण्डान् गायत्र्या चाभिमन्त्रयेत् ७२
अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।
धर्म्मार्थी यश्चरेदेतत् चन्द्रस्यैति सलोकताम् ।
कृच्छ्रकृद्धर्म्मकामस्तु महतीं श्रियमश्नुते ॥ ७३

इति श्रीगारुड़े पूर्व्वखण्डे प्रायश्चित्तविवेको
नाम पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

## षड़धिकशततमोऽध्यायः ।

याज्ञवल्क्य उवाच ।

प्रेताशौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः ।
ऊनद्विवर्षं निखनेत् न कुर्य्यादुदकं ततः ॥ १
आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्युतः ।
यमसूक्तं तथा जप्यं जपद्भिर्लौकिकाग्निना ॥ २
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ।
सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ॥ ३
अप नः शोशुचदघमनेन पितृदिङ्मुखाः ।
एवं मातामहाचार्य्य-प्रेतानाञ्चोदकक्रियाः ॥ ४
कामोदकाः सखिप्रत्तास्वस्रीयश्वशुरर्त्विजः ।
नामगोत्रेण ह्युदकं सकृत् सिञ्चन्ति वाग्यताः ॥
पाषण्डपतितानान्तु न कुर्य्युरुदकक्रियाः ।
न ब्रह्मचारिणो व्रात्या योषितः कामगास्तथा ।
सुरापाः स्वात्मघातिन्यो नाशौचोदकभाजनाः ॥
कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥
मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम् ।
यः करोति स संमूढ़ो जलबुद्बुदसन्निभे ॥ ८
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ।
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
ततो न रोदितव्यं हि त्वनित्या जीवसंस्थिति ॥
क्रिया कार्य्या यथाशक्ति ततो गच्छेद्गृहान् ॥
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ।
आचम्याथाग्निमुदकं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥
प्रवेशनादिकं कर्म्म प्रेतसंस्पर्शिनामपि ।
इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ।
क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक् ।
पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥
जलमेकाहमाकाशे स्थाप्यं क्षीरन्तु मृण्मये ।
वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदिताः ।
आ दन्तजन्मनः सद्य आचूड़ं नैशिकी स्मृता ।
त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥
त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते ।
ऊनद्विवर्षमुभयोः सूतकं मातुरेव हि ।
अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति ॥
दश द्वादश वर्णानां तथा पञ्चदशैव च ।
त्रिंशद्दिनानि च तथा भवति प्रेतसूतकम् ॥
अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।
गुर्व्वन्तेवास्यनूचान-मातुल-श्रोत्रियेषु च ॥
अनौरसेषु पुत्त्रेषु भार्य्यास्वन्यगतासु च ।
निवासराजनि प्रेते तदहः शुद्धिकारकम् ॥
हतानां नृप-गो-विप्रैरन्वक्षञ्चात्मघातिनाम् ।

षाद्येश्च हतानाञ्च नाशौचं पृथिवीपतेः ॥ २२
व्रि-व्रति-ब्रह्मचारि-दातृ-ब्रह्मविदां तथा ।
ने विवाहे यज्ञे च संग्रामे देशविप्लवे ॥ २३
पद्यपि च कष्टायां सद्यः शौचं विधीयते ।
लोऽग्निकर्म्मम्बुदायुर्मनोध्यानं तपो जलम् ॥ २४
ख्यातापो निराहारः सर्व्वेऽमी शुद्धिहेतवः ।
कार्य्यकारिणां दानं वेगो नद्यास्तु शुद्धिकृत् ॥ २५
ात्रेण कर्म्मणा जीवेद्विशां वाप्यापदि द्विजः ।
ल-सोम-क्षौम-वीरुद्दधिक्षीरं घृतं जलम् ॥ २६
लौदन-रस-क्षार-मधु-लाक्षाश्च बर्हिषः ।
ल्वोपलासवं पुष्पं शाकमश्चर्म्मपादुकम् ॥ २७
ालचञ्च कौषेयं लवणं मांसमेव च ।
ण्याक-पशु-गन्धांश्च वैश्यवृत्तो न विक्रयेत् ॥ २८
र्मार्थं विक्रयं नेया तिला धान्येन तत्समाः ।
वणादि न विक्रीयात् तथा चापद्गतो द्विजः ॥ २९
पद्गतः सम्प्रगृह्णन् लिप्यते नार्कवद्द्विजः ।
र्यात् कृष्यादिकं तद्वदविक्रेया हयास्तथा ॥ ३०
ुचितस्त्र्यहं स्थिला दृष्ट्वा वृत्तिविवर्ज्जितम् ।
ाजा धर्म्मान् प्रकुर्व्वीत वृत्तिं विप्रादिकस्य च ॥३१

इति श्रीगारुड़े पूर्व्वखण्डे अशौचादिनिर्णयो
नाम षड़धिकशततमोऽध्यायः ॥ १०६ ॥

---

## सप्ताधिकशततमोऽध्यायः ।

### सूत उवाच ।

ाशरोऽब्रवीद्व्यासं धर्म्मं वर्णाश्रमादिकम् ।
ल्पे कल्पे क्षयोत्पत्तिः क्षीयन्ते न ध्वजादयः ॥ १
ुतिः स्मृतिः सदाचारो न कश्चिद्वेदकारकः ।
दाः स्मृता ब्रह्मणाद्यै धर्म्मा मन्वादिभिः सदा ॥ २
ानं कलियुगे धर्म्मः कर्त्तारञ्च कलौ त्यजेत् ।
पद्गतन्तु तत्रैव शापः फलति वर्षतः ॥ ३
ाचारात् प्राप्नुयात् सर्व्वं षट्कर्म्माणि दिने दिने ।
न्ध्या स्नानं जपो होमो देवातिथ्यादिपूजनम् ॥ ४
पूर्व्वः सुव्रती विप्रो ह्यपूर्व्वोऽतिथयस्तदा ।
क्षत्रियः परसैन्यानि जित्वा पृथ्वीं प्रपालयेत् ॥ ५
णिक्कृष्यादि वैश्ये स्याद्द्विजभक्तिश्च शूद्रके ।

अभक्ष्यभक्षणाच्चौर्य्यादगम्यागमनात् पतेत् ।
कृषिं कुर्व्वन् द्विजः श्रान्तं बलीवर्द्दं न वाहयेत् ॥ ६
दिनार्द्धं स्नानयोगादिकारी विप्रांश्च भोजयेत् ।
निर्व्वपेत् पञ्चयज्ञानि क्रतुदीक्षाञ्च कारयेत् ॥ ७
तिला रसा न विक्रेया विक्रेया धान्यतः समाः ।
राज्ञो दत्त्वा तु षड़्भागं देवतानाञ्च विंशतिम् ॥ ८
त्रयस्त्रिंशच्च विप्राणां कृषिकर्त्ता न लिप्यते ।
कर्षकाः क्षत्रविट्शूद्राः खल्वदत्त्वा तु चौरकाः ॥ ९
दिनत्रयेण शुध्येत ब्राह्मणः प्रेतसूतके ।
क्षत्रो दशाहाद्वैश्यस्तु द्वादशान् मासि शूद्रकः ॥ १०
जातिविप्रो दशाहात् तु क्षत्रो द्वादशकाद्दिनात् ।
पञ्चदशाहाद्वैश्यस्तु शूद्रो मासेन शुध्यति ॥ ११
एकपिण्डास्तु दायादाः पृथग्दारनिकेतनाः ।
जन्मना च विपत्तौ च भवेत् तेषाञ्च सूतकम् ॥ १२
चतुर्थे दशरात्रस्य षण्निशा पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः सप्तमे च दिनत्रयम् ॥ १३
देशान्तरे मृते बाले सद्यः शुद्धिर्विधीयते ।
अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः ।
न तेषामग्निसंस्कारो न पिण्डं नोदकक्रिया ॥ १४
आ दन्तजननात् सद्य आ चूड़ान्तादहर्निशम् ।
आ व्रतस्थात् त्रिरात्रेण तदूर्द्ध्वं दशभिर्दिनैः ॥ १५
यदि गर्भो विपद्येत स्रवते वापि योषितः ।
यावन्मासान् स्थितो गर्भस्तावद्दिनानि सूतकम् ॥ १६
आ चतुर्थात् भवेत् स्रावः पातः पञ्चम-षष्ठयोः ।
ब्रह्मचर्य्यादग्निहोत्रान्नाशुद्धिः सङ्गवर्ज्जनात् ॥ १७
शिल्पिनः कारवो वैद्या दासी दासाश्च भृत्यकाः ।
अग्निमान् श्रोत्रियो राजा सद्यःशौचाः प्रकीर्त्तिताः॥१८
दशाहाच्छुध्यते माता स्नानात् सूते पिता शुचिः ।
सङ्गात् सूती सूतकं स्यादुपस्पृश्य पिता शुचिः ॥१९
विवाहोत्सवयज्ञेषु अन्तरामृतसूतके ।
पूर्व्वसंकल्पितादन्यवर्ज्जनञ्च विधीयते ॥ २०
मृतेन शुध्यते सूती मृतकं मृतकान्तरात् ।
गोग्रहादौ विपन्नानामेकरात्रन्तु सूतकम् ॥ २१
अनाथप्रेतवहनात् प्राणायामेन शुध्यति ।
प्रेतशूद्रस्य वहनात् त्रिरात्रमशुचिर्भवेत् ॥ २२
आत्मघाति-विषोद्बन्ध-कृमिदष्टे न संस्कृतिः ।

गोहत-क्रिमिदष्टञ्च स्पृष्ट्वा कृच्छ्रेण शुध्यति ॥ २३
अदुष्टापतितां भार्य्यां यौवने यः परित्यजेत्।
सप्तजन्म भवेत् स्त्रीत्वं वैधव्यञ्च पुनः पुनः ॥ २४
ब्रह्महत्या लगमनाद्दतौ च स्त्री तु शूकरी।
अगम्या व्रतकारिण्यो भ्रष्टपानोदकक्रियाः ॥ २५
औरसः चेत्रजः पुत्रः पितृजौ पिण्डदौ पितुः।
परिवित्तेस्तु कृच्छ्रं स्यात् कन्यायाः कृच्छ्रमेव च।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत् ॥ २६
कुब्ज-वामन-षण्ढेषु गद्गदेषु जड़ेषु च।
जात्यन्धबधिरे मूके न दोषः परिवेदने ॥ २७
नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ २८
भर्त्रा सह मृता नारी रोमाब्दानि वसेद्दिवि।
व्यालादिदष्टस्तु गायत्र्या जपात्शुद्धो भवेन्नरः ॥ २९
दाह्यो लौकाग्निना विप्रश्चाण्डालाद्यैर्हतोऽग्निमान्।
चीरैः प्रक्षाल्य तस्यास्थि स्वाग्निना मन्त्रतो दहेत् ॥ ३०
प्रवासे तु मृते भूयः कृत्वा कुशमयं दहेत्।
कृष्णाजिने समास्तीर्य्य षट् शतानि पलाशजाः ॥ ३१
शमीं शिश्ने विनिक्षिप्य अरणिं वृषणे क्षिपेत्।
जुहुं दक्षिणहस्ते तु वामहस्ते तथोपभृत् ॥ ३२
पार्श्वे तूदूखलं दद्यात् पृष्ठे तु मुषलं दहेत्।
उर्व्वोर्निक्षिप्य दृषदं तण्डुलाज्यतिलान् मुखे ॥ ३३
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीञ्च चक्षुषोः।
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलान् क्षिपेत् ॥ ३४
अग्निहोत्रोपकरणात् ब्रह्मलोकगतिर्भवेत्।
असौ स्वर्गाय लोकाय स्वाहेत्याज्याहुतिः सकृत् ॥ ३५
हंस-सारस-क्रौञ्चानां चक्रवाकञ्च कुक्कुटम्।
मयूर-मेषघाती च अहोरात्रेण शुध्यति ॥ ३६
पक्षिणः सकलान् हत्वा अहोरात्रेण शुध्यति।
सर्व्वांश्चतुष्पदान् हत्वा अहोरात्रोषितो जपेत् ॥ ३७
शूद्रं हत्वा चरेत् कृच्छ्रमतिकृच्छ्रन्तु वैश्यहा।
क्षत्रं चान्द्रायणं विप्रं द्वात्रिंशं त्रिंशमाचरेत् ॥ ३८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
पराशरोक्तधर्म्मो नाम सप्ताधिक-
शततमोऽध्यायः ॥१०७॥

---

## अष्टाधिकशततमोऽध्यायः।

सूत उवाच।

नीतिसारं प्रवक्ष्यामि अर्थशास्त्रादिसंश्रितम्
राजादिभ्यो हितं पुण्यमायुःस्वर्गादिदायकम्
सद्भिः सङ्गं प्रकुर्व्वीत सिद्धिकामः सदा
नासद्भिरिहलोकाय परलोकाय वा हितम्
वर्ज्जयेत् क्षुद्रसंवादमदृश्यस्य तु दर्शनम्।
विरोधं सह मित्रेण सम्प्रीतिं शत्रुसेविना
मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च।
दुष्टानां सम्प्रयोगेण पण्डितोऽप्यवसीदति
ब्राह्मणं बालिशं क्षत्रमयोद्धारं विशं जड़ं
शूद्रमक्षरसंयुक्तं दूरतः परिवर्ज्जयेत् ॥
कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः
कार्य्यकारणमाश्रित्य कालं क्षिपति पण्डितः
कालः पचति भूतानि कालः संहरते प्रजाः
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः
कालेषु चरते वीर्य्यं काले गर्भे च वर्द्धते।
कालो जनयते सृष्टिं पुनः कालोऽपि संहरेत्
कालः सूक्ष्मगतिर्नित्यं द्विविधश्चेह भाव्यते
स्थूलसंग्रहचारेण सूक्ष्माचारान्तरेण च।
नीतिसारं सुरेन्द्राय इममूचे बृहस्पतिः।
सर्व्वज्ञो येन चेन्द्रोऽभूद्दैत्यान् हत्वाप्नुयाद्दिवम्
राजर्षिब्राह्मणैः कार्य्यं देवविप्रादिपूजनम्
अश्वमेधेन यष्टव्यं महापापविनाशनम् ॥
उत्तमैः सह साङ्गत्यं पण्डितैः सह सत्कथाः
अलुब्धैः सह मित्रत्वं कुर्व्वाणो नावसीदति
परवादं परार्थञ्च परिहास्यं परस्त्रिया।
परवेश्मनि वासञ्च न कुर्व्वीत कदाचन ॥
परोऽपि हितवद्वन्धुर्बन्धुरप्यहितः परः।
अहितो देहजो व्याधिर्हितमारण्यमौषधम्
स बन्धुर्यो हिते युक्तः स पिता यस्तु पोषकः
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते
स भृत्यो यो विधेयस्तु तद्बीजं यत् प्ररोहति
सा भार्य्या या प्रियं ब्रूते स पुत्त्रो यस्तु जीवति
स जीवति गुणा यस्य धर्म्मो यस्य स जीवति

...धर्मविहीनो यो निष्फलं तस्य जीवनम् ॥ १७
...पुण-धर्म्मविहीनो यो निष्फलं तस्य जीवनम् ॥ १७

पुण-धर्म्मविहीनो यो निष्फलं तस्य जीवनम् ॥ १७
...ा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा।
...ा भार्य्या या प्रियप्राणा सा भार्य्या या पतिव्रता १८
...हेता स्नाता सुगन्धा च नित्यञ्च प्रियवादिनी।
...ल्पभक्ताल्पभाषी च सततं मङ्गलैर्युता ॥ १९
...ततं धर्म्मबहुला सततञ्च पतिप्रिया।
...ततं प्रियवक्त्री च सततन्त्वृतुकामिनी ॥ २०
...त्वदेवक्रिया युक्ता सर्व्वसौभाग्यवर्द्धिनी।
...स्येदृशी भवेद्भार्य्या देवेन्द्रो न स मानुषः ॥ २१
...स्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया।
...त्तरोत्तरवादा स्यात् सा जरा न जरा जरा ॥ २२
...स्य भार्य्याश्रितान्यत्र परवेश्माभिकाङ्क्षिणी।
...क्रिया त्यक्तलज्जा च सा जरा न जरा जरा ॥ २३
...स्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी।
...ल्याल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया ॥ २४
...ष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः।
...सर्पे च गृहे वासो मृत्युरेव न संशयः ॥ २५
...ज दुर्ज्जनसंसर्गं भज साधुसमागमम्।
...रु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ २६

व्यालीकण्ठप्रदेशादपि च फणभृतो
भीषणा या च रौद्री
या कृष्णा व्याकुलाङ्गी रुधिरनयनसं-
व्याकुला व्याघ्रकल्पा।
क्रोधेनैवोग्रवक्त्रा स्फुरदनलशिखा
काकजिह्वा कराला।
सेव्या न स्त्री विदग्धैः परपुरगमना
भ्रान्तचित्ता विरक्ता ॥ २७
भुजङ्गमे वेश्मनि दृष्टिदृष्टे
व्याधौ चिकित्साविनिवर्त्तिते च।
देहे च बाल्यादिवयोऽन्विते च
कालावृतोऽसौ लभते धृतिं कः ॥ २८

...ति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नीति-
सारेऽष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

## नवाधिकशततमोऽध्यायः।

सूत उवाच।

आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ २
वरं हि नरके वासो न तु दुश्चरिते गृहे।
नरकात् क्षीयते पापं कुगृहान्न निवर्त्तते ॥ ३
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।
न परीक्ष्य परं स्थानं पूर्व्वमायतनं त्यजेत् ॥ ४
त्यजेद्देशमसद्वृत्तं वासं सोपद्रवं त्यजेत्।
त्यजेत् कृपणराजानं मित्रं मायामयं त्यजेत् ॥ ५

अर्थेन किं कृपणहस्तगतेन पुंसां
ज्ञानेन किं बहुशठाकुलसङ्कुलेन।
रूपेण किं गुणपराक्रमवर्ज्जितेन
मित्रेण किं व्यसनकालपराङ्मुखेण ॥ ६
अदृष्टपूर्व्वा बहवः सहायाः
सर्व्वे पदस्थस्य भवन्ति मित्राः।
अर्थैर्विहीनस्य पदच्युतस्य
भवत्यकाले स्वजनोऽपि शत्रुः ॥ ७

आपत्सु मित्रं जानीयात् रणे शूरं रहः शुचिम्।
भार्य्याञ्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम् ॥ ८

वृक्षं क्षीणफलं त्यजन्ति विहगाः
शुष्कं सरः सारसाः
निर्द्रव्यं पुरुषं त्यजन्ति वनिता
भ्रष्टं नृपं मन्त्रिणः।
पुष्पं पर्य्युषितं त्यजन्ति मधुपा
दग्धं वनान्तं मृगाः
सर्व्वः कार्य्यवशाज्जनो हि रमते
कस्यापि को वल्लभः ॥ ९

लुब्धमर्थप्रदानेन श्लाघ्यमञ्जलिकर्म्मणा।
मूर्खं छन्दानुवृत्त्या च याथातथ्येन पण्डितम् ॥ १०
सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः।
इतरे खाद्यपानेन वाक्प्रदानेन पण्डिताः ॥ ११
उत्तमं प्रणिपातेन शठं भेदेन योजयेत्।

नीचं स्वल्पप्रदानेन समं तुल्यपराक्रमैः ॥ १२

यस्य यस्य हि यो भावस्तस्य तस्य हितं वदन्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ १३

नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥ १४

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत् ॥ १५

हीनदुर्ज्जनसंसर्गमत्यन्तविरहादरः।
स्नेहोऽन्यगेहवासश्च (क) नारीसच्छीलनाशनम् ॥ १६

कस्य दोषः कुले नास्ति व्याधिना को न पीड़ितः।
केन न व्यसनं प्राप्तं श्रियः कस्य निरन्तराः ॥ १७

कोऽर्थं प्राप्य न गर्व्वितो भुवि नरः
कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः
को नाम राज्ञां प्रियः।
कः कालस्य न गोचरान्तरगतः
कोऽर्थी गतो गौरवं
को वा दुर्ज्जनवागुरानिपतितः
क्षेमेण यातः पुमान् ॥ १८

सुहृत्स्वजनबन्धुर्न बुद्धिर्यस्य न चात्मनि।
यस्मिन् कर्म्मणि सिद्धेऽपि न दृश्येत फलोदयः।
विपत्तौ च महद्दुःखं तद्बुधः कथमाचरेत् ॥ १९

यस्मिन् देशे न सम्मानं न प्रीतिर्न च बान्धवाः।
न च विद्यागमः कश्चित् तं देशं परिवर्ज्जयेत् ॥ २०

धनस्य यस्य राजभ्यो भयं नास्ति न चौरतः।
मृतञ्च यन्न मुञ्चेत समर्ज्जयस्व तद्धनम् ॥ २१

यदर्ज्जितं प्राणहरैः परिश्रमै-
र्मृतस्य तद्वै विभजन्ति रिक्थिनः।
कृतञ्च यद्दुष्कृतमर्थलिप्सया
तदेव दोषापहतस्य यौतुकम् ॥ २२

सञ्चितं निहितं द्रव्यं परामृश्य मुहुर्म्मुहुः।
आखोरिव कदर्य्यस्य धनं दुःखाय केवलम् ॥ २३

नग्ना व्यसनिनो रूक्षाः कपालाङ्कितपाणयः।
दर्शयन्तीह लोकस्य अदातुः फलमीदृशम् ॥ २४

शिक्षयन्ति च याचन्ति देहीति कृपणा जनाः।
अवस्थेयमदानस्य मा भूदेवं भवानपि ॥

सञ्चितं क्रतुशतैन युज्यते
याचितं गुणवते न दीयते।
तत् कदर्य्यपरिरक्षितं धनं
चौरपार्थिवगृहे प्रयुज्यते ॥ २५

न देवेभ्यो न विप्रेभ्यो बन्धुभ्यो नैव चात्म...
कदर्य्यस्य धनं याति अग्नि-तस्कर-राज...
अतिक्लेशेन येऽप्यर्था धर्म्मस्यातिक्रमेण च...
अरेर्वा प्रणिपातेन मा भूवंस्ते कदाचन...
विद्याघातो ह्यनभ्यासः स्त्रीणां घातः कु...
व्याधीनां भोजनाज्जीर्णं शत्रोर्घातः प्रप...
तस्करस्य वधो दण्डः कुमित्रस्याल्पभाष...
पृथक् शय्या तु नारीणां ब्राह्मणस्यानि...
दुर्ज्जनाः शिल्पिनो दासा दुष्टाश्च पटहाः...
ताड़िता मार्द्दवं यान्ति न ते सत्कारभाः...
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्य...
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्ष...
स्त्रीणां द्विगुण आहारः प्रज्ञा चैव चतु...
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृ...
न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं ज...
न चेन्धनर्जयेदग्निं न मद्येन तृषां जयेत्।
समांसैर्भोजनैः स्निग्धैर्मद्यैः साधुसुराश्च...
वस्त्रैर्मनोरमैर्माल्यैः कामः स्त्रीषु विजृम्भ...
ब्रह्मचर्य्येऽपि वक्तव्यं प्राप्तं मन्मथचेष्टितम्...
हृद्यं हि पुरुषं दृष्ट्वा योनिः प्रक्लिद्यते स्त्रि...
सुवेशं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम्...
योनिः क्लिद्यति नारीणां सत्यं सत्यं हि...
गुरुं वा भिक्षुकं वाढ्यमिच्छन्ति सततं स्त्रि...

नद्यश्च नार्य्यश्च समस्वभावाः
स्वतन्त्रभावे गमनादिकञ्च।
तोयैश्च दोषैश्च निपातयन्ति
नद्यो हि कूलानि कुलानि नार्य्यः...

नदी पातयते कूलं नारी पातयते कुलम्...
नारीणाञ्च नदीनाञ्च स्वच्छन्दा ललिता...
नाग्निस्तृप्यति काष्ठानां नापगानां महोद...
नान्तकः सर्व्वभूतानां न पुंसां वामलोचन...

(क) अकुल्यगेहवासश्चेति पाठान्तरम्।

न तृप्तिरस्ति शिष्टानामिष्टानां प्रियवादिनाम् ।
सुखानाञ्च सुतानाञ्च जीवितस्य वरस्य च ॥ ४१

राजा न तृप्तो धनसञ्चयेन
न सागरस्तृप्तिमगाज्जलेन ।
न पण्डितस्तृप्यति भाषितेन
तृप्तं न चक्षुर्नृपदर्शनेन ॥ ४२

स्वकर्म्मधर्म्मार्ज्जितजीवितानां
शास्त्रेषु दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां
गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ ४३

मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलङ्कृताः ।
वासः प्रासादपृष्ठेषु स्वर्गः स्याच्छुभकर्म्मणः ॥ ४४
न दानेन न मानेन नार्ज्जवेन न सेवया ।
न शास्त्रेण न शस्त्रेण सर्व्वथा विषमाः स्त्रियः ॥ ४५
शनैर्विद्या शनैरर्थाः शनैः पर्व्वतमारुहेत् ।
शनैः कामञ्च धर्म्मञ्च पञ्चैतानि शनैः शनैः ॥ ४६
शाश्वतं देवपूजादि विप्रदानञ्च शाश्वतम् ।
शाश्वतं सगुणा विद्या सुहृन्मित्रञ्च शाश्वतम् ॥ ४७

ये बालभावान्न पठन्ति विद्यां
ये यौवनस्था ह्यधनात्मदाराः ।
ते शोचनीया इह जीवलोके
मनुष्यरूपेण मृगाश्चरन्ति ॥ ४८

भोजने भोजनं चित्तं न कुर्य्याच्छास्त्रसेवकः ।
स दूरमपि विद्यार्थी व्रजेद्गरुड़वेगवान् ॥ ४९

ये बालभावान्न पठन्ति विद्यां
कामातुरा यौवननष्टचित्ताः ।
ते वृद्धकाले परिभूयमानाः
सन्दह्यमानाः शिशिरे यथाब्जम् ॥ ५०

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः
नासावृषिर्यस्य मतं न भिन्नम् ।
धर्म्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ ५१

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन तु ।
नेत्र-वक्त्रविकाराभ्यां लक्ष्यतेऽन्तर्गतं मनः ॥ ५२

अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ।
उदीरितार्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति देशितम् ॥ ५३

अर्थाद्भ्रष्टस्तीर्थयात्रान्तु गच्छेत्
सत्याद्भ्रष्टो रौरवं वै व्रजेच्च ।
योगाद्भ्रष्टः सत्यधृतिञ्च गच्छे-
द्राज्याद्भ्रष्टो मृगयां वै व्रजेच्च ॥ ५४

इति श्रीगारुड़े महापुराणे पूर्व्व-
खण्डे नीतिसारे नवाधिकशत-
तमोऽध्यायः ॥ १०९ ॥

---

## दशाधिकशततमोऽध्यायः ।

सूत उवाच ।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १

प्रागल्भ्यहीनस्य नरस्य विद्या
शस्त्रं यथा कापुरुषस्य हस्ते ।
न तुष्टिमुत्पादयते शरीरे
अन्धस्य दारा इव दर्शनीयाः ॥ २

भोज्यं भोजनशक्तिश्च रतिशक्तिर्वराः स्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ ३
अग्निहोत्रफला वेदाः शीलवृत्तिफलं श्रुतम् ।
रतिपुत्त्रफला दारा दत्तभुक्तफलं धनम् ॥ ४
वरयेत् कुलजां प्राज्ञो विरूपामपि कन्यकाम् ।
विरूपञ्च सुनीतं वै ब्राह्मणं सदृशं वरम् ।
सुरूपां सुनितम्बाञ्च नाकुलीनां कदाचन ॥ ५
अर्थेनापि हि किं तेन यस्यानर्थे तु सङ्गतिः ।
को हि नाम शिखाजातं पन्नगस्य मणिं हरेत् ॥ ६
विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ७
न राज्ञा सह मित्रत्वं न सर्पो निर्विषः क्वचित् ।
न कुलं निर्म्मलं तत्र स्त्रीजनो यत्र जायते ॥ ८
कुले नियोजयेद्भक्तं पुत्त्रं विद्यासु योजयेत् ।
व्यसने योजयेच्छत्रुमिष्टं धर्म्मे नियोजयेत् ॥ ९
स्थानेष्वेव प्रयोक्तव्या भृत्याश्चाभरणानि च ।
न हि चूड़ामणिः पादे प्रभवामीति बुध्यते ॥ १०

चूड़ामणिः समुद्रोऽग्निमण्डलाखण्डमम्बरम् ।
अथवा पृथिवीपालो मूर्द्धि पादः प्रमादजः ॥ ११
कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः ।
मूर्द्धि वा सर्व्वलोकानां विशीर्य्येत वनेऽथवा ॥ १२
कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते ।
न विरौति न चापि स शोभते
भवति योजयितुर्वचनीयता ॥ १३
वाजि-वारण-लौहानां काष्ठ-पाषाण-वाससाम् ।
नारी-पुरुष-तोयानामन्तरं महदन्तरम् ॥ १४
कदर्थितस्यापि हि धैर्य्यवृत्ते-
र्न शक्यते सर्व्वगुणप्रमाथः ।
अधः खलेनापि कृतस्य वह्ने-
र्नाधः शिखा याति कदाचिदेव ॥ १५
न सहस्रः कषाघातं सिंहो न गजगर्ज्जितम् ।
वीरो वा परनिर्दिष्टं न सहेद्भीमनिःस्वनः ॥ १६
यदि विभवविहीनः प्रच्युतो वाथ दैवा-
न्न तु खलजनसेवां प्रार्थयेन्नैव नीचम् ।
न तृणमदति सिंहः स क्षुधार्त्तोऽपि काले
पिबति रुधिरमुष्णां प्रायशः कुञ्जराणाम् ॥ १७
सकृद्दुष्टञ्च यन्मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमेव गृह्णीयात् गर्भमश्वतरी यथा ॥१८
शत्रोरपत्यानि प्रियंवदानि
नापेक्षितव्यानि बुधैर्मनुष्यैः ।
तान्येषु कालेषु विपत्कराणि
विषस्य पात्राण्यपि दारुणानि ॥ १९
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ २०
अपकारिषु मायायां चिन्तयेन्न कदाचन ।
स्वयमेव पतिष्यन्ति कूलजाता इव द्रुमाः ॥ २१
अनर्था ह्यर्थरूपेण अर्थाश्चानर्थरूपिणः ।
भवन्ति ते विनाशाय दैवात् तत् तस्य रोचते ॥ २२
कार्य्यकालोचिता पापैर्मतिबुद्धिर्विहीयते ।
सानुकूला तु वै दैवात् पुंसः सर्व्वत्र जायते ॥ २३
धनप्रयोगकार्य्ये च तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥ २४

धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न कुर्य्यात् तत्र संस्थितिम् ।
लोकयात्रा भयं लज्जा दाक्षिण्यं दानशीलता ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ २५
कालविच्छ्रोत्रियो राजा नदी साधुश्च पञ्चमः ।
एते यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ २६
नैकत्र परिनिष्ठास्ति ज्ञानस्य किल शौनक ।
सर्व्वः सर्व्वं न जानाति सर्व्वज्ञो नास्ति कुत्रचित् ।
न सर्व्ववित् कश्चिदिहास्ति लोके
नात्यन्तमूर्खो भुवि चापि कश्चित् ।
ज्ञानेन नीचोत्तममध्यमेन
योऽयं विजानाति स तेन विद्वान् ॥ २८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नीतिसारे दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः ।

सूत उवाच ।

पार्थिवस्य तु वक्ष्यामि भृत्यानाञ्चैव लक्षणम् ।
सर्व्वाणि यो महीपालः सम्यङ् नित्यं परीक्षते ।
राज्यं पालयते नित्यं सत्यधर्म्मपरायणः ।
निर्ज्जित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत् ।
पुष्पात् पुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारण्ये न यथाङ्गारकारकः ॥ ३
दोग्धारः क्षीरभुञ्जाना विकृतं तन्न भुञ्जते ।
परराष्ट्रं महीपालैर्भोक्तव्यं न च दूषयेत् ॥ ४
नोधश्छिन्द्यात् तु यो धेन्वाः क्षीरार्थी लभते ।
एवं राष्ट्रं प्रयोगेण पीड्यमानं न वर्द्धयेत् ॥ ५
तस्मात् सर्व्वप्रयत्नेन पृथिवीमनुपालयेत् ।
पालकस्य भवेद्भूमिः कीर्त्तिरायुर्यशो बलम् ॥ ६
अभ्यर्च्च्य विष्णुं धर्म्मात्मा गो-ब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः पार्थिवो विजितेन्द्रियः ।
ऐश्वर्य्यमध्रुवं प्राप्य राजा धर्म्मे मतिं चरेत् ।
क्षणेन विभवो नश्येन्नात्मायत्तं धनादिकम् ॥
सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।
किन्तु वै वनितापाङ्गभङ्गीलोलं हि जीवितम् ।

व्याघ्रीव तिष्ठति जरा अपि तर्ज्जयन्ती
रोगाश्च शत्रव इव प्रभवन्ति गात्रे ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोको न चात्महितमाचरतीह कश्चित् ॥ १०

निःशङ्कं किं मनुष्याः कुरुत परहिते
युक्तमग्रे हितं य-
न्मोदध्वं कामिनीभिर्मदनशरहता
मन्दमन्दातिहृष्टाः ।
मा पापं संकुरुध्वं द्विजहरियरमाः
सम्भजध्वं सदैव
आयुर्निःशेषमेति स्खलति जलघटी
मृत्युभूतच्छलेन ॥ ११

मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः ॥ १२
एतदर्थं हि विप्रेन्द्रा राज्यमिच्छन्ति भूभृतः ।
यदेषां सर्व्वकार्य्येषु वचो न प्रतिहन्यते ॥ १३
एतदर्थं प्रकुर्व्वन्ति राजानो धनसञ्चयम् ।
रक्षयित्वा तु चात्मानं यद्धनं तद्द्विजातये ॥ १४
ओङ्कारशब्दो विप्राणां येन राष्ट्रं प्रवर्द्धते ।
स राजा वर्द्धते योगाद्व्याधिभिश्च न विध्यते ॥ १५
असमर्थाश्च कुर्व्वन्ति मुनयो द्रव्यसञ्चयम् ।
किं पुनस्तु महीपालः पुत्रवत् पालयेत् प्रजाः ॥ १६
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ १७

त्यजन्ति मित्राणि धनैर्विहीनम्
पुत्राश्च दाराश्च सुहृज्जनाश्च ।
ते चार्थवन्तं पुनराश्रयन्ति
अर्थो हि लोके पुरुषस्य बन्धुः ॥ १८

अन्धो हि राजा भवति यस्तु शास्त्रविवर्ज्जितः ।
अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥ १९
यस्य पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ।
इन्द्रियाणि प्रसुप्तानि तस्य राज्यं चिरं मही ॥ २०
येनाज्जितास्त्रयोऽप्येते पुत्रा भृत्याश्च बान्धवाः ।
जिता तेन समं भूपैश्चतुरब्धिर्वसुन्धरा ॥ २१
लङ्घयेच्छास्त्रयुक्तानि हेतुयुक्तानि यानि च ।
स हि नश्यति वै राजा इह लोके परत्र च ॥ २२
मनस्तापं न कुर्व्वीत आपदं प्राप्य पार्थिवः ।
समबुद्धिः प्रसन्नात्मा सुखदुःखे समो भवेत् ॥ २३
धीराः कष्टमनुप्राप्य न भवन्ति विषादिनः ।
प्रविश्य वदनं राहोः किं नोदेति पुनः शशी ॥ २४

धिक् धिक् शरीरसुखलालितलालितेषु
मा खिदयेद्दलकृशं कटकं कटिन ।
सौदास-राम-नल पाण्डुसुताः श्रुतास्ते
दुःखं विहाय पुनरेव सुखं प्रपन्नाः ॥ २५

गान्धर्व्वविद्यामालोक्य वाद्ये च गणिकागणाः ।
धनुर्व्वेदार्थशास्त्राणि प्रजा रक्षेच्च भूपतिः ॥ २६
कारणेन विना भृत्ये यस्तु कुप्यति पार्थिवः ।
स गृह्णाति विषोन्मादं कृष्णसर्पं प्रदर्षितः ॥ २७
चापलाद्वारयेद्दृष्टिं मिथ्यावाक्यं न चाब्रवीत् ।
मानवे श्रोत्रिये चैव भृत्यवर्गे सुखायते ॥ २८
लीलां करोति यो राजा भृत्यसज्जनगर्व्वितः ।
संवादे विग्रहे क्षिप्रं रिपुभिः परिभूयते ॥ २९
हुङ्कारं भृकुटीं नैव सदा कुर्व्वीत पार्थिवः ।
विना दोषेण यो भृत्यान् राजा धर्म्मेण पालयेत् ॥ ३०
लीलासुखानि भोग्यानि त्यजेदिह महीपतिः ।
सुखप्रवृत्ताः साध्यन्ते शात्रवैर्विग्रहे स्थितैः ॥ ३१
उद्योगं साहसं धैर्य्यं बुद्धिः शक्तिः पराक्रमः ।
षड्विधो यस्य उत्साहस्तस्य देवोऽपि शङ्कते ॥ ३२
उद्द्योगेन कृते कार्य्ये सिद्धिर्यस्य न विद्यते ।
दैवं तस्य प्रमाणं हि कर्त्तव्यं पौरुषं सदा ॥ ३३

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे नीति-
सारे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

## द्वादशाधिकशततमोऽध्यायः ।

सूत उवाच ।

भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ।
नियोक्तव्या यथार्थेषु त्रिविधेष्वेव कर्मसु ॥ १
भृत्ये परीक्षणं वक्ष्ये यस्य यस्य हि यो गुणः ।
तमिमं सम्प्रवक्ष्यामि यद्यदा कथितानि च ॥ २

यथा चतुर्भिः कनकं परीक्ष्यते
निर्घर्षण-च्छेदन-ताप-ताड़नैः ।

तथा चतुर्भिर्भृतकं परीक्षयेत्
व्रतेन शीलेन कुलेन कर्म्मणा ॥ ३
कुल-शील-गुणोपेतः सत्यधर्म्मपरायणः।
रूपवान् सुप्रसन्नश्च राजाध्यक्षो विधीयते ॥ ४
मूल्य-रूपपरीक्षाकृद्भवेद्रत्नपरीक्षकः।
बलाबलपरिज्ञाता सेनाध्यक्षो विधीयते ॥ ५
इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः।
अप्रमादी प्रमाथी च प्रतीहारः न उच्यते ॥ ६
मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः।
सर्व्वशास्त्रसमालोकी ह्येष साधुः स लेखकः ॥ ७
बुद्धिमान् मतिमांश्चैव परचित्तोपलक्षकः।
क्रूरो यथोक्तवादी च एष दूतो विधीयते ॥ ८
समस्तकृतशास्त्रज्ञः पण्डितोऽथ जितेन्द्रियः।
शौर्य्य-वीर्य्यगुणोपेतो धर्म्माध्यक्षो विधीयते ॥ ९
पितृपैतामहो दक्षः शास्त्रज्ञः सत्यवाचकः।
शौचयुक्तः सदाचारी सूपकारः स उच्यते ॥ १०
आयुर्वेदकृताभ्यासः सर्व्वेषां प्रियदर्शनः।
आयुःशीलगुणोपेतो वैद्य एष विधीयते ॥ ११
वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः।
आशीर्व्वादपरो नित्यमेष राजपुरोहितः ॥ १२
लेखकः पाठकश्चैव गणकः प्रतिबोधकः।
ग्रहग्रामपरो राजा कर्म्मणो वर्ज्जयेत् सदा ॥ १३
द्विजिह्वमुद्वेगकरं क्रूरमेकान्तदारुणम्।
खलस्याहेश्च वदनमपकाराय केवलम् ॥ १४
दुर्ज्जनः परिहर्त्तव्यो विद्ययालङ्कृतो यदि।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ १५
अकारणाविष्कृतकोपधारिणः
खलाद्भयं कस्य न नाम जायते।
विषं महाहेर्विषमस्य दुर्व्वचः
सुदुःसहं सन्निपतेत् सदा मुखे ॥ १६
तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो हन्यात् स न हन्यते ॥ १७
शौण्डीर्य्ययुक्ता मृदुमन्दवाक्या
जितेन्द्रियाः सत्यपराक्रमाश्च।
प्रागेव पश्चाद्विपरीतरूपा
ये ते तु भृत्या न हिता भवन्ति ॥ १८

निरालस्याः सुसन्तुष्टाः सुस्वप्नाः प्रतिबोधकाः।
सुखदुःखसमा धीरा भृत्या लोकेषु दुर्लभाः।
क्षान्तिसत्यविहीनश्च क्रूरबुद्धिश्च निन्दकः।
दाम्भिकः पेटुकश्चैव शठश्च स्पृहयान्वितः।
अशक्तो भयभीतश्च राज्ञा त्यक्तव्य एव सः ॥
सुसन्धानानि चार्थानि शस्त्राणि विविधानि च।
दुर्गं प्रवेशितव्यानि नित्यं शत्रुं निपातयेत् ॥
षण्मासमथ वर्षं वा सन्धिं कुर्य्यान्नराधिपः।
पश्यन् सञ्चितमात्मानं पुनः शत्रुं निपातयेत्।
मूर्खान्नियोजयेद्यस्तु त्रयोऽप्येते महीपतेः
अयशश्चार्थनाशश्च नरके चैव पातनम् ॥ २३
यत् किञ्चित् कुरुते कर्म्म शुभं वा यदि वा...
तेन स वर्द्धते राजा सूक्ष्मतश्चैव दुःश्रुतम् ॥
तस्माद्भूमीश्वरः प्राज्ञं धर्म्मकामार्थसाधने।
नियोजयेच्च सततं गो-ब्राह्मणहिताय वै ॥

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
नीतिसारे द्वादशाधिकशत-
तमोऽध्यायः ॥ ११२ ॥

---

## त्रयोदशाधिकशततमोऽध्यायः।

सूत उवाच।

गुणवन्तं नियुञ्जीत गुणहीनं विवर्ज्जयेत्।
पण्डितस्य गुणाः सर्व्वे मूर्खे दोषाश्च केवलाः।
सद्भिरासीत सततं सद्भिः कुर्व्वीत सङ्गतिम्।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत्।
पण्डितैश्च विनीतैश्च धर्म्मज्ञैः सत्यवादिभिः।
बन्धनस्थोऽपि तिष्ठेत न तु राज्यं खलैः सह।
सावशेषाणि कार्य्याणि कुर्व्वन्नर्थैश्च युज्यते।
तस्मात् सर्व्वाणि कार्य्याणि सावशेषाणि कार...
मधुहेव दुहेद्राष्ट्रं कुसुमञ्च न घातयेत्।
वत्सापेक्षी दुहेत् क्षीरं भूमिं गाञ्चैव पार्थिवः।
यथा क्रमेण पुष्पेभ्यश्चिनुते मधु षट्पदः।
तथा वित्तमुपादाय राजा कुर्व्वीत सञ्चयम्।
वल्मीकं मधुजालञ्च शुक्लपक्षे तु चन्द्रमाः।
राजद्रव्यञ्च भैक्ष्यञ्च स्तोकस्तोकेन वर्द्धते ॥ ७

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु सञ्चयम् ।
अवन्ध्यं दिवसं कुर्य्याद्दानाध्ययनकर्म्मसु ॥ ८

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्म्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ९

सत्येन रक्ष्यते धर्म्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते पात्रं कुलं शीलेन रक्ष्यते ॥ १०

वरं विन्ध्याटव्यां निवसनमभुक्तस्य मरणं
वरं सर्पाकीर्णे शयनमथ कूपे निपतनम् ।
वरं भ्रान्तावर्त्ते सभयजलमध्ये प्रविशनं
न तु स्वीये पक्षे सुधनमनुदेहीति कथनम् ॥ ११

भाग्यक्षयेषु क्षीयन्ते नोपभोगेन सम्पदः ।
पूर्व्वार्ज्जितानि सन्त्यत्र सुकृतानि च दुष्कृतम् ॥ १२

विप्राणां भूषणं विद्या पृथिव्या भूषणं नृपः ।
नभसो भूषणं चन्द्रः शीलं सर्व्वस्य भूषणम् ॥ १३

एते ते चन्द्रतुल्याः क्षितिपतितनया
भीमसेनार्ज्जुनाद्याः
शूराः सत्यप्रतिज्ञा दिनकरवपुषः
केशवेनोपगूढाः ।
ते वै पत्राग्रहस्थाः कृपणवशगता
भैक्ष्यचर्य्यां प्रयाताः
को वा कस्मिन् समर्थो भवति विधिवशा-
द्भ्रामयेत् कर्म्मरेखा ॥ १४

ब्रह्मा येन कुलालवन्नियमितो
ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने
क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिरमरो
भिक्षाटनं कारितः
सूर्य्यो भ्राम्यति नित्यमेव गगने
तस्मै नमः कर्म्मणे ॥ १५

दाता बलिर्याचनको मुरारि-
र्दानं मही विप्रमुखस्य मध्ये ।
दत्त्वा फलं बन्धनमेव लब्धं
नमोऽस्तु ते दैव यथेष्टकारिन् ॥ १६

माता यदि भवेल्लक्ष्मीः पिता साक्षाज्जनार्द्दनः ।
किं बुद्धिप्रतिपत्तिः स्यात् तदन्तं यत् कृतं पुरा ॥ १७

येन येन यथा यद्यत् पुरा कर्म्म सुनिश्चितम् ।
तत् तदेवान्तरा भुङ्क्ते स्वयमाहितमात्मनः ॥ १८

आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भुङ्क्ते वै पौर्व्वदेहिकम् ॥ १९

न चान्तरीक्षे न समुद्रमध्ये
न पर्व्वतानां विवरप्रदेशे ।
न मातृमूर्द्ध्नि प्रधृतस्तथाङ्के
त्यक्तुं क्षमः कर्म्म कृतं नरो हि ॥ २०

दुर्गस्त्रिकूटः परिखा समुद्रो
रक्षांसि योधाः परमा च वृत्तिः ।
शास्त्रञ्च नीत्योशनसा समग्रं
स रावणः कालवशाद्विनष्टः ॥ २१

यस्मिन् वयसि यत्काले यद्दिवा यच्च वा निशि ।
यन्मुहूर्त्ते क्षणे वापि तत् तथा न तदन्यथा ॥ २२

गच्छन्ति चान्तरीक्षे वा प्रविशन्ति महीतले ।
धारयन्ति दिशः सर्व्वा नादत्तमुपलभ्यते ॥ २३

पुराधीता च या विद्या पुरा दत्तञ्च यद्धनम् ।
पुरा कृतानि कर्म्माणि अग्रे धावन्ति धावतः ॥ २४

कर्म्माण्यत्र प्रधानानि सम्यगृक्षे शुभग्रहे ।
वशिष्ठदत्ते लग्नेऽपि जानकी दुःखभाजनम् ॥ २५

स्थूलजङ्घो यदा रामः शब्दगामी च लक्ष्मणः ।
घनकेशी यदा सीता त्रयस्ते दुःखभाजनम् ॥ २६

न पितुः कर्म्मणा पुत्त्रः पिता वा पुत्त्रकर्म्मणा ।
स्वयं कृतेन गच्छन्ति स्वयं बद्धाः स्वकर्म्मणा ॥ २७

कर्म्मजन्यशरीरेषु रोगाः शारीरमानसाः ।
शरा इव पतन्तीह विमुक्ता दृढधन्विभिः ॥ २८

अन्यथा शास्त्रगर्भिण्या धिया धीरोऽर्थमीहते ।
स्वामिवत् प्राक्तनं कर्म्म विदधाति तदन्यथा ॥ २९

बालो युवा च वृद्धश्च यः करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥ ३०

अनिच्छमानोऽपि नरो विदेशस्थोऽपि मानवः ।
स्वकर्म्मपोतवातेन नीयते यत्र तत् फलम् ॥ ३१

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं वारयितुं न शक्तः ।

अतो न शोचामि न विस्मयो मे
ललाटलेखा न पुनः प्रयाति (क) ॥ ३२
सर्पः कूपे गजः स्कन्धे आखुर्बिलञ्च धावति ।
नरः शीघ्रतरादेव कर्म्मणः कः पलायति ॥ ३३
छिद्राण्ययति सद्विद्या दीयमानापि वर्द्धते ।
कूपस्थमिव पानीयं भवत्येव बहूदकम् ॥ ३४
येऽर्था धर्म्मेण ते सत्या ये धर्म्मेण गताः श्रियः ।
धर्म्मार्थी महतो लोके तत् स्मृत्वा ह्यर्थकारणात् ॥ ३५
अन्नार्थी यानि दुःखानि करोति कृपणो जनः ।
तान्येव यदि धर्म्मार्थी न भूयः क्लेशभाजनम् ॥ ३६
सर्व्वेषामेव शौचानामन्नशौचं विशिष्यते ।
योऽन्नार्थैरशुचिः शौचान्न मृदा वारिणा शुचिः ॥ ३७
सत्यं शौचं मनःशौचं शौचमिन्द्रियनिग्रहः ।
सर्व्वभूते दया शौचं जलशौचञ्च पञ्चमम् ॥ ३८
यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः ।
सत्यं हि वचनं यस्य सोऽश्वमेधाद्विशिष्यते ॥ ३९
मृत्तिकानां सहस्रेण उदकानां शतेन च ।
न शुध्यति दुराचारी भावोपहतचेतनः ॥ ४०
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ ४१
न प्रहृष्यति सम्मानेनावमानेन कुप्यति ।
न क्रुद्धः परुषं ब्रूयादेतत् साधोस्तु लक्षणम् ॥ ४२
दरिद्रस्य मनुष्यस्य प्राज्ञस्य मधुरस्य च ।
काले श्रुत्वा हितं वाक्यं न कश्चित् प्रतिपद्यते ॥ ४३
न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण च ।
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥ ४४
अयाचितो मया लब्धस्तत्प्रेषितः पुनर्गतः ।
यत्रागतस्तत्र गतस्तत्र का परिदेवना ॥ ४५
एकवृक्षे यदा रात्रौ नानापक्षिसमागमः ।
प्रातर्दश दिशो यान्ति का तत्र परिदेवना ॥ ४६
एकसार्थप्रयातानां सर्व्वेषां तत्रगामिनाम् ।
यद्येकस्त्वरितो याति का तत्र परिदेवना ॥ ४७
अव्यक्तादीनि भूतानि व्यक्तमध्यानि शौनक ।
अव्यक्तनिधनान्येव का तत्र परिदेवना ॥ ४८
नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशाग्रेण तु संस्पृष्टः प्राप्तकालो न जीवति ॥ ४९
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥ ५०
ततः प्राप्नोति पुरुषः किं प्रलापः करिष्यति ।
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्त्तन्ते तथा कर्म्म पुराकृतम् ॥ ५१
शीलं कुलं नैव न चैव विद्या
ज्ञानं गुणा नैव न बीजशुद्धिः ।
भाग्यानि पूर्व्वं तपसार्जितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ५२
यत्र मृत्युर्यतो हन्ता यत्र श्रीर्यत्र सम्पदः ।
तत्र तत्र स्वयं याति प्रेष्यमाणः स्वकर्म्मभिः ॥ ५३
भूतपूर्व्वं कृतं कर्म्म कर्त्तारमनुतिष्ठति (क) ।
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥ ५४
एवं पूर्व्वकृतं कर्म्म कर्त्तारमनुतिष्ठति ।
सुकृतं भुङ्क्ष्व चात्मीयं मूढः किं परितप्यसे ॥ ५५
यथा पूर्व्वकृतं कर्म्म कर्त्तारमनुतिष्ठति ।
एवं पूर्व्वकृतं कर्म्म शुभं वा यदि वाशुभम् ॥ ५६
नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥
राग-द्वेषादियुक्तानां न सुखं कुत्रचिद्द्विज ।
विचार्य्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ।
यत्र स्नेहो भयं तत्र स्नेहो दुःखस्य भाजनम् ।
स्नेहमूलानि दुःखानि तस्मिंस्त्यक्ते महत् सुखम् ।
शरीरमेवायतनं दुःखस्य च सुखस्य च ।
जीवितञ्च शरीरञ्च जात्यैव सह जायते ॥ ६०
सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुख-दुःखयोः ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखं दुःखं मनुष्याणां चक्रवत् परिवर्त्तते ॥ ६२
यद्गतं तदतिक्रान्तं यदि स्यात् तच्च दूरतः ।
वर्त्तमानेन वर्त्तेत न स शोकेन बाध्यते ॥ ६३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
नीतिसारे त्रयोदशाधिकशत-
तमोऽध्यायः ॥ ११३ ॥

(क) यदस्मदीयं न हि तत् परेषामिति क्वचित् पठ्यते ।

(क) अनुगच्छतीति पाठान्तरम् ।

## चतुर्दशाधिकशततमोऽध्यायः ।

सूत उवाच ।

न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥ १
शोकत्राणं भयत्राणं प्रीतिविश्वासभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ३
न मातरि न दारेषु न सोदर्य्ये न चात्मजे ।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ ४
यदीच्छेच्छाश्वतीं प्रीतिं त्रीणि दोषाणि वर्ज्जयेत् ।
द्यूतमर्थप्रयोगञ्च परदाराभिदर्शनम् (क) ॥ ५
मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ६
विपरीतरतिः कामः स्वायत्तेषु न विद्यते ।
यत्रापायो वधो दण्डस्तत्रैव ह्यनुवर्त्तते ॥ ७
अपि वज्रानिलस्येव तुरगस्य महोदधेः ।
शक्यते प्रसरो रोद्धुं नानुरक्तस्य चेतसः ॥ ८
क्षणं नास्ति रहो नास्ति नास्ति चापि निमन्त्रकः ।
तेन शौनक नारीणां सतीत्वमुपजायते ॥ ९
अन्यं यात्यन्यमाकाङ्क्षेदन्यं चेतसि रोचते ।
पुरुषाणामलाभेन तेन नारी पतिव्रता ॥ १०
जननी यानि कुरुते रहस्यं मदनातुरा ।
सुतैस्तानि विभाव्यन्ते शीलविप्रतिपत्तिभिः ॥ ११

पराधीना निद्रा परहृदयकृत्यानुसरणं
सदा हालाहास्यं नियतमपि शोकेन रहितम् ।
पणे न्यस्तः कायः करजनखरैर्दारितगलो
बहुलाण्ठावृत्तिर्जगति गणिकाया बहुमतः ॥ १२

अनिरापस्त्रियो मूर्खैः सर्पा राजकुलानि च ।
नित्यं परोपसेव्यानि सद्यः प्राणहराणि षट् ॥ १३

किं चित्रं यदि शब्दशास्त्रकुशलो
विप्रो भवेत् पण्डितः
किं चित्रं यदि दण्डनीतिकुशलो
राजा भवेद्धार्म्मिकः ।
किं चित्रं यदि रूपयौवनवती
योषिन्न साध्वी भवेत्
किं चित्रं यदि निर्द्धनोऽपि पुरुषः
पापं न कुर्य्यात् क्वचित् ॥ १४

नात्मच्छिद्रं परे दद्याद्विद्याच्छिद्रं परस्य च ।
गूहेत् कूर्म्म इवाङ्गानि परभावञ्च लक्षयेत् ॥ १५
पातालतलवासिन्यो वारप्राकारनिर्म्मिताः ।
यदि नो चिकुरोद्भेदः स्त्रियः केनोपलक्ष्यते ॥ १६
समधर्म्मा च धर्म्मज्ञस्तीक्ष्णः स्वजनकण्टकः ।
न तथा बाधते शत्रुः कृतवैरोऽपि शौनक ॥ १७

स पण्डितो यो ह्यनुरञ्जयेद्वै
सान्त्वेन बालान् विनयेन शिष्टम् ।
अर्थेन नारीं तपसा हि देवान्
सर्व्वांश्च लोकांश्च सुसंग्रहेण ॥ १८
शाठ्येन मित्रं कलुषेण धर्म्मं
परोपतापेन समृद्धिभावम् ।
सुखेन विद्यां परुषेण नारीं
वाञ्छन्ति ये वै न च पण्डितास्ते ॥ १९

फलार्थी फलिनं वृक्षं यश्छिन्द्याद्दुर्म्मतिर्नरः ।
न छिन्द्यात् तस्य तन्मूलं महतो दोषमाप्नुयात् ॥ २०
सधनश्च तपस्वी च दूरतश्च कृताश्रयः ।
मद्यपा स्त्री सतीत्येवं विप्र न श्रद्दधाम्यहम् ॥ २१
न विश्वसेदविश्वस्ते मित्रस्यापि न विश्वसेत् ।
कदाचित् कुपितं मित्रं सर्व्वं गुह्यं प्रकाशयेत् ॥ २२
सर्व्वभूतेषु विश्वासः सर्व्वभूतेषु सात्त्विकः ।
स्वभावमात्मना गुह्यं परापरस्य लक्षणम् ॥ २३
नतु कश्चित् कृते कार्य्ये कर्त्तारमनुवर्त्तते ।
सर्व्वथा वर्त्तमानोऽपि धैर्य्यबुद्धिन्तु कारयेत् ॥ २४
वृद्धाः स्त्रियो नवं मद्यं शुष्कमांसं त्रिमूलकम् ।
रात्रौ दधि दिवा स्वप्नं विद्वान् षट् परिवर्ज्जयेत् ॥ २५
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ।
विषं कुशिक्षिता विद्या अजीर्णे भोजनं विषम् ॥ २६
प्रियं दानमकुण्ठस्य नीचस्योच्चासनं प्रियम् ।
प्रियं दानं दरिद्रस्य वृद्धस्य तरुणी प्रिया ॥ २७

अत्यम्बुपानं कठिनाशनञ्च
धातुक्षयो वेगविधारणञ्च ।

(क) परोक्षे दारदर्शनमिति क्वचित् पाठः ।

दिवाशयो जागरणञ्च रात्रौ
षड्भिर्नराणां निवसन्ति रोगाः॥ २८
बालातपश्चाप्यति मैथुनञ्च
श्मशानधूमः करतापनञ्च।
रजस्वलावक्त्रनिरीक्षणञ्च
सुदीर्घमायुस्त्वपि कर्षयेच्च॥ २९
शुष्कमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट्॥ ३०
सद्यःपक्कघृतं द्राक्षा बाला स्त्री क्षीरभोजनम्।
उष्णोदकं तरुच्छाया सद्यः प्राणकराणि षट्॥ ३१
कूपोदकं वटच्छाया श्यामा स्त्री चैष्टकालयः (क)।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम्॥ ३२
सद्योबलकरास्त्रीणि बालाभ्यङ्गसुभोजनम्।
सद्योबलहरास्त्रीणि अध्वा च मैथुनं ज्वरः॥ ३३
शुष्कमांसं पयो नित्यं भार्य्यामित्रैः सहैव तु।
न भोक्तव्यं नृपैः सार्द्धं वियोगं कुरुते क्षणात्॥ ३४
कुचैलिनं दन्तमलोपधारिणं
बह्वाशिनं निष्ठुरवाक्यभाषिणम्।
सूर्योदये ह्यस्तमयेऽपि शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम्॥ ३५
नित्यं छेदस्तृणानां क्षितिनखलिखनं (ख)
पादयोश्चापमार्ष्टि-
र्दन्तानामप्यशौचं मलिनवसनता
रूक्षता मूर्द्धजानाम्।
द्वे सन्ध्ये चापि निद्रा निवसनशयनं
ग्रासहासातिरेकः
स्वाङ्गे पीठे च वाद्यं हरति धनपतेः
केशवस्यापि लक्ष्मीम्॥ ३६
शिरः सुधौतं चरणौ सुमार्ज्जितौ
वराङ्गनासेवनमल्पभोजनम्।
अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति षट्॥ ३७
यस्य तस्य तु पुष्पस्य पाण्डरस्य विशेषतः।
शिरसा धार्य्यमाणस्य अलक्ष्मीः प्रतिहन्यते॥ ३८

दीपस्य पश्चिमा च्छाया छाया शय्यासनस्य च।
रजकस्य तु यत् तीर्थमलक्ष्मीस्तत्र तिष्ठति॥ ३९
बालातपः प्रेतधूमः स्त्री वृद्धा तरुणं दधि।
आयुष्कामो न सेवेत तथा सम्मार्ज्जनीरजः॥ ४०
गजाश्व-रथ-धान्यानां गवाञ्चैव रजः शुभम्।
अशुभञ्च विजानीयात् खरोष्ट्राजाविकेषु च॥ ४१
गवां रजो धान्यरजः पुत्त्रस्याङ्गभवं रजः।
एतद्रजो महाशस्तं महापातकनाशनम्॥ ४२
अजारजः खररजो यत् तु सम्मार्ज्जनीरजः।
एतद्रजो महापापं महाकिल्बिषकारकम्॥ ४३
शूर्पवातो नखाग्राम्बु स्नानवस्त्रघटोदकम्।
मार्ज्जनीरेणु-केशाम्बु हन्ति पुण्यं पुराकृतम्॥ ४४
द्वौ विप्रौ विप्रवह्नीश्च दम्पत्योः स्वामिनोस्तथा।
अन्तरेण न गन्तव्यं हयस्य वृषभस्य च॥ ४५
स्त्रीषु राजाग्निसर्पेषु स्वाध्याये शत्रुसेवने।
भोगास्वादेषु विश्वासं कः प्राज्ञः कर्त्तुमर्हति॥ ४६
न विश्वसेदविश्वस्तं विश्वस्ते नातिविश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति॥ ४७
वैरिणा सह सन्धाय विश्वस्तो यदि तिष्ठति।
स वृक्षाग्रे प्रसुप्तोऽपि पतितः प्रतिबुध्यते॥ ४८
नात्यन्तं मृदुना भाव्यं नात्यन्तं क्रूरकर्म्मणा।
मृदुनैव मृदुं हन्ति दारुणेनैव दारुणम्॥ ४९
नात्यन्तं सरलैर्भाव्यं नात्यन्तं मृदुना तथा।
सरलास्तत्र छिद्यन्ते कुब्जास्तिष्ठन्ति पादपाः॥ ५०
नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः।
शुष्कवृक्षाश्च मूर्खाश्च भिद्यन्ते न नमन्ति च॥ ५१
अप्रार्थितानि दुःखानि यथैवायान्ति यान्ति च।
मार्ज्जार इव लुम्पेत तथा प्रार्थयते नरः॥ ५२
पूर्व्वं पश्चाच्चरेदार्य्ये सदैव बहुसम्पदः।
विपरीतमनार्य्येषु यथेच्छसि तथा चर॥ ५३
षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णश्च धार्य्यते।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्येको न बुध्यते॥ ५४
तया गवा किं क्रियते या दोग्ध्री न च गर्भिणी।
कोऽर्थः पुत्त्रेण जातेन यो न विद्वान् न धार्म्मिकः॥ ५५
एकेनापि सुपुत्त्रेण विद्यायुक्तेन धीमता।
कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा॥ ५६

(क) नारीणाञ्च पयोधर इत्यति पाठः।
(ख) धरणिविलिखनमिति पाठान्तरम् क्वचित्।

एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वनं सुवासितं सर्व्वं सुपुत्त्रेण कुलं यथा ॥ ५७
एको हि गुणवान् पुत्त्रो निर्गुणेन शतेन किम् ।
चन्द्रो हन्ति तमांस्येको न च ज्योतिःसहस्रकः ॥ ५८
लालयेत् पञ्च वर्षाणि दश वर्षाणि ताड़येत् ।
प्राप्ते तु षोड़शे वर्षे पुत्त्रं मित्रवदाचरेत् ॥ ५९
जायमानो हरेद्दारान् वर्द्धमानो हरेद्धनम् ।
म्रियमाणो हरेत् प्राणान् नास्ति पुत्त्रसमो रिपुः ॥ ६०
केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ।
तत्स्वरूपविपर्य्यासे विश्वासस्तु पदे पदे ॥ ६१
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ६२
एतदेवानुवर्त्तेत भोगा हि क्षणभङ्गिनः ।
स्निग्धेषु विविदग्धोऽस्य पतयो यन्न मन्यते ॥ ६३
ज्येष्ठः पितृसमो भ्राता मृते पितरि शौनक ।
सर्व्वेषां स पिता हि स्यात् सर्व्वेषामनुपालकः ॥ ६४
कनिष्ठास्तत्र सर्व्वेऽपि समलेनानुवर्त्तते ।
समोपभोगजीवेषु यथैव तनयस्तथा ॥ ६५
बहूनामल्पसाराणां समुदायो हि दारुणम् ।
तृणैरावेष्टिता रज्जुस्तया नागोऽपि बध्यते ॥ ६६
अपहृत्य परस्वं हि यस्तु दानं प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत् फलम् ॥ ६७
देवद्रव्यविनाशाय ब्रह्मस्वहरणाय च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ६८
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ६९
नाश्नन्ति पितरो देवाः पुत्त्रस्य वृषलीपतेः ।
भार्य्याजितस्य नाश्नन्ति यस्याश्चोपपतिर्गृहे ॥ ७०
अकृतज्ञमनार्य्यञ्च दीर्घरोषमनार्ज्जवम् ।
चतुरो विद्धि चाण्डालान् जात्या जायति पञ्चमः ॥ ७१
नोपेक्षितव्यो दुर्बुद्धिः शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽप्यसंग्राह्यः कुरुते भस्मसाज्जगत् ॥ ७२
नवे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ ७३
पन्थान इव विप्रेन्द्र सर्व्वसाधरणाः स्त्रियः ।
तस्मात् त्वं नाववद्धेथा नास्तीर्ष्यभवनाश्च ताः ॥ ७४

चित्तायत्तं धातुवश्यं शरीरं
चित्ते नष्टे धातवो यान्ति नाशम् ।
तस्माच्चित्तं सर्व्वदा रक्षणीयं
स्वस्थे चित्ते बुद्धयः सम्भवन्ति ॥ ७५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नीतिसारे
चतुर्द्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

## पञ्चदशाधिकशततमोऽध्यायः ।

सूत उवाच ।

कुभार्य्याञ्च कुमित्रञ्च कुराजानं कुसौहृदम् ।
कुबन्धुञ्च कुदेशञ्च दूरतः परिवर्ज्जयेत् ॥ १
धर्म्मः प्रव्रजितस्तपः प्रचलितं
सत्यञ्च दूरं गतं
पृथ्वी मन्दफला जनाः कपटिनो
लौल्ये स्थिता ब्राह्मणाः ।
मर्त्त्याः स्त्रीवशगाः स्त्रियश्च चपला
नीचा जना उन्नताः
हा कष्टं खलु जीवितं कलियुगे
धन्या जना ये मृताः ॥ २
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
परचित्तगतान् दारान् पुत्त्रं कुव्यसने स्थितम् ॥ ३
कुपुत्त्रे निर्वृतिर्नास्ति कुभार्य्यायां कुतो रतिः ।
कुमित्रे नास्ति विश्वासः कुराज्ये नास्ति जीवितम् ॥ ४
परान्नञ्च परस्वञ्च परशय्याः परस्त्रियः ।
परवेश्मनि वासश्च शक्रादपि हरेच्छ्रियम् ॥ ५
आलापाद्गात्रसंस्पर्शात् निश्वासात् सहभोजनात् ।
आसनाच्छयनाद्यानात् पापं संक्रमते नृणाम् ॥ ६
स्त्रियो नश्यन्ति रूपेण तपः क्रोधेन नश्यति ।
गावो दूरप्रचारेण शूद्रान्नेन द्विजोत्तमः ॥ ७
आसनादेकशय्यायां भोजनात् पङ्क्तिसङ्करात् ।
ततः संक्रमते पापं घटाद्घट इवोदकम् ॥ ८
लालने बहवो दोषास्ताड़ने बहवो गुणाः ।
तस्माच्छिष्यञ्च पुत्त्रञ्च ताड़येन्न तु लालयेत् ॥ ९
अध्वा जरा देहवतां पर्व्वतानां जलं जरा ।
असम्भोगश्च नारीणां वस्त्राणामातपो जरा ॥ १०

अधमाः कलिमिच्छन्ति सन्धिमिच्छन्ति मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ ११
मानो हि मूलमर्थस्य माने सति धनेन किम् ।
प्रभ्रष्टमानदर्पस्य किं धनेन किमायुषा ॥ १२
अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥१३

वनेऽपि सिंहा न नमन्ति कन्तु
बुभुक्षिता मांसनिरीक्षणञ्च ।
धनैर्विहीनाः सुकुलेषु जाता
न नीचकर्म्माणि समारभन्ति ॥ १४

नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
नित्यमूर्ज्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १५

वणिक् प्रमादी भृतकश्च मानी
भिक्षुर्विलासी अधनश्च कामी ।
वराङ्गना चाप्रियवादिनी च
न ते च कर्म्माणि समारभन्ति ॥ १६

दाता दरिद्रः कृपणोऽर्थयुक्तः
पुत्त्रोऽविधेयः कुजनस्य सेवा ।
परापकारेषु नरस्य मृत्युः
प्रजायते दुश्चरितानि पञ्च ॥ १७

कान्तावियोगः स्वजनापमान-
ऋणस्य शेषः कुजनस्य सेवा ।
दरिद्रभावाद्विमुखाश्च मित्रा
विनाग्निना पञ्च दहन्ति तीव्राः ॥ १८

चिन्तासहस्राणि बहूनि सध्या-
श्चिन्ताशतस्रोऽप्यसिधारतुल्याः ।
नीचापमानः क्षुधितं कलत्रं
भार्य्या विरक्ता सहजोपरोधः ॥ १९

वश्यश्च पुत्त्रोऽर्थकरी च विद्या
अरोगिता सज्जनसङ्गतिश्च ।
इष्टा च भार्य्या वशवर्त्तिनी च
दुःखस्य मूलोद्धरणानि पञ्च ॥ २०

कुरङ्ग-मातङ्ग-पतङ्ग-भृङ्गा
मीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमाथी स कथं न घात्यो
यः सेवते पञ्चभिरेव पञ्च ॥ २१

न धीरः कर्कशः स्तब्धः कुचैलः स्वयमागतः ।
पञ्च विप्रा न पूज्यन्ते वृहस्पतिसमा यदि ॥
आयुः कर्म्म च वित्तञ्च विद्या निधनमेव च ।
पञ्चैतानि विविच्यन्ते जायमानस्य देहिनः ॥
पर्व्वतारोहणे तोये गोकुले स्थानविग्रहे ।
पतितस्य समुत्थाने शस्ताः पञ्च गुणाः स्मृताः ।
अभ्रच्छाया खलप्रीतिः परनारीषु सङ्गतिः ।
पञ्चैते अस्थिरा भावा यौवनानि धनानि च ॥
अस्थिरं जीवितं लोके अस्थिरं धनयौवनम् ।
अस्थिरं पुत्त्रदाराद्यं धर्म्मः कीर्त्तियशः स्थि
शतं जीवितमत्यल्पं रात्रिस्तस्यार्द्धहारिणी ।
व्याधि-शोक-जरायासैरर्द्धं तदपि निष्फलम् ।

आयुर्वर्षशतं नृणां परिमितं
रात्रौ तदर्द्धं हृतं
तस्यार्द्धं स्थितकिञ्चिदर्द्धमधिकं
बालस्य काले हृतम् ।
किञ्चिद्बन्धुवियोगदुःखकरणै-
र्भूपालसेवागतं
शेषं वारितरङ्गगर्भचपलं
मानेन किं मानिनाम् ।

अहोरात्रमयो लोके जरारूपेण सञ्चरेत् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतो नवेत् ।
सर्व्वसत्त्वहितार्थाय पशोरिव विचेष्टितम् ॥

अहितहितविचारशून्यबुद्धेः
श्रुतिसमयै बहुभिस्तिरस्कृतस्य ।
उदरभरणमात्रतुष्टबुद्धेः
पुरुषपशोश्च पशोश्च को विशेषः ॥ ३१

शौर्य्ये तपसि दाने च यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥

सज्जीवितं क्षणमपि प्रथितं मनुष्यै-
र्विज्ञान-विक्रम-यशोभिरभज्यमानैः ।
तन्नाम जीवितमिति प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ।

(क) पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ।
पाठान्तरं क्वचिद्दृश्यते ।

## पञ्चदशाधिकशततमोऽध्यायः ।

किं जीवितेन धन-मानविवर्ज्जितेन
मित्रेण किं भवति तेन सशङ्कितेन ।
सिंहव्रतं चरत गच्छत मा विषादं
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ ३४
यो वात्मनीह न गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च मित्रकार्य्ये ।
किं तस्य जीवितफलेन मनुष्यलोके
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ ३५
यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ३६
स्वाधीनवृत्तेः साफल्यं न पराधीनवृत्तिता ।
ये पराधीनकर्म्माणो जीवन्तोऽपि च ते मृताः ॥ ३७
सुपूरा वै कापुरुषाः सुपूरो मूषिकाञ्जलिः ।
असन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ३८
अभ्रच्छाया तृणादग्निर्नीचसेवा पथे जलम् ।
वेश्यारागः खले प्रीतिः षडेते बुद्बुदोपमाः ॥ ३९
वाचा विहितसार्थेन लोको न च सुखायते ।
जीवितं मानमूलं हि माने म्लाने कुतः सुखम् ॥ ४०
अबलस्य बलं राजा बालस्य रुदितं बलम् ।
बलं मूर्खस्य मौनित्वं तस्करस्यानृतं बलम् ॥ ४१
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथास्य मेधा स्याद्विज्ञानञ्चास्य रोचते ॥ ४२
यथा यथा हि पुरुषः कल्याणे कुरुते मतिम् ।
तथा तथा हि सर्व्वत्र श्लिष्यते लोकसुप्रियः ॥ ४३
लोभ-प्रमाद-विश्वासैः पुरुषो नश्यति त्रिभिः ।
तस्माल्लोभो न कर्त्तव्यः प्रमादो नो न विश्वसेत् ॥ ४४
तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
उत्पन्ने तु भये तीव्रे स्थातव्यं तैरभीतवत् ॥ ४५
ऋणशेषञ्चाग्निशेषं शत्रुशेषं तथैव च ।
पुनः पुनः प्रवर्द्धन्ते तस्माच्छेषं न कारयेत् ॥ ४६
कृते प्रतिकृतं कुर्य्यात् हिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दोषं समाचरेत् ॥ ४७
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्ज्जयेत् तादृशं मित्रं मायामयमरिं तथा ॥ ४८
दुर्ज्जनस्य हि सङ्गेन सुजनोऽपि विनश्यति ।
प्रसन्नं जलमित्याहुः कर्द्दमैः कलुषीकृतम् ॥ ४९
संभुङ्क्ते स द्विजो भुङ्क्ते समशेषनिरूपणम् ।
तस्मात् सर्व्वप्रयत्नेन द्विजः पूज्यः प्रयत्नतः ॥ ५०
तद्भुज्यते यद्द्विजभुक्तशेषं
स बुद्धिमान् यो न करोति पापम् ।
तत् सौहृदं यत् क्रियते परोक्षे
दम्भैर्विना यः क्रियते स धर्म्मः ॥ ५१
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्म्मम् ।
धर्म्मः स नो यत्र न सत्यमस्ति
नैतत् सत्यं यच्छलेनानुविद्धम् ॥ ५२
ब्राह्मणोऽपि मनुष्याणामादित्यश्चैव तेजसाम् ।
शिरोऽपि सर्व्वगात्राणां व्रतानां सत्यमुत्तमम् ॥ ५३
तन्मङ्गलं यत्र मनः प्रसन्नं
तज्जीवनं यन्न परस्य सेवा ।
तदर्ज्जितं यत् स्वजनेन भुक्तं
तद्गर्ज्जितं यत् समरे रिपूणाम् ॥ ५४
सा स्त्री या न मदं कुर्य्यात् स सुखी तृष्णयोज्झितः
तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥ ५५
यत्र मुक्तादरस्नेहो विलुप्तं तत्र सौहृदम् ।
तदेव केवलं श्लाघ्यं यत्रात्मा क्रियते स्तुतौ ॥ ५६
नदीनामग्निहोत्राणां भारतस्य कुलस्य च ।
मूलान्वेषो न कर्त्तव्यो मूलाद्दोषेण हीयते ॥ ५७
लवणजलान्ता नद्यः स्त्रीभेदान्तञ्च मैथुनम् ।
पैशुन्यं जनवार्त्तान्तं वित्तं दुःखत्रयान्तकम् ॥ ५८
राज्यश्रीर्ब्रह्मशापान्ता हालान्तं(क) ब्रह्मवर्च्चसम् ।
आचारं घोषवासान्तं कुलस्यान्तं स्त्रियश्चलाः ॥ ५९
सर्व्वं क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ६०
यदीच्छेत् पुनरागन्तुं नातिदूरमनुव्रजेत् ।
उदकान्तान्निवर्त्तेत स्निग्धवर्णाच्च पादपात् ॥ ६१
अनायके न वस्तव्यं वस्तव्यं बहुनायके ।
स्त्रीनायके न वस्तव्यं वस्तव्यं बालनायके ॥ ६२
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे काले न स्त्री स्वातन्त्र्यमर्हति ॥ ६३
त्यजेद्वन्ध्यामष्टमेऽब्दे नवमे तु मृतप्रजाम् ।

(क) पापान्तमिति वा पाठः ।

एकादशे स्त्रीजननीं सद्यश्चाप्रियवादिनीम् ॥ ६४
अनर्थित्वान्मनुष्याणां भिया परिजनस्य च।
अर्थादपेतमर्य्यादास्तयस्तिष्ठति भर्तृषु ॥ ६५
अश्वं श्रान्तं गजं मत्तं गावः प्रथमसूतिकाः।
अनूदके च मण्डूकान् प्राज्ञो दूरेण वर्ज्जयेत् ॥ ६६

अर्थातुराणां न सुहृन्न बन्धुः
कामातुराणां न भयं न लज्जा।
चिन्तातुराणां न सुखं न निद्रा
क्षुधातुराणां न बलं न तेजः ॥ ६७

कुतो निद्रा दरिद्रस्य परप्रेष्यकरस्य च।
परनारीप्रसक्तस्य परद्रव्यहरस्य च ॥ ६८
सुखं स्वपित्यनृणवान् व्याधिमुक्तश्च यो नरः।
सावकाशस्तु यो भुङ्क्ते यस्तु दारैर्न सङ्गतः ॥ ६९
अम्भसः परिमाणेन उन्नतं कमलं भवेत्।
स्व-स्वामिना बलवता भृत्यो भवति गर्व्वितः ॥ ७०
स्थानस्थितस्य पद्मस्य मित्रौ वरुण-भास्करौ।
स्थानच्युतस्य तस्यैव क्लेद-शोषणकारकौ ॥ ७१
पदे स्थितस्य मित्रा ये ते तस्य रिपुतां गताः।
भानोः पद्मे जले प्रीतिः स्थलोद्धरणशोषणः ॥ ७२
स्थानस्थितानि पूज्यन्ते पूज्यन्ते च पदे स्थिताः।
स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः ॥७३
आचारः कुलमाख्याति देशमाख्याति भाषितम्।
सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ ७४
वृथा वृष्टिः समुद्रस्य तृप्तस्य भोजनं वृथा।
वृथा दानं समृद्धस्य नीचस्य सुकृतं वृथा ॥ ७५
दूरस्थोऽपि समीपस्थो यो यस्य हृदये स्थितः।
हृदयादपि निष्क्रान्तः समीपस्थोऽपि दूरतः ॥ ७६
मुखभङ्गः स्वरो दीनो गात्रस्वेदो महद्भयम्।
मरणे यानि चिह्नानि तानि चिह्नानि याचतः ॥७७
कुब्जस्य कीटघातस्य वातान्निष्काशितस्य च।
शिखरे वसतस्तस्य वरं जन्म न याचितम् ॥ ७८
जगत्पतिर्हि याचित्वा विष्णुर्वामनतां गतः।
कोऽन्योऽधिकतरस्तस्य योऽर्थी याति न लाघवम्७९
माता वैरी पिता शत्रुर्बालो येन न पाठितः।
दूरतः शोभते मूर्खो लम्बशाटपटावृतः।
शोभते न सभामध्ये हंसमध्ये वको यथा ॥ ८०

विद्या नाम कुरूपरूपमधिकं
विद्यातिगुप्तं धनं
विद्या साधुकरी जनप्रियकरी
विद्या गुरूणां गुरुः
विद्या बन्धुजनार्त्तिनाशनकरी
विद्या परं दैवता।
विद्या राजसु पूजिता च धनिनां
विद्याविहीनः पशुः
गृहे चाभ्यन्तरे द्रव्यं लग्नञ्चैव तु दृश्यते।
अशेषं हरणीयञ्च विद्या न क्रियते परैः ॥
शौनकायं नीतिसारो विष्णुः सर्व्वव्रतानि च
हरीरितो हरादिश्च अजाद्व्यासाच्छ्रुतः सूतः
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
नीतिसारसमाप्तिर्नाम पञ्चदशाधिक-
शततमोऽध्यायः ॥ ११५ ॥

---

## षोड़शाधिकशततमोऽध्यायः।

ब्रह्मोवाच।

व्रतानि व्यास वक्ष्यामि हरियैः सर्व्वदो भवेत्
सर्व्वमासर्क्षतिथिषु वारेषु हरिरर्च्चितः ॥ १
एकभक्तेन नक्तेन उपवासफलादिना।
ददाति धनधान्यादि पुत्त्रराज्यजयादिकम्।
वैश्वानरः प्रतिपदि कुवेरः पूजितोऽर्थदः।
उपोष्य ब्रह्मा प्रतिपद्यर्च्चितः श्रीस्तथाश्विनौ
द्वितीयायां यमो लक्ष्मीर्नारायण इहार्थदः।
तृतीयायां त्रिदेवांश्च गौरी-विघ्नेश-शङ्करान्
चतुर्थ्यान्तु चतुर्व्यूहः पञ्चम्यामर्च्चितो हविः।
कार्त्तिकेयो हरिः षष्ठ्यां सप्तम्यां भास्करोऽर्थ
दुर्गाष्टम्यां नवम्याञ्च मातरोऽथ दिशोऽर्थदाः।
दशम्याञ्च यमश्चन्द्र एकादश्यामृषीन् यजेत् ॥
द्वादश्याञ्च हरिः कामस्त्रयोदश्यां महेश्वरः।
चतुर्द्दश्यां पञ्चदश्यां ब्रह्मा च पितरोऽर्थदाः ॥
अमावस्यां पूजनीया वारा वै भास्करादयः।
नक्षत्राणि च योगाश्च पूजिताः सर्व्वदायकाः ॥
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे तिथ्यादि
व्रते षोड़शाधिकशततमोऽध्यायः ॥११६॥

## सप्तदशाधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

र्गशीर्षे सिते पक्षे व्यासानङ्गत्रयोदशी ।
ल्लिकाजं दन्तकाष्ठं धुस्तूरैः पूजयेच्छिवम् ॥ १
नङ्गायेति नैवेद्यैर्मधु प्राश्याथ पौषके ।
ोगीश्वरं पूजयेच्च विल्वपत्रैः कदम्बजम् ।
न्तकाष्ठं चन्दनादि नैवेद्यं कृशरादिकम् ॥ २
ाघे नटेश्वरायार्च्यं कुन्दैर्मौक्तिकमालया ।
क्षिण दन्तकाष्ठञ्च नैवेद्यं पूरिका मुने ॥ ३
ीरेश्वरं फाल्गुने तु पूजयेत् तु मरूवकैः ।
र्करा-शाक-मण्डांश्च चूतजं दन्तधावनम् ॥ ४
त्रे यजेत् सुरूपाय कर्पूरं प्राशयेन्निशि ।
न्तधावनं वटजं नैवेद्यं शष्कुलीं ददेत् ॥ ५
जा च मोदकैः शम्भोर्वैशाखेऽशोकपुष्पकैः ।
हारूपाय नैवेद्यं गुड़भक्तं च्चुड़म्बरम् ॥ ६
न्तकाष्ठं प्राशयेच्च ददेज्जातीफलं तथा ।
द्युम्नं पूजयेज्ज्यैष्ठे चम्पकैर्विल्वजं दशेत् ॥ ७
विङ्गाशस्तथाषाढ़े उमाभद्रेऽतिशासनः ।
गुरुं दन्तकाष्ठञ्च तमपामार्गकैर्यजेत् ॥ ८
ावणे करवीरैश्च शम्भवे शूलपाणये ।
न्धाशनो घृताद्यैश्च करवीरजशोधनम् ॥ ९
द्योजातं भाद्रपदे वकुलैः पूपकैर्यजेत् ।
न्धर्व्वांशो मदनजमाश्विने च सुराधिपम् ॥ १०
म्पकैः स्वर्णवार्य्यांशो यजेन्मोदकसम्प्रदः ।
ादिरं दन्तकाष्ठञ्च कार्त्तिके रुद्रमर्च्चयेत् ॥ ११
दर्य्यां दन्तकाष्ठञ्च कुशलो दशमाशनः ।
ीरशाकप्रदः पद्मैरब्दान्ते शिवमर्च्चयेत् ॥ १२
तियुक्तमनङ्गञ्च स्वर्णमण्डलसंस्थितम् ।
न्धाद्यैर्दशसाहस्रं तिलव्रीह्यादि होमयेत् ॥ १३
ागरं गीतवादित्रं प्रभातेऽभ्यर्च्च वेदयेत् ।
जाय शय्यां पात्रञ्च च्छत्रं वस्त्रमुपानहौ ।
ा द्विजं भोजयेद्भक्त्या कृतकृत्यो भवेन्नरः ॥ १४
तदुद्यापनं सर्व्व-व्रतेषु ज्ञेयमीदृशम् ।
लञ्च श्रीयुतारोग्य सौभाग्यसर्व्वभाग्भवेत् ॥ १५
ति श्रीगारुड़े सप्तदशाधिकशततमोऽध्यायः ॥ ११७

## अष्टादशाधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

व्रतं वैकल्यशमनीमखण्डद्वादशीं वदे ।
मार्गशीर्षे सिते पक्षे गव्याशी समुपोषितः ॥ १
द्वादश्यां पूजयेद्विष्णुं दद्याच्छालिचतुष्टयम् ।
पञ्चव्रीहियुतं पात्रं विप्रायेदमुदाहरेत् ॥ २
सप्तजन्मनि यत् किञ्चिन्मयाखण्डव्रतं कृतम् ।
भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥ ३
यथाखण्डं जगत् सर्व्वं त्वमेव पुरुषोत्तमः ।
तथाखिलान्यखण्डानि व्रतानि मम सन्त्वुत ॥ ४
शक्तुपात्राणि चैत्रादौ श्रावणादौ घृतान्वितान् ।
व्रतकृद्व्रतपूर्णस्तु स्त्रीपुत्रस्वर्गभाग्भवेत् ॥ ५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
अखण्डद्वादशीव्रतं नामाष्टादशा-
धिकशततमोऽध्यायः ॥ ११८ ॥

---

## एकोनविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

अगस्त्यार्घव्रतं वक्ष्ये भुक्ति-मुक्तिप्रदायकम् ।
अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः ॥ १
अर्घ्यं दद्यादगस्त्याय मूर्त्तिं सम्पूज्य वै मुने ।
काशपुष्पमयीं कुम्भे प्रदोषे कृतजागरः ॥ २
दध्यक्षताद्यैः सम्पूज्य उपोष्य फलपुष्पकैः ।
पञ्चरत्नसमायुक्तं हेम-रौप्यसमन्वितम् ॥ ३
सप्तधान्ययुतं पात्रं दधि-चन्दनचर्च्चितम् ।
अगस्त्याय नम इति मन्त्रेणार्घ्यं प्रदापयेत् ॥ ४
काशपुष्पप्रतीकाश अग्नि-मारुतसम्भव ।
मित्रावरुणयोः पुत्त्र कुम्भयोने नमोऽस्तु ते ॥ ५
शूद्रस्त्र्यादिरनेनैव त्यजेद्धान्यं फलं रसम् ।
दद्याद्द्विजातये कुम्भं सहिरण्यं सदक्षिणम् ।
भोजयेच्च द्विजान् सप्त वर्षान् कृत्वा तु सर्व्वभाक् ॥ ६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
अगस्त्यार्घ्यव्रतं नामैकोनविंशत्य-
धिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

रम्भातृतीयां वक्ष्ये च सौभाग्यश्रीसुतादिदाम् ।
मार्गशीर्षे सिते पक्षे तृतीयायामुपोषितः ॥ १
गौरीं यजेद्बिल्वपत्रैः कुशोदककरम्भदः ।
करम्बादो गिरिसुतां पौषे मरुवकैर्यजेत् ॥ २
कर्पूरादः कृशरदो मल्लिकादन्तकाष्ठकृत् ।
माघे सुभद्रां कह्लारैर्घृताशी मण्डकप्रदः ॥ ३
गौतीमयं दन्तकाष्ठं फाल्गुने गोमतीं यजेत् ।
कुन्दैः कृत्वा दन्तकाष्ठं जीवाशः शष्कुलीप्रदः ॥ ४
विशालाक्षीं मदनकैश्चैत्रे कृशरसम्प्रदः ।
दधिप्राशो दन्तकाष्ठं तगरं श्रीमुखीं यजेत् ।
वैशाखे कर्णिकारैश्च अशोकाशी वटप्रदः ॥ ५
ज्यैष्ठे नारायणीमर्च्चेत् शतपत्रैश्च खण्डदः ।
लवङ्गाशी भवेद्देव आषाढ़े माधवीं यजेत् ॥ ६
तिलाशी बिल्वपत्रैश्च क्षीरान्नवटकप्रदः ।
औडुम्बरं दन्तकाष्ठं तगर्या श्रावणे श्रियम् ॥ ७
दन्तकाष्ठं मल्लिकाया क्षीरदो ह्युत्तमां यजेत् ।
पद्मैर्यजेद्भाद्रपदे शृङ्गाशी गुड़ादिदः ॥ ८
राजपुत्रीञ्चाश्वयुजे जवापुष्पैश्च जीवकम् ।
प्राशयेन्निशि नैवेद्यैः कृशरैः कार्त्तिके यजेत् ॥ ९
जातीपुष्पैः पद्मजाञ्च पञ्चगव्याशनो यजेत् ।
घृतोदनञ्च वर्षान्ते सपत्नीकान् द्विजान् यजेत् ॥ १०
उमामहेश्वरं पूज्य प्रदद्याच्च गुड़ादिकम् ।
वस्त्रच्छत्रसुवर्णाद्यै रात्रौ च कृतजागरः ।
गीतवाद्यैर्ददेत् प्रातर्गत्वाद्यं सर्व्वमाप्नुयात् ॥ ११

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे रम्भातृतीयाव्रतं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

## एकविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

चातुर्म्मास्यव्रतान्यूचे एकादश्यां समारभेत् ।
आषाढ्यां पौर्णमास्यां वा सर्व्वेण हरिमर्च्च च ॥ १
इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्व्विघ्नं सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्द्दन ॥ ३
एवमभ्यर्च्च्य गृह्णीयाद्व्रतार्च्चनजपादिकम् ।
सर्व्वाघञ्च क्षयं याति चिकीर्षुर्य्यो हरेर्व्रतम् ।
स्नात्वा यश्चतुरो मासानेकभक्तेन पूजयेत् ।
विष्णुं स याति विष्णोर्वै लोकं मलविवर्ज्जितः ।
मद्य-मांस-सुरात्यागी वेदविद्धरिपूजनात् ।
तैलवर्ज्जी विष्णुलोकं विष्णुभाक् कृच्छ्रपादकृत् ।
एकरात्रोपवासाच्च देवो वैमानिको भवेत् ।
श्वेतद्वीपं त्रिरात्रात् तु व्रजेत् षष्ठान्नकृत् ।
चान्द्रायणाद्धरेर्द्धाम लभेन्मुक्तिमयाचिताम् ।
प्राजापत्याद्विष्णुलोकं पराकव्रतकृद्धरिम् ॥
शक्तायावकभिक्षाशी पयो-दधि-घृताशनः ।
गोमूत्रयावकाहारः पञ्चगव्यकृताशनः ।
शाक-मूल-फलत्यागी रसवर्ज्जी च विष्णुः ।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे चातुर्मास्यव्रतं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

## द्वाविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

व्रतं मासोपवासाख्यं सर्व्वोत्कृष्टं वदामि ते ।
वानप्रस्थो यतिर्नारी कुर्य्यान्मासोपवासकम् ।
आश्विनस्य सिते पक्षे एकादश्यामुपोषितः ।
व्रतमेतत् तु गृह्णीयाद्यावत् त्रिंशद्दिनानि तु ।
अद्यप्रभृत्यहं विष्णो यावदुत्थानकं तव ।
अर्च्चये त्वामनश्नंस्तु दिनानि त्रिंशदेव तु ॥
कार्त्तिकाश्विनयोर्विष्णो द्वादश्योः शुक्लयोरहम् ।
म्रियै यद्यन्तराले तु व्रतभङ्गो न मे भवेत् ।
हरिं यजेत् त्रिषवण-स्नायी गन्धादिभिर्व्रती ॥
गात्राभ्यङ्गं गन्धलेपं देवतायतने त्यजेत् ॥
द्वादश्यामथ सम्पूज्य प्रदद्याद्द्विजभोजनम् ।
ततश्च पारणं कुर्य्याद्धरेर्मासोपवासकृत् ॥ ६

दुग्धादिप्राशनं कुर्य्याद्व्रतस्थो मूर्च्छितोऽन्तरा।
दुग्धाद्यैर्न व्रतं नश्येद्भुक्तिमुक्ति-मवाप्नुयात् ॥ ७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे मासोपवासाख्यव्रतं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

## त्रयोविंशत्यधिकशततमोऽध्यायः।

ब्रह्मोवाच।

व्रतानि कार्त्तिके वच्मे स्नात्वा विष्णुं प्रपूजयेत्।
एकभक्तेन नक्तेन मासं वाऽयाचितेन वा ॥ १
दुग्धशाक-फलाद्यैर्वा उपवासेन वा पुनः।
सर्व्वपापविनिर्म्मुक्तः प्राप्तकामो हरिं व्रजेत् ॥ २
तदा हरेर्व्रतं श्रेष्ठं ततः स्याद्दक्षिणायने।
चातुर्म्मास्ये ततस्तस्मात् कार्त्तिके भीष्मपञ्चकम् ॥ ३
ततः श्रेष्ठव्रतं शुक्ल एकादश्यां समाचरेत्।
स्नायात् त्रिकालं पित्रादीन् यवाद्यैरर्च्चयेत् हरिम्॥४
यजेन्मौनी घृताद्यैश्च पञ्चगव्येन वारिभिः।
स्नापयित्वाथ कर्पूर-सुखैश्चैवानुलेपयेत् ॥ ५
घृताक्तगुग्गुलैर्धूपं द्विजः पञ्चदिनं दहेत्।
नैवेद्यं परमान्नन्तु जपेदष्टोत्तरं शतम् ॥ ६
ओं नमो वासुदेवाय घृत-व्रीहि-तिलादिकम्।
अष्टाक्षरेण मन्त्रेण स्वाहान्तेन तु होमयेत् ॥ ७
प्रथमेऽह्नि हरेः पादौ यजेत् पद्मैर्द्वितीयके।
बिल्वपत्रैर्जानुदेशं नाभिं गन्धेन चापरे ॥ ८
स्कन्धौ बिल्वजवाभिश्च पञ्चमेऽह्नि शिरोऽर्च्चयेत्।
भालत्या भूमिशायी स्याद्गोमयं प्राशयेत् क्रमात् ॥९
गोमूत्रं क्षीरदधि च पञ्चमे पञ्चगव्यकम्।
नक्तं कुर्य्यात् पञ्चदश्यां व्रती स्याद्भुक्तिमुक्तिभाक् ॥१०
एकादशीव्रतं नित्यं तत् कुर्य्यात् पक्षयोर्द्वयोः।
घोरनरकं हन्यात् सर्व्वदं विष्णुलोकदम् ॥ ११
एकादशी द्वादशी च निशान्ते च त्रयोदशी।
नित्यमेकादशी यत्र तत्र सन्निहितो हरिः ॥ १२
दशम्येकादशी यत्र तत्रस्थाश्चासुरादयः।
द्वादश्यां पारणं कुर्य्यात् सूतके मृतके चरेत् ॥ १३
चतुर्द्दशीप्रतिपदि पूर्व्वमिश्रासपावसेत्।
पौर्णमास्योममावास्यां प्रतिपद्भिःश्रितां मुने ॥ १४
द्वितीयां तृतीयामिश्रां तृतीयाञ्चाप्युपावसेत्।
चतुर्थ्या सङ्गतां नित्यं चतुर्थीञ्चानया युताम्।
पञ्चमीं षष्ठीसंयुक्तां षष्ठ्या युक्ताञ्च पञ्चमीम् ॥ १५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे भीष्मपञ्चकादिव्रतविधिर्नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

## चतुर्व्विंशत्यधिकशततमोऽध्यायः।

ब्रह्मोवाच।

शिवरात्रिव्रतं वच्मे कथाञ्च सर्व्वकामदम्।
यथा च गौरी भूतेशं पृच्छति स्म परं व्रतम् ॥ १

ईश्वर उवाच।

माघफाल्गुनयोर्मध्ये कृष्णा या तु चतुर्द्दशी।
तस्यां जागरणाद्रुद्रः पूजितो भुक्ति-मुक्तिदः ॥ २
कामयुक्तो हरः पूज्यो द्वादश्यामिव केशवः।
उपोषितैः पूजितः सन् नरकात् तारयेत् तथा ॥ ३
निषादश्चार्व्वुदे राजा पापी सुन्दरसेनकः।
स कुक्कुरैकसंयुक्तो मृगान् हन्तुं वनं गतः ॥ ४
मृगादिकमसम्प्राप्य क्षुत्पिपासार्द्दितो गिरौ।
रात्रौ तड़ागतीरे स निकुञ्जे जाग्रदास्थितः ॥ ५
तत्रास्ति लिङ्गं स्वदेहञ्छरीरञ्चाच्छिपत् ततः।
पर्णानि चापतन् मूर्द्ध्नि लिङ्गस्यैव न जानतः ॥ ६
तेन धूलिनिरोधाय क्षिप्तं नीरञ्च लिङ्गके।
शरः प्रमादेनैकस्तु प्रच्युतः करपल्लवात् ॥ ७
जानुभ्यामवनीं गत्वा लिङ्गं स्पृष्ट्वा गृहीतवान्।
एवं स्नानं स्पर्शनञ्च पूजनं जागरोऽभवत् ॥ ८
प्रातर्गृहागतो भार्य्यादत्तान्नं भुक्तवान् स च।
काले मृतो यमभटैः पाशैर्बद्ध्वा तु नीयते ॥ ९
तदा मम गणैर्युद्धे जित्वा मुक्तीकृतः स च।
कुक्कुरेण सहैवाभूद्गणो मत्पार्श्वगोऽमलः ॥ १०
एवमज्ञानतः पुण्यं ज्ञानात् पुण्यमथाक्षयम्।
त्रयोदश्यां शिवं पूज्य कुर्य्यात् तु नियमं व्रती ॥ ११
प्रातर्देव चतुर्द्दश्यां जागरिष्याम्यहं निशि।
पूजां दानं तपो होमं करिष्याम्यात्मशक्तितः ॥ १२

चतुर्द्दश्यां निराहारो भूत्वा शम्भो परेऽहनि।
भोक्ष्येऽहं भुक्ति-मुक्त्यर्थं शरणं मे भवेश्वर॥ १३
पञ्चगव्यामृतैः स्नाप्य अन्तकाले गुरुं शिवः।
ओं नमो नमः शिवाय गन्धाद्यैः पूजयेद्धरम्॥ १४
तिल-तण्डुल-व्रीहींश्च जुहुयात् सघृतं चरुम्।
हुत्वा पूर्णाहुतिं दत्त्वा शृणुयाद्गीतसत्कथाम्॥ १५
अर्द्धरात्रे त्रियामे च चतुर्थे च पुनर्यजेत्।
मूलमन्त्रं तथा जप्त्वा प्रभाते तु क्षमापयेत्॥ १६
अविघ्नेन व्रतं देव त्वत्प्रसादान्मयार्च्चितम्।
क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर॥ १७
यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम्।
त्वत्प्रसादान्मया देव व्रतमद्य समर्पितम्॥ १८
प्रसन्नो भव मे श्रीमन् गृहं प्रति च गम्यताम्।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः।
भोजयेद्ध्याननिष्ठांश्च वस्त्रच्छत्रादिकं ददेत्॥ १९
देवादिदेव भूतेश लोकानुग्रहकारक।
यन्मया श्रद्धया दत्तं प्रीयतां तेन मे प्रभुः॥ २०
इति क्षमाप्य च यती कुर्य्याद्द्वादशवार्षिकम्।
कीर्त्ति-श्री-पुत्र-राज्यादि प्राप्य शैवं पुरं व्रजेत्॥२१
द्वादशेष्वपि मासेषु प्रकुर्य्यादिह जागरम्।
व्रतीन् द्वादश सम्भोज्य दीपदः स्वर्गमाप्नुयात्॥ २२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
शिवरात्रिव्रतं नाम चतुर्व्विंशत्य-
धिकशततमोऽध्यायः॥ १२४॥

---

## पञ्चविंशत्यधिकशततमोऽध्यायः।

पितामह उवाच।

मान्धाता चक्रवर्त्त्यासीदुपोष्यैकादशीं नृपः।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। १
दशम्येकादशीमिश्रा गान्धार्य्या समुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात् तां परिवर्ज्जयेत्॥ २
दशम्येकादशी यत्र तत्र सन्निहितोऽसुरः।
द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः॥ ३
बहुवाक्यविरोधेन सन्देहो जायते यदा।
द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम्॥ ४
एकादशी कलान स्यादुपोष्या द्वादशी त[...]
एकादशी द्वादशी च विशेषेण त्रयोदशी।
त्रिमिश्रा सा तिथिर्ग्राह्या सर्व्वपापहरा [...]
एकादशीमुपोष्यैव द्वादशीमथवा द्विज।
त्रिमिश्राञ्चैव कुर्व्वीत न दशम्या युतां [...]
रात्रौ जागरणं कुर्व्वन् पुराणश्रवणं [...]
गदाधरं पूजयंश्च उपोष्यैकादशीद्वयम्।
रुक्माङ्गदो ययौ मोक्षमन्ये चैकादशीव्र[...]

इति श्रीगारुड़े पूर्व्वखण्डे एकादशीमा[...]
पञ्चविंशत्यधिकशततमोऽध्यायः॥ १[...]

---

## षड्विंशत्यधिकशततमोऽध्या[यः।]

ब्रह्मोवाच।

येनार्च्चनेन वै लोको जगाम परमां गति[म्।]
तमर्च्चनं प्रवक्ष्यामि भुक्ति-मुक्तिकरं पर[म्।]
सामान्यमण्डले न्यस्य धातारं द्वारदेश[...]
विधातारं तथा गङ्गां यमुनाञ्च महानदी[...]
द्वारश्रियञ्च दण्डञ्च प्रचण्डं वास्तुपूरुषम्।
मध्ये चाधारशक्तिञ्च कूर्म्मञ्चानन्तमर्च्चये[त्।]
भूमिं धर्म्मं तथा ज्ञानं वैराग्यैश्वर्य्यमेव [...]
अधर्म्मादींश्च चतुरः कन्दं नालञ्च पङ्कज[...]
कर्णिकां केशरं सत्त्वं राजसं तामसं गुण[...]
सूर्य्यादिमण्डलान्येव विमलाद्याश्च शक्त[...]
दुर्गां गणं सरस्वतीं क्षेत्रपालञ्च कोणके।
आसनं मूर्त्तिमभ्यर्च्च्य वासुदेवं बलं स्मर[...]
अनिरुद्धं महात्मानं नारायणमथार्च्चयेत्।
हृदयादीनि चाङ्गानि शङ्खादीन्यायुधानि[...]
श्रियं पुष्टिञ्च गरुड़ं गुरुं परगुरुं यजेत्।
इन्द्रादीन् दिक्षधोनागमूर्द्ध्वं ब्रह्माणमर्च्च[...]
विष्वक्सेनमथैशान्यां प्रोक्तं पूजनमागमे।
सकृदभ्यर्च्चितो देवो येनैवं विधिपूर्व्वकम्
न तस्य सम्भवो भूयः संसारेऽस्मिन् महा[...]
पुण्डरीकाय सम्पूज्य ब्रह्माणञ्च गदाधर[...]

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे[...]
विंशत्यधिकशततमोऽध्यायः॥ १२[...]

## सप्तविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

माघमासे शुक्लपक्षे सूर्य्यर्क्षेण युता पुरा ।
एकादशी तथा चैका भीमेन समुपोषिता ॥ १
आश्चर्य्यन्तु व्रतं कृत्वा पितॄणामनृणोऽभवत् ।
भीमद्वादशी विख्याता प्राणिनां पुण्यवर्द्धिनी ॥ २
नक्षत्रेण विनाप्येषा ब्रह्महत्यादि नाशयेत् ।
विनिहन्ति महापापं कुनृपो विषयं यथा ॥ ३
कुपुत्रस्तु कुलं यद्वत् कुभार्य्या च पतिं यथा ।
अधर्म्मश्च यथा धर्म्मं कुमन्त्री च यथा नृपम् ॥ ४
अज्ञानेन यथा ज्ञानं शौचताऽशौचतां यथा ।
अश्रद्धया यथा श्राद्धं सत्यञ्चैवानृतैर्यथा ॥ ५
हिमं यथोष्णमाहन्यादनर्थश्चार्थसञ्चयः ।
यथा प्रकीर्त्तनाद्दानं तपो वै विषयाद्यथा ॥ ६
अशिक्षया यथा पुत्रो गावो दूरगतैर्यथा ।
क्रोधेन च यथा शान्तिर्यथावित्तमवर्द्धनात् ॥ ७
ज्ञानेनैव यथाऽविद्या निष्कामेण यथा फलम् ।
तथैव पापनाशाय प्रोक्तेयं द्वादशी शुभा ॥ ८
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
युगपदुपजातानि न निहन्ति त्रिपुष्करम् ॥ ९
न चापि नैमिषं क्षेत्रं कुरुक्षेत्रं प्रभासकम् ।
कालिन्दी यमुना गङ्गा न रेवा न सरस्वती ॥ १०
न चैव सर्व्वतीर्थानि एकादश्याः समानि हि ।
न दानं न जपो होमो न चान्यत् सुकृतं क्वचित्॥११
एकतः पृथिवीदानमेकतो हरिवासरः ।
ततोऽप्येका महापुण्या इयमेकादशी वरा ॥ १२
अस्मिन् वराहवपुषं कृत्वा देवन्तु हाटकम् ।
घटोपरि नवे पात्रे कृत्वा वै ताम्रभाजने ॥ १३
सर्व्वबीजभृतो विप्राः सितवस्त्रावगुण्ठिते ।
सहिरण्यप्रदीपाद्यैः कृत्वा पूजां प्रयत्नतः ॥ १४
वराहाय नमः पादौ क्रोडाकृति नमः कटिम् ।
नाभिं गभीरघोषाय उरःश्रीवत्सधारिणे ॥ १५
बाहू सहस्रशिरसे ग्रीवां सर्व्वेश्वराय च ।
मुखं सर्व्वात्मने पूज्य ललाटं प्रभवाय च ।
केशाः शतमयूखाय पूज्या देवस्य चक्रिणः ॥ १६
विधिना पूजयित्वा तु कृत्वा जागरणं निशि ।
श्रुत्वा पुराणं देवस्य माहात्म्यप्रतिपादकम् ॥ १७
प्रातर्विप्राय दत्त्वा च याचकाय शुभाय तत् ।
कनकक्रोड़सहितं सन्निवेद्य परिच्छदम् ॥ १८
पश्चात् तु पारणं कुर्य्यान्नातितृप्तः सकृद्व्रतः ।
एवं कृत्वा नरो विद्वान् न भूयः स्तनपो भवेत् ॥ १९
उपोष्यैकादशीं पुण्यां मुच्यते वै ऋणत्रयात् ।
मनोऽभिलषितावाप्तिः कृत्वा सर्व्वव्रतादिकम् ॥ २०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
एकादशीमाहात्म्यं नाम सप्तविंशत्य-
धिकशततमोऽध्यायः ॥ १२७ ॥

---

## अष्टाविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

व्रतानि व्यास वक्ष्यामि यैस्तुष्टः सर्व्वदो हरिः ।
शास्त्रोदितो हि नियमो व्रतं तच्च तपो मतम् ॥ १
नियमास्तु विशेषाः स्युर्व्रतस्यास्य यमादयः ।
नित्यं त्रिषवणं स्नायादधःशायी जितेन्द्रियः ॥ २
स्त्री-शूद्र-पतितानान्तु वर्ज्जयेदभिभाषणम् ।
पवित्राणि पठेच्चैव जुहुयाच्चैव शक्तितः ॥ ३
कृच्छ्राण्येतानि सर्व्वाणि चरेत् सुकृतवान् नरः ।
क्षेमाणां रक्षणार्थन्तु द्विगुणं व्रतमाचरेत् ॥ ४
कांस्यं माषं मसूरञ्च चणकं कोरदूषकम् ।
शाकं मधु परान्नञ्च वर्ज्जयेदुपवासवान् ॥ ५
पुष्पालङ्कारवस्त्राणि धूपगन्धानुलेपनम् ।
उपवासेन दुष्येत् तु दन्तधावनमञ्जनम् ॥ ६
दन्तकाष्ठं पञ्चगव्यं कृत्वा प्रातर्व्रतं चरेत् ।
असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत दिवास्वप्नाच्चमैथुनात् ॥ ७
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
देवपूजाग्निहवने सन्तोषास्तेयमेव च ॥ ८
सर्व्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्मृतः ।
नक्षत्रदर्शनान्नक्तमनक्तं निशि भोजनम् ॥ ९
गोमूत्रञ्च पलं दद्यादर्द्धाङ्गुष्ठन्तु गोमयम् ।
क्षीरं सप्तपलं दद्याद्दध्नश्चैव पलत्रयम् ॥ १०

घृतमेकपलं दद्यात् पलमेकं कुशोदकम् ।
गायत्र्या चैव गन्धेति आप्यायस्व दधिग्रहः ।
तेजोऽसीति च देवस्य ब्रह्मकूर्चव्रतं चरेत् ॥ ११
अन्याधानं प्रतिष्ठाञ्च यज्ञ-दान-व्रतानि च ।
देवव्रतवृषोत्सर्ग-चूड़ाकरणमेखलाः ।
माङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत् ॥ १२
दर्शाद्दर्शस्य चान्द्रः स्यात् त्रिंशाहोभिस्तु सावनः ।
रविसंक्रमणात् सौरो नाक्षत्रः सप्तविंशतेः ॥ १३
सौरो मासो विवाहाय यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकृत्ये च चान्द्रो मासः प्रशस्यते ॥ १४
युग्माग्नि-कृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्द्दश्याथ पूर्णिमा ॥ १५
प्रतिपद्याप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥ १६
नरेन्द्र-सत्रि-व्रतिनां विवाहोपप्लवादिषु ।
सद्यःशौचं समाख्यातं कान्तारादपसर्पति ॥ १७
प्रारब्धतपसां स्त्रीणां रजो हन्याद्व्रतं न हि ।
अन्यदानादिकं कुर्यात् कायिकं स्वयमेव च ॥ १८
क्रोधात् प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि ।
दिनत्रयं न भुञ्जीत शिरसो मुण्डनं भवेत् ॥ १९
असामर्थ्ये शरीरस्य पुत्रादीन् कारयेद्व्रतम् ।
व्रतस्थं मूर्च्छितं विप्रं जलादीननुपाययेत् ॥ २०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
व्रतपरिभाषा नामाष्टाविंशत्य-
धिकशततमोऽध्यायः ॥१२८॥

---

## एकोनत्रिंशदधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

वक्ष्ये प्रतिपदादीनि व्रतानि व्यास शृणुष्व ।
वश्वानरपदं याति शिखिव्रतमिदं स्मृतम् ॥ १
प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः ।
चैत्रादौ कारयेच्चैव ब्रह्मपूजां यथाविधि ॥ २
गन्धपुष्पार्च्चनैर्दानैर्माल्यादिभिर्मनोरमैः ।
सहोमैः पूजयेद्देवं सर्व्वान् कामानवाप्नुयात् ॥ ३
आश्विने तु सितेऽष्टम्यां पुष्पाहारेण वत्सरम् ।
पुष्पादिदाता रूपेच्छू रूपभागी भवेन्नरः ।
कृष्णपक्षे तृतीयायां श्रावणे श्रीधरं शिवाम् ।
व्रती सवत्सां शय्याञ्च फलं दद्याद्द्विजातये ।
शय्यां दत्त्वा प्रार्थयेच्च श्रीधराय नमः शिवे ।
उमां शिवं हुताशञ्च तृतीयायाञ्च पूजयेत् ।
हविष्यमन्नं नैवेद्यं देयं दमनकं तथा ।
चैत्रादौ फलमाप्नोति उमया मे प्रभाषितम् ।
फाल्गुनादितृतीयायां लवणं यस्तु वर्ज्जयेत् ।
समाप्ते शयनं दद्याद्गृहञ्चोपस्करान्वितम् ।
सम्पूज्य विप्रमिथुनं भवानि प्रीयतामिति ।
गौरीलोके वसेन्नित्यं सौभाग्याकरमुत्तमम् ।
गौरी काली उमा भद्रा दुर्गा कान्तिः सर...
मङ्गला वैष्णवी लक्ष्मीः शिवा नारायणी ...
मार्गतृतीयामारभ्य अवियोगादि चाप्नुयात् ।
चतुर्थ्यां सितमाघादौ निराहारो व्रतान्वितः ।
दत्त्वा तिलांस्तु विप्राय स्वयं भुङ्क्ते तिलोदकम् ।
वर्षद्वये समाप्तिश्च निर्व्विघ्नादि समाप्नुयात् ।
गः स्वाहा मूलमन्त्रोऽयं प्रणवेन समन्वितः ।
ग्लौं ग्लां हृदये गां गीं गूं ह्रूं ह्रीं ह्रौं ...
गूं वर्म्म गोञ्च गौं नेत्रं गोञ्च आवाहनादिकम् ।
आगच्छोल्काय गन्धोल्कः पुष्पोल्क-धूपोल्क...
दीपोल्काय महोल्काय बलिश्चाथ विसर्ज्जनम् ।
सिद्धोल्काय च गायत्री न्यासोऽङ्गुष्ठादिषु ...
ओं महाकर्णाय विद्महे वक्रतुण्डाय धीमहि ।
तन्नो दन्ती प्रचोदयात् ॥
पूजयेत् तिलहोमैश्च एते पूज्या गणास्तथा ।
गणाय गणपतये स्वाहा कुष्माण्डकाय च ।
अमोघोल्कायैकदन्ताय त्रिपुरान्तकरूपिणे ।
ओं श्यामदन्तविकरालास्याहवेशाय वै नमः ।
पद्मदंष्ट्राय स्वाहान्तमुद्रा वै नर्त्तनं गणे ।
हस्ततालश्च हसनं सौभाग्यादि फलं भवेत् ।
मार्गशीर्षे तथा शुक्ल-चतुर्थ्यां पूजयेद्गणम् ।
अब्दं प्राप्नोति विद्यां श्रीकीर्त्तायुःपुत्रसन्ततिम् ।

---

(क) गवां गौं ग्लाञ्च गां गीं ह्रां ह्रां ह्रीं ह्रीं ...
गुञ्ज वर्म्म गेञ्च गौं नेत्रं गोऽन्तमावाहनम्
इति पाठान्तरं क्वचिद्दृश्यते ।

सोमवारे चतुर्थ्यान्तु समुपोष्यार्च्चयेद्गणम् ।
जपन् जुह्वत् स्मरन् नित्यं स्वर्गं निर्व्विघ्नतां व्रजेत् १७
यजेच्छुक्लचतुर्थ्यां यः खण्ड-लड्डुक-मोदकैः ।
विघ्नार्च्चनेन सर्व्वान् वै कामान् सौभाग्यमाप्नुयात् ।
पुत्रादिकं मदनकैर्मदनाख्या चतुर्थ्यपि ॥ १८
ओं गणपये चतुर्थ्यन्तं नम एवं यजेद्गणम् ।
मासे तु यस्मिन् कस्मिंश्चिज्जुहुयाद्वा जपेत् स्मरेत् ।
सर्व्वान् कामानवाप्नोति सर्व्वविघ्नविनाशनम् ॥१९
विनायकं मूर्त्तिकाद्यं यजेदेभिश्च नामभिः ।
सोऽपि सद्गतिमाप्नोति स्वर्गमोक्षसुखानि च ॥ २०
गणपूज्य एकदन्ती वक्रतुण्डश्च त्र्यम्बकः ।
नीलग्रीवो लम्बोदरो विकटो विघ्नराजकः ।
धूम्रवर्णो बालचन्द्रो दशमस्तु विनायकः ॥ २१
गणपतिर्हस्तिमुखो द्वादश वै यजेद्गणम् ।
पृथक् समस्तं मेधावी सर्व्वान् कामानवाप्नुयात् ॥२२
श्रावणे चाश्विने भाद्रे पञ्चम्यां कार्त्तिके शुभे ।
वासुकिस्तक्षकश्चैव कालियो मणिभद्रकः ॥ २३
ऐरावतो धृतराष्ट्रः कर्कोटक-धनञ्जयौ ।
घृताद्यैः स्नापिता ह्येते आयुरारोग्यस्वर्गदाः ॥ २४
अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च ।
तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकम् ॥ २५
कालीयं तक्षकञ्चापि पिङ्गलं मासि मासि च ।
यजेद्भाद्रे सिते नागानष्टौ मुक्त्वा दिवं व्रजेत् ॥ २६
द्वारस्योभयतो लेख्या श्रावणे तु सिते यजेत् ।
पञ्चम्यां पूजयेन्नागाननन्ताद्यान् महोरगान् ॥ २७
क्षीरं सर्पिश्च नैवेद्यं देयं सर्व्वविषापहम् ।
नागा अभयहस्ताश्च दष्टोद्धरणपञ्चमी ॥ २८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे प्रतिपदादि व्रत कथनं नामैकोनत्रिंशदधिकशततमोध्यायः ॥ १२९ ॥

---

## त्रिंशदधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

षष्ठ्यां भाद्रपदे मासि कार्त्तिकेयं प्रपूजयेत् ।
स्नानदानादिकं सर्व्वमस्यामक्षय्यमुच्यते ॥ १
सप्तम्यां प्राशयेच्चापि भोज्यं विप्रान् रविं यजेत् ।
ओं खखोल्कायामृतत्वं प्रियसङ्गमो भव सद स्वाहा ।
अष्टम्यां पारणं कुर्य्यान्मरीचं प्राश्य स्वर्गभाक् ॥ २

इति मरीचसप्तमी ॥

सप्तम्यां नियतः स्नात्वा पूजयित्वा दिवाकरम् ।
दद्यात् फलानि विप्रेभ्यो मार्त्तण्डः प्रीयतामिति ॥ ३
खर्ज्जूरं नारिकेलं वा प्राशयेन्मातुलुङ्गकम् ।
सर्व्वे भवन्तु सफला मम कामाः समन्ततः ॥ ४

इति फलसप्तमी ॥

सम्पूज्य देवं सप्तम्यां पायसेनाथ भोजयेत् ।
विप्रांश्च दक्षिणां दत्त्वा स्वयञ्चाद्य पयः पिबेत् ॥ ५
भक्ष्यं चोष्यं तथा लेह्यमोदनेति प्रकीर्त्तितम् ।
धनपुत्रादिकामस्तु त्यजेदेतदनोदनः ॥ ६

इत्यनोदनसप्तमी ॥

वाय्वाशी विजयेच्छुश्च कुर्य्याद्विजयसप्तमीम् ।
अद्यादर्कञ्च कामेच्छुरुपवासेत कामदम् ॥ ७
गोधूम माष-यव-षष्टिक-कांस्यपात्रं
पाषाणपिष्ट-मधु-मैथुन-मद्य-मांसम् ।
अभ्यञ्जनाञ्जनतिलांश्च विवर्ज्जयेद्य-
स्तस्योषितं भवति सप्तसु सप्तमीषु ॥ ८

इति विजयसप्तमी ।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे षष्ठ्यादिव्रतं नाम त्रिंशदधिकशततमोऽध्यायः ॥१३०॥

---

## एकत्रिंशदधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।
दूर्व्वां गौरीं गणेशञ्च फलाकारं शिवं यजेत् ॥ १
फलव्रीह्यादिकरणैः शम्भवे नमः शिवाय च ।
त्वं दूर्व्वेऽमृतजन्मासि ह्यष्टमी सर्व्वकामभाक् ।
अनग्निपक्वमश्नीयान्मुच्यते ब्रह्महत्यया ॥ २

इति दूर्व्वाष्टमी ॥

कृष्णाष्टम्याञ्च रोहिण्यामर्द्धरात्रेऽर्च्चनं हरेः ।
कार्य्याविद्धापि सप्तम्या हन्ति पापं त्रिजन्मकम् ।
उपोषितोऽर्च्चयेन्मन्त्रैस्तिथिभान्ते च पारणम् ॥ ३

योगाय योगेश्वराय योगपतये
योगसम्भवाय गोविन्दाय नमो नमः ॥ ४
इति स्नानमन्त्रः ॥
यज्ञाय यज्ञेश्वराय यज्ञपतये
यज्ञसम्भवाय गोविन्दाय नमो नमः ॥ ५
इत्यर्च्चनस्य ॥
विश्वाय विश्वेश्वराय विश्वपतये
विश्वसम्भवाय गोविन्दाय नमो नमः ॥ ६
इति शयनस्य ॥
सर्व्वाय सर्व्वेश्वराय सर्व्वपतये
सर्व्वसम्भवाय गोविन्दाय नमो नमः ॥ ७
इति पारणस्य ॥
स्थण्डिले पूजयेद्देवं सचन्द्रां रोहिणीं तथा।
शङ्खे तोयं समादाय सपुष्प-फल-चन्दनम्।
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ॥ ८
क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव।
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ॥ ९
श्रिय च वसुदेवाय नन्दाय च बलाय च।
यशोदायै ततो दद्यादर्घ्यं फलसमन्वितम् ॥ १०
अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥ ११
वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम्।
दामोदरं पद्मनाभं केशवं गरुड़ध्वजम् ॥ १२
गोविन्दमच्युतं देवमनन्तमपराजितम्।
अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारणम् ॥ १३
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम्।
नारायणं चतुर्व्वाहुं शङ्ख-चक्र-गदाधरम् ॥ १४
पीताम्बरधरं दिव्यं वनमालाविभूषितम्।
श्रीवत्साङ्कं जगद्धाम श्रीपतिं श्रीधरं हरिम् ॥ १५
यं देवं देवकी देवी वसुदेवादजीजनत्।
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ॥ १६
नामान्येतानि संकीर्त्य गत्यर्थं प्रार्थयेत्पुनः।
त्राहि मां देवदेवेश हरे संसारसागरात् ॥ १७
त्राहि मां सर्व्वपापघ्न दुःखशोकार्णवात् प्रभो।
देवकीनन्दन श्रीश हरे संसारसागरात् ॥ १८
दुर्वृत्तांस्त्रायसे विष्णो ये स्मरन्ति सकृत् सकृत्।
सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात्।
पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे।
त्राहि मां देवदेवेश त्वत्तो नान्योऽस्ति रक्षिता।
सुब्रह्मवासुदेवाय गो-ब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।
शान्तिरस्तु शिवञ्चास्तु इत्युक्त्वा तान् विसर्जयेत्।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
रोहिण्यष्टमी नाम एकत्रिंशदधिक-
शततमोऽध्यायः ॥ १३१ ॥

---

## द्वात्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

नक्ताशी त्वष्टमीं यस्माद्वर्षान्ते चैव धेनुदः।
पौरन्दरपदं याति सद्गतिव्रतमच्युत ॥ १
शुक्लाष्टम्यां पौषमासे महारुद्रेति साधु वै।
मत्प्रीतये व्रतकृतं शतसाहस्रिकं फलम् ॥ २
अष्टमी बुधवारेण पक्षयोरुभयोर्यदा।
भविष्यति तदा तस्यां व्रतमेतत् कथा पुरा।
तस्यान्नियमकर्त्तारो न स्युः खण्डितसम्पदः।
तण्डुलस्याष्टमुष्टीनां वर्ज्जयित्वाङ्गुलिद्वयम्।
भक्तं सद्भक्ति-श्रद्धाभ्यां कामनायुक्तमानवः।
आम्रपत्रपुटे कृत्वा यो भुङ्क्ते कुशवेष्टिते।
कलम्बिकाम्लिकोपेतं काम्यं तस्य फलं भवेत्।
बुधं पञ्चोपचारेण पूजयित्वा जलाशये।
शक्तितो दक्षिणां दद्यात् कर्करीं तण्डुलान्वि-
बुं बुधायेति वीजं स्यात् स्वाहान्तं कमलादि
वाण-चापधरं श्यामं दले चाङ्गानि मध्यतः।
बुधाष्टमीकथा पुण्या श्रोतव्या कृतिभिश्चवम्।
पुरे पाटलिपुत्राख्ये वीरो नाम द्विजोत्तमः।
रम्भा भार्य्या तस्य चासीत् कौशिकः पुत्र उ-
दुहिता विजयानाम्नी धनपालवृषोऽभवत्।
गृहीत्वा कौशिकस्तञ्च ग्रीष्मे गङ्गां गतोऽर-
गोपालकैर्वृषश्चौरैः क्रीड़न्नपहृतो बलात्।
गङ्गातः स च उत्थाय वनं बभ्राम दुःखितः।
जलार्थं विजया चागात् भ्राता सार्द्धञ्च शाय-

पिपासितो मृणालार्थी आगतोऽथ सरोवरम्।
दिव्यस्त्रीणाञ्च पूजादीन् दृष्ट्वा चाप्यथ विस्मितः ॥१२
स ता गत्वा ययाचान्नं सानुजोऽहं बुभुक्षितः।
स्त्रियोऽब्रुवन् व्रतं कर्त्तुं दास्यामश्च कुरु व्रतम् ॥१३
पत्यर्थं धनपालार्थं पूजयामासतुर्बुधम्।
पुटद्वयं गृहीत्वान्नं बुभुजाते प्रदत्तकम् ॥ १४
स्त्रियो गतौ च धनदौ धनपालमपश्यताम्।
चौरैर्दत्तं गृहीत्वाथ प्रदोषे प्राप्तवान् गृहम् ॥ १५
वीरश्च दुःखितं नत्वा रात्रौ सुप्त्वा यथासुखम्।
कन्याञ्च युवतीं दृष्ट्वा कस्मै देया सुता मया ॥ १६
यमायेत्यब्रवीद्दुःखात् साचाराद्व्रतसत्फलात्।
स्वर्गं गतौ च पितरौ व्रतं राज्याय कौशिकः ॥ १७
चक्रेऽयोध्यामहाराज्यं दत्त्वा च भगिनीं यमे।
यमोऽपि विजयामाह गृहस्था भव मे पुरे ॥ १८
अपश्यन्मातरं स्वां सा पाशयातनया स्थिताम्।
अथोद्विग्ना च विजया ज्ञात्वा विमुक्तिदं व्रतम् ॥ १९
चक्रे च सा ततो मुक्ता माता तस्याश्चरद्व्रतम्।
व्रतपुण्यप्रभावेण स्वर्गं गत्वावसत् सुखम् ॥ २०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
बुधाष्टमी व्रतं नाम द्वात्रिंशदधिक-
शततमोऽध्यायः ॥ १३२ ॥

---

## त्रयस्त्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

अशोककलिका ह्यष्टौ ये पिबन्ति पुनर्व्वसौ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥ १
त्वामशोक हराभीष्ट मधुमाससमुद्भव।
पिबामि शोकसन्तप्तोमामशोकं सदा कुरु ॥ २

इति श्रीगारुडे महापुराणे पूर्व्व-
खण्डे अशोकाष्टमीव्रतकथनं
नाम त्रयस्त्रिंशदधिकशत-
तमोऽध्यायः ॥१३३॥

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

शुक्लाष्टम्यामाश्वयुजे उत्तराषाढ़या युता।
सा महानवमीत्युक्ता स्नानदानादि चाक्षयम् ॥ १
नवमी केवला चापि दुर्गाञ्चैव तु पूजयेत्।
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ॥ २
अयाचितादि षष्ठ्यादौ राजशत्रुजयाय च।
जप-होमसमायुक्तः कन्यां वा भोजयेत् सदा ॥ ३
दुर्गे दुर्गे रक्षिणि स्वाहा मन्त्रोऽयं पूजनादिषु।
दीर्घाकाराभिर्मात्राभिर्नव देव्यो नमोऽन्तिकाः ॥ ४
षड्भिः पदैर्नमः स्वाहा वषड़ादि हृदादिकम्।
अङ्गुष्ठादि-कनिष्ठान्तं विन्यस्य पूजयेच्छिवाम् ॥ ५
अष्टम्यां नव गेहानि दारुजान्येकमेव वा।
तस्मिन् देवी प्रकर्त्तव्या हैमा वा राजतापि वा ॥ ६
शूले खड्गे पुस्तके वा पटे वा मण्डले यजेत्।
कपालं खेटकं घण्टां दर्पणं तर्जनीं धनुः ॥ ७
ध्वजं डमरुकं पाशं वामहस्तेषु बिभ्रती।
शक्तिञ्च मुद्गरं शूलं वज्रं खड्गं तथाङ्कुशम् ॥ ८
शरं चक्रं शलाकाञ्च दुर्गमायुधसंयुताम्।
शेषाः षोड़शहस्ताः स्युरञ्जनं डमरुं विना ॥ ९
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका।
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥ १०
नवमी चोग्रचण्डा च मध्यस्थाग्निप्रभाकृतिः।
रोचना अरुणा कृष्णा नीला धूम्रा च शुक्लका।
पीता च पाण्डरा प्रोक्ता आलीढ़ेन हरिस्थिताः ॥ ११
महिषोत्थसखड्गाग्र-प्रकचग्रहमुष्टिका।
जप्त्वा दशाक्षरीं विद्यां त्रिशूलञ्च ततो यजेत् ॥ १२
लिङ्गस्थां पूजयेद्वापि पादुकेऽथ जलेऽपि वा।
विचित्रां रचयेत् पूजामष्टम्यामुपवासयेत् ॥ १३
पश्चाव्दं महिषं शस्तं रात्रिशेषञ्च घातयेत्।
विधिवत् कालि कालीति तद्रुत्थरुधिरादिकम् ॥ १४
नैरृत्यां पूतनायैव वायव्यां पापराक्षसीम्।
चण्डिकायै तथैशान्यामाग्नेय्याञ्च विदारिकाम् ॥ १५

इति श्रीगारुड़ पूर्व्वखण्डे महानवमीव्रतं नाम
चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## पञ्चत्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

महाकौशिमन्त्रश्च कथ्यतेऽव महाफलः ॥ १

महाकौशिकमन्त्रः—ओं महाकौशिकाय नमः। ओं हूं हूं प्रस्फुर लल लल कुल्व कुल्व चुल्व चुल्व खल्व खल्व मुल्व मुल्व गुल्व गुल्व तुल्व तुल्व पुल्व पुल्व धुल्व धुल्व धुम धुम धम धम मारय मारय धक धक वश्रापय वश्रापय विदारय कम्प कम्प कम्पय कम्पय पूरय पूरय आविशय आविशय ओं ह्रीं ओं ह्रीं हं वं वं हूं तट तट मद मद ह्रीं ओं हूं नक्रताय नमः। निऋतये दातव्यं महाकौशिक-मन्त्रेण मन्त्रितं बलिमर्पयेत् ॥ २

तस्याग्रतो नृपः स्नायात् शत्रुं कृत्वा च पैष्टकम्।
खड्गेन घातयित्वा तु दद्यात् स्कन्द-विशाखयोः ॥३
माढ़णाश्चैव देवीनां पूजा कार्य्या तथा निशि।
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा।
वाराही चव माहेन्द्री चामुण्डा चण्डिका तथा ॥ ४
जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते॥५
चौदाद्यैः स्नापयेद्देवीं कन्यकाः प्रमदास्तथा।
द्विजादीनथ पाषण्डानन्नदानेन पूजयेत् ॥ ६
ध्वज-च्छत्र-पताकाद्यैरथयात्रासुवस्त्रकैः।
महानवम्यां पूजेयं जयराज्यादिदायिका ॥ ७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे महानवमी नाम पञ्चत्रिंशदधिक-शततमोऽध्यायः ॥ १३५ ॥

## षट्त्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

नवम्यामाश्विने शुक्ले एकभक्तेन पूजयेत्।
देवीं विप्रान् लक्षमेकं जपेद्वीजं व्रती (क) नरः ॥ १

इति श्रीगारुड़े पूर्व्वखण्डे वीरनवमी-व्रतं नाम षट्त्रिंशदधिक-शततमोऽध्यायः ॥ १३६ ॥

(क) वीरव्रती इति वा पाठः।

## सप्तत्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

चैत्रे शुक्लनवम्याञ्च देवीं दमनकैर्यजेत्।
आयुरारोग्यसौभाग्यं शत्रुभिश्चापराजितः ॥ १

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे दम-नाख्यनवमीव्रतकथनं नाम सप्तत्रिंशद-धिकशततमोऽध्यायः ॥ १३७ ॥

## अष्टत्रिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

दशम्यामेकभक्ताशी समान्ते दशधेनुदः।
दिशश्च काञ्चनीर्दत्त्वा ब्रह्माण्डाधिपतिर्भवेत् ॥ १

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे दिग्द-शमीव्रतकथनं नामाष्टत्रिंशधिक-शततमोऽध्यायः ॥ १३८ ॥

## एकोनचत्वारिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

एकादश्यामृषिपूजा कार्य्या सर्व्वोपकारिका।
धनवान् पुत्रवान् दान्त ऋषिलोके महीयते ॥ १
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
प्रचेताश्च वशिष्ठश्च भृगुर्नारद एव च ॥ २
चैत्रादौ कारयेत् पूजां माल्यैश्च दमनोद्भवैः।
अशोकाख्याष्टमी प्रोक्ता वीराख्या नवमी तथा।
दमनाख्या दिग्दशमी नवम्येकादशी तथा ॥ ३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डेऽष्टम्यादि-व्रतकथनं नामैकोनचत्वारिंशदधिक-शततमोऽध्यायः ॥ १३९ ॥

## चत्वारिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

श्रवणद्वादशीं वक्ष्ये भुक्ति-मुक्तिप्रदायिनीम्।
एकादशी द्वादशी च श्रवणेन च संयुता।

विजया सा तिथिः प्रोक्ता हरिपूजादि चाक्षयम् ॥ १
एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन (क) नैवाद्वादशिको भवेत् ॥ २
कांस्यं मांसं तथा क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च व्यवायञ्च दिवास्वप्नमथाञ्जनम् ।
शिलापिष्टं मसूरञ्च द्वादश्यां वर्ज्जयेन्नरः ॥ ३
मासि भाद्रपदे शुक्लद्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ।
सङ्गमे सरितां स्नाने बुधयुक्ता महाफला ॥ ४
कुम्भे सरत्ने सजले यजेत् स्वर्णं तु वामनम् ।
सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् ॥ ५
ओं नमो वासुदेवाय शिरः सम्पूजयेत् ततः ।
श्रीधराय मुखं तद्वत् कण्ठं कृष्णाय वै नमः ॥ ६
नमः श्रीपतये वक्षो भुजौ सर्व्वास्त्रधारिणे ।
व्यापकाय नमः कुक्षौ केशवायोदरं बुधः ॥ ७
त्रैलोक्यपतये मेढ्रं जङ्घे सर्व्वपते नमः ।
सर्व्वात्मने नमः पादौ नैवेद्यं घृतपायसम् ॥ ८
कुम्भांश्च मोदकान् दद्याज्जागरं कारयेन्निशि ।
स्नात्वा प्रीतोऽर्च्चयित्वा तु कृतपुष्पाञ्जलिर्वदेत् ॥ ९
नमो नमस्ते गोविन्द बुध श्रवणसंज्ञक ।
अघौघसंक्षयं कृत्वा सर्व्वसौख्यप्रदो भव ॥ १०
प्रीयतां देवदेवेशो विप्रेभ्यः कलसान् ददेत् ।
नद्यास्तीरेऽथवा कुर्य्यात् सर्व्वान् कामानवाप्नुयात् ॥ ११

इति श्रीगारुड़े पूर्व्वखण्डे श्रवणद्वादशीव्रतं नाम चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

## एकचत्वारिंशदधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

कामदेवस्त्रयोदश्यां पूज्यो दमनकादिभिः ।
रतिप्रीतिसमायुक्तो ह्यशोको मानभूषितः ॥ १
इति मदनत्रयोदशीव्रतम् ॥
चतुर्द्दश्यां तथाष्टम्यां पक्षयोः शुक्ल-कृष्णयोः ।
योऽब्दमेकं न भुञ्जीत भुक्तिभाक् शिवपूजनात् ॥ २
इति चतुर्द्दश्यष्टमीव्रतम् ॥
त्रिरात्रोपोषितो दद्यात् कार्त्तिक्यां भवनं शुभम् ।
सूर्य्यलोकमवाप्नोति धामव्रतमिदं शुभम् ॥ ३
अमावस्यां पितॄणाञ्च दत्तं जलादि चाक्षयम् ।
नक्ताश्याशी वारनाम्ना यजन् वारिणि सर्व्वभाक् ॥ ४
इति वारव्रतानि ॥
द्वादशर्क्षाणि विप्रर्षे प्रतिमासन्तु यानि वै ।
तन्नाम्ना चाच्युतं तेषु सम्यक् सम्पूजयेन्नरः ॥ ५
केशवं मार्गशीर्षे तु इत्यादौ कृत्तिकादिके ।
घृतहोमं चतुर्म्मासं कृशरञ्च निवेदयेत् ॥ ६
आषाढ़ादौ पायसन्तु विप्रांस्तेनैव भोजयेत् ।
पञ्चगव्यजले स्नानं नैवेद्यैर्नक्तमाचरेत् ॥ ७
अर्व्वाग्विसर्ज्जनाद्द्रव्यं नैवेद्यं सर्व्वमुच्यते ।
विसर्ज्जिते जगन्नाथे निर्म्माल्यं भवति क्षणात् ॥ ८
पञ्चरात्रविदो मुख्या नैवेद्यं भुञ्जते स्वयम् ।
एवं संवत्सरस्यान्ते विशेषेण प्रपूजयेत् ॥ ९
नमो नमस्तेऽच्युत संक्षयोऽस्तु
पापस्य वृद्धिं समुपैति पुण्यम् ।
ऐश्वर्य्यवित्तादिसदाऽक्षयं मे
तथास्तु मे सन्ततिरक्षयैव ॥ १०
यथाच्युत त्वं परतः परस्मात्
स ब्रह्मभूतः परतः परस्मात् ।
तथाऽच्युतं मे कुरु वाञ्छितं त-
न्मया कृतं पापहताप्रमेय ॥ ११
अच्युतानन्द गोविन्द प्रसीद यदभीप्सितम् ।
तदक्षयममेयात्मन् कुरुष्व पुरुषोत्तम ॥ १२
कुर्य्याद्वै सप्त वर्षाणि आयुःश्रीसुकृतिं नरः ।
उपोष्यैकादशीमब्दमष्टमीञ्च चतुर्द्दशीम् ॥ १३
सप्तमीं पूजयेद्विष्णुं दुर्गां शम्भुं रविं क्रमात् ।
तेषां लोकं समाप्नोति सर्व्वकामांश्च निर्म्मलः ॥ १४
एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन शाकाद्यैः पूजयन् सर्व्वदेवताः ॥ १५
सर्व्वः सर्व्वासु तिथिषु भुक्तिमुक्तिमवाप्नुयात् ॥ १६
धनदोऽग्निः प्रतिपदि नासत्यौ दस्र अर्च्चितः ।
श्रीर्यमश्च द्वितीयायां पञ्चम्यां पार्व्वती श्रिया ॥ १७
नागाः षष्ठ्यां कार्त्तिकेयः सप्तम्यां भास्करोऽर्थदः ।
दुर्गाष्टम्यां मातरश्च नवम्यामथ तक्षकः ॥ १८

---

(क) भंक्षेयेति वा पाठः ।

दशम्यामिन्द्रो धनद एकादश्यां मुनीश्वराः।
द्वादश्याञ्च हरिः कामस्त्रयोदश्यां महेश्वरः।
चतुर्द्दश्यां पञ्चदश्यां ब्रह्मा च पितरोऽपरे ॥ १९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सर्व्व-
तिथिव्रतानि नामैकचत्वारिंशदधिक-
शततमोऽध्यायः ॥ १४१ ॥

---

## द्विचत्वारिंशदधिकशततमोऽध्यायः।

हरिरुवाच।

राज्ञां वंशान् प्रवक्ष्यामि वंशानुचरितानि च।
विष्णुनाभ्यब्जतो ब्रह्मा दक्षोऽङ्गुष्ठाच्च तस्य वै ॥ १
ततोऽदितिर्विवस्वांश्च ततो विवस्वतः सुतः।
मनुरिक्ष्वाकुः शर्य्यातिर्नृगो धृष्टः पृषध्रकः।
नरिष्यन्तश्च नाभागो दिष्टः करुष एव च ॥ २
मनोरासीदिला कन्या सुद्युम्नोऽस्य सुतोऽभवत्।
इलायान्तु बुधाज्जातो राजा रुद्र पुरूरवाः।
सुतास्त्रयश्च सुद्युम्नादुत्कलो विनतो गयः ॥ ३
अभूच्छूद्रो गोवधात् तु पृषध्रस्तु मनोः सुतः।
करुषात् क्षत्रिया जाता कारुषा इति विश्रुताः ॥४
दिष्टपुत्त्रस्तु नाभागो वैश्यतामगमत् स च।
तस्मात् भलन्दनः पुत्त्रो वत्सप्रीतिर्भलन्दनात् ॥ ५
ततः प्रांशुः खनित्रोऽभूत् भूपस्तस्मात् ततः क्षुपः।
क्षुपाद्विंशोऽभवत् पुत्त्रो विंशाज्जातो विविंशकः ॥ ६
विविंशाच्च खनीनेत्रो विभूतिस्तत्सुतः स्मृतः।
करन्धमो विभूतेस्तु ततो जातोऽप्यविक्षितः ॥ ७
मरुत्तोऽविक्षितस्यापि नरिष्यन्तस्ततः स्मृतः।
नरिष्यन्ताद्दमो जातस्ततोऽभूद्राजवर्द्धनः ॥ ८
राजवर्द्धात् सुधृतिश्च नरोऽभूत् सुधृतेः सुतः।
नराच्च केवलः पुत्त्रः केवलाद्धुन्धुमानपि ॥ ९
धुन्धुमतो वेगवांश्च बुधो वेगवतः सुतः।
तृणबिन्दुर्बुधाज्जातः कन्या चैलविला तथा ॥ १०
विशालं जनयामास तृणबिन्दोस्त्वलम्बुषा।
विशालाद्धेमचन्द्रोऽभूद्धेमचन्द्राच्च चन्द्रकः ॥ ११
धूम्राश्वश्चैव चन्द्रात् तु धूम्राश्वात् सृञ्जयस्तथा।
सृञ्जयात् सहदेवोऽभूत कृशाश्वस्तत्सुतोऽभवत् ॥१२

कृशाश्वात् सोमदत्तस्तु ततोऽभूज्जनमेजयः।
तत्पुत्त्रश्च सुमतिश्च एते वैशालका नृपाः ॥ १३
शर्य्यातेस्तु सुकन्याभूत् सा भार्य्या च्यवनस्य तु।
आनर्त्तो नाम शर्य्यातेरानर्त्ताद्रैवतोऽभवत् ॥ १४
रैवतो रेवतस्यापि रैवताद्रेवती सुता।
धृष्टस्य धार्ष्टकं क्षत्त्रं वैश्यकं तद्बभूव ह ॥ १५
नाभागपुत्त्रो नेदिष्ठो ह्यम्बरीषोऽपि तत्सुतः।
अम्बरीषाद्विरूपोऽभूत् पृषदश्वो विरूपतः ॥ १६
रथीतरश्च तत्पुत्त्रो वासुदेवपरायणः।
इक्ष्वाकोस्तु त्रयः पुत्त्रा विकुक्षि-निमि-दण्डकाः ॥
इक्ष्वाकुजो विकुक्षिस्तु शशादः शशभक्षणात्।
पुरञ्जयः शशादाच्च ककुत्स्थाख्योऽभवत् सुतः ॥
अनेनास्तु ककुत्स्थाच्च पृथुः पुत्त्रस्त्वनेनसः।
विश्वरातः पृथोः पुत्त्र आर्द्रोऽभूद्विश्वराततः ॥
युवनाश्वोऽभवच्चार्द्रात् श्रावस्तो युवनाश्वतः।
बृहदश्वस्तु श्रावस्तात् तत्पुत्त्रः कुवलाश्वकः ॥ २
धुन्धुमारो हि विख्यातो दृढ़ाश्वश्च ततोऽभवत्।
चन्द्राश्वः कपिलाश्वश्च हर्य्यश्वश्च दृढ़ाश्वतः ॥ २
हर्य्यश्वाच्च निकुम्भोऽभूद्धिताश्वश्च निकुम्भतः।
पूजाश्वश्च हिताश्वाच्च तत्सुतो युवनाश्वकः ॥ २
युवनाश्वाच्च मान्धाता बिन्दुमत्यस्ततोऽभवत्।
मुचुकुन्दोऽम्बरीषश्च पुरुकुत्सस्त्रयः सुताः।
पञ्चाशत् कन्यकाश्चैव भार्य्यास्ताः सौभरेर्मुनेः ॥
युवनाश्वोऽम्बरीषाच्च हरितो युवनाश्वतः।
पुरुकुत्सान्नर्म्मदायां त्रसदस्युरभूत् सुतः ॥ २४
अनरण्यस्ततो जातो हर्य्यश्वोऽप्यनरण्यतः।
तत्पुत्त्रोऽभूद्वसुमनास्त्रिधन्वा तस्य चात्मजः ॥ २५
त्रय्यारुणस्तस्य पुत्त्रस्तस्य सत्यव्रतः सुतः।
यस्त्रिशङ्कुः समाख्यातो हरिश्चन्द्रोऽभवत् ततः।
हरिश्चन्द्राद्रोहिताश्वो हरितो रोहिताश्वतः।
हरितस्य सुतश्चञ्चुश्चञ्चोश्च विजयः सुतः ॥ २७
विजयाद्रुरुको जज्ञे रुरुकात् तु वृकः सुतः।
वृकाद्बाहुन्नृपोऽभूच्च बाहोस्तु सगरः स्मृतः ॥
षष्टिपुत्त्रसहस्राणि सुमत्यां सगरोद्भवः।
केशिन्यामेक एवासावसमञ्जससंज्ञकः ॥ २८
तस्यांशुमान् सुतो विद्वान् दिलीपस्तत्सुतोऽभ

भगीरथो दिलीपाच्च यो गङ्गामानयद्भुवं ॥ ३०
श्रुतो भगीरथसुतो नाभागश्च श्रुतात् किल ।
नाभागादम्बरीषोऽभूत् सिन्धुद्वीपोऽम्बरीषतः ॥ ३१
सिन्धुद्वीपस्यायुतायुर्ऋतुपर्णस्तदात्मजः ।
ऋतुपर्णात् सर्व्वकामः सुदासोऽभूत् तदात्मजः ॥ ३२
सुदासस्य च सौदासो नाम्ना मित्रसहः स्मृतः ।
कल्माषपादसंज्ञश्च मदयन्त्यां तदात्मजः ॥ ३३
अश्मकाख्योऽभवत् पुत्रो ह्यश्मकान्मूलकोऽभवत् ।
ततो दशरथो राजा तस्य चैलविलः सुतः ॥ ३४
तस्य विश्वसहः पुत्रः खट्वाङ्गश्च तदात्मजः ।
खट्वाङ्गाद्दीर्घबाहुश्च दीर्घबाहोर्घजः सुतः ॥ ३५
तस्य पुत्रो दशरथश्चत्वारस्तत्सुताः स्मृताः ।
राम-लक्ष्मण-शत्रुघ्न-भरताश्च महाबलाः ॥ ३६
रामात् कुश-लवौ जातौ भरतात् तार्च-पुष्करौ ।
चित्राङ्गदश्चन्द्रकेतुर्लक्ष्मणात् सम्बभूवतुः ॥ ३७
सुबाहु-शूरसेनौ च शत्रुघ्नात् सम्बभूवतुः ।
कुशस्य चातिथिः पुत्रो निषधो ह्यतिथेः सुतः ॥ ३८
निषधस्य नलः पुत्रो नलस्य च नभाः स्मृतः ।
नभसः पुण्डरीकस्तु क्षेमधन्वा तदात्मजः ॥ ३९
देवानीकस्तस्य पुत्रो देवानीकादहीनकः ।
अहीनकाद्रुरुर्जज्ञे पारिपात्रो रुरोः सुतः ॥ ४०
पारिपात्राद्दलो जज्ञे दलपुत्रश्छलः स्मृतः ।
छलादुक्थस्तत उक्थाद्वज्रनाभस्ततो गणः ॥ ४१
उषिताख्यो गणाज्जज्ञे ततो विश्वसहोऽभवत् ।
हिरण्यनाभस्तत्पुत्रस्तत्पुत्रः पुष्यकः स्मृतः ॥ ४२
ध्रुवसन्धिरभूत् पुष्यात् ध्रुवसन्धेः सुदर्शनः ।
सुदर्शनादग्निवर्णः पद्मवर्णोऽग्निवर्णतः ॥ ४३
शीघ्रस्तु पद्मवर्णात् तु शीघ्रात् पुत्रो मरुस्त्वभूत् ।
मरोः प्रसुश्रुतः पुत्रस्तस्य चोदावसुः सुतः ॥ ४४
उदावसोर्नन्दिवर्द्धनोऽभूत् सुकेतुर्नन्दिवर्द्धनात् ।
सुकेतोर्देवरातोऽभूद्बृहदुक्थस्ततः सुतः ॥ ४५
बृहदुक्थान्महावीर्यः सुधृतिस्तस्य चात्मजः ।
सुधृतेर्धृष्टकेतुश्च हर्य्यश्वो धृष्टकेतुतः ॥ ४६
हर्य्यश्वात् तु मरुर्जातो मरोः प्रतीन्धकोऽभवत् ।
प्रतीन्धकात् कृतिरथो देवमीढस्तदात्मजः ॥ ४७
विबुधो देवमीढात् तु विबुधात् तु महाधृतिः ।
महाधृतेः कृतिरातो महारोमा तदात्मजः ॥ ४८
महारोम्णः स्वर्णरोमा ह्रस्वरोमा तदात्मजः ।
सीरध्वजो ह्रस्वरोम्णस्तस्य सीताऽभवत् सुता ॥ ४९
भ्राता कुशध्वजस्तस्य सीरध्वजात् तु भानुमान् ।
शतद्युम्नो भानुमतः शतद्युम्नाच्छुचिः स्मृतः ॥ ५०
ऊर्ज्जनामा शुचेः पुत्रः सनद्वाजस्तदात्मजः ।
सनद्वाजात् कुलिर्जातोऽनञ्जनस्तु कुलेः सुतः ॥ ५१
अनञ्जनाच्च कुलजित् तस्यापि चाधिनेमिकः ।
श्रुतायुस्तस्य पुत्रोऽभूत् सुपार्श्वश्च तदात्मजः ॥ ५२
सुपार्श्वात् सृञ्जयो जातः क्षेमारिः सृञ्जयात् स्मृतः ।
क्षेमारितस्त्वनेनाश्च तस्य रामरथः स्मृतः ॥ ५३
सत्यरथो रामरथात् तस्मादुपगुरुः स्मृतः ।
उपगुरोरुपगुप्तः स्वागतश्चोपगुप्ततः ॥ ५४
स्वनरः स्वागताज्जज्ञे सुवर्चास्तस्य चात्मजः ।
सुवर्चसः सुपार्श्वस्तु सुश्रुतश्च सुपार्श्वतः ॥ ५५
जयस्तु सुश्रुताज्जज्ञे जयात् तु विजयोऽभवत् ।
विजयस्य ऋतः पुत्र ऋतस्य सुनयः सुतः ॥ ५६
सुनयाद्वीतहव्यस्तु वीतहव्याद्धृतिः स्मृतः ।
बहुलाश्वो धृतेः पुत्रो बहुलाश्वात् कृतिः स्मृतः ॥ ५७
जनकस्य लयं वंश उक्तो योगसमाश्रयः ॥ ५८

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे सूर्य्य-
वंशवर्णनं नाम द्विचत्वारिंशदधिक-
शततमोऽध्यायः ॥ १४२ ॥

---

## त्रिचत्वारिंशदधिकशततमोऽध्यायः ।

हरिरुवाच ।

सूर्य्यस्य कथितो वंशः सोमवंशं शृणुष्व मे ।
नारायणसुतो ब्रह्मा ब्रह्मणोऽत्रेः समुद्भवः ॥ १
अत्रेः सोमस्तस्य भार्य्या तारा सुरगुरोः प्रिया ।
सोमात् तारा बुधं जज्ञे बुधपुत्रः पुरूरवाः ॥ २
बुधपुत्रादुर्वश्यां षट् पुत्रास्तु श्रुतात्मकाः ।
विश्वावसुः शतायुश्च आयुर्धीमानमावसुः ॥ ३
अमावसोर्भीमनामा भीमपुत्रश्च काञ्चनः ।
काञ्चनस्य सुहोत्रोऽभूज्जह्नुश्चाभूत् सुहोत्रतः ॥ ४
जह्नोः सुमन्तुरभवत् सुमन्तोरुपराजकः ।

बलाकाश्वस्तस्य पुत्त्रो बलाकाश्वात् कुशः स्मृतः ॥ ५
कुशाश्वः कुशनाभश्चामूर्त्तरयो वसुः कुशात् ।
गाधिः कुशाश्वात् संजज्ञे विश्वामित्त्रस्तदात्मजः ॥ ६
कन्या सत्यवती दत्ता ऋचीकाय द्विजाय सा ।
ऋचीकाज्जमदग्निश्च रामस्तस्याभवत् सुतः ॥ ७
विश्वामित्त्राद्देवरात-मधुच्छन्दादयः सुताः ।
आयुषो नहुषस्तस्मादनेना रजि-रम्भकौ ॥ ८
क्षत्त्रवृद्धः क्षत्त्रवृद्धात् सुहोत्रश्चाभवन्नृपः ।
काश्य-काश-गृत्समदाः सुहोत्रादभवंस्त्रयः ॥ ९
गृत्समदाच्छौनकोऽभूत् काश्याद्दीर्घतमास्तथा ।
वैद्यो धन्वन्तरिस्तस्मात् केतुमांश्च तदात्मजः ॥ १०
भीमरथः केतुमतो दिवोदासस्तदात्मजः ।
प्रतर्द्दनो दिवोदासाच्छत्रुजित् सोऽत्र विश्रुतः ॥ ११
ऋतध्वजस्तस्य पुत्त्रो ह्यलर्कश्च ऋतध्वजात् ।
अलर्कात् सन्नतिर्जज्ञे सुनीतः सन्नतेः सुतः ॥ १२
सत्यकेतुः सुनीतस्य सत्यकेतोर्विभुः सुतः ।
विभोस्तु सुविभुः पुत्त्रः सुविभोः सुकुमारकः ॥ १३
सुकुमाराद्धृष्टकेतुर्वीतिहोत्रस्तदात्मजः ।
वीतिहोत्रस्य भार्गोऽभूद्भार्गभूमिस्तदात्मजः ॥ १४
वैष्णवाः स्युर्महात्मान इत्येते काशयो नृपाः ।
पञ्च पुत्त्रशतान्यासन् रजेः शक्रेण संहृताः ॥ १५
प्रतिक्षत्त्रः क्षत्त्रवृद्धात् सञ्जयश्च तदात्मजः ।
विजयः सञ्जयस्यापि विजयस्य कृतः सुतः ॥ १६
कृताद्धर्षवर्द्धनश्च सहदेवस्तदात्मजः ।
सहदेवाददीनोऽभूज्जयत्सेनोऽप्यदीनतः ॥ १७
जयत्सेनात् सङ्कृतिश्च क्षत्त्रधर्म्मा च सङ्कृतेः ।
यतिर्ययातिरायातिर्वियतिः संयतिः कृतिः ॥ १८
नहुषस्य सुताः ख्याता ययातेर्नृपतेस्तथा ।
यदुश्च तुर्व्वसुश्चैव देवयानी व्यजायत ॥ १९
द्रुह्युश्चानुश्च पूरुश्च शर्म्मिष्ठा वार्षपार्व्वणी ।
सहस्रजित् क्रोष्टनलौ रघुश्चैव यदोः सुतः ॥ २०
सहस्रजितः शतजित् तस्माद्वै हय-हैहयौ ।
अनरण्यो हयात् पुत्त्रो धर्म्मो हैहयतोऽभवत् ॥ २१
धर्म्मस्य धर्म्मनेत्रोऽभूत् कुन्तिर्वै धर्म्मनेत्रतः ।
कुन्तेर्वभूव साहञ्जिर्महिष्मांश्च तदात्मजः ।
भद्रश्रेण्यस्तस्य पुत्त्रो भद्रश्रेण्यस्य दुर्द्दमः ॥ २२
धनको दुर्द्दमाच्चैव कृतवीर्य्यश्च धानकः ।
कृताग्निः कृतकर्म्मा च कृतौजाः सुमहाबलाः ॥ २३
कृतवीर्य्यादर्ज्जुनोऽभूदर्ज्जुनाच्छूरसेनकः ।
जयध्वजो मधुः शूरो वृषणः पञ्च सुव्रताः ॥ २४
जयध्वजात् तालजङ्घो भरतस्तालजङ्घतः ।
वृषणस्य मधुः पुत्त्रो मधोर्वृष्ण्यादिवंशकः ॥ २५
क्रोष्टोर्वृजिनवान् पुत्त्रः स्वाहिस्तस्य महात्मनः ।
स्वाहेरुषद्गुः संजज्ञे तस्य चित्ररथः सुतः ॥ २६
शशबिन्दुश्चित्ररथात् पत्न्या लक्षञ्च तस्य ह ।
दशलक्षञ्च पुत्त्राणां पृथुकीर्त्त्यादयो वराः ॥ २७
पृथुकीर्त्तिः पृथुजयः पृथुदानः पृथुश्रवाः ।
पृथुश्रवसोऽभूत् तम उशनास्तमसोऽभवत् ॥ २८
तत्पुत्त्रः शितगुर्नाम श्रीरुक्मकवचस्ततः ।
रुक्मेषुः (क) पृथुरुक्मश्च ज्यामघः पालितो हरिः ॥
श्रीरुक्मकवचस्यैते विदर्भो ज्यामघात् तथा ।
आर्य्यायाञ्चैव शैव्यायां विदर्भात् क्रथ-कौशिकौ ॥
रोमपादो रोमपादाद्बभ्रुर्बभ्रोर्धृतिस्तथा ।
कौशिकस्य ऋचिः पुत्त्रः ततश्चैद्यो नृपः किल ॥ ३
कुन्तिः किलास्य पुत्त्रोऽभूत् कुन्तेर्वृष्णिः सुतः स्मृतः
वृष्णेश्च निर्वृतिः पुत्त्रो दशार्हो निर्वृतेस्तथा ॥ ३२
दशार्हस्य सुतो व्योमा जीमूतश्च तदात्मजः ।
जीमूताद्विकृतिर्जज्ञे ततो भीमरथोऽभवत् ॥ ३३
ततो मधुरथो जज्ञे शकुनिस्तस्य चात्मजः ।
करम्भिः शकुनेः पुत्त्रस्तस्य देवमतः स्मृतः ॥ ३४
देवक्षत्त्रो देवमतो देवक्षत्त्रान्मधुः स्मृतः ।
कुरुवंशो मधोः पुत्त्रो ह्यनुश्च कुरुवंशतः ॥ ३५
पुरुहोत्रो ह्यनोः पुत्त्रो ह्यंशुश्च पुरुहोत्रतः ।
सत्वतश्च सुतश्चांशोस्ततो वै सात्वतो नृपः ॥ ३६
भोजिजो भजमानश्च सात्वतादन्धकः सुतः ।
महाभोजो वृष्टिदिव्यादन्यो देवावृधोऽभवत् ॥ ३
निमिवृष्णी भजमानादयुताजित् तथैव च ।
शतजिच्च सहस्राजिद्बभ्रुर्देवावृधादभूत् ॥ ३८
महाभोजात् तु भोजोऽभूद्वृष्णेश्चैव सुमित्रकः ।
युधाजित्संज्ञकस्तस्मादनमित्र-शिनी तथा ॥ ३९
अनमित्रस्य निघ्नोऽभून्निघ्नाच्छत्राजितोऽभवत् ।

(क) रुक्मश्चेति पाठान्तरम् ।

प्रसेनस्त्वपरः ख्यातो ह्यनमित्राच्छिनिस्तथा ॥ ४०
शिनेस्तु सत्यकः पुत्रः सत्यकात् सात्यकिस्तथा ।
सात्यकेः सञ्जयः पुत्रः कुणिश्चैव तदात्मजः ॥ ४१
कुणेर्युगन्धरः पुत्रास्ते शैनेयाः प्रकीर्त्तिताः ।
अनमित्रान्वये पृश्निः श्वफल्कश्चित्रकः सुतः ॥ ४२
श्वफल्काच्चैव गान्दिन्यामक्रूरो वैष्णवोऽभवत् ।
उपमद्गुस्तथाक्रूरान्मद्गुराद्यास्ततः स्मृताः ॥ ४३
देववानुपदेवश्च अक्रूरस्य सुतौ स्मृतौ ।
पृथुर्विपृथुश्चित्रस्य अन्धकस्य शुचिः सुतः ॥ ४४
कुकुरो भजमानस्तु तथा कम्बलबर्हिषः ।
धृष्टस्तु कुकुराज्जज्ञे तस्मात् कापोतरोमकः ॥ ४५
तदात्मजो विलोमा च विलोम्नस्तुम्बुरुः सुतः ।
तस्माच्च दुन्दुभिर्जज्ञे पुनर्वसुरतः स्मृतः ॥ ४६
तस्याहुकश्चाहुकी च कन्या चैवाहुकस्य तु ।
देवकश्चोग्रसेनश्च देवकात् देवकी ह्यभूत् ॥ ४७
वृकदेवोपदेवा च सहदेवा सुरक्षिता ।
श्रीदेवी शान्तिदेवी च वसुदेव उवाह ताः ॥ ४८
देवश्चानुपदेवश्च सहदेवासुतौ स्मृतौ ।
उग्रसेनस्य कंसोऽभूत् सुनामा च वटादयः ॥ ४९
विदूरथो भजमानाच्छूरश्चाभूद्विदूरथात् ।
विदूरथसुतस्याथ शूरस्यापि शमी सुतः ॥ ५०
प्रतिक्षत्रश्च शमिनः स्वयम्भोजस्तदात्मजः ।
हृदिकश्च स्वयम्भोजात् कृतवर्म्मा तदात्मजः ॥ ५१
देवः शतधनुश्चैव शूराद्वै देवमीढुषः ।
दश पुत्रा मारिषायां वसुदेवादयोऽभवन् ॥ ५२
पृथा च श्रुतदेवी च श्रुतकीर्त्तिः श्रुतश्रवाः ।
राजाधिदेवी शूराच्च पृथां कुन्तेः सुतामदात् ॥ ५३
सा दत्ता कुन्तिना पाण्डोस्तस्यां धर्म्मानिलेन्द्रकैः ।
युधिष्ठिरो भीम-पार्थौ नकुलः सहदेवकः ॥ ५४
माद्र्यां नासत्य-दस्राभ्यां कुन्त्यां कर्णः पुराभवत् ।
श्रुतदेव्यां दन्तवक्त्रो जज्ञे वै युद्धदुर्म्मदः ॥ ५५
सन्तर्द्दनादयः पञ्च श्रुतकीर्त्त्यांश्च केकयात् ।
राजाधिदेव्यां विन्दश्च अनुविन्दश्च जज्ञिरे ॥ ५६
श्रुतश्रवा दमघोषात् प्रजज्ञे शिशुपालकम् ।
पौरवी रोहिणी भार्य्या मदिरानकदुन्दुभेः ॥ ५७
देवकीप्रमुखा भद्रा रोहिण्यां बलभद्रकः ।
सारणाद्याः शठश्चैव रेवत्यां बलभद्रतः ॥ ५८
निशठश्चोल्मुकौ जातौ देवक्यां षट् च जज्ञिरे ।
कीर्त्तिमांश्च सुषेणश्च उदार्य्यो भद्रसेनकः ॥ ५९
ऋजुदासो भद्रदेवः कंस एवावधीच्च तान् ।
सङ्कर्षणः सप्तमोऽभूदष्टमः कृष्ण एव च ॥ ६०
षोड़श स्त्रीसहस्राणि भार्य्याणाञ्चाभवन् हरेः ।
रुक्मिणी सत्यभामा च लक्ष्मणा चारुहासिनी ॥ ६१
श्रेष्ठा जाम्बवती चाष्टौ जज्ञिरे ताः सुतान् बहून् ।
प्रद्युम्नश्चारुदेष्णश्च प्रधानाः साम्ब एव च ॥ ६२
प्रद्युम्नादनिरुद्धोऽभूत् ककुद्मिन्यां महाबलः ।
अनिरुद्धात् सुभद्रायां वज्रो नाम नृपोऽभवत् ॥ ६३
प्रतिबाहुर्वज्रसुतश्चारुस्तस्य सुतोऽभवत् ।
वह्निस्तु तुर्व्वसोर्वंशे वह्नेर्भार्गोऽभवत् सुतः ॥ ६४
भार्गाद्भानुरभूत् पुत्रो भानोः पुत्रः करन्धमः ।
करन्धमस्य मरुतो द्रुह्योर्वंशं निबोध मे ॥ ६५
द्रुह्योस्तु तनयः सेतुरारद्धश्च तदात्मजः ।
आरद्धस्यैव गान्धारो धर्म्मो गान्धारतोऽभवत् ॥ ६६
घृतस्तु धर्म्मपुत्रोऽभूद्दुर्गमश्च घृतस्य तु ।
प्रचेता दुर्गमस्यैव अनोर्वंशं शृणुष्व मे ॥ ६७
अनोः सभानरः पुत्रस्तस्मात् कालञ्जयोऽभवत् ।
कालञ्जयात् सृञ्जयोऽभूत् सृञ्जयात् तु पुरञ्जयः ॥ ६८
जनमेजयस्तु तत्पुत्रो महाशालस्तदात्मजः ।
महामना महाशालादुशीनर इह स्मृतः ॥ ६९
उशीनराच्छिबिर्जज्ञे वृषदर्भः शिबेः सुतः ।
महामनोजात् तितिक्षोः पुत्रोऽभूच्च रुषद्रथः ॥ ७०
हैमो रुषद्रथाज्जज्ञे सुतपा हैमतोऽभवत् ।
बलिः सुतपसो जज्ञे अङ्ग-वङ्ग-कलिङ्गकाः ॥ ७१
अन्ध्रः पौण्ड्रश्च बालेया अनपानस्तथाङ्गतः ।
अनपानाद्दिविरथस्ततो धर्म्मरथोऽभवत् ॥ ७२
रोमपादो धर्म्मरथाच्चतुरङ्गस्तदात्मजः ।
पृथुलाक्षस्तस्य पुत्रश्चम्पोऽभूत् पृथुलाक्षतः ॥ ७३
चम्पपुत्रश्च हर्य्यङ्गस्तस्य भद्ररथः सुतः ।
वृहत्कर्म्मा सुतस्तस्य वृहद्भानुस्ततोऽभवत् ॥ ७४
वृहन्मना वृहद्भानोस्तस्य पुत्रो जयद्रथः ।
जयद्रथस्य विजयो विजयस्य धृतिः सुतः ॥ ७५
धृतेर्धृतव्रतः पुत्रः सत्यधर्म्मा धृतव्रतात् ।

तस्य पुत्त्रस्त्वभिरथः कर्णस्तस्य सुतोऽभवत्।
वृषसेनस्तु कर्णस्य पुत्त्रवंशान् शृणुष्व मे ॥ ७६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे चन्द्रवंशवर्णने त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

---

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः।

हरिरुवाच।

जनमेजयः पुरोश्चाभूत् प्रचिन्वान् जनमेजयात्।
प्रचिन्वतः प्रवीरश्च मनस्युश्च प्रवीरतः ॥ १
तस्य पुत्त्रश्चाभयदः सम्युश्चाभयदादभूत्।
सम्योर्वहुगवः पुत्त्रः संजातिस्तस्य चात्मजः ॥ २
वत्सजातिश्च संज्ञाते रौद्राश्वश्च तदात्मजः।
ऋतेयुः स्थण्डिलेयुश्च कक्षेयुश्च कृतेयुकः ॥ ३
जलेयुः सन्ततेयुश्च रौद्राश्वस्य सुता वराः।
रतिनार ऋतेयोश्च तस्याप्रतिरथः सुतः ॥ ४
तस्य मेधातिथिः पुत्त्रस्तत्पुत्त्रश्चैनिलः स्मृतः।
ऐनिलस्य तु दुष्मन्तो भरतस्तस्य चात्मजः ॥ ५
शकुन्तलायां संजज्ञे वितथो भरतादभूत्।
वितथस्य मन्युः पुत्त्रो मन्योश्चैव नरः स्मृतः ॥ ६
नरस्य संकृतिः पुत्त्रो गर्गो हि संकृतेः सुतः।
गर्गादमन्युः पुत्त्रो वै शिनिः पुत्त्रो व्यजायत ॥ ७
मन्युपुत्त्रान्महावीर्य्यादुरुक्षयः सुतोऽभवत्।
उरुक्षयात् त्र्यारुणिर्वृहत्क्षत्राच्च मन्युजात् ॥ ८
सुहोत्रस्तस्य हस्ती च अजमीढ़-द्विमीढ़कौ।
हस्तिनः पुरुमीढ़श्च कण्वोऽभूदजमीढ़तः ॥ ९
कण्वान्मेधातिथिर्जज्ञे यतः काण्वायणा द्विजाः।
अजमीढ़ाद्वृहदिषुस्तत्पुत्त्रश्च वृहद्धनुः ॥ १०
वृहत्कर्म्मा तस्य पुत्त्रस्तस्य पुत्त्रो जयद्रथः।
जयद्रथाद्विश्वजिच्च सेनजिच्च तदात्मजः ॥ ११
रुचिराश्वः सेनजितः पृथुसेनस्तदात्मजः।
पारस्तु पृथुसेनस्य पारान्नीपोऽभवन्नृपः ॥ १२
नीपस्य समरः पुत्त्रः पारश्च समरात् ततः।
पारस्य तु पृथुः पुत्त्रः सुकृतिश्च पृथोः सुतः ॥ १३
विभ्राजः सुकृतेः पुत्त्रो विभ्राजादणुहोऽभवत्।
कृत्व्यां तस्माद्ब्रह्मदत्तो विष्वक्सेनस्तदात्मजः ॥ १४
यवीनरो द्विमीढ़स्य धृतिमांश्च यवीनरात्।
सत्यधृतिर्धृतिमतो दृढ़नेमिस्तदात्मजः ॥ १५
दृढ़नेमेः सुपार्श्वोऽभूत् सुपार्श्वात् सन्नतिस्तथा।
कृतस्तु सन्नतेः पुत्त्रः कृतादुग्रायुधोऽभवत् ॥ १६
उग्रायुधाच्च क्षेम्योऽभूत् सुधीरस्तु तदात्मजः।
पुरञ्जयः सुधीराच्च तस्य पुत्त्रो विदूरथः ॥ १७
अजमीढ़ान्नलिन्याञ्च नीलो नाम नृपोऽभवत्।
नीलाच्छान्तिरभूत् पुत्त्रः सुशान्तिस्तस्य चात्मजः।
सुशान्तेश्च पुरुर्जातो ह्यर्कस्तस्य सुतोऽभवत्।
अर्कस्य चैव हर्य्यश्वो हर्य्यश्वान्मुद्गलोऽभवत् ॥
यवीनरो वृहद्भानुः कम्पिल्लः सृञ्जयस्तथा।
पाञ्चालान्मुद्गलाज्जज्ञे वृहदश्वो वैष्णवो महान् ॥
दिवोदासो ह्यहल्या च अहल्यायां शरद्वतः।
शतानन्दोऽभवत् पुत्त्रस्तस्य सत्यधृतिः सुतः ॥
कृपः कृपी सत्यधृतेरुर्व्वश्यां वीर्य्यहानितः।
द्रोणपत्नी कृपी जज्ञे अश्वत्थामानमुत्तमम् ॥
दिवोदासान्मित्रयुश्च मित्रयोश्च्यवनोऽभवत्।
सुदासश्च्यवनाज्जज्ञे सौदासस्तस्य चात्मजः ॥
सहदेवस्तस्य पुत्त्रः सहदेवात् तु सोमकः।
जन्तुस्तु सोमकाज्जज्ञे पृषतश्चापरो महान् ॥
पृषताद्द्रुपदो जज्ञे धृष्टद्युम्नस्ततोऽभवत्।
धृष्टद्युम्नाद्धृष्टकेतुरृक्षोऽभूदजमीढ़तः ॥ २५
ऋक्षात् संवरणो जज्ञे कुरुः संवरणादभूत्।
सुधनुश्च परीक्षिच्च जह्नुश्चैव कुरोः सुताः ॥
सुधनुषः सुहोत्रोऽभूच्च्यवनोऽभूत् सुहोत्रतः।
च्यवनात् कृतको जज्ञे अथोपरिचरो वसुः ॥
वृहद्रथश्च प्रत्यग्रः सत्याद्याश्च वसोः सुताः।
वृहद्रथात् कुशाग्रश्च कुशाग्राद्वृषभोऽभवत् ॥
ऋषभात् पुष्पवांस्तस्माज्जज्ञे सत्यहितो नृपः।
सत्यहितात् सुधन्वाभूज्जह्नुश्चैव सुधन्वतः ॥
वृहद्रथाज्जरासन्धः सहदेवस्तदात्मजः।
सहदेवाच्च सोमापिः सोमापेः श्रुतवान् सुतः ॥
भीमसेनोग्रसेनौ च श्रुतसेनोऽपराजितः।
जनमेजयश्चान्योऽभूज्जह्नोस्तु सुरथोऽभवत् ॥
विदूरथस्तु सुरथात् सार्व्वभौमो विदूरथात्।

जयत्सेनः सार्व्वभौमाद्राराबी तस्य चात्मजः ॥ ३२
अयुतायुस्तस्य पुत्रस्तस्य चाक्रोधनः सुतः।
अक्रोधनस्यातिथिश्च ऋचोऽभूदतिथेः सुतः ॥ ३३
ऋचाच्च भीमसेनोऽभूद्दिलीपो भीमसेनतः।
प्रतीपोऽभूद्दिलीपाच्च देवापिस्तु प्रतीपतः ॥ ३४
शान्तनुश्चैव वाह्लीकस्त्रयस्ते भ्रातरो नृपाः।
वाह्लीकात् सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ ३५
शलश्च शान्तनोर्भीष्मो गङ्गायां धार्म्मिको महान्।
चित्राङ्गद-विचित्रौ तु सत्यवत्यान्तु शान्तनोः ॥ ३६
विचित्रवीर्य्यभार्य्ये तु अम्बिकाम्बालिके तयोः।
धृतराष्ट्रन्तु पाण्डुञ्च तद्दास्यां विदुरं तथा ॥ ३७
व्यास उत्पादयामास गान्धार्य्यां धृतराष्ट्रतः।
दुर्य्योधनाद्यञ्च शतं पाण्डोः पञ्च प्रजज्ञिरे ॥ ३८
प्रतिविन्ध्यः श्रुतसोमः श्रुतकीर्त्तिश्च चार्ज्जुनात्।
शतानीकः श्रुतकर्म्मा द्रौपद्यां पञ्च वै क्रमात् ॥ ३९
यौधेयी च हिड़िम्बा च कौशी चैव सुभद्रिका।
विजयी वै रेणुमती पञ्चभ्यस्तु सुताः क्रमात् ॥ ४०
देवको घटोत्कचश्च अभिमन्युश्च सर्व्वगः।
सुहोत्रो निरमित्रश्च परीक्षिदभिमन्युजः ॥ ४१
जनमेजयोऽस्य ततो भविष्यांश्च नृपान् शृणु ॥ ४२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे चन्द्र-
वंशवर्णनं नाम चतुश्चत्वारिंशदधिक-
शततमोऽध्यायः ॥ १४४ ॥

---

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः।

### हरिरुवाच।

शतानीको ह्यश्वमेध-दत्तश्चाप्यधिसीमकः।
कृष्णो निचक्रश्चाप्युष्णास्ततश्चित्ररथो नृपः ॥ १
शुचिरथो वृष्णिमांश्च सुषेणश्च सुनीथकः।
ऋचस्तस्याभवत् पुत्रो नृचक्षुश्च सुखावलः ॥ २
परिप्लवश्च सुनयो मेधावी च नृपञ्जयः।
मृदुस्तिग्मो बृहद्रथः शतानीकः सुदानकः ॥ ३
उदानोऽह्निनरश्चैव दण्डपाणिर्निमित्तकः।
क्षेमकश्च ततः शूद्रः पिता पूर्व्वस्ततः सुतः ॥ ४
बृहद्बलात् तु कथ्यन्ते नृपाश्चेक्ष्वाकुवंशजाः।
बृहद्बलादुरुक्षयो वत्सव्यूहस्ततः परः।
प्रतिव्योमस्ततः सूर्य्यः सहदेवस्ततः परः ॥ ५
बृहदश्वो भानुरथः प्रतीचश्च प्रतीतकः।
मनुदेवः सुनक्षत्रः किन्नरश्चान्तरीक्षकः ॥ ६
सुपर्णः शतजिच्चैव बृहद्राजश्च धार्म्मिकः।
कृतञ्जयो रणञ्जयः सञ्जयः शाक्य एव च ॥ ७
शुद्धोदनो बाहुलश्च सेनजित् क्षुद्रकस्तथा।
समित्रः कुतवश्चातः सुमित्रो मागधान् शृणु ॥ ८
जरासन्धः सहदेवः सोमापिश्च श्रुतश्रवाः।
अयुतायुर्निरमित्रः सुक्षत्रो बहुकर्म्मकः ॥ ९
श्रुतञ्जयः सेनजिच्च भूरिश्चैव शुचिस्तथा।
क्षेम्यश्च सुव्रतो धर्म्मः सुश्रमो दृढ़सेनकः ॥ १०
सुमतिः सुबलो नीतो सत्यजिद्विश्वजित् तथा।
इषुञ्जयश्च इत्येते नृपा वार्हद्रथा स्मृताः ॥ ११
अधर्म्मिष्ठाश्च शूद्राश्च भविष्यन्ति नृपास्ततः।
सर्गादिकृद्धि भगवान् साक्षान्नारायणोऽव्ययः ॥ १२
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको लयः।
याति भूः प्रलयञ्चाप्सु आपस्तेजसि पावकः ॥ १३
वायौ वायुश्च वियति आकाशं यात्यहङ्कृतौ।
अहं बुद्धौ मतिर्जीवे जीवोऽव्यक्ते तदात्मनि ॥ १४
आत्मा परेश्वरो विष्णुरेको नारायणो नरः।
अविनाशपरं सर्व्वं जगत् सर्गादिनाशि हि ॥ १५
नृपादयो गता नाशमतः पापं विवर्ज्जयेत्।
धर्म्मं कुर्य्यात् स्थिरं येन पापं हित्वा हरिं व्रजेत् ॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
राजवंशवर्णनं नाम पञ्चचत्वारिंश-
दधिकशततमोऽध्यायः ॥१४५॥

---

## षट्चत्वारिंशदधिकशततमोऽध्यायः।

### ब्रह्मोवाच।

वंशादीन् पालयामास अवतीर्णो हरिः प्रभुः।
दैत्यधर्म्मानुनाशार्थं वेदधर्म्मादिगुप्तये ॥ १
मत्स्यादिकस्वरूपेण अवतारं करोत्यजः।
मत्स्यो भूत्वा हयग्रीवं दैत्यं हत्वाजिवण्डकम् ॥ २
वेदानानीय मन्वादीन् पालयामास केशवः।

अन्तरं धारयामास कूर्म्मो भूत्वा हिताय च ॥ ३
क्षीरोदमथने वैद्यो देवो धन्वन्तरिर्ह्यभूत्।
बिभ्रत् कमण्डलुं पूर्णममृतेन समुत्थितः ॥ ४
आयुर्व्वेदमथाष्टाङ्गं सुश्रुताय स उक्तवान्।
अमृतं पाययामास स्त्रीरूपी च सुरान् हरिः ॥ ५
अवतीर्णो वराहोऽथ हिरण्याक्षं जघान ह।
पृथिवीं धारयामास पालयामास देवताः ॥ ६
नरसिंहोऽवतीर्णोऽथ हिरण्यकशिपुं रिपुम्।
दैत्यान् निहतवान् वेद-धर्म्मादीनभ्यपालयत् ॥ ७
ततः परशुरामोऽभूज्जमदग्नेर्जगत्प्रभुः।
त्रिःसप्तकृत्वः पृथिवीं चक्रे निःक्षत्रियां हरिः ॥ ८
कार्त्तवीर्य्यं जघानाजौ कश्यपाय महीं ददौ।
यागं कृत्वा महाबाहुर्महेन्द्रे पर्व्वते स्थितः ॥ ९
ततो रामोऽभवद्विष्णुश्चतुर्द्धा दुष्टमर्द्दनः।
पुत्त्रो दशरथाज्जज्ञे रामश्च भरतोऽनुजः।
लक्ष्मणश्चाथ शत्रुघ्नो रामभार्य्या च जानकी ॥ १०
रामश्च पितृसत्यार्थं मातृभ्यो हितमाचरन्।
शृङ्गवेरं चित्रकूटं दण्डकारण्यमागतः ॥ ११
नासां शूर्पणखायाश्च छित्त्वाथ खरदूषणम्।
हत्वा स राक्षसं सीतापहारिरजनीचरम् ॥ १२
रावणस्यानुजं तस्य लङ्कापुर्य्यां विभीषणम्।
रक्षोराज्येऽनुसंस्थाप्य सुग्रीवहनुमन्मुखैः ॥ १३
आरुह्य पुष्पकं सार्द्धं सीतया पतिभक्तया।
सुमहापतिव्रतया सोऽयोध्यां स्वपुरीं गतः ॥ १४
राज्यं चकार देवादीन् पालयामास स प्रजाः।
धर्म्मसंरक्षणं चक्रे अश्वमेधादिकान् क्रतून् ॥ १५
सुमहापतिव्रतया रेमे रामो यथासुखम्।
रावणस्य गृहे सीता स्थितापि न हि रावणम्॥१६
कर्म्मणा मनसा वाचा सा गता राघवं विना।
पतिव्रता तु सा सीता अनुसूया यथैव तु ॥ १७
पतिव्रतायाः सत्यास्तु माहात्म्यं कथयाम्यहम्।
कौशिको ब्राह्मणः कुष्ठी प्रतिष्ठानेऽभवत् पुरा ॥ १८
तं तथा व्याधितं भार्य्या पतिं देवमिवार्च्चयत्।
निर्भर्त्सितापि भर्त्तारं तमनन्यत दैवतम् ॥ १९
[अत्रोक्ता सानयद्वेश्यां शुल्कमादाय चाधिकम्।
पथि शूले तदा प्रोतमचौरं चौरशङ्कया ॥ २०
माण्डव्यमतिदुःखार्त्तमन्धकारेऽथ स द्विजः।
पत्नीस्कन्धसमारूढ़श्चालयामास कौशिकः ॥ २१
पादावमर्षणात् क्रुद्धो माण्डव्यस्तमुवाच ह।
सूर्य्योदये मृतिस्तस्य येनाहं चालितः पदा ॥ २२
तच्छ्रुत्वा प्राह तद्भार्य्या सूर्य्यो नोदयमेष्यति।
ततः सूर्य्योदयाभावादभवत् सततं निशा ॥ २३
बहून्यब्दप्रमाणानि ततो देवा भयं ययुः।
ब्रह्माणं शरणं जग्मुस्तानूचे पद्मसम्भवः ॥ २४
प्रशाम्यते तेजसैव तपस्तेजश्च तेन वै।
पतिव्रताया माहात्म्यान्नोद्गच्छति दिवाकरः।
तस्य चानुदयाद्धानिर्मर्त्त्यानां भवतां तथा।
तस्मात् पतिव्रतामत्रेरनुसूयां तपस्विनीम् ॥ २५
प्रसादयत वै पत्नीं भानोरुदयकाङ्क्षया।
तैः सा प्रसादिता गत्वा ह्यनुसूया पतिव्रता ॥ २६
कृत्वादित्योदयं सा च तं भर्त्तारमजीवयत्।
पतिव्रतानुसूयायाः सीताभूदधिका किल ॥ २७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सीता-माहात्म्यं नाम षट्चत्वारिंशदधिक-शततमोऽध्यायः ॥ १४६ ॥

## सप्तचत्वारिंशदधिकशततमोऽध्यायः।

ब्रह्मोवाच।

रामायणमतो वक्ष्ये श्रुतं पापविनाशनम्।
विष्णुनाभ्यब्जतो ब्रह्मा मरीचिस्तत्सुतोऽभवत्।
मरीचेः कश्यपस्तस्माद्रविस्तस्मान्मनुः स्मृतः।
मनोरिक्ष्वाकुरस्याभूद्वंशे राजा रघुः स्मृतः ॥ २
रघोरजस्ततो जातो राजा दशरथो बली।
तस्य पुत्त्रास्तु चत्वारो महाबलपराक्रमाः ॥ ३
कौशल्यायामभूद्रामो भरतः कैकयीसुतः।
सुतौ लक्ष्मण-शत्रुघ्नौ सुमित्रायां बभूवतुः ॥ ४
रामो भक्तः पितुर्मातुर्विश्वामित्रादवाप्तवान्।
अस्त्रग्रामं ततो यक्षीं ताड़कां प्रजघान ह ॥ ५
विश्वामित्रस्य यज्ञे वै सुबाहुं न्यवधीद्बली।
जनकस्य क्रतुं गत्वा उपयेमेऽथ जानकीम् ॥ ६
ऊर्म्मिलां लक्ष्मणो वीरो भरतो माण्डवीं सुता

शत्रुघ्नो वै कीर्त्तिमतीं (क) कुशध्वजसुते उभे ॥ ७
पित्रादिभिरयोध्यायां गत्वा रामादयः स्थिताः।
युधाजितं मातुलञ्च शत्रुघ्न-भरतौ गतौ ॥ ८
गतयोर्नृपवर्य्योऽसौ राज्यं दातुं समुद्यतः।
रामाय तत्सुपुत्राय कैकेय्या प्रार्थितं तदा।
चतुर्द्दश समा वासो वने रामस्य वाञ्छितः ॥ ९
रामः पितृहितार्थञ्च लक्ष्मणेन च सीतया।
राजञ्च तृणवत् त्यक्त्वा शृङ्गवेरपुरं गतः ॥ १०
रथं त्यक्त्वा प्रयागञ्च चित्रकूटगिरिं गतः।
रामस्य तु वियोगेन राजा स्वर्गं समाश्रितः ॥ ११
संस्कृत्य भरतश्चागाद्राममाह बलान्वितः।
अयोध्यान्तु समागत्य राज्यं कुरु महामते ॥ १२
स नैच्छत् पादुके दत्त्वा राज्याय भरताय तु।
विसर्ज्जितोऽथ भरतो रामराज्यमपालयत् ॥ १३
नन्दिग्रामे स्थितो भक्तो ह्ययोध्यां नाविशद्व्रती।
रामोऽपि चित्रकूटाच्च अत्रेराश्रममाययौ ॥ १४
नत्वा सुतीक्ष्णं चागस्त्यं दण्डकारण्यमागतः।
तत्र शूर्पणखा नाम राक्षसी चात्तुमागता ॥ १५
निकृत्य कर्णौ नासे च रामेणाथापराद्धिता।
तत्प्रेरितः खरश्चागाद्दूषणस्त्रिशिरास्तथा ॥ १६
चतुर्द्दशसहस्रेण रक्षसान्तु बलेन च।
रामोऽपि प्रेषयामास वाणैर्यमपुरञ्च तान् ॥ १७
राक्षस्या प्रेरितोऽथागाद्रावणो हरणाय हि।
मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक् ॥ १८
सीतया प्रेरितो रामो मारीचं निजघान ह।
म्रियमाणः स च प्राह हा सीते लक्ष्मणेति च ॥ १९
सीतोक्तो लक्ष्मणोऽथागाद्रामश्चानु ददर्श तम्।
उवाच राक्षसीमाया नूनं सीता हृतेति सा ॥ २०
रावणोऽन्तरमासाद्य अङ्केनादाय जानकीम्।
जटायुषं विनिर्ज्जित्य ययौ लङ्कां ततो बली ॥ २१
अशोकवृक्षच्छायायां रक्षितां तामधारयत्।
आगत्य रामः शून्याञ्च पर्णशालां ददर्श ह ॥ २२
शोकं कृत्वाथ जानक्या मार्गणं कृतवान् प्रभुः।
जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम् ॥ २३
गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः।
सप्त तालान् विनिर्भिद्य शरेणानतपर्व्वणा ॥ २४
वालिनञ्च विनिर्भिद्य किष्किन्ध्यायां हरीश्वरम्।
सुग्रीवं कृतवान् राम ऋष्यमूके स्वयं स्थितः ॥ २५
सुग्रीवः प्रेषयामास वानरान् पर्व्वतोपमान्।
सीताया मार्गणं कर्त्तुं पूर्व्वाद्यैः सुमहाबलान् ॥ २६
प्रतीचीमुत्तरां प्राचीं दिशं गत्वा समागताः।
दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम् ॥ २७
वनानि पर्व्वतान् द्वीपान् नदीनां पुलिनानि च।
जानकीं ते ह्यपश्यन्तो मरणे कृतनिश्चयाः ॥ २८
सम्पातिवचनाज्ज्ञात्वा हनूमान् कपिकुञ्जरः।
शतयोजनविस्तीर्णं पुप्लुवे मकरालयम् ॥ २९
अपश्यज्जानकीं तत्र अशोकवनिकास्थिताम्।
भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा ॥ ३०
भव भार्य्येति वदता चिन्तयन्तीञ्च राघवम्।
अङ्गुरीयं कपिर्दत्त्वा सीतां कौशल्यमब्रवीत् ॥ ३१
रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि।
स्वाभिज्ञानञ्च मे देहि येन रामः स्मरिष्यति ॥ ३२
तच्छ्रुत्वा प्रददौ सीता वेणीरत्नं हनूमते।
यथा रामो नयेच्छीघ्रं तथा वाच्यं त्वया गते ॥ ३३
तथेत्युक्त्वा तु हनुमान् वनं दिव्यं बभञ्ज तत्।
हत्वाक्षं राक्षसांश्चान्यान् बन्धनं स्वयमागतः ॥ ३४
सर्व्वैरिन्द्रजितो वाणैर्दृष्ट्वा रावणमब्रवीत्।
रामदूतोऽस्मि हनुमान् देहि रामाय मैथिलीम् ॥ ३५
एतच्छ्रुत्वा प्रकुपितो दीपयामास पुच्छकम्।
कपिर्ज्ज्वलितलाङ्गलो लङ्कां देहे महाबलः ॥ ३६
दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः।
जग्ध्वा फलं मधुवने दृष्ट्वा सीतेत्यवेदयत् ॥ ॥ ३७
वेणीरत्नञ्च रामाय रामो लङ्कापुरीं ययौ।
ससुग्रीवः सहनुमान् साङ्गदाद्यः सलक्ष्मणः ॥ ३८
विभीषणोऽपि सम्प्राप्तः शरणं राघवं प्रति।
लङ्कैश्वर्य्येऽभ्यषिञ्चद्रामस्तं रावणानुजम् ॥ ३९
रामो नलेन सेतुञ्च कृत्वाब्धौ चोत्ततार तम्।
सुवेलावस्थितश्चैव पुरीं लङ्कां ददर्श ह ॥ ४०
अथ ते वानरा वीरा नीलाङ्गद-नलादयः।
धूम्र-धूम्राक्षवीरेन्द्रा जाम्बवत्प्रमुखास्तदा ॥ ४१
मैन्द-द्विविदमुख्यास्त पुरीं लङ्कां बभञ्जिरे।

(क) श्रुतकीर्त्तिमिति रामायणानुसारी पाठः।

राचसांश्च महाकायान् कालाञ्जनचयोपमान् ॥ ४२
रामः सलक्ष्मणो हत्वा सकपिः सर्व्वराचसान्।
विद्युज्जिह्वञ्च धूम्राचं देवान्तक-नरान्तकौ ॥ ४३
महोदर-महापार्श्वावतिकायं महाबलम्।
कुम्भं निकुम्भं मत्तञ्च मकराचं ह्यकम्पनम् ॥ ४४
प्रहस्तं वीरसम्मत्तं कुम्भकर्णं महाबलम् ॥ ४५
रावणिं लक्ष्मणश्छित्त्वा ह्यस्त्राद्यै राघवो बली।
निकृत्य बाहुचक्राणि रावणन्तु व्यपातयत् ॥ ४६
सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः।
सवानरः समायातो ह्ययोध्यां प्रवरां पुरीम् ॥ ४७
तत्र राज्यं चकाराथ पुत्त्रवत् पालयन् प्रजाः।
दशाश्वमेधानाहृत्य गयाशिरसि पातनम् ॥ ४८
पिण्डानां विधिवत् कृत्वा दत्त्वा दानानि राघवः।
पुत्त्रौ कुश-लवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत् ॥ ४९
एकादशसहस्राणि रामो राज्यमकारयत्।
शत्रुघ्नो लवणं हत्वा शैलूषं भरतः स्थितः ॥ ५०
अगस्त्यादीन् मुनीन् नत्वा श्रुत्वोत्पत्तिञ्च रचसाम्।
स्वर्गं गतो जनैः सार्द्धमयोध्यास्थैः कृतार्थकः ॥ ५१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे रामायणवर्णनं नाम सप्तचत्वारिंशद-धिकशततमोऽध्यायः ॥१४७॥

---

## अष्टचत्वारिंशदधिकशततमोऽध्यायः।

### ब्रह्मोवाच।

हरिवंशं प्रवक्ष्यामि कृष्णमाहात्म्यमुत्तमम्।
वसुदेवात् तु देवक्यां वासुदेवो बलोऽभवत् ॥ १
धर्म्मादिरचणार्थाय अधर्म्मादिविनष्टये।
कृष्णः पीत्वा स्तनौ गाढ़ं पूतनामनयत् चयम् ॥ २
शकटः परिवृत्तोऽथ भग्नौ च यमलार्ज्जुनौ।
दमितः कालियो नागो धेनुको विनिपातितः ॥ ३
धृतो गोवर्द्धनः शैल इन्द्रेण परिपूजितः।
भारावतरणं चक्रे प्रतिज्ञां कृतवान् हरिः ॥ ४
रचणायार्ज्जुनादेश्च अरिष्टादिर्निपातितः।
केशी विनिहतो दैत्यो गोपाद्याः परितोषिताः ॥५
चाणूरो मुष्टिको मल्लः कंसो मञ्चान्निपातितः।
रुक्मिणी-सत्यभामाद्याः अष्टौ पत्न्यो हरेः पराः।
षोड़श स्त्रीसहस्राणि अन्यान्यासन् महात्मनः।
तासां पुत्त्राश्च पौत्त्राद्याः शतशोऽथ सहस्रशः ॥ ६
रुक्मिण्याञ्चैव प्रद्युम्नो न्यवधीत् शम्बरञ्च यः।
तस्य पुत्त्रोऽनिरुद्धोऽभूदुषाबाणसुतापतिः ॥ ८
हरि-शङ्करयोयत्र महायुद्धं बभूव ह।
बाणबाहुसहस्रञ्च भिन्नं बाहुद्वयो ह्यभूत् ॥ ९
नरको निहतो येन पारिजातं जहार यः।
बलश्च शिशुपालश्च हतश्च द्विविदः कपिः ॥ १०
अनिरुद्धादभूद्वज्रः स च राजा गते हरौ।
सान्दीपनिं गुरुं चक्रे सपुत्त्रं यादवाधिपम्।
मथुरायाञ्चोग्रसेनं पालनञ्च दिवौकसाम् ॥ ११

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे हरि-वंशवर्णनं नाम अष्टचत्वारिंशदधिक-शततमोऽध्यायः ॥ १४८ ॥

---

## एकोनपञ्चाशदधिकशततमोऽध्यायः।

### ब्रह्मोवाच।

भारतं सम्प्रवक्ष्यामि भारावतरणं भुवः।
चक्रे कृष्णो युध्यमानः पाण्डवादिनिमित्ततः ॥ १
विष्णुनाभ्यब्जतो ब्रह्मा ब्रह्मपुत्त्रोऽत्रिरत्रितः।
सोमस्ततो बुधस्तस्मादुर्व्वश्याञ्च पुरूरवाः ॥ २
तस्यायुस्तत्र वंशेऽभूद्ययातिर्भरतः कुरुः।
शान्तनुस्तस्य वंशेऽभूद्गङ्गायां शान्तनोः सुतः।
भीष्मः सर्व्वगुणैर्युक्तो ब्रह्मवैवर्त्तपारगः ॥ ३
शान्तनोः सत्यवत्याञ्च द्वौ पुत्त्रौ सम्बभूवतुः।
चित्राङ्गदन्तु गन्धर्व्वः पुत्त्रं चित्राङ्गदोऽवधीत्।
अन्यो विचित्रवीर्य्योऽभूत् काशिराजसुतापतिः।
विचित्रवीर्य्ये स्वर्याते व्यासात् तत्चेत्रतोऽभवत्।
धृतराष्ट्रोऽम्बिकापुत्त्रः पाण्डुरम्बालिकासुतः ॥ ६
भुजिष्यायान्तु विदुरो गान्धार्य्यां धृतराष्ट्रतः।
दुर्य्योधनप्रधानास्तु शतसंख्या महाबलाः ॥ ७
पाण्डोः कुन्त्याञ्च माद्र्याञ्च पञ्च पुत्त्राः प्रजज्ञिरे।
युधिष्ठिरो भीमसेनो ह्यर्ज्जुनो नकुलस्तथा ॥ ८
सहदेवश्च पञ्चते महाबलपराक्रमाः।

## एकोनपञ्चाशदधिकशततमोऽध्यायः ।

कुरु पाण्डवयोर्वैरं दैवयोगाद्बभूव ह ॥ ९
दुर्य्योधनेनाधीरेण पाण्डवाः समुपद्रुताः ।
दग्धा जतुगृहे वीरास्ते मुक्ताः स्वधियामलाः ॥ १०
ततस्त एकचक्रायां ब्राह्मणस्य निवेशने ।
विप्रवेशा महात्मानो निहत्य वकराक्षसम् ॥ ११
ततः पाञ्चालविषये द्रौपद्यास्ते स्वयंवरम् ।
विज्ञाय वीर्य्यशुल्कान्तां पाण्डवा उपयेमिरे ॥ १२
द्रोणभीष्मानुमत्या तु धृतराष्ट्रः समानयत् ।
अर्द्धराज्यं ततः प्राप्ता इन्द्रप्रस्थे पुरोत्तमे ॥ १३
राजसूयं ततश्चक्रुः सभां कृत्वा यतव्रताः ॥ १४
अर्ज्जुनो द्वारवत्यान्तु सुभद्रां प्राप्तवान् प्रियाम् ।
वासुदेवस्य भगिनीं मित्रं देवकिनन्दनम् ॥ १५
नन्दिघोषं रथं दिव्यमग्नेर्धनुरनुत्तमम् ।
गाण्डीवं नाम तद्दिव्यं त्रिषु लोकेषु विश्रुतम् ।
अक्षयान् सायकांश्चैव तथाभेद्यञ्च दंशनम् ॥ १६
स तेन धनुषा वीरः पाण्डवो जातवेदसम् ।
कृष्णद्वितीयो बीभत्सुरतर्पयत वीर्य्यवान् ॥ १७
नृपान् दिग्विजये जित्वा रत्नान्यादाय वै ददौ ।
युधिष्ठिराय महते भ्रात्रे नीतिविदे मुदा ॥ १८
युधिष्ठिरोऽपि धर्म्मात्मा भ्रातृभिः परिवारितः ।
जितो दुर्य्योधनेनैव मायाद्यूतेन पापिना ।
कर्ण-दुःशासनमते स्थितेन शकुनेर्मते ॥ १९
अथ द्वादश वर्षाणि वने तेपुर्महत् तपः ।
सधौम्या द्रौपदीषष्ठा मुनिवृन्दाभिसंवृताः ॥ २०
ययुर्विराटनगरं गुप्तरूपेण संश्रिताः ।
वर्षमेकं महाप्रज्ञा गोग्रहादिमपालयन् ॥ २१
ततो ज्ञात्वा स्वकं राष्ट्रं प्रार्थयामासुराहृताः ।
पञ्च ग्रामानर्द्धराज्यं वीरा दुर्य्योधनं नृपम् ॥ २२
नाप्तवन्तः कुरुक्षेत्रे युद्धं चक्रुर्बलान्विताः ।
अक्षौहिणीभिर्दिव्याभिः सप्तभिः परिवारिताः ॥ २३
एकादशभिरुद्युक्ता युक्ता दुर्य्योधनादयः ।
आसीद्युद्धं स्वर्गमार्गं (क) देवासुररणोपमम् ॥ २४
भीष्मः सेनापतिरभूदादौ दौर्य्योधने बले ।
पाण्डवानां शिखण्डी च तयोर्युद्धं बभूव ह ।
शस्त्राशस्त्रि महाघोरं दशरात्रं शराशरि ॥ २५

शिखण्ड्यर्ज्जुनबाणैश्च भीष्मः शरशतैर्युतः ।
उत्तरायणमीक्ष्याथ ध्यात्वा देवं गदाधरम् ॥ २६
उक्त्वा धर्म्मान् बहुविधांस्तर्पयित्वा पितॄन् बहून् ।
आनन्दे तु पदे लीनो विमले मुक्तकिल्बिषे ॥ २७
ततो द्रोणो ययौ योद्धुं धृष्टद्युम्नेन वीर्य्यवान् ।
दिनानि पञ्च तद्युद्धमासीत् परमदारुणम् ॥ २८
यत्र ते पृथिवीपाला हताः पार्षतसागरे ।
शोकसागरमासाद्य द्रोणोऽपि स्वर्गमाप्तवान् ॥ २९
ततः कर्णो ययौ योद्धमर्ज्जुनेन महात्मना ।
दिनद्वयं महायुद्धं कृत्वा पार्थास्त्रसागरे ।
निमग्नः सूर्य्यलोकन्तु ततः प्राप स वीर्य्यवान् ॥ ३०
ततः शल्यो ययौ योद्धं धर्म्मराजेन धीमता ।
दिनार्द्धेन हतः शल्यो बाणैर्ज्वलनसन्निभैः ॥ ३१
दुर्य्योधनोऽथ वेगेन गदामादाय वीर्य्यवान् ।
अभ्यधावत वै भीमं कालान्तकयमोपमः ॥ ३२
अथ भीमेन वीरेण गदया विनिपातितः ।
अश्वत्थामा गतो द्रौणिः सुप्तसैन्यं ततो निशि ॥ ३३
जघान बाहुवीर्य्येण पितुर्वधमनुस्मरन् ।
धृष्टद्युम्नं जघानाथ द्रौपदेयांश्च वीर्य्यवान् ॥ ३४
द्रौपद्यां रोदमानायामश्वत्थाम्नः शिरोमणिम् ।
ऐषिकास्त्रेण तं जित्वा जग्राहार्ज्जुन उत्तमम् ॥ ३५
युधिष्ठिरं समाश्वास्य स्त्रीजनं शोकसङ्कुलम् ।
स्नात्वा सन्तर्प्य देवांश्च पितॄनथ पितामहान् ॥ ३६
आश्वासितोऽथ भीष्मेण राज्यञ्चैवाकरोन्महत् ।
विष्णुमीजेऽश्वमेधेन विधिवद्दक्षिणावता ॥ ३७
राज्ये परीक्षितं स्थाप्य यादवानां विनाशनम् ।
श्रुत्वा तु मौषले राजा जप्त्वा नामसहस्रकम् ।
विष्णोः स्वर्गं जगामाथ भीमाद्यैर्भ्रातृभिर्युतः ॥ ३८
वासुदेवः पुनर्बुद्धः स मोहाय सुरद्विषाम् ।
देवादीनां रक्षणाय अधर्म्महरणाय च ॥ ३९
कल्की विष्णुश्च भविता शम्भलग्रामके पुनः ।
अश्वारूढोऽखिलान्लोकांस्तदाभीतान्करिष्यति ४०
एवं स भगवान् व्यास-धर्म्मसंरक्षणाय च ।
दुष्टानाञ्च वधार्थाय अवतारं करिष्यति ।
यथा धन्वन्तरिविप्रो जातः क्षीरोदमन्थने ॥ ४१
देवादीनां जीवनाय आयुर्व्वेदमुवाच ह ।

(क) दुर्गमार्गमिति वा पाठः ।

विश्वामित्रसुतायैव सुश्रुताय महात्मने।
भारतांश्चावतारांश्च श्रुत्वा स्वर्गं व्रजेन्नरः॥ ४२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे भारत-
वर्णनं नामैकोनपञ्चाशदधिकशत-
तमोऽध्यायः॥ १४९॥

---

## पञ्चाशदधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच।

सर्व्वरोगनिदानञ्च वच्मे सुश्रुत तत्त्वतः।
आत्रेयाद्यैर्मुनिवरैर्यथापूर्व्वमुदीरितम्॥ १
रोगः पाप्मा ज्वरो व्याधिर्विकारो दुष्टमामयः।
यक्ष्मातङ्कगदाबाधाः शब्दाः पर्य्यायवाचिनः॥ २
निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा।
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्॥ ३
निमित्त-हेत्वायतन-प्रत्ययोत्थान-कारणैः।
निदानमाहुः पर्य्यायैः प्रागरूपं येन लक्ष्यते॥ ४
उत्पित्सुरामयो दोष-विशेषेणानधिष्ठितः।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां,तद्यथायथम्॥ ५
तदेव व्यक्ततां यातं रूपमित्यभिधीयते।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः॥ ६
हेतुव्याधिविपर्य्यस्त-विपर्य्यस्तार्थकारिणाम्।
औषधान्नविहाराणामुपयोगं सुखावहम्॥ ७
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः।
विपरीतोऽनुपशयो व्याध्यसात्म्येतिसंज्ञितः॥ ८
यथा दुष्टेन दोषेण यथा चानुविसर्पता।
निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः॥ ९
संख्या-विकल्प-प्राधान्य-बल-कालविशेषतः।
सा भिद्यते यथात्रैव वक्ष्यतेऽष्टौ ज्वरा इति॥ १०
दोषाणां समवेतानां विकल्पोऽंशांशकल्पना।
स्वातन्त्र्य-पारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत्॥ ११
हेत्वादिकात्स्न्यावयवैर्बलाबलविशेषणम्।
नक्तं दिनर्त्तुभुक्तांशैर्व्याधिकालो यथामलम्॥ १२
इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते।
सर्व्वेषामेव रोगाणां निदानं कुपिता मलाः॥ १३
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम्।
अहितस्त्रिविधो योगस्त्रयाणां प्रागुदाहृतः॥ १४
तिक्तोषणकषायाल्प-रूक्षाप्रमितभोजनैः।
धावनोदीरणनिद्रा-जागरात्युच्चभाषणैः॥ १५
क्रियाभियोग-भी-शोक-चिन्ता-व्यायाम-मैथुनैः।
ग्रीष्माहोरात्रभुक्तान्ते प्रकुप्यति समीरणः॥ १६
पित्तं कट्वम्लतीक्ष्णोष्ण-कटुक्रोधविदाहिभिः।
शरन्मध्याह्नरात्र्यर्द्ध-विदाहसमयेषु च॥ १७
स्वाद्वम्ललवणस्निग्ध-गुर्व्वभिष्यन्दिशीतलैः।
आस्यास्वप्नसुखाजीर्ण-दिवास्वप्नादिबृंहणैः॥ १८
प्रच्छर्दनाद्ययोगेन भुक्तमात्र-वसन्तयोः।
पूर्व्वाह्णे पूर्व्वरात्रे च श्लेष्मा वक्ष्यामि सङ्करान्॥ १९
मिश्रीभावात् समस्तानां सन्निपातस्तथा पुनः।
सङ्कीर्णाजीर्णविषम-विरुद्धाद्यशनादिभिः॥ २०
व्यापन्न-मद्यपानीय-शुष्कशाकाममूलकैः।
पिण्याकमृत्यवसर-पूतिशुष्ककृशामिषैः॥ २१
दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्त्ततः।
धातोर्दुष्टात् पुरो वातादिग्रहावेशविप्लवात्॥ २२
दुष्टामान्नैरतिश्लेष-ग्रहैर्जन्मर्क्षपीड़नात्।
मिथ्यायोगाच्च विविधात् पापानाञ्च निषेवणात्।
स्त्रीणां प्रसववैशम्यात् तथा मिथ्योपचारतः॥ २३
प्रतिरोगमिति क्रुद्धा रोगविध्यनुगामिनः।
रसायनं प्रपद्याशु दोषा देहे विकुर्व्वते॥ २४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सर्व्व-
रोगनिदानं नाम पञ्चाशदधिक
शततमोऽध्यायः॥ १५०॥

---

## एकपञ्चाशदधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच।

वक्ष्ये ज्वरनिदानं हि सर्व्वज्वरविबुद्धये।
ज्वरो रोगपतिः पाप्मा मृत्युराजोऽशनोऽन्तकः॥
क्रुद्धदक्षाध्वरध्वंसि-रुद्रनिश्वाससम्भवः (क)।
तत्सन्तापो मोहमयः सन्तापात्मापचारजः।
विविधैर्नामभिः क्रूरो नानायोनिषु वर्त्तते॥ २
पाकलो गजेष्वभितापो वाजिष्वलर्कः कुक्कुरेषु।

(क) रुद्राद्र्वनयनोद्भव इति बहुपुस्तकानुगतः पाठः।

हृन्मदो जलजेष्वप्सु नीलिका ज्योतिरोषधीषु ॥ ३
हृल्लासश्छर्द्दनं कासः स्तम्भः शैत्यं त्वगादिषु।
अङ्गेषु च समुद्भूताः पीडकाश्च कफोद्भवे ॥ ४
काले यथास्तं सर्व्वेषां प्रवृत्तिर्वृद्धिरेव वा।
निदानोक्तानुपशयो विपरीतो यथापि वा ॥ ५
अरुचिश्चाविपाकश्च स्तम्भमालस्यमेव च।
हृद्दाहश्च विपाकश्च तन्द्रा चालस्यमेव च।
वलिविमर्द्दावनया दोषाणामप्रवर्त्तनम् ॥ ६
लालाप्रसेको हृल्लासः क्षुन्नाशो रसदं सुखम्।
सस्तम्भगुरुत्वञ्च गात्राणां बहुमूत्रता।
न विजीर्णं न चाग्निश्च ज्वरस्यामस्य लक्षणम् ॥ ७
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम्।
दोषप्रवृत्तिरष्टाहान्निरामज्वरः लक्षणम्।
यथा स्वलिङ्गं संसर्गे ज्वरसंसर्गजोऽपि वा ॥ ८

शिरोऽर्त्ति-मूर्च्छा-वमि-देहदाह-
कण्ठास्यशोषा अपि पर्व्वभेदाः।
उन्निद्रता-सम्भ्रम-रोमहर्षा
जृम्भातिवाक्त्वं पवनात् सपित्तात् ॥ ९
तापहान्यरुचिपर्व्वशिरोरुक्-
श्वास-कास-मलरोध-विवर्णाः।
शीत-जाड्य-तिमिर-भ्रमि-तन्द्रा-
श्लेष्म-वातजनितज्वरलिङ्गम् ॥ १०
शीत-स्तम्भ-स्वेद-दाहाव्यवस्था
तृष्णा कासः श्लेष्म-पित्त-प्रवृत्तिः।
मोहस्तन्द्रा लिप्ततिक्तास्यता च
ज्ञेयं रूपं श्लेष्म-पित्तज्वरस्य ॥ ११

सर्व्वजैर्लक्षणैः सर्व्वैर्दाहोऽत्र च मुहुर्मुहुः।
तद्वच्छीतं तिमिरनिद्रा दिवा जागरणं निशि ॥१२
सदा वा नैव वा निद्रा महास्वेदो हि नैव वा।
गीत-नर्त्तन-हास्यादिः प्रकृतेहाप्रवर्त्तनम् ॥ १३
साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी।
अक्षिणी पिण्डिका-पार्श्वशिरःपर्व्वास्थिरुग्भ्रमः ॥१४
सस्वनौ सरुजौ कर्णौ महाशीतौ हि नैव वा।
परिदग्धा खरा जिह्वा गुरुस्रस्ताङ्गसन्धिता ॥ १५
ष्ठीवनं रक्तपित्तस्य लोठनं शिरसोऽतिलुट्।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥ १६
हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाल्पशोऽति वा।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापितः ॥ १७
दोषपाकश्चिरं तन्द्रा प्रततं कण्ठकूजनम्।
सन्निपातमभिन्यासं तं ब्रूयाच्च महौजसम् ॥ १८
वायुना कण्ठरुद्धेन पित्तमन्तः सुपीड़ितम्।
व्यवायित्वाच्च सौक्ष्म्याच्च वह्निमार्गं प्रपद्यते।
तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे ॥ १९
दोषे विवृद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षणः।
सान्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥२०
अन्यत्र सन्निपातोत्थं यत्र पित्तं पृथक् स्थितम्।
त्वचि कोष्ठे च वा दाहं विदधाति पुरोऽथ वा ॥२१
तद्वद्वात-कफौ शीतं दाहादिर्दुस्तरस्तयोः।
शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ॥ २२
पित्ते शान्तेऽथ वै मूर्च्छा मदस्तृष्णा च जायते।
दाहादौ पुनरन्तेषु तन्द्रालस्ये वमिः क्रमात् ॥२३
आगन्तुरभिघाताभि-षङ्गशापाभिचारतः।
चतुर्द्धा तु कृतः स्वेदो दाहाद्यैरभिघातजः ॥ २४
श्रमाच्च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन्।
सव्यथाशोकवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ २५
ग्रहाविशौषधि-विष-क्रोध-भी-शोक-कामजः।
अभिषङ्गग्रहोऽप्यस्मिन्नकस्माद्धास-रोदने ॥ २६
ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षयः।
विषान्मूर्च्छातिसारश्च श्यावता दाहकृद्भ्रमः ॥ २७
क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे।
कामाद्भ्रमोऽरुचिर्दाहो ह्रीर्निद्रा धी-धृतिक्षयः ॥२८
ग्रहादौ सन्निपातस्य रूपादौ मरुतस्तयोः।
कोपात् कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ ॥२९
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ।
तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥ ३०
पूर्व्वं चेतस्ततो देहस्ततो विस्फोटदिग्भ्रमैः।
सदाहमूर्च्छाग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः ॥ ३१
इति ज्वरोऽष्टधा दृष्टः समासाद्द्विविधस्तु सः।
शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्वहिराश्रयः ॥३२
प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः।
पूर्व्वं शरीरे शारीरे तापो मनसि मानसे ॥ ३३
पवनैर्योगवाहित्वाच्छीतं श्लेष्मयुते भवेत्।

दाहः पित्तयुते मिश्रं मिश्रेऽन्तःसंश्रये पुनः ॥ ३४
ज्वरेऽधिकविकाराः स्युरन्तःक्षोभो मलग्रहः ।
वहिरेव वहिर्वेगे तापोऽपि च सुसाधितः ॥ ३५
वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात् ॥ ३६
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितं ज्वरम् ।
कुर्य्याच्च पित्तं शरदि तस्य चानुबलः कफः ॥ ३७
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ३८
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।
सर्व्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ३९
ज्वरोपद्रवतीक्ष्णत्व-मन्दाग्निबद्धमूत्रताः ।
न प्रवृत्तिर्न विजीर्णा न क्षुत् सामज्वराकृतिः ॥ ४०
ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ४१
जीर्णतामविपर्य्यासात् सप्तरात्रञ्च लङ्घनम् ।
ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात् ॥ ४२
प्रायशः सन्निपातेन भूयसामुपदिश्यते ।
सन्ततः सततोऽन्येद्युस्तृतीयक-चतुर्थकौ ॥ ४३
धातु-मूत्र-शकृद्वाहि-स्रोतसां व्यापिनो मलाः ।
तापयन्तस्तनुं सर्व्वां तुल्यदूष्यादिवर्द्धिताः ॥ ४४
बलिनो गुरवस्तस्याविशेषेण रसाश्रिताः ।
सततं निष्प्रतिद्वन्द्वा ज्वरः कुर्य्युः सुदुःसहम् ॥ ४५
मलं ज्वरोष्णा धातून् वा स शीघ्रं क्षपयेत् ततः ।
सर्व्वाकारं रसादीनां शुद्धाशुद्धापि वा क्रमात् ॥ ४६
वात-पित्त-कफैः सप्त-दश-द्वादशवासरात् ।
प्रायोऽनुयाति मर्य्यादां मोक्षाय च वधाय च ॥ ४७
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ।
द्विगुणा सप्तमी या च नवम्येकादशी तथा ।
एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय च ॥ ४८
शुद्धाशुद्धा ज्वरः कालं दीर्घमप्यत्र वर्त्तते ।
कृशानां व्याधियुक्तानां मिथ्याहारादिसेविनाम् ॥ ४९
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वान्यतर ततो बलम् ।
सप्रत्यनीको विषमं यस्माद्वृद्धिक्षयान्वितः ।
सविक्षेपो ज्वरं कुर्य्याद्विषमक्षयवृद्धिभाक् ॥ ५०
दोषः प्रवर्त्तते तेषां स्वे काले ज्वरयन् बली ।
निवर्त्तते पुनश्चैव प्रत्यनीकबलाबलः ॥ ५१
क्षीणदोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ।
लीनत्वात् कार्श्य-वैवर्ण्य-जाड्यादीनादधाति सः ॥ ५२
आसन्नविवृतास्यत्वात्स्रोतसां रसवाहिनाम् ।
आशु सर्व्वस्य वपुषो व्याप्तिर्दोषो न जायते ॥ ५३
सन्ततः सततस्तेन विपरीतो विपर्य्ययात् ।
विषमो विषमारम्भः क्षपाकाले न सङ्गवान् ॥ ५४
दोषो रक्ताश्रयः प्रायः करोति सन्ततं ज्वरम् ।
अहोरात्रस्य सन्धिं स्यात् सकृदन्येद्युराश्रितः ॥ ५५
तस्मिन् मांसवहा नाड़ी मेदोनाड़ी तृतीयके ।
ग्राही पित्तानिलान्मूर्द्ध्नस्त्रिकस्य कफपित्ततः ॥ ५६
सपृष्ठस्यानिलकफात् स चैकाहान्तरः स्मृतः ।
चतुर्थको मलैर्मेदो-मज्जास्थ्यन्यतरे स्थितः ॥ ५७
मज्जास्थ एव चापरः प्रभावमनुदर्शयेत् ।
द्विधा कफोणि-जङ्घाभ्यां सपूर्व्वशिरसानिलात् ॥ ५८
अस्थि-मज्जोभयगते चतुर्थकविपर्य्ययः ।
त्रिधा त्र्यहं ज्वरयति दिनमेकन्तु मुञ्चति ॥ ५९
बलाबलेन दोषाणामन्नचेष्टादिजन्मनाम् ।
पक्वानामविनिर्य्यासात् सप्तरात्रञ्च लङ्घयेत् ॥ ६०
ज्वरः स्यान्मनसस्तद्वत् कर्म्मणश्च तदा तदा ।
गम्भीरधातुचारित्वात् सन्निपातेन सम्भवात् ।
तुल्योच्छ्रयाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः ॥ ६१
सूक्ष्मात् सूक्ष्मतरेष्वेषु दूराद्दूरतरेषु च ।
दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥ ६२
याति देहश्च नाशेषं सन्तापादीन् करोत्यतः ।
क्रमाद्धयनेन विच्छिन्नः सतापो लक्ष्यते ज्वरः ।
विषमो विषमारम्भः क्षपाकालानुसारवान् ॥ ६३
यथोत्तरं मन्दगतिर्मन्दशक्तिर्यथायथम् ।
कालेनाप्नोति सदृशान् स रसादींस्तथा तथा ॥ ६४
दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च ।
भूमौ स्थितं जलैः सिक्तं कालमेव प्रतीक्षते ।
अङ्कुराय यथा बीजं दोषबीजं भवेत् तथा ॥ ६५
वेगं कृत्वा विषं यद्वदाशये नीयते बलम् ।
कुप्यत्याप्तबलं भूयः काले दोषविषं तथा ॥ ६६
एवं ज्वराः प्रवर्त्तन्ते विषमाः सन्ततादयः ।
उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम् ।

अरोचको वमिः श्वासः सर्व्वस्मिन् रसगे ज्वरे ॥ ६७
रक्तनिष्ठीवनं तृष्णा रूक्षोष्णः पीड़कोद्गमः ।
दाह-राग-भ्रम-मद-प्रलापा रक्तसंश्रिते ॥ ६८
तृड्ग्लानिः सृष्टवर्च्चस्कमन्तर्द्दाहो भ्रमस्तमः ।
दौर्ब्बल्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते ॥ ६९
स्वेदोऽतितृष्णा वमनं दौर्गन्ध्यं वासहिष्णुता ।
प्रलापो ग्लानिररुचिरस्थिगे त्वस्थिभेदनम् ॥ ७०
दोषप्रवृत्तिरूर्द्ध्वाधः श्वासाङ्गक्षेपकूजनम् ।
अन्तर्द्दाहो बहिःशैत्यं श्वासो हिक्का हि मज्जगे॥७१
तमसो दर्शनं मर्म्म-च्छेदनं स्तब्धमेढ्रता ।
शुक्रप्रवृत्तिर्मृत्युस्तु जायते शुक्रसंश्रये ॥ ७२
उत्तरोत्तरदुःसाध्याः पञ्चान्ये तु विपर्य्यये ॥
प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च ।
मन्दज्वरः प्रलापस्तु सशीतः स्यात् प्रलेपकः ॥ ७३
नित्यं मन्दज्वरो रूक्षः शीतकृच्छ्रेण गच्छति ।
स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेदङ्गबलासकः ॥ ७४
हरिद्राभेदवर्णाभस्तत्तल्पं प्रमेहति ।
स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः ॥ ७५
कफ-वातौ समौ यत्र हीनपित्तस्य देहिनः ।
तीक्ष्णोऽथवा दिवा मन्दो जायते रात्रिजो ज्वरः ७६
दिवाकरार्पितबले व्यायामाच्च विशोषिते ।
शरीरे नियतं वाताज्ज्वरः स्यात् पौर्व्वरात्रिकः॥७७
आमाशये यदात्मस्थे श्लेष्मपित्ते ह्यधः स्थिते ।
तदर्द्धं शीतलं देहे अर्द्धञ्चोष्णं प्रजायते ॥ ७८
काये पित्तं यदा न्यस्तं श्लेष्मा चान्ते व्यवस्थितः ।
उष्णत्वं तेन देहस्य शीतत्वं कर-पादयोः ॥ ७९
रस-रक्ताश्रयः साध्यो मांस-मेदोगतश्च यः ।
अस्थि-मज्जागतः कृच्छ्रस्तैस्तैः स्वाङ्गैर्हतप्रभः ॥ ८०
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते ।
सदोषमुष्णञ्च सदा शकृन्मुञ्चति वेगवत् ॥ ८१
देहो लघुव्यपगतक्लम-मोह-तापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षयः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्द्ध्नि विगतज्वरलक्षणानि ॥ ८२
इति श्रीगारुड़े पूर्व्वखण्डे ज्वरनिदानं नामैक
पञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

## द्विपञ्चाशदधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

अथातो रक्तपित्तस्य निदानं प्रवदाम्यहम् ।
भृशोष्ण-तिक्त-कट्वम्ल-लवणादिविदाहिभिः ॥ १
कोद्रवोद्दालकैश्चान्यैस्तदुक्तैरतिसेवितैः ।
कुपितं पैत्तिकैः (क) पित्तं द्रवं रक्तञ्च मूर्च्छति ॥२
तैर्मिथस्तुल्यरूपत्वमागम्य व्याप्नुवंस्तनुम् ।
पित्तरक्तस्य विकृतेः संसर्गाद्दूषणादपि ॥ ३
गन्धवर्णानुवृत्तेषु रक्तेन व्यपदिश्यते ।
प्रभवत्यसृजस्तस्मात् (ख) प्लीहतो यकृतश्च तत् ॥४
शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ।
छर्द्दितच्छर्द्दिबैभत्स्यं कासः श्वासो भ्रमः क्लमः ॥ ५
लोहितो लोहितो मत्स्यगन्धास्यत्वञ्च विज्वरः ।
रक्त-हारिद्र-हरित-वर्णता नयनादिषु ॥ ६
नील-लोहित-पीतानां वर्णानामविवेचनम् ।
स्वप्ने उन्मादधर्म्मित्वं भवत्यस्मिन् भविष्यति ॥ ७
ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥ ८
ऊर्द्ध्वं साध्यं कफाद्यस्मात् तद्विरेचनसाधितम् ।
बह्वौषधस्य पित्तस्य विरेको हि वरौषधम् ॥ ९
अनुबन्धी कफो यत्र तत्र तस्यापि शुद्धिकृत् ।
कषायाः स्वादवो यस्य विशुद्धौ श्लेष्मलोहितः ॥१०
कटु तिक्त-कषाया वा ये निसर्गात् कफावहाः ।
अधो याप्यञ्च वायुस्थांस्तत् प्रच्छर्द्दनसाधकम् ॥ ११
अल्पौषधञ्च पित्तस्य वमनं नवमौषधम् ।
अनुबन्धिबलो यस्य शान्तपित्तनरस्य च ॥ १२
कषायाश्च हितास्तस्य मधुरा एव केवलम् ।
कफमारुतसंसृष्टमसाध्यमुपनामनम् ॥ १३
असह्यं प्रतिलोमत्वादसाध्यादौषधस्य च ।
न हि संशोधनं किञ्चिदस्य च प्रतिलोमिनः ॥ १४
शोधनं प्रतिलोमञ्च रक्तपित्तेऽभिसञ्जितम् ।
एवमेवोपशमनं संशोधनमिहेष्यते ॥ १५
संसृष्टेषु हि दोषेषु सर्व्वथा च्छर्द्दनं हितम् ।

(क) पित्तलैः * * * मूर्च्छयेदिति क्वचित् पाठः
(ख) असृजः स्थानादिति बहुषु पुस्तकेषु दृश्य ।

यत्र दोषोऽत्र गमनं शिवास्त्व इव लक्ष्यते ।
उपद्रवाश्च विकृतिं फलतस्तेषु साधितम् ॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे रक्त-
पित्तनिदानं नाम द्विपञ्चाशदधिक-
शततमोऽध्यायः ॥ १५२ ॥

---

## त्रिपञ्चाशदधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

आशुकारी यतः कासः स एवातः प्रचक्ष्यते ।
पञ्च कासाः स्मृता वात-पित्तश्लेष्मक्षतक्षयैः ॥ १
क्षयायोपेक्षिताः सर्व्वे बलिनश्चोत्तरोत्तरम् ।
तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ॥ २
शुष्ककर्णास्यकण्ठत्वं तत्राधोविहितोऽनिलः ।
ऊर्ध्व प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संरुजन् ॥ ३
शिरास्रोतांसि सम्पूर्य ततोऽङ्गान्यत्क्षिपन्ति च ।
क्षिपन्निवाक्षिणी क्लिष्ट-स्वरः पार्श्वे च पीड़यन् ॥४
प्रवर्त्तते सवक्त्रेण भिन्नकांस्योपमध्वनिः ।
हृत्पार्श्वोरुशिरःशूल-मोहक्षोभस्वरक्षयान् ॥ ५
करोति शुष्ककासञ्च महावेगरुजास्वनम् ।
सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान् मुक्ताल्पतां व्रजेत्॥६
पित्तात् पीताक्षिकता च तिक्तास्यत्वं ज्वरो भ्रमः ।
पित्तासृग्वमनं तृष्णा वैस्वर्य्यं धूमको मदः ॥ ७
प्रततं कासवेगी च ज्योतिषामिव दर्शनम् ।
कफादुरोऽल्परुङ्मूर्द्धहृदयं स्तिमितं गुरु ॥ ८
कण्ठे प्रलेपमदनं पीनसच्छर्द्दरोचकाः ।
रोमहर्षो घनस्निग्ध-श्लेष्मणाञ्च प्रवर्त्तनम् ॥ ९
युद्धाद्यैः साहसैस्तस्तैः सेवितैरयथाबलम् ।
उरस्यन्तःक्षतो वायुः पित्तेनानुगतो बली ॥ १०
कुपितः कुरुते कासं कफं तेन सशोणितम् ।
पीतं श्यावञ्च शुष्कञ्च ग्रथितं कुपितं बहु ॥ ११
ष्ठीवेत् कण्ठेन रुजता विभिन्नेनैव चोरसा ।
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥ १२
दुःखस्पर्शेन शूलेन भेदपीड़ा हि तापिना ।
पर्व्वभेद-ज्वर-श्वास-तृष्णा-वैस्वर्य्य-कम्पवान् ॥ १३
पारावत इवोत्कूजन् पार्श्वशूली ततोऽस्य च ।
कासाद्यैर्वमनं पक्ति-बल-वर्णाश्च हीयते ॥ १४
क्षीणस्य सासृङ्मूत्रत्वं श्वासपृष्ठकटिग्रहः ।
वायुप्रधानाः कुपिता धातवो राजयक्ष्मणः ॥ १५
कुर्व्वन्ति यक्ष्मायतने कासं ष्ठीवेत् कफं ततः ।
पूतिपूयोपमं पीतं मिश्रं हरितलोहितम् ॥ १६
सुप्यते तुद्यत इव हृदयं पचतीव च ।
अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ॥ १७
स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ।
ततोऽस्य क्षयरूपाणि सर्व्वाण्याविर्भवन्ति च ॥ १८
इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
याप्यो वा बलिनां तद्वत् क्षतजोऽपि नवौ तु तौ ।
सिध्येतामपि सामर्थ्यात् साध्यादौ च पृथक् क्रमः ।
मिश्रा याप्याश्च ये सर्व्वे जरसः स्थविरस्य च ॥ १९
कास-श्वास-क्षय-च्छर्द्दि-स्वरसादादयो गदाः ।
भवन्त्युपेक्षया यस्मात् तस्मात् तां त्वरया जयेत् ।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
कासनिदानं नाम त्रिपञ्चाशदधिक-
शततमोऽध्यायः ॥ १५३ ॥

---

## चतुःपञ्चाशदधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

अथातः श्वासरोगस्य निदानं प्रवदाम्यहम् ।
कासवृद्ध्या भवेच्छ्वासः पूर्व्वैर्वा दोषकोपनैः ॥ १
आमातिसार-वमथु-विष-पाण्डु-ज्वरैरपि ।
रजोधूमानिलैर्मर्म्म-घातादपि हिमाम्बुना ॥ २
क्षुद्रकस्तमकश्छिन्नो महानूर्द्धश्च पञ्चमः ।
कफोपरुद्धगमन-पवनो विष्वगास्थितः ॥ ३
प्राणोदकान्नवाहीनि दुष्टस्रोतांसि दूषयन् ।
उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ ४
प्राग्रूपं तस्य हृत्पार्श्व-शूलं प्राणविलोमता ।
आनाहः शङ्खभेदश्च तत्रायासोऽतिभोजनः ॥ ५
प्रेरितः प्रेरयन् क्षुद्रं स्वयं ससमलं मरुत् ।
प्रतिलोमं शिरा गच्छेदुदीर्य्य पवनः कफम् ॥ ६
परिगृह्य शिरोग्रीवमुरःपार्श्वे च पीड़यन् ।
कासं घुर्घरकं मोह-रुचिरं पीनसं भ्रमम् ॥ ७

करोति तीव्रवेगश्च श्वासं प्राणोपतापिनम् ।
प्रताम्येत् तस्य वेगेन ष्ठीवनान्ते क्षणं सुखी ॥ ८
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमर्हति ।
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्त्तिमान् ॥ ९
विशुष्कास्यो मुहुः श्वासः काङ्क्षत्युष्णं सवेपथुः ।
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते ॥ १०
स याप्यस्तमकः साध्यो नरस्य बलिनो भवेत् ।
ज्वरमूर्च्छावतः शीतैर्न शाम्येत् प्रथमस्तु सः ॥ ११
कासश्वसितवच्छीर्ण-मर्म्मच्छेदरुजार्द्दितः ।
सस्वेदमूर्च्छः सानाहो वस्तिदाहनिरोधवान् ॥ १२
अधोदृष्टिः प्लुताक्षस्तु स्विद्यद्रक्तैकलोचनः ।
शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः ॥ १३
महतामहता दीनो नादेन श्वसिति क्रथन् ।
उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥ १४
प्रनष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ।
अक्षं समाक्षिपन् बद्ध-मूत्रवर्च्चा विशीर्णवाक् ॥ १५
शुष्ककण्ठो मुहुश्चैव कर्णशङ्खशिरोऽतिरुक् ।
यो दीर्घमुच्छ्वसित्यूर्द्ध्वं न च प्रत्याहरत्यधः ॥ १६
श्लेष्मावृतमुखस्रोतः क्रुद्धगन्धवहार्द्दितः ।
ऊर्द्ध्वदृग्वीक्षते भ्रान्तमक्षिणी परितः क्षिपन् ॥ १७
मर्म्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक् ।
एते सिद्ध्येयुरव्यक्ता व्यक्ता प्राणहरा ध्रुवम् ॥ १८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे श्वास-
निदानं नाम चतुःपञ्चाशदधिक-
शततमोऽध्यायः ॥ १५४ ॥

---

## पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

हिक्कारोगनिदानञ्च वक्ष्ये सुश्रुत तच्छृणु ।
श्वासैकहेतु प्राग्रूपं संख्या प्रकृतिसंश्रया ॥ १
हिक्का भक्ष्योद्भवा क्षुद्रा यमला महतीति च ।
गम्भीरा च मरुत् तत्र त्वरया युक्तिसेवितैः ॥ २
रूक्ष-तीक्ष्ण-खराशान्तैरन्नपानैः प्रपीड़ितः ।
करोति हिक्कां मरुतो मन्दशब्दां क्षुधानुगाम् ।
शमं सन्ध्यान्नपानेन या प्रयाति च सान्नजा ॥ ३
आयासात् पवनः क्रुद्धः क्षुद्रां हिक्कां प्रवर्त्तयेत् ।
जत्रुमूलात् परिसृता मन्दवेगवती हि सा ॥ ४
वृद्धिमायासतो याति भुक्तमात्रे च मार्द्दवम् ।
चिरेण यमलैर्वेगैर्या हिक्का सम्प्रवर्त्तते ॥ ५
कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्द्दिशेत् ॥ ६
प्रलाप-च्छर्द्द्यतीसार-नेत्रविप्लुतजृम्भिता ।
यमला वेगिनी हिक्का परिणामवती च सा ॥ ७
ध्वस्तभ्रूशङ्खयुग्मस्य श्रुतिविप्लुतचक्षुषः ।
स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञाञ्च मुष्णती ॥ ८
तुदन्ती मार्गमाणस्य कुर्व्वतीमर्म्मघट्टनम् ।
पृष्ठतो नमनं शाथ्ये महाहिक्का प्रवर्त्तते ॥ ९
महामूला (क) महाशब्दा महावेगा महाबला ।
पक्वाशयाच्च नाभेर्वा पूर्व्ववत् सा प्रवर्त्तते ॥ १०
तद्रूपा सा महत् कुर्य्यात् जृम्भणाङ्गप्रसारणम् ।
गम्भीरेण निनादेन गम्भीरा तु सुसाधयेत् ॥ ११
आद्ये द्वे वर्जयेदन्ये सर्व्वलिङ्गाञ्च वेगिनीम् ।
सर्व्वस्य सञ्चितामस्य स्थविरस्य व्यवायिनः ॥ १२
व्याधिभिः क्षीणदेहस्य भक्तच्छेदकृशस्य च ।
सर्व्वेऽपि रोगा नाशाय न त्वेवं शीघ्रकारिणः ।
हिक्का-श्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥ १३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे हिक्का-
निदानं नाम पञ्चपञ्चाशदधिकशत-
तमोऽध्यायः ॥ १५५ ॥

---

## षट्पञ्चाशदधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

अथातो यक्ष्मरोगस्य निदानं प्रवदाम्यहम् ।
अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजयक्ष्मा क्षयः शोषो रोगराड़िति कथ्यते ॥ १
नक्षत्राणां द्विजानाञ्च राज्ञोऽभूद्यदयं पुरा ।
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ २
देहौषधक्षयस्तस्य कुरुते वत्सराच्च सः ।
रसादिशोषणाच्छोषो रोगराड़िति राजवान् ॥ ३
साहसं वेगसंरोधः शुक्रौजःस्नेहसंक्षयः ।

(क) महाशूलेति पाठान्तरम् ।

अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ ४
तत्रोदीर्णोऽनिलः पित्तं कफञ्चोदीर्य्य सर्व्वतः।
शरीरसन्धिमाविश्य ताः शिराः प्रतिपीड़यन् ॥ ५
मुखानि स्रोतसां रुद्ध्वा तथैवातिविसृज्य वा।
सध्यमूर्द्ध्वमधस्तीर्य्यग्व्यथां संजनयेद्गदः ॥ ६
रूपं भविष्यतस्तस्य प्रविश्यापो भृशं ज्वरः।
प्रसेको मुखमाधुर्य्य-मार्द्दवं वह्निदेहयोः ॥ ७
सौम्यमार्गान्नपानादौ शुचावशुचिवीक्षणः।
मक्षिकात्तृणकेशादि-पातः प्रायोऽन्नपानयोः ॥ ८
हृल्लासश्छर्द्दिररुचिरश्नतोऽपि बलक्षयः।
क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः।
पाण्डुर-वक्त्र-पादास्य-कुक्ष्यक्ष्णाश्चातिशुक्लता ॥ ९
बाह्वोः प्रतोदो जिह्वायाः काये बैभत्स्यदर्शनम्।
स्त्री-मद्य-मांसप्रियता घृणिता मूर्द्धगुण्ठनम् ॥ १०
नखकेशास्थिवृद्धिश्च स्वप्ने चाभिभवो भवेत्।
पतनं कृकलासाहि- कपि-श्वापद-पक्षिभिः ॥ ११
केशास्थि-तुष-भस्मादि-तरौ समधिरोहणम्।
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः।
ज्योतिर्गिरीणाञ्च तथा ज्वलताञ्च महीरुहाम् ॥ १२
पीनस-श्वास-कासञ्च स्वरमूर्द्धरुजोऽरुचिः।
ऊर्द्ध्वनिश्वाससंशोषावधश्छर्द्दिश्च कोष्ठगे ॥ १३
स्थिते पार्श्वे च रुग्बोधे सन्धिस्थे भवति ज्वरः।
रूपाण्येकादशैतानि जायन्ते राजयक्ष्मणः ॥ १४
तेषामुपद्रवान् विद्यात् कण्ठध्वंसकरो रुजः।
जृम्भाङ्गमर्द्द-निष्ठीव-वह्निमान्द्यास्यपूतिता ॥ १५
तत्र वाताच्छिरःपार्श्व-शूलनं साङ्गमर्द्दनम्।
कण्ठरोधः स्वरभ्रंशो पित्तात् पादांसपाणिषु ॥ १६
दाहोऽतिसारोऽसृक्छर्द्दि-मुखगन्धो ज्वरो मदः।
कफादरोचकश्छर्द्दि-कासावर्द्धाङ्गगौरवम् ॥ १७
प्रसेकः पीनसः श्वासः स्वरभेदोऽल्पवह्निता।
दोषैर्मन्दानलत्वेन शोथलेपकफोल्वणैः ॥ १८
स्रोतोमुखेषु रुद्धेषु धातुषु स्वल्पकेषु च।
विदाहो मनसः स्थाने भवन्त्यन्ये ह्युपद्रवाः।
कृत्वा छर्द्दिञ्च वङ्क्षणश्छिक्कोर्द्ध्वञ्च प्रधावति ॥ १९
पच्यते कोष्ठ एवान्नमम्लयुक्त रसैर्युतम्।
प्रायोऽस्य क्षयतापानां नवान्नञ्चानुपुष्टयेत् ॥ २०
रसो ह्यस्य न रक्ताय मांसाय कुरुते तु तत्।
उपस्तब्धः समकृता केवलं वर्त्तते क्षयी ॥ २१
लिङ्गेष्वल्पेष्वतिक्षीणं व्याधौ षट्कारणक्षयम्।
वर्ज्जयेत् साधयेदेव सर्व्वेष्वपि ततोऽन्यथा ॥ २२
दोषैर्व्यस्तैः समस्तैश्च क्षयात् सर्व्वस्य मेदसाम्।
स्वरभेदो भवेत् तस्य क्षामो रूक्षश्चलः स्वरः ॥
शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशमोऽनिलात्।
पित्तात् तालुगले दाहः शोष उक्तावसूयनम् ॥
लिम्पन्निव कफैः कण्ठं मुखं घुरघुरायते।
स्वयं विरुद्धैः सर्व्वैस्तु सर्व्वलिङ्गैः क्षयो भवेत् ॥
धूमायतीव चात्यर्थमुदेति श्लेष्मलक्षणम्।
कृच्छ्रसाध्याः क्षयाश्चात्र सर्व्वैरल्पञ्च वर्ज्जयेत् ॥

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे यक्ष्मनिदानं नाम षट्पञ्चाशदधिक-शततमोऽध्यायः ॥ १५६ ॥

---

## सप्तपञ्चाशदधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच।

अरोचकनिदानं ते वक्ष्येऽहं सुश्रुताधुना।
अरोचको भवेद्दोषैर्जिह्वा-हृदयसंश्रयैः ॥ १
सन्निपातेन मनसः सन्तापेन च पञ्चमः।
कषाय-तिक्त-मधुरं वातादिषु मुखं क्रमात् ॥
वीतसर्व्वरसं शोक-क्रोधादिषु यथा मनः।
छर्द्दिदोषैः पृथक् सर्व्वैर्दुष्टैरन्यैश्च पञ्चमी ॥ ३
उदाने विकृतान् दोषान् सर्व्वं सन्ध्यर्द्धमस्यति।
आशु-क्लेशोऽस्य लावण्य-प्रसेकारुचयोपमाः ॥
नाभिपृष्ठं रुजत्याशु पार्श्वे चाहारमुत्क्षिपेत्।
ततो विच्छिन्नमल्पाल्प-कषायं फेनिलं वमेत्।
शब्दोद्गारयुतः कृच्छ्रमनुकृच्छ्रेण वेगवत्।
कासास्यशोषकं वातात् स्वरपीड़ासमन्वितम्।
पित्तात् क्षारोदकनिभं धूम्रं हरितपीतकम्।
सासृगम्लं कटु तिक्तं तृष्णमूर्च्छादाहपाकवत् ॥
कफात् स्निग्धं घनं पीतं श्लेष्मतन्तुमवाचितम्।
मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ॥ ८
मुखश्वयथुमाधुर्य्य-तन्द्राहृल्लासकासवान्।

सर्वालिङ्गं मलः सर्वैर्विशेषोक्ताश्च सतां त्यजेत् ॥ ९
सर्वं तस्य च विद्दिष्टं दर्शन-श्रवणादिभिः ।
वातादिनैव प्रशमो क्रमिदुष्टान्नजानिति ।
मूलवेपथुहृल्लासैर्विशेषात् क्रमिजानुदेत् ॥ १०

इति श्रीगारुडे महापुराणे पूर्वखण्डेऽरोचक-
निदानं नाम सप्तपञ्चाशदधिक-
शततमोऽध्यायः ॥ १५७ ॥

---

## अष्टपञ्चाशदधिकशततमोऽध्यायः ।

### धन्वन्तरिरुवाच ।

हृद्रोगादिनिदानं ते वक्ष्येऽहं सुश्रुताधुना ।
क्रमिहृद्रोगलिङ्गैश्च स्मृताः पञ्च तु हृद्गताः ॥ १
वातेन शून्यतात्यर्थं भुज्यते रोदितीति च ।
भिद्यते शुष्यते स्तब्धं हृदयं शून्यता भ्रमः ॥ २
अकस्माद्दीनता शोको भयं शब्देऽसहिष्णुता ।
वेपथुर्वेपनामोह-श्वासरोधोऽल्पनिद्रता ॥ ३
पित्तात् तृष्णा श्रमो दाहो स्वेदोऽम्लकरुजः क्रमः ।
छर्दनञ्चाम्लपित्तस्य धूमकल्पितता ज्वरः ॥ ४
श्लेष्मणा हृदयं स्तब्धमनिमान्द्यास्यवैकृतम् ।
कासाश्विसादनिष्ठेव निद्रालस्यारुचिज्वराः ॥ ५
सर्वलिङ्गैस्त्रिभिर्दोषैः क्रिमिभिः श्यावनेत्रता ।
तमःप्रवेशो हृल्लासः शोषः कण्डूः कफस्रुतिः ॥ ६
हृदयं प्रततञ्चात्र क्रकचेनेव दीर्य्यते ।
चिकित्सेदामयं घोरं तच्छीघ्रं शीघ्रकारिणम् ॥ ७
वातात् पित्तात् कफात् तृष्णा सन्निपाताद्रसक्षयः ।
षष्ठी स्यादुपसर्गाच्च वातपित्ते च कारणम् ॥ ८
सर्वासु तत्प्रकोपो हि सस्यग्धातुप्रशोषणात् ।
सर्वदेहभ्रमोत्कम्प-ताप-हृद्दाह-मोहकृत् ॥ ९
जिह्वामूल-गल-क्लोम-तालु तोयवहाः शिराः ।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ॥१०
मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ।
कण्ठौष्ठतालुकार्कश्याज्जिह्वानिष्क्रमणं क्रमः ।
प्रलापश्चित्तविभ्रंश-तोहारात्तास्तथामयः ॥ ११
मारुतात् क्षामता दैन्यं शङ्खभेदः शिरोभ्रमः ।
गन्धाज्ञानास्यवैरस्य-श्रुतिनिद्राबलक्षयाः ॥ १२
शीताम्बुफेनवृद्धिश्च पित्तान्मूर्च्छास्यतिक्तता ॥ १३
रक्तेक्षणत्वं सततं शोषो दाहोऽतिधूमकः ।
कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम् ॥ १४
स्रोतश्च सकफस्तेन पङ्कवच्छोष्यते लपः ।
शूकैरिवाचितः कण्ठो निद्रा मधुरवक्त्रता ॥ १५
आध्मानः शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः ।
आलस्यमविपाकश्च यः स स्यात् सर्वलक्षणः ॥ १६
आमोद्भवाच्च रक्तस्य संरोधाद्वातपित्तता ।
उष्णाक्रान्तस्य सहसा शीतो भवति दुःसहः ॥ १७
तृष्णारुद्धो गतः कोष्ठं कुर्यात् तु पित्तजैव सा ।
या च पानातिपानोत्था तीक्ष्णाग्ने स्नेहपाकजा ॥१८
स्निग्ध-कट्वम्ल-लवण-भोजनेन कफोद्भवा ।
तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥ १९
शोष-मोह-ज्वराद्यन्य-दीर्घरोगोपसर्गतः ।
या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥ २०

इति श्रीगारुडे महापुराणे पूर्वखण्डे
तृष्णानिदानं नामाष्टपञ्चाशदधिक-
शततमोऽध्यायः ॥१५८॥

---

## एकोनषष्ट्यधिकशततमोऽध्यायः ।

### धन्वन्तरिरुवाच ।

वक्ष्ये मदात्ययादेश्च निदानं मुनिभाषितम् ।
तीक्ष्णाम्ल-रूक्ष-सूक्ष्मादि-व्यवायाशुकरं लघु ॥ १
विकाशि विषदं मद्ये मेदसोऽस्मादिपर्य्ययः ।
तीक्ष्णोदयाश्च दिद्धयुक्ताश्चित्तोपतापिनो गुणाः ॥२
जीवितान्ताः प्रजायन्ते विशेषोत्कर्षवर्त्तिनः ।
तीक्ष्णादिभिर्गुणैर्मद्यैर्बलवीर्य्यं विहन्यते ॥ ३
दशेन्द्रियाणि संक्षोभ्य चेतो नयति विक्रियाम् ।
आद्ये मदे द्वितीयेऽपि प्रमदायतने स्थितैः ॥ ४
दुर्विकल्पहतैर्मूढैः सुखमित्येवमुच्यते ।
मध्यमन्तु मतियस्य प्राप्य राजासनं मदः ॥ ५
निरङ्कुश इव व्यालो न किञ्चिदाचरेत् स च ।
इयं भूमिरवाच्यानां दौःशील्यस्येदमास्पदम् ॥ ६
एकोऽयं बहुमार्गाया दुर्गतेर्दर्शकः परम् ।
निश्चेष्टं सततं वाञ्छेत् तृतीयेऽत्र मदे स्थितः ॥ ७

मरणादपि पापात्मा गतः पापतरां दशाम् ।
धर्म्माधर्म्मं सुखं दुःखं मानामानं हिताहितम् ॥ ८
न वेत्ति शोकमोहार्त्तः शोकमोहादिसंयुतः ।
सम्मोह-भ्रम-मूर्च्छायां सापस्मारः पतत्यधः ।
नातिमाद्यन्ति बलिनः कृताहारा महाशनाः ॥ ९
वातात् पित्तात् कफादन्याद्वेद्रोगो मदात्ययः ।
सामान्यलक्षणं तेषां प्रमोहो हृदयव्यथा ॥ १०
विभेदः सन्ततं तृष्णाऽसौम्यं ग्लानिर्ज्वरोऽरुचिः ।
पुरोविबन्धस्तिमिरं कासः श्वासः प्रजागरः ॥ ११
स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ।
स्वप्ने भ्रमस्तु भवति न चोक्तञ्च स भाषते ॥ १२
पित्ताद्दाहज्वरः स्वेदो मोहो नित्यञ्च हृद्भ्रमः ।
श्लेष्मणश्छर्द्दिहृल्लासौ निद्रा चोदरगौरवम् ॥ १३
सर्व्वजे सर्व्वलिङ्गत्वं ज्ञात्वा मद्यं पिबेत् तु यः ।
सर्व्वञ्च रुचिरञ्चास्य मतिध्वंसकविक्रिये ॥ १४
भवेतां पायिनां काष्ठाद्रव्ये चोभे विशेषतः ।
मारुतात्श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता ॥ १५
शब्दासहत्वं तच्चित्त-विक्षेपोऽङ्गे हि वातरुक् ।
हृत्कण्ठरोग-सम्मोह-श्वास-तृष्णा-वमि-ज्वराः ॥ १६
निवर्त्तद्वयस्तु मद्येभ्यो जितात्मा बुद्धिपूर्व्वकम् ।
विकारैः क्लिश्यते जातु न स शारीरमानसैः ॥ १७
रजोमोहाहिताहार-परस्य स्युस्त्रयो गदाः ।
वसासृक्क्लेदनावाहि-स्रोतोरोधसमुद्भवाः ॥ १८
मदमूर्च्छोपसन्न्यासा यथोत्तरबलोद्भवाः ।
मदोऽत्र दोषैः सर्व्वैस्तु रक्तमद्यविषैरपि ॥ १९
रक्ताल्पलाद्यताभासस्खलच्छलनवेष्टितः ।
रूक्षश्यामारुणतनुर्मदे वातोद्भवे भवेत् ॥ २०
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ।
स्वप्नासम्बद्धवाक्यादिः कफाद्ध्यानपरो न सः ॥ २१
सर्व्वथा सन्निपातेन रक्तास्तब्धाङ्गदूषणाम् ।
पित्तलिङ्गन्तु मद्येन विकृतेह-स्वराङ्गता ॥ २२
विशेत् कम्पोऽतिनिद्रा, च सर्व्वेभ्योऽभ्यधिकः श्रमः ।
लक्षयेल्लक्षणोत्कर्षाद्ज्ञातादीन् लक्षणादिषु ॥ २३
अरुणं नीलकृष्णं वा खमापश्यन् विशेत् तमः ।
शीघ्रञ्च प्रतिबुध्येत हृत्पीड़ा वेपथुर्भ्रमः ॥ २४
कासः श्यावारुणा च्छाया मूर्च्छा च मारुतात्मिका ।
पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत् तमः ॥ २५
विबुध्येत च सस्वेदो दाहतृष्णोपपीड़ितः ।
भिन्नवत् पीतनीलाभो रक्त-पित्तारुणेक्षणः ॥ २६
कफेन मेघसङ्काशं पश्यत्याकाशमाविशेत् ।
तमश्चिराच्च बुध्येत हृल्लासः सुप्रसेकवान् ॥ २७
गुरुभिस्तिमितैरङ्गै राजधर्म्मानुबन्धवान् ।
सर्व्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ॥ २८
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ।
दोषेषु मदमूर्च्छायां कृतवेगेषु देहिनाम् ॥ २९
स्वयमेवोपशाम्यन्ति सन्न्यासेनौषधैर्विना ।
वाग्देहमनसां चेष्टामाक्षिप्यातिबलामनाः ॥ ३०
स सन्न्यासं निपतिताः प्राणघातेन संश्रयाः ।
भवन्ति तेन पुरुषाः काष्ठभूता मृतोपमाः । ३१
म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ।
अगाधे ग्राहबहुले सलिलौघ इवार्णवे ॥ ३२
सन्न्यासे विनिमज्जन्तं नरमाशु निवर्त्तयेत् ।
मदमातो दोषतोषं लभेयुरिति निश्चयः ॥ ३३
युक्त्या युक्तञ्च विमुक्तिहेतवे मद्यमयुक्तं नरकादिः
सामर्थ्यं प्रकृतिसहायमथ वयांसि कुरुते ।
प्रविविच्य तनुं रूपं पिबति ततः पिबत्यमृतम् ॥

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे मदात्ययादिनिदानं नामैकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

---

## षष्ट्यधिकशततमोऽध्यायः ।

### धन्वन्तरिरुवाच ।

अथार्शसां निदानञ्च व्याख्यास्यामि च सुश्रुत ।
अरिमात्रप्राणिनां मांसे कीलकाः प्रभवन्ति यत् ॥
अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधनात् ।
दोषस्त्वङ्मांसमज्जास्थि(क)सन्दूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्व्वन्त्यर्शांसि तान् जगुः ।
सहजन्मान्तरोत्थेन भेदो द्वेधा समासतः ॥ २
शुष्काग्रा वा विभेदाश्च गुदस्थानानुसंश्रयाः ।
अर्द्धपञ्चाङ्गुलिस्तस्मिंस्तिस्रोऽध्यर्द्धाङ्गुलिस्थिताः ॥

(क) मेदांसीति वा पाठः ।

रक्तप्रवाहिणी तासामन्त्यमध्या विसर्जिनी ।
बाह्या संवरणी तस्या गुदादौ वहिरङ्गुले ॥ ५
सार्द्धाङ्गुलप्रमाणेन रोमाण्यत्र ततः परम् ।
तत्र हेतुः सहोत्थानां बाह्ये जीवोपतप्तता ॥ ६
अर्शसां बीजदुष्टिस्तु मातापित्रोपचारतः ।
दैवाच्च तास्यां कोपो हि सान्निपातस्य चान्ततः ॥७
असाध्या एवमाख्याताः सर्व्वरोगाः कुलोद्भवाः ।
सहजानि विशेषेण रूक्षदुर्द्दर्शनानि तु ।
अन्तर्मुखाणि पाण्डूनि दारुणोपद्रवाणि च ॥ ८
षोढ़ार्शांसि पृथग्दोष-संसर्गनिचयास्रतः ।
शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ॥ ९
दोषप्रकोपहेतुस्तु प्रागुक्तास्तनसादिनि ।
अग्नौ मन्देऽतिनिचिते पुनश्चातिव्यवायतः ॥ १०
यानसंक्षोभ-विषम-कठिन-चुत्कटकासनात् ।
वस्ति-नेत्र-गलोष्ठोर्व्य-तलभेदादिघट्टनात् ॥ ११
भृशशीताम्बुसंस्पर्श-प्रततातिप्रवाहणात् ।
गतमूत्रशकृद्वेग-धारणात् तदुदीरणात् ॥ १२
ज्वरगुल्मातीसारसेव ग्रहणी सोऽप्युपद्रवः ।
कर्षणाद्विषमादेश्य चेष्टाभ्यो योषितां पुनः ॥ १३
आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीड़नात् ।
ईदृशैश्चापरैर्वायुरपानः कुपितो मलः ॥ १४
पायोर्वलीषु संवर्त्तिभांसभिः पर्व्वमूर्त्तिषु ।
जायन्तेऽर्शांसि तत्पूर्व्वं लक्षणं वह्निमन्दता ॥ १५
विष्टम्भः सास्थिसदनं पिण्डिकोद्वेष्टनौ भ्रमः ।
संदाहो नेत्रयोः शोथः शकृद्भेदोऽथ वा ग्रहः ॥ १६
मारुतः पुरतो मूढ़ः प्रायो नाभेरधश्चरन् ।
सरुक् परिव्यक्ताय कृच्छ्रातिगच्छति श्वसन् ॥ १७
अन्त्रे कूजनमाटोपः चारितोद्गारभूरिता ।
प्रभूतमूत्रमल्पविड्श्रद्धाधूम्रकोऽम्लकः ॥ १८
शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ।
इन्द्रियार्थेषु लौल्यञ्च क्रोधो दुःखोपचारतः ॥ १९
आशङ्का ग्रहणी शो[illegible]-पाण्डुगुल्मोदराणि च ।
एतान्येव विवर्द्धन्ते जातेष्वहतनामसु ॥ २०
निवर्त्तमानो मानो हि तैरधोमार्गरोधतः ।
क्षोभयेदनिलानन्यान् सर्व्वेन्द्रियशरीरगान् ॥ २१
तथा मूत्रशकृत्पित्त-कफस्थानानि शोषयन् ।
शल्लात्यग्निं ततः सर्व्वे भवन्ति प्रायशोऽर्शसः ॥ २२
कृशो भृशं कृशोत्साहो दीनः क्षामोऽथ निष्प्रभः ।
असारो विगतच्छायो जन्तुर्दग्ध इव द्रुमः ॥ २३
कृच्छ्रैरुपद्रवैर्ग्रस्तो यश्चोक्तैर्मर्मपीड़नैः ।
तथा कास-पिपासास्य-वैरस्य-श्वासपीनसैः ॥ २४
क्लमाङ्ग-भङ्गवमथु-क्षवथु-श्वयथु-ज्वरैः ।
क्लैव्य-बाधिर्य्यस्तैमित्य-शर्करापरिपीड़ितः ॥२५
क्षामो भिन्नस्वरो ध्यायन् मुहुः ष्ठीवन्नरोचकी ।
सर्व्व(क)मर्म्मास्थिहृन्नाभि-पायुवङ्क्षणमूलवान् ।
गुदेन स्रवता पित्तं पललोदकसन्निभम् ॥ २६
विशुष्कञ्चैव सुक्ताग्रं पक्वमाचान्तरान्तरम् ।
पित्तात् पीतं हरिद्राक्तं विच्छिन्नञ्चोपविश्यते ॥२७
गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विषदाःपुरुषाःखराः॥२८
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फटिताननाः ।
बिम्ब-खर्ज्जूर-कर्कन्धू-कार्पासफलसन्निभाः ॥ २९
केचित् कदम्बपुष्पाभाः केचित् सिद्धार्थकोपमाः ।
शिरःपार्श्वांसजङ्घोरु-वङ्क्षणाद्यधिकव्यथाः ॥ ३०
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।
कासश्वासाग्निवैषम्य-कर्णनादभ्रमावहाः ॥ ३१
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ ३२
कृष्णत्वङ्नखविण्मूत्र-नेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठिलासम्भवस्तत एव च ॥ ३३
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥ ३४
शुकजिह्वायकृत्खण्ड-जलौकावक्त्रसन्निभाः ।
दाहपाकज्वरस्वेद-तृण्मूर्च्छारुचिमोहदाः ॥ ३५
सोष्माणो द्रवनीलोष्ण-पीतरक्तामवर्च्चसः ।
यवमध्या हरित्पीत-हारिद्रत्वङ्नखादयः ॥ ३६
श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचितस्निग्ध-स्तब्धवृत्तगुरुस्थिराः ॥ ३७
पिच्छिलाः स्तिमिताःश्लक्ष्णाःकण्ड्वाढ्याःस्पर्शनप्रियाः
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ ३८
वङ्क्षणानाहिनः पायु-वस्तिनाभिविकर्षिणः ।

(क) पर्व्वास्थीति वा पाठः ।

सकास-श्वासहृल्लास-प्रसेकारुचिपीनसाः ॥ ३९
मेहकृच्छ्र-शिरोजाड्य-शिशिरज्वरकारिणः।
क्लैब्याग्निमार्दववच्छर्दिरामप्रायविकारदाः ॥ ४०
वसाभसकफप्राज्य-पुरीषाः सप्रवाहिकाः।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धश्लगादयः ॥ ४१
संसृष्टलिङ्गात् संसर्ग-निचयात् सर्व्वलक्षणाः।
रक्तोल्वणा गुदे कीलाः पित्ताकृतिसमन्विताः ॥ ४२
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः।
तेऽत्यर्थं दुष्टमुष्णञ्च गाढ़विट्कप्रपीड़िताः ॥ ४३
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः।
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ॥ ४४
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः।
मुद्ग-कोद्रव-जम्बीर-करीर-चणकादिभिः ॥ ४५
रूक्षैः संग्राहिभिर्वायुर्विट्स्थाने कुपितो बली।
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥ ४६
पुरीषं वातविण्मूत्र-सङ्गं कुर्व्वीत दारुणम्।
तेन तीव्रा रुजा कोष्ठ-पृष्ठहृत्पार्श्वगा भवेत् ॥ ४७
आत्मानमुदरी विष्ठा हृल्लासपरिवर्त्तनम्।
वस्तौ च सुतरां शूलो गण्डश्वयथुसम्भवः ॥ ४८
पवनस्योर्द्धगामित्वात् ततश्छर्द्द्यरुचिज्वराः।
हृद्रोगग्रहणीदोष-मूत्रसङ्गप्रवाहिकाः ॥४९
बाधिर्यतिमिरःश्वास-शिरोरुक्कासपीनसाः।
मलविकारतृष्णास्तु पित्तगुल्मोदरादयः ॥ ५०
एते च वातजा रोगा जायन्ते दारुणाः स्मृताः।
दुर्नामा मत्यूदावर्त्त-परमोऽयमुपद्रवः ॥ ५१
वाताभिभूतकोष्ठानां तैर्विनापि विजायते।
सहजानि तु दोषाणि यानि चाभ्यन्तरे बली।
स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः॥५२
द्वन्द्वजानि द्वितीयायां बलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ५३
बाह्यायान्तु बलौ जातान्येकदोषोल्बणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पत्तिकानि च ॥ ५४
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु।
गण्डूपदस्य रूपाणि पिच्छिलानि मृदूनि च ॥ ५५
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः।
कीलोपमं स्थिरखरं चर्मकीलञ्च तं विदुः ॥ ५६

वातेन तोदपारुष्यं पित्तादसितवक्त्रता।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ ५७
अर्शसां प्रशमे यत्नमाशु कुर्व्वीत बुद्धिमान्।
तान्याशु हि गदं कार्यं कुर्य्युरुद्धंगुदोदरम् ॥ ५८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे अर्शोनिदानं नाम षष्ठ्यधिकशत-तमोऽध्यायः ॥ १६० ॥

---

## एकषष्ट्यधिकशततमोऽध्यायः।

### धन्वन्तरिरुवाच।

अतीसार-ग्रहण्योश्च निदानं वच्मि सुश्रुत।
दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ॥ १
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः।
विशुष्कान्न-वसा-स्नेह-तिलपिष्टविरूढ़कैः ॥ २
मद्यरूक्षातिमात्रादि-दिवसादिपरिभ्रमात्।
क्रिमिभ्यो वेगरोधाच्च तद्विधैः कुपितानिलः ॥ ३
विस्रंसयत्यधो रक्तं हत्वा तेनैव चानलम्।
व्यापर्य्यान्नशकृत्कोष्ठ-पुरीषद्रवतादयः ॥ ४
प्रकल्पतेऽतिसारस्य लक्षणं तस्य भाविनः।
भेदो हृद्गुदकोष्ठेषु गात्रखेदो मलग्रहः ॥ ५
आध्मानमविपाकश्च तत्र वातेन विज्वरम्।
स्वल्पाल्पं शब्दशून्याढ्यं विरुद्धमुपसेव्यते ॥ ६
रूक्षं सफेनमस्वच्छं ग्रथितं वा मुहुर्मुहुः।
तथा दग्ध्वा गुदाभासं पिच्छिलं परिकर्त्तयन् ।
सशुष्कभ्रष्टपायुश्च हृष्टरोमा विनिश्वसन् ॥ ७
पित्तेन पीतमसितं हारिद्रं शाद्वलप्रभम्।
सरक्तमतिदुर्गन्धं तृण्मूर्च्छा-स्वेद-दाहवान् ॥ ८
सशूलपायुसन्ताप-पाकवान् श्लेष्मणा घनम्।
पिच्छिलं तन्तुसारमल्पाल्पं सप्रवाहकम् ॥ ९
सरोमहर्षः सोत्क्लेशो गुरुर्वस्तिगुदोदरः।
कृतेऽप्यकृतसञ्ज्ञश्च सर्व्वात्मा सर्व्वलक्षणः ॥ १०
भयेन क्षुभिते चित्ते शयितो द्रावयेत् शकृत्।
वायुस्ततो निवार्य्येत क्षिप्रमुष्णं प्रवप्लवम् ॥ ११
वातपित्ते समं लिङ्गमभूत् तद्वच्च शोकतः।
अतीसारः समासेन द्वेधा सामो निरामकः ॥ १२

शकृद्दुर्गन्धमाटोप-विष्टम्भार्त्तिविशिकिणः।
विपरीतो निरामस्तु कफात् कोऽपि न मज्जति ॥१३
अतीसारेषु यो नाति-यत्नवान् ग्रहणीगदः।
तस्य स्यादग्निनिर्व्वाण-करैरित्यनुसेवितैः ॥ १४
सामं शकृन्निरामं वा जीर्णं येनाभिसार्य्यते।
सोऽतीसारोऽतिसरणादाशुकारी स्वभावतः।
आमशीर्णमजीर्णेन जीर्णं पक्वन्तु नैव च ॥ १५
चिरकृद्ग्रहणीदोषः सञ्चयञ्चोपवेशयेत्।
स चतुर्द्धा पृथग्दोषैः सन्निपाताच्च जायते ॥ १६
प्राग्रूपाङ्गस्य सदनं चिरात् पवनमल्पकः।
प्रसेको वक्त्रवैरस्यमरुचिस्तृट्समो भ्रमः ॥ १७
आनद्धोदरता छर्द्दिः कर्णकोऽप्यनुकूजकम्।
सामान्यलक्षणं कार्श्यं धूमकस्तमको ज्वरः ॥ १८
मूर्च्छा शिरोरुविष्टम्भः श्वयथुः कर-पादयोः।
तन्द्रानिलात् तालुशोषस्तिमिरं कर्णयोः स्वनः।
पार्श्वोरुवङ्क्षणग्रीवा-रुजा तीक्ष्णविसूचिका ॥ १९
रसेषु वृद्धिः सर्व्वेषु क्षुत्तृष्णापरिहर्त्तिका।
जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ २०
वाताद्धृद्रोगगुल्मार्शः-प्लीहपाण्डुत्वसंज्ञिता।
चिराद्दुःखं द्रवं शुष्कं तुन्दारं शब्दफेनवत्।
पुनः पुनः सृजेद्वर्च्चः पायुरुक्श्वासकासवान् ॥ २१
पीतेन पीतनीलाभं पीताभं सृजति द्रवम्।
अत्यम्लोद्गारहृत्कण्ठ-दाहारुचितृड्र्दितः ॥ २२
श्लेष्मणा पच्यते दुःखे मलश्छर्द्दिररोचकः।
आस्योपदाहनिष्ठीव-कासहृल्लासपीनसाः ॥ २३
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरुम्।
उद्गारो दुष्टमधुरं सदनं सप्रहर्षणम् ॥ २४
सभिन्नश्लेष्मसंश्लिष्ट-गुरुवर्च्चःप्रवर्त्तनम्।
अकृशस्यापि दौर्व्बल्यं सर्व्वजे सर्व्वदर्शनम् ॥ २५
विभागोऽङ्गस्य ये चोक्ता विषमाद्यास्त्रयो मताः।
तेऽप्यस्य ग्रहणीदोषाः समस्तेष्वस्ति कारणम् ॥ २६
वातव्याध्यश्मरी-कुष्ठ-मोहोदर-भगन्दरः।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ २७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे अतिसार-ग्रहणीनिदानं नामैकषष्ठ्यधिकशततमोऽध्यायः ॥ १६१ ॥

## द्विषष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच।

अथातो मूत्रघातस्य निदानं शृणु सुश्रुत।
वस्ति-वस्तिशिरा-मेढ्र-कटी-वृषण-पायु च ॥ १
एकसंवरणाः प्रोक्ता गुदास्थिविवराश्रयाः।
अधोमुखोऽपि वस्तिर्हि मूत्रवाहिशिरामुखैः ॥ २
पार्श्वेभ्यः पूर्य्यते सूक्ष्मैः स्यन्दमानैरनारतम्।
तैस्तैरेव प्रविश्यैनं दोषाः कुर्व्वन्ति विंशतिम् ॥ ३
मूत्राघातः प्रमेहश्च कृच्छ्रान्मर्म्म समाश्रयेत्।
वस्ति-वङ्क्षण-मेढ्रास्थि-युक्तमल्पं मुहुर्म्मुहुः ॥ ४
मूत्राणि वाते कृच्छ्राय पित्ते पीतं सदाहरुक्।
रक्तं वा कफजे वस्ति-मेढ्रगौरवशोथवान् ॥ ५
सपिच्छिलं पिङ्गलञ्च सर्व्वैः सर्व्वात्मकं मलैः।
यदा वायुर्मुखं वस्तेर्व्यावर्त्त्य परिशोषयन् ॥ ६
मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात्।
सञ्जायतेऽश्मरी घोरा पित्ताङ्गमिव रोचना ॥ ७
श्लेष्माश्रया च सर्व्वा स्यादथास्याः पूर्व्वलक्षणम्।
वस्त्याध्मानं तदासन्न-देशे हि परितोऽतिरुक् ॥ ८
वस्तौ च मूत्रसङ्गित्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः।
सामान्यलिङ्गं रुङ्नाभि-सीवनीवस्तिमूर्द्धसु ॥ ९
विस्तीर्णायासमूत्रं स्यात् तया मार्गविरोधने।
बध्यं बाधामुखं मेहेदच्छं गोमेदकोपमम् ॥ १०
तत्सङ्क्षोभाद्भवेत् सासृक्शांसमध्वनि रुग्भवेत्।
तत्र वाताभिमूत्रार्त्तो दन्तान् खादति वेपते ॥ ११
गृह्णाति मेहनं नाभिं पीड़यत्यतिलक्षणम्।
सानिलं मुञ्चति शकृन्मुहुर्म्मेहति बिन्दुशः ॥ १२
श्यामरूक्षाश्मरी चास्य स्याच्छिता कण्टकैरिव।
पित्तेन दह्यते वस्तिः पच्यमान इवोष्णवान् ॥ १३
भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरी।
वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतला गुरुः ॥ १४
अश्मरी महती श्लक्ष्णा मधुवर्णाथवा सिता।
एता भवन्ति बालानां तेषामेव च भूयसाम् ॥ १५
आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखी।
शुक्राश्मरी तु महती जायते शुक्रधारणात् ॥ १६
स्थानच्युतममुक्तं वा वृषणयोरन्तरेऽनिलः।

शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥ १७
वस्तिरुक् कृच्छ्रमूत्रत्वं शुक्रा श्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुष्कमेत्य विलीयते ॥ १८
पीड़िते ज्वरकासेऽस्मिन्नश्मर्य्येव च शर्करा ।
असौ वा वायुना भिन्ना सा त्वस्मिन्ननुलोमगे ।
निरेति सह मूत्रेण प्रतिलोमे विपच्यते ॥ १९
मूत्रसंस्राविणं कुर्य्यात् क्रुद्धो वस्तेर्मुखं मरुत् ।
मूत्रसङ्गं रुजं कुर्य्यात् कदाचिच्च स्वधामतः ॥ २०
प्रच्छाद्य वस्तिमुद्वृत्य गर्भाभं स्थूलविप्लुताम् ।
करोति तत्र रुग्दाहं स्पन्दनोद्वेष्टनानि च ॥ २१
बिन्दुशश्च प्रवर्त्तेत मूत्रं वस्तौ तु पीड़िते ।
धारावरोधश्चाप्येष वातवस्तिरिति स्मृतः ॥ २२
दुस्तरो दुस्तरतरो द्वितीयः प्रबलोऽनिलः ।
शकृन्मार्गस्य वस्तेश्च वायुश्चान्तरमाश्रितः ॥ २३
अष्ठीलाभं घनं ग्रन्थिं करोत्यचलमुन्नतम् ।
वाताष्ठीलेति सात्मानं विरुद्ध त्राणि च सर्गकृत् ॥२४
विगुणः कुण्डलीभूतो वस्तौ तीव्रव्यथानिलः ।
अवध्यमूत्रं भ्रमति संस्तम्भोद्वेष्टगौरवम् ॥ २५
मूत्रमल्पाल्पमथवा विसृजति सकृत् सकृत् ।
वातकुण्डलिकेत्येव शुक्रे तु त्रिष्टते चिरे ॥ १६
न निरेति निरुद्धं वा मूत्राभीतं तदल्परुक् ।
विधारणात् प्रतिहते वातादावर्त्तितं यदा ॥ २७
नाभेरधस्तादुदरं मूत्रमापूरयेत् तदा ।
कुर्य्याद्धि रुगनाध्मानमशक्तिमलसंग्रहम् ॥ २८
तन्मूत्रं जाठरं छिद्रं वैगुण्येनानिलेन वा ।
आक्षिप्तमल्पमूत्रस्य वस्तौ नाभौ च वा मले ॥ २९
स्थिता स्रवेच्छनैः पश्चात् सरुजं वाथवा रुजम् ।
मूत्रोत्सर्गमविच्छिन्नं तच्छेषं गुरुशोषवत् ॥ ३०
अन्तर्व्वस्तिमुखे वृत्तः स्थिरोऽल्पं सहसा भवेत् ।
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ ३१
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम् ।
स्थानाच्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते ॥ ३२
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।
रूक्षदुर्ब्बलयोर्वातेनोदावर्त्तं शकृद्यदा ॥ ३३
मूत्रस्रोतोऽनुपद्येत संसृष्टं शकृता तदा ।
मूत्रबिन्दुस्तुल्यगन्धी स्याद्विघातं तदादिशेत् ॥ ३४

पित्तव्यायामतीक्ष्णाम्ल-भोजनाध्मानकादिभिः ।
प्रवृद्धवायुना मूत्रे वस्तिस्थे चैव दाहकृत् ॥ ३५
मूत्रं वर्त्तयते पूर्व्वं सरक्तं रक्तमेव वा ।
उष्णं पुनः पुनः कृच्छ्रादुष्णवातं वदन्ति तम् ॥ ३६
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्त-मारुतौ ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ ३७
पित्तं कफो द्वावपि वा हन्येते चानिलेन चेत् ।
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ ३८
सदाहं रोचनाशङ्ख-चूर्णवर्णं भवेच्च तत् ।
शुक्लं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ।
इति विस्तारतः प्रोक्ता रोगा मूत्रप्रवृत्तिजाः ॥ ३९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे मूत्राघात-
मूत्रकृच्छ्रनिदानं नाम द्विषष्ट्यधिक-
शततमोऽध्यायः ॥ १६२ ॥

---

## त्रिषष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

प्रमेहाणां निदानं ते वक्ष्येऽहं शृणु सुश्रुत ।
प्रमेहा विंशतिस्तत्र श्लेष्मणो दश पित्ततः ।
षट् चत्वारोऽनिलात् तेषां मेदोमूत्रकफावहाः ॥ १
हारिद्रमेही कटुकं हरिद्रासन्निभं शकृत् ।
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ २
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।
वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ॥ ३
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्ज्जितम् ॥ ४
सलसीकं विबद्धञ्च हस्तिमेही प्रमेहति ।
मधुमेही मधुसमं जायते स किल द्विधा ॥ ५
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथे यदा ।
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ॥ ६
क्षणात् क्षीणः क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ।
कालेनोपेक्षितः सर्व्वो ह्यायाति मधुमेहताम् ॥ ७
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ।
सर्व्वे ते मधुमेहाख्या माधुर्य्याच्च तनोर्यतः ॥ ८
अविपाकोऽरुचिश्छर्द्दिर्निद्रा कासः सपीनसः ।

उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ ९
बस्ति-मेहनयोस्तोदो मुष्कावदरणं ज्वरः।
दाहस्तृष्णाम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम्॥१०
वातिकानामुदावर्त्तः कम्पहृद्ग्रहलोलताः।
शूलमुन्निद्रता शोषः श्वासः कासश्च जायते ॥ ११
शराविका कच्छपिका जालिनी विनतालजी।
मसूरिका सर्षपिका पुत्रिणी सविदारिका।
विद्रधिश्चेति पीड़काः प्रमेहोपेक्षया दश ॥ १२
अन्नञ्च कफसंश्लेषात् प्रायस्तत्र प्रवर्त्तनम्।
स्वादम्ल-लवण-स्निग्ध-गुरु-पिच्छिल-शीतलम् ॥ १३
नवं धान्यं सुरा-सूप-मांसेक्षु-गुड़-गोरसम्।
एकस्थानासनवति शयनं विनिवर्त्तनम् ॥ १४
वस्तिमाश्रित्य कुरुते प्रमेहान् दूषितः कफः।
दूषयित्वा वपुः क्लेदं स्वेदमेदोवसामिषम् ॥ १५
पित्तं रक्तमतिक्षीणे कफादौ मूत्रसंश्रयम्।
धातुं वस्तिमुपानीय तत्क्षये चैव मारुतः ॥ १६
साध्यासाध्यप्रतीत्याद्या मेहास्तेनैव तद्भवाः।
समे समक्रिता दोषे परमत्वान्मतापि च ॥ १७
सामान्यलक्षणं तेषां प्रभूताविलमूत्रता।
दोषदूष्या विशेषेऽपि तत्संयोगविशेषतः।
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥ १८
अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम्।
मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम् ॥ १९
इक्षो रसमिवात्यर्थं मधुरञ्चेक्षुमेहतः।
सान्द्रीभवेत् पर्य्युषितं सान्द्रमेहेण मेहति ॥ २०
सुरामेही सुरातुल्यमुपर्य्यच्छमधोघनम्।
संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥ २१
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति।
मूर्त्ताणून् सिकतामेही सिकतारूपिणो मलान्॥ २२
शीतमेही सुबहुशो मधुरं भृशशीतलम्।
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति।
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ २३
गन्ध-वर्ण-रस-स्पर्शैः क्षारेण क्षारतोयवत्।
नीलमेहेन नीलाभं कालमेही मसीनिभम् ॥ २४
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु।
अन्तोन्नता मध्यनिम्ना अक्लेदमरुजान्विता।
शरावमानसंस्थाना पीड़का स्यात् शराविका ॥ २५
सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः।
महती पीड़का नीला विनता नाम सा स्मृता ॥२६
दहति त्वचमुत्थाने जालिनी कष्टदायिनी।
रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ॥२७
मसूराकृतिसंस्थाना विज्ञेया तु मसूरिका।
सर्षपमानसंस्थाना जिह्वापाकमहारुजा ॥ २८
पुत्रिणी महती चाल्पा सुसूक्ष्मा पीड़का स्मृता।
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ २९
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा।
पुत्रिणी च विदारी च दुःसहा बहुमेदसः ॥ ३०
सद्यः पित्तोल्बणास्त्वन्याः सम्भवन्त्यल्पमेदसः।
तासां मेहवशाच्च स्याद्दोषोद्रेको यथायथम् ॥ ३१
प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः।
तावच्च नोपलक्ष्यन्ते यावद्वर्णञ्च वर्ज्जितम् ॥ ३२
हारिद्ररक्तवर्णं वा मेहप्राग्रूपवर्ज्जितम्।
यो मूत्रयेन्न तन्मेहं रक्तपित्तन्तु तद्विदुः ॥ ३३

स्वेदोऽङ्गगन्धं शिथिलत्वमङ्गे
शय्याशनस्वप्नसुखाभिषङ्गः।
हृन्नेत्र-जिह्वा-श्रवणोपदाहा
घनाङ्गता केश-नखाभिवृद्धिः ॥ ३४
शीतप्रियत्वं गल-तालुशोषो
माधुर्य्यमास्ये कर-पाददाहः।
भविष्यतो मेहगणस्य रूपं
मूत्रेऽपि धावन्ति पिपीलिकाश्च ॥ ३५
दृष्ट्वा प्रमेहे मधुरं प्रपिच्छन्
मेहे मधौ स्यादिति विशो विकारः।
सम्पूरणाद्वा कफसम्भवः स्यात्
क्षीणेषु दोषेष्वनिलात्मको वा ॥ ३६
सम्पूर्णरूपाः कफ-पित्तमेहाः
क्रमेण ये वै रतिसम्भवाश्च।
संक्रामते पित्तकृतास्तु याप्याः
साध्योऽस्ति मेहो यदि नास्ति रिष्टम् ॥ ३७

इति श्रीगारुड़े पूर्व्वखण्डे प्रमेहनिदानं नाम
त्रिषष्ट्यधिकशततमोऽध्यायः ॥१६३॥

---

## चतुःषष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच।

निदानं विद्रधेर्वक्ष्ये गुल्मस्य शृणु सुश्रुत।
भक्तैः पर्युषितात्युष्ण-शुष्क-रूक्ष-विदाहिभिः ॥ १
जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः।
दुष्टस्त्वङ्मांसमेदोऽस्थिमदाम्रष्टोदराश्रयः ॥ २
यः शोथो वहिरन्तश्च महामूलो महारुजः।
वृत्तः स्यादायतो यो वा स्मृतो रोगः स विद्रधिः॥३
दोषैः पृथक्समुदितैः शोणितेन सुतेन च।
वाह्ये ते तत्र तत्राङ्गे दारुणे ग्रथितोऽस्रुतः ॥ ४
अन्तरो दारुणश्चैव गम्भीरो गुल्मवद्घनः।
वल्मीकवत् समुत्स्रावी अग्निमान्द्यञ्च जायते ॥ ५
नाभि-वस्ति-यकृत्-प्लीह-क्लोम-हृत्कुक्षि-वङ्क्षणे।
हृदये वेपमाने तु तत्र तत्रातितीव्ररुक् ॥ ६
श्यामारुणशिरोत्थानपाको विषमसंस्थितिः।
संभ्राच्छेदभ्रमानाह-स्यन्दसर्पणशब्दवान् ॥ ७
रक्तताम्रासितः पित्तात् तृष्णोह-ज्वर-दाहवान्।
क्षिप्रोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात् ॥ ८
संक्लेश-शीतक-स्तम्भ-जृम्भारोचक-गौरवाः।
चिरोत्थानोऽविपाकश्च सङ्कीर्णः सन्निपातजः ॥ ९
सामर्थ्याच्चात्र विड्भेदो वाह्याभ्यन्तरलक्षणम्।
कृष्णः स्फोटावृतः श्यामस्तीव्रदाहरुजाज्वरः ॥ १०
पित्तलिङ्गोऽसृजा वाह्यं स्त्रीणामेव तथान्तरम्।
शस्त्राद्यैरभिघातोत्थ-रक्तश्च रोगकारणम् ॥ ११
क्षतोत्थो वायुना क्षिप्तः स रक्तः पित्तमीरयन्।
पित्तासृग्लक्षणं कुर्य्याद्विद्रधिं भूर्य्युपद्रवम् ॥ १२
तेनोपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः।
नाभौ हिक्का तु चेद्वस्तौ मूत्रकृच्छ्रञ्च जायते ॥ १३
श्वास-प्रश्वासरोधश्च प्लीहायामपि तृट् परम्।
गलरोधश्च क्लोम्नि स्यात् सर्व्वाङ्गप्ररुजो हृदि।
कुक्षिपार्श्वान्तरे चैव कुक्षौ दोषोपजन्म च ॥ १४
तथा चेदुरुसन्धौ च वङ्क्षणे कटि-पृष्ठयोः।
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ॥ १५
आम-पक्व-विदग्धत्वं तेषां शोथवदादिशेत्।
नाभेरूर्द्ध्वमुखात् पक्वात् प्रद्रवन्त्यपरे गुदात् ॥ १६

पक्वो हि नाभिवस्तिस्थो भिन्नोऽन्तर्व्वहिरेव वा।
पाकश्चान्तःप्रवृद्धस्य क्षीणस्योपद्रवार्द्दितः ॥ १७
विद्रधिश्च भवेत् तत्र पापानां पापयोषिताम्।
मृते तु गर्भिणी चैव सम्भवेत् श्वयथुर्घनः ॥ १८
स्तने समुत्थे दुःखं वा वाह्यविद्रधिलक्षणम्।
नारीणां सूक्ष्मरक्तत्वात् कन्यायान्तु न जायते॥
क्रुद्धो रुद्धगतिर्वायुः शेफमूलकरो हि सः।
सुष्क-वङ्क्षणतः प्राप्य फलकोषातिवाहिनीम्॥
आपीड्य धमनीवृद्धिं करोति फल-कोषयोः।
दोषो मेदेषु मूत्रान्ते सवृद्धिः सप्तधा गदः ॥ २१
मूत्रं तयोरप्यनिलाद्वाह्ये वाभ्यन्तरे तथा।
वातपूर्णः खरस्पर्शो रूक्षो वाताच्च दाहकृत्॥
पक्वोडुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान्।
कफात्तीव्रो गुरुः स्निग्धः कण्डूमान् कठिनाल्परुक्
कृष्णः स्फोटावृतः पिण्डो वृद्धिलिङ्गश्च रक्ततः।
कफवन्मेदसां वृद्धिर्मृदुतालफलोपमः ॥ २४
मूत्रधारणशीलस्य मूत्रजस्तत्र गच्छतः।
अलोभः पूर्णदृतिमान् क्षोभं याति सरन् मृदुः
मूत्रकृच्छ्रमधस्ताच्च वलयः फल-कोषयोः।
वातकोपिभिराहारैः शीततोयावगाहनैः ॥ २६
विण्मूत्रधारणाच्चैव विषमाङ्गविचेष्टनैः।
क्षोभितैः क्षोभितौजाश्च क्षीणान्तः शरीरे यदा
पवनो विगुणीभूय शोणितं तदधो नयेत्।
कुर्य्यात् तत्क्षणसन्धिस्थो ग्रन्थ्याभः श्वयथुस्तदा

उपेक्ष्यमाणस्य च गुल्मवृद्धि-
माध्मानरुग्वै विविधाश्च रोगाः।
सुपीड़ितोऽन्तःस्वनवान् प्रयाति
प्रध्मापयन्नेति पुनश्च मूर्द्धः ॥ २९

शोथवृद्धिरसाध्योऽयं वातवृद्धिः समाकृतिः।
रूक्षकृष्णारुणशिरा जर्णावृतगवाक्षवत् ॥ ३०
वातोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतः।
आर्त्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ ३१
ज्वरमूर्च्छातिसारैश्च वमनाद्यैश्च कर्म्मभिः।
कर्शितो बलवान् याति शीतार्त्तश्च बुभुक्षितः॥
यः पिबत्यन्नपानानि लङ्घनप्लावनादिकम्।
सेवते क्षीनसंज्ञाभिरर्द्दितः समुदीरयन् ॥ ३३

स्नेहस्वेदावनभ्यस्य शोषणं वा निषेवयेत् ।
शुद्धी वा शुद्धिहानिर्वा भजेत स्यन्दनानि वा ॥ ३४
वातोल्वणास्तस्य मलाः पृथक्‌ चैव हि तेऽथवा ।
सर्व्वौ रक्तयुतौ वाताद्देहस्रोतोऽनुसारिणः ॥ ३५
ऊर्द्धाधोमार्गमावृत्य वायुः शूलं करोति वै ।
स्पर्शोपलभ्यं गुल्मोत्थमुष्णं ग्रन्थिस्वरूपिणम् ॥ ३६
कर्षणात् कफविड्‌घातैर्मार्गस्यावरणेन वा ।
वायुः कृताश्रयः कोष्ठे रौच्यात् काठिन्यमागतः ॥ ३७
स्वतन्त्रः स्वाश्रये दुष्टः परतन्त्रः पराश्रये ।
ततः पिण्डितवत् श्लेष्मा मलसंस्पृष्ट एव च ।
गुल्म इत्युच्यते वस्ति-नाभि-हृत्पार्श्वसंश्रयः ॥ ३८
वातजन्ये शिरःशूल-ज्वर-प्लीहान्त्रकूजनम् ।
वेधः सूच्येव विड्‌भ्रंशः कृच्छ्रे मूत्रं प्रवर्त्तते ॥ ३९
गात्रे मुखे पदे शोथः अग्निमान्द्यं तथैव च ।
रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च ॥ ४०
अनिरूपितसंस्थानो विचत्तुश्चत्तुराततम् ।
पिपीलिकाव्याप्त इव गुल्मः स्फुरति तुद्यते ॥ ४१
पित्ताद्दाहाम्लकौ मूर्च्छा विड्‌भेदाः स्वेदतृड्‌भवाः ।
हारिद्रं सर्व्वगात्रेषु गुल्माच्छोथस्य दर्शनम् ॥ ४२
हीयते दीप्यते श्लेष्मा स्वस्थानं दहतीव च ।
कफात् स्तैमित्यमरुचिः सदनं शिरसि ज्वरः ॥ ४३
पीनमानस्य हृल्लासः शुक्लकृष्णत्वगादिता ।
गुल्मोऽवगाढ़ः कठिनो गुरुः स्वप्नः स्थिराल्परुक्‌ ॥ ४४
स्वदोषस्थानधामानस्तत एवात्र मारकाः ।
प्रायस्तु ये च द्वन्द्वोत्था गुल्माः संसृष्टलक्षणाः ॥ ४५
सर्व्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ।
सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥ ४६
ऋतौ या चैव शूलार्त्ता यदि वा योनिरोगिणी ।
सेवते वानिलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥ ४७
निरुध्याप्यार्त्तवं योन्यां प्रतिमासं व्यवस्थितम् ।
कुक्षिं करोति तद्गर्भं लिङ्गमाविष्करोति च ॥ ४८
हृल्लास-दौहृद-स्तन्यदर्शनं कामचारिता ।
क्रमेण वायोः संसर्गात् पित्तं योनिषु सञ्चयम् ॥ ४९
रक्तस्य कुरुते तस्या वातपित्तोक्तगुल्मजान् ।
गर्भाशये च सुतरां शूलान्स्वैवासृगाश्रये ॥ ५०
योनिस्रावश्च दौर्गन्ध्यं तोयस्यन्दन-वेदने ।
कदापि गर्भवद्गुल्मः सर्व्वे ते रतिसम्भवाः ॥ ५१
पाकं चिरेण भजते नैधते विद्रधिः पुनः ।
पाच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयस्तु सः ॥ ५२
अतः शीघ्रं विदाहित्वाद्विद्रधिः सोऽभिधीयते ।
गुल्मान्तराश्रये वस्तिदाहश्च प्लीहवेदना ॥ ५३
अग्नि-वर्ण-बलभ्रंशो वेगानां वाप्रवर्त्तनम् ।
अतो विपर्य्यये वाच्यं कोष्ठाङ्गेषु च नातिरुक्‌ ॥ ५४
वैवर्ण्यमथवा कासो वह्निरुन्नतताधिकम् ।
साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ॥ ५५
ऊर्द्धाधोवातरोधेन तमानाहं प्रचक्षते ।
घनश्चाष्ठ्युपमो ग्रन्थिलोऽष्ठिलोपि समुन्नतः ॥ ५६
समस्तलिङ्गसंयुक्तः प्रत्यष्ठीला तदाकृतिः ।
पक्वाशयोद्भवोऽप्येवं वायुस्तीव्ररुजाश्रयात् ॥ ५७

उद्गारबाहुल्यपुरीषबन्धा-
श्यल्पेन्द्रियत्वान्त्रविकूजनानि ।
आटोपमाध्मानमपक्तिशक्तिः
सर्व्वस्य गुल्मस्य भवेच्च चिह्नम् ॥ ५८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे विद्रधि-
गुल्मनिदानं नाम चतुःषष्ट्यधिक-
शततमोऽध्यायः ॥ १६४ ॥

---

## पञ्चषष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

उदराणां निदानञ्च वक्ष्ये सुश्रुत तच्छृणु ।
रोगाः सर्व्वेऽपि मन्दाग्नौ सुतरामुदराणि तु ॥ १
अजीर्णा अनिलाश्चान्ये जायन्ते मलसञ्चयात् ।
ऊर्द्धाधो वायवो रुद्धा व्याकुलीव प्रवाहिणी ॥ २
प्राणा अपानान् सन्दूष्य कुर्य्युस्तान् मांससन्धिगान् ।
आध्माप्य कुक्षिमुदरमष्टधा तस्य भिद्यते ॥ ३
पृथग्दोषैः समस्तैश्च प्लीह-वङ्क्षतोदकैः ।
तेनार्त्ताः शुष्कताल्वोष्ठाः सर्व्वपादकरोदराः ॥ ४
नष्टचेष्टाबलाहाराः कृतप्रध्मातकुक्षयः ।
पुरुषाः स्युः प्रेतरूपा भाविनस्तस्य लक्षणम् ॥ ५
क्षुन्नाशोऽरुचिवत् सर्व्वं सविदाहञ्च पच्यते ।
जीर्णान्नं यो न जानाति स पथ्यं सेवते नरः ॥ ६

क्षीयते बलमङ्गस्य श्वसित्यल्पोऽपि चेष्टितः ।
विषयावृत्तिबुद्धिश्च शोकशोषादयोऽपि च ॥ ७
दुःखस्तिसन्धौ सततं लघ्वल्पभोजनैरपि ।
जराजीर्णो बलभ्रंशो भवेज्जठररोगिणः ॥ ८
स्वतन्त्रतन्द्रालसता मलसर्गोऽल्पवह्निता ।
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवे ॥ ९
सर्व्वत्र तोये मरणं शोचनं तत्र निष्फलम् ।
गवाक्षवत् शिराजालैरुदरं गुड़गुड़ायते ॥ १०
नाभिमन्त्रञ्च विष्टभ्य वेगं कृत्वा प्रणश्यति ।
मारुते हृत्कटी-नाभि-पायुवङ्क्षण-वेदनाः ॥ ११
सशब्दो निःसरेद्वायुर्वध्यते मूत्रमल्पकम् ।
नातिमात्रं भवेल्लौल्यं नरस्य विरसं मुखम् ॥ १२
तत्र वातोदरे शोथः पाणि-पाद-मुखाक्षिषु ।
कुक्षि-पार्श्वोदर-कटी-पृष्ठरुक्-पर्व्वभेदनम् ॥ १३
शुष्ककासाङ्गमर्द्दाधोगुरुता मलसंग्रहः ।
श्यामारुणत्वगादित्वं मुखे च रसवृद्धिता ॥ १४
सतोदभेदमुदरं नीलकृष्णशिराततम् ।
आध्मातमुदरे शब्दमद्भुतं वा करोति सः ॥ १५
वायुश्चात्र सरुक्शब्दं विधत्ते सर्व्वथागतिः ।
पित्तोदरे ज्वरो मूर्च्छा दाहित्वं कटुकास्यता ॥ १६
भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित् ।
पीततात्म्रशिरादित्वं सस्वेदं सोष्म दह्यते ॥ १७
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ।
श्लेष्मोदरेषु सदनं स्वेद-श्वयथु-गौरवम् ॥ १८
निद्रा क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ।
उदरं तिमिरं स्निग्धं शुक्ल-कृष्णशिरावृतम् ॥ १९
नीरातिवृद्धौ कठिनं शीतस्पर्शं गुरुं स्थिरम् ।
त्रिदोषकोपने तैस्तैस्त्रिदोषजनितैर्मलैः ॥ २०
सर्व्वदूषणदुष्टाश्च सरक्ताः सञ्चिता मलाः ।
कोष्ठं प्राप्य विकुर्व्वाणाः शोषमूर्च्छाभ्रमान्वितम् ।
कुर्य्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ॥ २१
वर्द्धते तच्च सुतरां शीतवातप्रदर्शने ॥ २२
अत्याशनाच्च सङ्क्षोभाद्यानपानादिचेष्टितैः ।
अत्याचरितपानाद्यैर्वमनव्याधिकर्षणैः ॥ २३
वामपार्श्वस्थितप्लीहा च्युतस्थाना विवर्द्धते ।
शोणिताद्वा रसादिभ्यो विवृद्धश्च विवर्द्धयेत् ॥ २४

सोऽष्ठीलेवातिकठिनः प्रोन्नतः कूर्म्मपृष्ठवत् ।
क्रमेण वर्द्धमानश्च कुक्षौ व्याततिमाहरेत् ॥ २५
श्वासकासपिपासास्य-वैरस्याध्मानकज्वरैः ।
पाण्डुत्वमूर्च्छा च्छर्द्दिश्च दाह-मोहैश्च संयुतः ॥ २६
अरुणाभं विचित्राभं नीलहारिद्रराजिमत् ।
उदावर्त्तेन चानाह-मोहतृड्दहनज्वरैः ॥ २७
गौरवारुचिकाठिन्यैर्विघातभ्रमसंक्रमात् ।
प्लीहवद्दक्षिणात् पार्श्वात् कुर्य्याद्यकृदपि च्युतम्
पक्ष्मे भूते यकृति च तदा वद्धे मले गुदे ।
दुर्नामभिरुदावर्त्तैरन्यैर्वा पीड़ितो भवेत् ॥ २८
वर्च्चःपित्तकफान् बद्धान् करोति कुपितोऽनिलः ।
अपानो जठरे तेन संरुद्धो ज्वरसम्भवः ॥ ३०
कासः श्वासोऽवसदनं शिरोऽङ्ग-नाभि-पार्श्वरुक् ।
मलासर्गोऽरुचिश्छर्द्दिरुदरं मूलमारुतम् ॥ ३१
स्थिरनीलारुणशिरा-जालैरुदरमावृतम् ।
नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ ३२
अस्थ्यादिशल्यैरन्यैश्च विद्धे चैवोदरे तथा ।
पच्यते यकृदादिश्च तच्छिद्रैश्च सरन् वहिः ॥ ३३
आम एव गुदादेति ततोऽल्पाल्पः शकृद्रसः ।
स तु विकृतगन्धोऽपि पिच्छिलः पीतलोहितः ॥
शेषश्चापूर्य्य जठरं घोरमारभते ततः ।
वर्द्धते तदधो नाभेराशु चैति जलात्मताम् ॥ ३५
उद्रिक्ते दोषरूपे च व्याप्ते च श्वासतृड्भ्रमैः ।
छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ॥ ३६
प्रवृत्तः स्नेहपानादिः सहसानन्दपायिनः ।
अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य च ॥ ३७
रुद्धाम्बुमार्गाननिलः कफश्च जलमूर्च्छितः ।
वर्द्धते तु तदेवाम्बु तन्मात्राद्धिन्दुराशितः ॥ ३८
तत्कोपादुदरं तृष्णा-गुदस्रुतिरुजान्वितम् ।
कासश्वासारुचियुतं नानावर्णशिराततम् ॥ ३९
तोयपूर्णाम्मृदुस्पर्शात् सदृशं क्षोभवेपथुः ।
वकोदरं स्थिरं स्निग्धं नाड़ीमावृत्य जायते ॥ ४०
उपेक्षायाञ्च सर्व्वेषां स्वस्थानात् परिचालिताः ।
पाका द्रवा द्रवीकुर्य्युः सन्धिस्रोतोमुखान्यपि ॥ ४१
संरुद्धे चैव तु स्वेदे मूर्च्छिताश्चान्तरस्थिताः ।
तदेवोदरमापूर्य्य कुर्य्यात् तदोदरामयम् ॥ ४२

गुरूदरं स्थितं वृत्तमाचतञ्च न शब्दकृत् ।
हीनबलं तथा घोरं नाड्यां स्पृष्टञ्च सर्पति ॥ ४३
शिरान्तर्द्धानमुदरे सर्व्वलक्षणमुच्यते ।
वात-पित्त-कफ-प्लीह-सन्निपातोदकोदरम् ॥ ४४
पश्चाच्च जातसलिलं विष्टम्भोपद्रवान्वितम् ।
जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतम् ॥ ४५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
उदरनिदानं नाम पञ्चषष्ट्यधिक-
शततमोऽध्यायः ॥ १६५ ॥

---

## षट्षष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच ।

पाण्डुशोथनिदानञ्च शृणु सुश्रुत वच्मि ते ।
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ॥ १
तत्र नीतेन बलिना क्षिप्ताक्षिप्तं हृदि स्थिताः ।
धमनीर्दशमीः प्राप्य व्याप्नुवन् सकलां तनुम् ॥ २
श्लेष्मत्वगसृङ्मांसानि प्रदूष्यन्त्येवमाश्रितम् ।
त्वङ्मांसयोस्तु कुरुते त्वचि वर्णाः पृथग्विधाः ॥ ३
स्वयं हरिद्राहारिद्रं पाण्डुत्वं तेषु चाधिकम् ।
यातोऽयं प्राङ्गरित्युक्त स रोगस्तेन गौरवम् ॥ ४
धातूनां स्पर्शशैथिल्यमामजश्च गुणक्षयः ।
ततोऽल्परक्तमेदोऽस्थि-निःसारः स्यात्श्लथेन्द्रियः ॥५
शीर्य्यमाणैरिवाङ्गैस्तु द्रवता हृदयेन च ।
शूलाक्षिकूटवदनस्तैमित्यं तत्र लालया ॥ ६
हीनवाट् शिशिरद्वेषी शीर्षलोमो हतानलः ।
समशक्तिज्वरी श्वासी कर्णशूली तमी भ्रमी ॥ ७
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ।
प्रागूरूपमस्य हृदय-स्पन्दनं रूक्षता त्वचि ॥ ८
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पमूत्रता ।
मदः समानिलात् तत्र गाढ़रुक् क्लेदगात्रता ॥ ९
कृष्णरूक्षारुणशिरा-नखविण्मूत्रनेत्रता ।
शोथो नासास्यवैरस्यं विट्शोषः पार्श्वमूर्च्छना ॥१०
पित्ते हरितपित्ताभः शिरादिषु ज्वरस्तमः ।
तृट्शोषमूर्च्छादौर्गन्ध्यं शीतेच्छा कटुवक्त्रता ॥ ११
विड्भेदश्चाम्लको दाहः कफाच्च हृदयार्द्रता ।
तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ॥ १२
कासश्छर्द्दिश्च निचयानिष्टलिङ्गोऽतिदुःसहः ।
उत्कर्षानिलपित्तेन कटुर्वा मधुरः कफः ॥ १३
दूषयित्वा वसादींश्च रौक्षाद्रक्तविमोक्षणम् ।
स्रोतसां संक्षयं कुर्य्यादनुरुद्वा च पूर्व्ववत् ॥ १४
पाण्डुरोगी क्षयं यातं नातिपादास्यमेहनम् ।
पुरीषं कृमिवन्मुञ्चेद्भिन्नं सास्रं कफान्वितम् ॥ १५
यः पित्तरोगी सेवेत पित्तलं तस्य कामलम् ।
कोष्ठशाखाद्वयथा पित्तं दग्ध्वासृङ्मांसमाहरेत् ॥ १६
हारिद्रं मूत्रनेत्रत्वङ्नखवक्त्रशकृत् तदा ।
दाही विपाकतृष्णावान् भेकाभो दुर्व्वलेन्द्रियः ॥ १७
भवेत् पित्तानुगः शोथः पाण्डुरोगावृतस्य च ।
उपेक्षया च शोथाद्याः सकृच्छ्राः कुम्भकामलाः ॥ १८
हरितश्यामपित्तत्वं पाण्डुरोगी यदा भवेत् ।
वातपित्तभ्रमस्तृष्णा स्त्रीषु हर्षो मृदुज्वरः ॥ १९
तन्द्रा वा चानलभ्रंशस्तं वदन्ति हलीमकम् ।
अलसञ्चातिमहति तेषां पूर्व्वमुपद्रवः ॥ २०
शोथः प्रधानः कथितः स एवातो निगद्यते ।
पित्त-रक्त-कफान् वायुर्दुष्टो दुष्टान् वहिःशिराः ॥२१
नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात् त्वङ्मांससंश्रयम् ।
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥ २२
सर्व्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ।
दोषैः पृथग्द्वयैः सर्व्वैरभिघाताद्विषादपि ॥ २३
तदेव निजमागन्तु सर्व्वाङ्गे कामजन्तु तत् ।
पृथून्नताग्रग्रथिताविशेषैश्च त्रिधा विदुः ॥ २४
सामान्यहेतुः शोथानां दोषजाता विशेषतः ।
व्याधिकर्म्मोपवासादि-क्षीणस्य भवति द्रुतम् ॥ २५
अतिमात्रं यथान्यस्य गुरुरत्यन्तशीतलम् ।
लवण-क्षार-तीक्ष्णाम्ल-शाकाम्बु-स्वप्नजागरम् ॥ २६
रोधो वेगस्य वल्लूरमजीर्णश्रममैथुनम् ।
पच्यते मार्गगमनं यानेन क्षोभिणापि वा ॥ २७
श्वास-कासातिसारार्शो-जठर-प्रदर-ज्वरः ।
विष्टम्भालसक-च्छर्द्दि-हिक्कावीसर्प-पाण्डु च ॥ २८
ऊर्द्धशोथमधो वस्तौ मध्ये कुर्व्वन्ति मध्यगाः ।
सर्व्वाङ्गगाः सर्व्वगतः प्रत्यगीति तदाश्रयः ॥ २९
तत्पूर्व्वरूपं दवथुः शिरायामङ्गगौरवम् ।

वाताच्छोथश्चलो रूक्षः खररोमारुणोऽसितः ॥ ३०
शङ्खवस्त्यन्त्रशूलार्त्ति-भेदी भेदाप्रसुप्तिमान् ।
वातोत्थानः शमः शीघ्रमुन्नमेत् पीड़ितस्तनुः ॥ ३१
स्निग्धस्तु मर्द्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।
त्वचि सर्षपलिप्ते च तस्मिंश्चिमिचिमायते ॥ ३२
पीतरक्तासिताभासः पित्तजातश्च शोषकृत् ।
शीघ्रं नाशं वा प्रशमेन्मध्ये प्राग्दहते तनुः ॥ ३३
सतृड्दाहज्वरस्वेदो भ्रमक्लेशमदभ्रमाः ।
साभिलाषी शश्वद्भेदी गन्धः स्पर्शसहो मृदुः ॥ ३४
कण्डमान् पाण्डुरोमा त्वक्कठिनः शीतलो गुरुः ।
स्निग्धः श्लक्ष्णः स्थिरः शूलो निद्राच्छर्द्द्यग्निमान्द्यकृत् ३५
आघातेन च शस्त्रादिच्छेद-भेद-क्षतादिभिः ।
हिमानिलैर्दध्यनिलभेल्लात-कपिकच्छुजैः ॥ ३६
रसः शूकश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ।
भृशोष्मा लोहितो भासः प्रायशः पित्तलक्षणः ॥ ३७
विषजः सविषप्राणि-परिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ ३८
विण्मूत्रशुक्रोपहत-मलवद्वस्त्रसङ्करात् ।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ ३९
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ।
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ ४०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पाण्डु
शोथनिदानं नाम षट्षष्ठ्यधिक-
शततमोऽध्यायः ॥ १६६ ॥

——

## सप्तषष्ट्यधिकशततमोऽध्यायः ।

### धन्वन्तरिरुवाच ।

वीसर्पादिनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ।
स्याद्वीसर्पो विघातात् तु दोषदुष्टैश्च शोथवत् ॥ १
अधिष्ठानञ्च तं प्राहुर्वाह्यं तत्र भयाच्क्रमात् ।
यथोत्तरञ्च दुःसाध्यस्तत्र दोषो यथायथम् ॥ २
प्रकोपणः प्रकुपिता विशेषेण विदाहिभिः ।
देहे शीघ्रं विसर्पन्ति तेऽन्तरे हि स्थिता वहिः ॥ ३
तृष्णाभियोगाद्वेगानां विषमाच्च प्रवर्त्तनात् ।
आशु चाग्निवलभ्रंशादतो वाह्यं विसर्पयेत् ॥

तत्र वातात् स वीसर्पो वातज्वरसमव्यथः ।
शोथस्फुरणनिस्तोद-भेदायासार्त्तिहर्षवान् ॥ ५
पित्ताद्द्रुतगतिः पित्त-ज्वरलिङ्गोऽतिलोहितः ।
कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ ६
सन्निपातसमुत्थश्च सर्व्वलिङ्गसमन्वितः ।
सदोषलिङ्गैश्चीयन्ते सर्व्वैः स्फोटैरुपेचितः ॥ ७
वातपित्ताज्ज्वरच्छर्द्दि-मूर्च्छातीसारतृड्भ्रमैः ।
ग्रन्थिभेदाग्निशमन-तमकारोचकैर्युतः ॥ ८
करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ।
यं यं देशं विसर्पश्च विसर्पति भवेत् स सः ॥ ९
शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते ।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतं स च ॥ १०
मर्म्मानुसारी वीसर्पः स्याद्वातोऽतिवलस्ततः ।
व्यथतेऽङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत् ॥ ११
हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना ।
क्वचिच्छर्म्मारतिग्रस्तो भूमिशय्यासनादिषु ॥ १२
चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान् ।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ १३
कफेन रुद्धः पवनो भित्त्वा तं वहुधा कफम् ।
रक्तं वा वृद्धरक्तस्य त्वक्-शिरा-स्नायु-मांसगम् ॥
दूषयित्वा तु दीर्घाणु-वृत्तस्थूलखरात्मिकाम् ।
ग्रन्थीनां कुरुते मालां सरक्तां तीव्ररुग्ज्वराम् ॥
श्वासकासातिसारास्य-शोषहिक्कावमिभ्रमैः ।
मोहवैवर्ण्यमूर्च्छाङ्ग-भङ्गाग्निसदनैर्युताम् ।
इत्ययं ग्रन्थिवीसर्पः कफ-मारुतकोपजः ॥ १६
कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ।
अङ्गावसाद-विक्षेपौ प्रलापारोचकभ्रमाः ॥ १७
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ १८
प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् ।
पीड़कैरवकीर्णोऽतिपीत-लोहित-पाण्डुरैः ॥ १९
स्निग्धोऽसितो मेचकाभो मलिनः शोथवान् गुरुः ।
गम्भीरपाको वाह्योष्मस्पृष्टः क्लिन्नोऽवदीर्य्यते ॥ २०
पक्ववच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः ।
शवगन्धी च वीसर्पः कर्द्दमाख्यमुशन्ति तम् ॥ २१
वाह्यहेतोः क्षतात् क्रुद्धः स रक्तपित्तमीरयन् ।

वीसर्पं मारुतः कुर्यात् कुलत्थसदृशस्वितम्॥ २२
स्फोटैः शोथज्वररुजा-दाहाढ्यं श्यावशोणितम्।
पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः॥ २३
असाध्याः क्षतसर्व्वोत्थाः सर्व्वं चाक्रान्तमर्म्मणः।
शीर्णस्नायुशिरामांसाः क्लिन्नाश्च शवगन्धयः॥ २४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
वीसर्पनिदानं नाम सप्तषष्ठ्यधिक-
शततमोऽध्यायः॥ १६७॥

---

## अष्टषष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच।

मिथ्याहारविहारेण विशेषेण विरोधिना।
साधुनिन्दावधाद्युद्ध-हरणाद्यैश्च सेवितैः॥ १
पाप्मभिः कर्म्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः।
शिराः प्रपद्य तैर्युक्तास्त्वग्वसारक्तमामिषम्॥ २
दूषयन्ति शुषीकृत्य निश्चरन्तस्ततो वहिः।
त्वचः कुर्व्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तम्॥ ३
कालेनोपेक्षितं यत् स्यात् सर्व्वं कुष्ठानि तद्वपुः।
प्रपद्य धातून् वाह्यान्तः सर्व्वान् संक्लेद्य चावहेत्॥ ४
सस्वेदक्लेदसङ्कोचान् क्रिमीन् सूक्ष्मांश्च दारुणान्।
लोमत्वक्स्नायुधमनीराक्रामति यथाक्रमात्॥ ५
भस्माच्छादितवत् कुर्य्याद्दाद्यं कुष्ठमुदाहृतम्।
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः॥ ६
सर्व्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकस्ततः।
वातेन कुष्ठं कापालं पित्तेनौडुम्बरं कफात्॥ ७
मण्डलाख्यं विचर्च्चीं च ऋष्याख्यं वातपित्तजम्।
चर्म्मककुष्ठं किटिमं सिध्मालसविपादिकाः॥ ८
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी।
पुण्डरीकं सविस्फोटं पामा चर्म्मदलं तथा॥ ९
सर्व्वेभ्यः काकणं पूर्व्वत्रिकं दद्रु सकाकणम्।
पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु॥ १०
अतिश्लक्ष्ण-खरस्पर्श-स्वेदास्वेद-विवर्णताः।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोचोन्नतिस्तमः॥ ११
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः।
रूढ़ानामपि रूक्षत्वं निमित्तेऽल्पेऽतिकोपनम्॥ १२
रोमहर्षोऽस्रजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्।
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु॥ १३
विस्तृताकृतिपर्य्यन्तं दूषितैर्लोमभिश्चितम्।
कापालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम्॥ १४
उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत्।
वर्त्तुलं बहुलक्लेद-युक्तं दाहरुजाधिकम्॥ १५
असंच्छन्नमदरणं क्रमिवत् स्यादुडुम्बरम्॥ १६
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तं मलान्वितम्।
अन्योन्यसक्तमुच्छूण-बहुकण्डुस्रुतिक्रमि।
श्लक्ष्णपीताभसंयुक्तं मण्डलं परिकीर्त्तितम्॥ १७
सकण्डूपीड़का श्यावा सक्लेदा च विचर्च्चिका।
परुषं तत्र रक्तान्तमन्तःश्यामं समुन्नतम्॥ १८
ऋष्यजिह्वाकृति प्रोक्तं ऋष्यजिह्वं बहुक्रिमि।
हस्तिचर्म्मखरस्पर्शं चर्म्माख्यं कुष्ठमुच्यते॥ १९
अस्वेदञ्च मत्स्यशल्कसन्निभं किटिमं पुनः।
रूक्षाग्निवर्णं दुःस्पर्शं कण्डूमत् परुषासितम्॥ २०
अन्तारूक्षं वहिःस्निग्धमन्तघृष्टं रजः किरेत्।
श्लक्ष्णास्पर्शं तनु सिध्मं स्वच्छमस्वेदपुष्पवत्॥ २१
प्रायेण चोर्द्धकायश्च कुण्डैः कण्डूपरैश्चितम्।
रक्तैरलंशुका पाणिपादे कुर्य्याद्विपादिका॥ २२
तीव्रार्त्तिगाढ़कण्डूञ्च सरागपीड़काचितम्।
दीर्घप्रतानदूर्व्वावदतसीकुसुमच्छवि॥ २३
उच्छूनमण्डलो दद्रुः कण्डूमानिति कथ्यते।
स्थूलमूलं सदाहार्त्तिं रक्तस्रावं बहुव्रणम्॥ २४
सदाहकक्लेदरुजं प्रायशः सर्व्वजन्म च।
रक्तात्तमण्डलं पाण्डु कण्डूदाहरुजान्वितम्॥ २५
सोत्सेधमाचितं रक्तैः पर्णपत्रमिवाम्बुभिः।
पुण्डरीकं भवेत् तद्धि चितं स्फोटैः सितारुणैः॥ २६
विस्फोटपिटका पामा कण्डूक्लेदरुजान्विता।
सूक्ष्मा श्यामारुणारूक्षा प्रायःस्फिक्पाणिकूर्परे॥ २७
सस्फोटसंस्पर्शसहं कण्डूरक्तातिदाहवत्।
रक्तादलं चर्म्मदलं काकणं तीव्रदाहरुक्॥ २८
पूर्व्वरक्तञ्च कृष्णञ्च काकणं त्रिफलोपमम्।
कुष्ठलिङ्गैर्युतैः सर्व्वैः स्वस्वकारणतो भवेत्॥ २९
दोषभेदाय विहितैरादिशेल्लिङ्गकर्म्मभिः।
कुष्ठं स्वदोषानुगतं सर्व्वदोषगतं त्यजेत्॥ ३०

कुष्ठोक्तं यच्च यच्चास्थि-मज्ज-शुक्र-समाश्रयम् ।
कृच्छ्रं मेदोगतञ्चैव याप्यं साध्यास्थिमांसगम् ॥ ३१
अकृच्छ्रं कफवातोत्थं त्वग्गतन्त्वमलञ्च यत् ।
तत्र त्वचि स्थिते कुष्ठे कार्य्ये वैवर्ण्यरूक्षता ॥ ३२
स्वेद-ताप-श्वयथवः शोणिते पिशिते पुनः ।
पाणिपादाश्रिताः स्फोटाः क्लेशात् सन्धिषु चाधिकम् ३३
दोषस्याभीक्ष्णयोगेन दलनं स्याच्च मेदसि ।
नासाभङ्गश्च मज्जास्थि-नेत्रवेग-स्वरक्षयः ॥ ३४
क्षते च क्रिमिभिः शुक्रे स्वदारापत्यवाधनम् ।
यथा पूर्व्वाणि सर्व्वाणि स्वलिङ्गानि मृगादिषु ॥ ३५
कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत् ।
निर्द्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥ ३६
वाताद्रुक्षारुणं पित्तात् ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ३७
सकण्डूरं क्रमाद्रक्त-मांस-मेदःसु चादिशेत् ।
वर्णे नैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३८
अशुक्लरोमबहुलमसंश्लिष्टमिथो नवम् ।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ ३९
गुह्य-पाणितलौष्ठेषु जातमप्यचिरन्तनम् ।
वर्ज्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥ ४०
स्पर्शकाहारसङ्गादि-सेवनात् प्रायशो गदाः ।
एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात् ॥ ४१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
कुष्ठरोगनिदानं नामाष्टषष्ठ्यधिक-
शततमोऽध्यायः ॥ १६८ ॥

---

## एकोनसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

क्रिमयश्च द्विधा प्रोक्ता वाह्याभ्यन्तरभेदतः ।
वहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ॥ १
नामतो विंशतिविधा वाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थान-वर्णाः केशाम्बराश्रयाः ॥ २
बहुपादाश्च सूक्ष्माश्च यूकालिक्षाश्च नामतः ।
द्विधा ते कोठपीड़काः कण्डूगण्डान् प्रकुर्व्वते ॥ ३
कुष्ठैकहेतवोऽन्तर्ज्जाः श्लेष्मजा वाह्यसम्भवाः ।
मधुरान्न-गुड़-क्षीर-दधि-मत्स्य-नवौदनैः ॥ ४
कफादामाशये जाता वृद्धाः सर्पन्ति सर्व्वतः ।
पृथुब्रध्ननिभाः केचित् केचिद्गण्डूपदोपमाः ॥ ५
रूढ़धान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥ ६
अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ।
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्व्वते ॥ ७
हृल्लासमास्यस्रवणमविपाकमरोचकम् ।
मूर्च्छाच्छर्द्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ८
रक्तवाहिशिरास्थान-रक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ॥ ९
केशादा रोमविध्वंसा रोमद्वीपा उडुम्बराः ।
षट् ते कुष्ठैककर्म्माणः सहसौरसमातरः ॥ १०
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥ ११
तदास्योद्गारनिःश्वास-विड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ १२
ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ।
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति हि ॥ १३
विड्भेद-शूल-विष्टम्भ-कार्श्य-पारुष्य-पाण्डुताः ।
रोमहर्षाग्निसदनं गुदकण्डूर्विमार्गगाः ॥ १४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
क्रिमिनिदानं नामैकोनसप्तत्यधिक-
शततमोऽध्यायः ॥ १६९ ॥

---

## सप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

वातव्याधिनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ।
सर्व्वथानर्थकथने विघ्न एव च कारणम् ॥ १
अदृष्टदुष्टपवन-शरीरमविशेषतः ।
स विश्वकर्म्मा विश्वात्मा विश्वरूपः प्रजापतिः ।
स्रष्टा धाता विभुर्विष्णुः संहर्त्ता मृत्युरन्तकः ।
तद्वदुक्तञ्च यत्नेन यतितव्यमतः सदा ॥ ३
तस्योक्ते दोषविज्ञाने कर्म्म प्राकृत-वैकृतम् ।
समास-व्यासतो दोषभेदानामवधाय च ॥ ४

प्रत्येकं पञ्चधा वीरो व्यापारस्तेह वैकृतः ।
तस्योच्यते विभागेन सनिदानं सलक्षणम् ॥ ५
धातुक्षयकरैर्वायुः क्रुद्धो नातिनिषेव्यते ।
चतुःस्रोतोऽवकाशेषु भूयस्तान्येव पूरयेत् ॥ ६
तेभ्यस्तु दोषपूर्णेभ्यः प्रच्छाद्य विवरं ततः ।
तत्र वायुः सकृत् क्रुद्धः शूलानाहान्त्रकूजनम् ॥ ७
मलरोधं स्वरभ्रंशं दृष्टिपृष्ठकटिग्रहम् ।
करोत्येव पुनः काये कृच्छ्रानन्यानुपद्रवान् ॥ ८
आमाशयोत्थो वमथु-श्वास-कास-विसूचिकाः ।
कण्ठोपरोधवम्मादि-व्याधीनूर्द्ध्वञ्च नाभितः ॥ ९
श्रोत्रादिष्विन्द्रियाबाधं त्वचि स्फोटनरूक्षता ।
चक्रे तीव्ररुजाश्वास-गरामयविवर्णताः ॥ १०
अन्त्रस्यान्तश्च विष्टम्भमरुचिं कृशतां भ्रमम् ।
मांस-मेदोगतग्रन्थिं चर्म्मादावुपकर्कशम् ॥ ११
गुर्व्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ।
अस्थिस्थः सक्थिमन्यास्थिशूलं तीव्रञ्च लक्षयेत् ॥ १२
मज्जस्थोऽस्थिष्वसोः स्थैर्य्यमस्वप्नं यत् तदा रुजाम् ।
शुक्रस्य शीघ्रमुत्सङ्ग-सर्गान् विकृतिमेव वा ॥ १३
तत्तद्गर्भस्थशुक्रस्थः शिराश्वाश्वानविट्कताम् ।
तत्र स्थानस्थितः कुर्य्यात् क्रुद्धः श्वयथुकृच्छ्रताम् ॥ १४
जलपूर्णदृतिस्पर्शं शोषं सन्धिगतोऽनिलः ।
सर्व्वाङ्गसंश्रयस्तोद-भेद-स्फुरण-भञ्जनम् ॥ १५
स्तम्भनाक्षेपणं स्वप्नः सन्धिभञ्जन-कम्पनम् ।
यदा तु धमनीः सर्व्वाः क्रुद्धोऽभ्येति मुहुर्म्मुहुः ।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपणः स्मृतः ॥ १६
अधः प्रतिहतो वायुर्व्रजेदूर्द्ध्वं तदा पुनः ।
तदावष्टभ्य हृदयं शिरःशङ्खौ च पीड़येत् ॥ १७
स क्षिपेत् परितो गात्रं हनुं वा चास्य नामयेत् ।
कृच्छ्रादुच्छ्वसितिस्तस्य निमीलन्नयनद्वयम् ॥ १८
कपोत इव कूजेच्च निःसङ्गः सोपतन्त्रकः ।
स एव वामनासायां युक्तस्तु मरुता हृदि ॥ १९
प्राप्नोति च मुहुः स्वास्थ्यं मुहुरस्वास्थ्यवान् भवेत् ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो मतः ॥ २०
खेदस्तम्भस्तदा तस्य वायुश्छिन्नतनुर्यदा ।
व्याप्नोति सकलं देहं यत्र चायाम्यते पुनः ॥ २१
अन्तर्धातुगतश्चैव वेगस्तम्भञ्च नेत्रयोः ।
करोति जृम्भां सदनं दशनानां हतोद्यमम् ॥ २२
पार्श्वयोर्वेदनां वाह्यां हनु-पृष्ठ-शिरोग्रहम् ।
देहस्य वहिरायामं पृष्ठतो हृदये शिरः ॥ २३
उरश्चोत्क्षिप्यते तत्र स्कन्धो वा नाम्यते तदा ।
दन्तेष्वास्ये च वैवर्ण्यमस्वेदस्तत्र गात्रतः ॥ २४
वाह्यायाम-हनुस्तम्भं ब्रुवते वातरोगिणाम् ।
विण्मूत्रमसृजं प्राप्य ससमीरसमीरणाः ॥ २५
आयच्छन्ति तनोर्दोषाः सर्व्वमापादमस्तकम् ।
तिष्ठतः पाण्डुमात्रस्य व्रणायामः स वर्द्धितः ॥ २६
गात्रे वेगे भवेत् स्वास्थ्यं सर्व्वेष्वाक्षेपणेन तत् ।
जिह्वाविलेखनादुष्ण-भक्षणादतिमानतः ॥ २७
कुपितो हनुमूलस्थः स्तम्भयित्वानिलो हनुम् ।
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुस्तम्भः स तेन स्यात् कृच्छ्राच्चर्व्वण-भाषणम् ॥ २८
वाग्वाहिनीशिरास्तम्भो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्न-पान-वाक्येष्वनीशता ॥ २९
शिरसा भारहरणादतिहास्यप्रभाषणात् ॥ ३०
विषमादुपधानाच्च कठिनानाञ्च चर्व्वणात् ।
वायुर्विवर्द्धते तैश्च वातलैरूर्द्ध्वमास्थितः ॥ ३१
वक्रीकरोति वक्त्रञ्च उच्चैर्हसितमीक्षितम् ।
ततोऽस्य कुरुते मूर्द्धा वाक्शक्तिं स्तब्धनेत्रताम् ॥ ३२
दन्तचालः स्वरभ्रंशः श्रुतिहानीक्षितग्रहौ ।
गन्धाघ्रानं स्मृतिध्वंसस्त्रासः श्वासश्च जायते ॥ ३३
निष्ठीवः पार्श्वतोदश्च एकस्याक्ष्णो निमीलनम् ।
जत्रोरूर्द्ध्वं रुजस्तीव्राः शरीरार्द्धधरोऽपि वा ॥ ३४
तमाहुरर्दितं केचिदेकाङ्गमथ चापरे ।
रक्तमाश्रित्य च शिराः कुर्य्यान्मूर्द्धधराः शिराः ॥ ३५
रूक्षः सवेदनः कृष्णः सोऽसाध्यः स्याच्छिरोग्रहः ।
तनुं गृहीत्वा वायुश्च शिराः स्नायूंस्तथैव च ।
पक्षमन्यतरं हन्ति पक्षाघातः स उच्यते ॥ ३६
कृत्स्नस्य कायस्यार्द्धं स्यादकर्म्मण्यमचेतनम् ।
एकाङ्गरोगतां केचिदन्ये कक्षरुजो विदुः ॥ ३७
सर्व्वाङ्गरोधः स्तम्भश्च सर्व्वकायाश्रितेऽनिले ।
शुद्धवातकृतः पक्षः कृच्छ्रसाध्यतमो मतः ॥ ३८
कृच्छ्रमन्येन संसृष्टो विवृद्धः क्षयहेतुकः ॥ ३९
आमबद्धायनः कुर्य्यात् संस्तभ्याङ्गं कफान्वितः ।

असाध्य एव सर्व्वां हि भवेद्दण्डापतानकः ॥ ४०
असमूलोत्थितो वायुः शिराः सङ्कुच्य तत्रगः ।
बहिःप्रस्पन्दितहरं जनयत्येवबाहुकम् ॥ ४१
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्म्मचयकरी विश्वची वेति सोच्यते ॥ ४२
वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ ४३
कम्पते गमनारम्भे खञ्जन्निव च गच्छति ।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४४
शीतोष्ण-द्रव-संशुष्क-गुरु-स्निग्धैश्च सेवितैः ।
जीर्णाजीर्णे तथायास-क्षोभस्निग्धप्रजागरैः ॥ ४५
सश्लेष्म मेदः समयेऽपरमत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषं शरीरं प्रतिपद्यते ॥ ४६
सक्थ्यस्थीनि प्रपूर्य्यान्तः श्लेष्मणा स्तम्भितेन तत् ।
तदा तन्नाभिमूलोरू शीतायेते तथा ततौ ।
परकीयाविव गुरू स्यातामतिभृशव्ययौ ॥ ४७
श्यामाङ्गमङ्गस्तैमित्य-तन्द्रा-मूर्च्छारुचि-ज्वरैः ।
तमूरुस्तम्भमित्याहु वाह्यवातमथापरे ॥ ४८
वातशोणितसंशोथो जानुमध्ये महारुजः ।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलक्रोष्टुकशीर्षवत् ॥ ४९
रुक्पादविषमन्यस्ते श्रमाद्वा जायते यदा ।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ ५०
पार्ष्णिप्रत्यङ्गुलीनाभौ कण्ठे वा मारुतार्द्दिते ।
सातिक्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५१
हृष्येते चरणौ यस्य भवेताञ्चापि सुप्तकौ ।
पादकर्षः स विज्ञेयः कफ-मारुतकोपजः ॥ ५२
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ।
विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ॥ ५३

इति श्रीगारुड़े पूर्व्वखण्डे वातव्याधिनिदानं
नाम सप्तत्यधिकशततमोऽध्यायः॥१७०॥

---

## एकसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

वातरक्तनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ।
विरुद्धाध्यशन-क्रोध-दिवास्वप्न-प्रजागरैः ॥ १
प्रायशः सुकुमाराणां मिथ्याहारावहारिणाम् ।
स्थूलानां सुखिनाञ्चापि कुप्यते वातशोणितम् ॥ २
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ।
वातलैः शीतलैर्वाथ वृद्धः क्रुद्धो विमार्गगः ॥ ३
तादृशैर्वासृजा रुद्धः प्राक् तदेव प्रदूषयेत् ।
आद्यं वातं गुदं वातं बलासं वातशोणितम् ॥ ४
तदा दुर्नामभिः स्तब्धं पूर्व्वस्याद्दौ प्रधावति ।
विशेषाद्गमनाद्यैश्च प्रलम्बस्तस्य लक्षणम् ॥ ५
भविष्यतः कुष्ठसमं तथा साम्बुदसंज्ञकम् ।
जानु-जङ्घोरु-कट्यंस-हस्त-पादाङ्गसन्धिषु ॥ ६
कण्डूस्फुरण-निस्तोद-भेद-गौरव-सुप्तताः ।
भूत्वा भूत्वा प्रशाम्यन्ति कदा वाविर्भवन्ति च ॥ ७
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोरिव विषं क्रुद्धः कृत्स्नं देहं विधावति ॥ ८
त्वङ्मांसाश्रयमुत्तानं तत्पूर्व्वं जायते ततः ।
कालान्तरेण गम्भीरं सर्व्वधातूनभिद्रवेत् ॥ ९
कट्यादिसंयतस्थाने त्वक्ताम्रश्यावलोहिताः ।
श्वयथुर्ग्रथितः पाकः स वायुश्चास्थि-मज्जसु ॥ १०
छिन्दन्निव चरत्यन्तश्चक्री कुर्व्वंश्च वेगवान् ।
करोति खञ्जं पङ्गुं वा शरीरं सर्व्वतश्चरन् ॥ ११
वाताधिकेऽधिकं तत्र शूल-स्फुरण-भञ्जनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावता-वृद्धि-हानयः ॥ १२
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषावुपशयौ स्तम्भ-वेपथु-सुप्तयः ॥ १३
रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः समं नैति कुण्डः क्लेदसमन्वितः ॥ १४
पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदस्तृषा ।
स्पर्शासहत्वं रुग्रावः शोषः पाको भृशोष्मता ॥ १५
कफे स्तैमित्य-गुरुता-सुप्ति-स्निग्धत्व-शीतताः ।
कण्डूमन्दा च रुग्द्वन्द्वसर्व्वलिङ्गञ्च सङ्करात् ॥ १६
एकदोषञ्च संसाध्यं याप्यञ्चैव द्विदोषजम् ।
त्रिदोषजं त्यजेदाशु रक्तपित्तं सुदारुणम् ॥ १७
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः ।
निविश्यान्योन्यमावार्य्य वेदनाभिर्हरत्यसून् ॥ १८
वायौ पञ्चात्मके प्राणे रौक्ष्याच्चापल्य-लङ्घनैः ।
अत्याहाराभिघाताच्च वेगोदीरण-धारणैः ॥ १९

प्रकल्पयेत्।
कुपितश्चक्षुरादीनामुपघातं प्रकल्पयेत्।
पीनसो दाह-तृट्-कास-श्वासादिश्चैव जायते ॥ २०
कण्ठरोधो मलभ्रंश-च्छर्द्यरोचक-पीनसान्।
कुर्य्याच्च गलगण्डादींस्तान् जत्रूर्द्धसंश्रयः ॥ २१
व्यानोऽतिगमन-स्नान-क्रीड़ा-विषयचेष्टितैः।
विरुद्ध-रूक्ष-भी-हर्ष-विषादाद्यैश्च दूषितः ॥ २२
पुंस्त्वोत्साह-बलभ्रंश-शोक-चित्तप्लव-ज्वरान्।
सर्व्वांकारादि-निस्तोद-रोमहर्षं सुषुप्तताम् ॥ २३
कुष्ठं वीसर्पमन्यच्च कुर्य्यात् सर्व्वाङ्गसादनम्।
समानो विषमाजीर्ण-शीतसङ्कीर्णभोजनैः ॥ २४
करोत्यकालशयन-जागराद्यैश्च दूषितः।
शूलगुल्मग्रहण्यादीन् यकृत् कामाश्रयान् गदान्॥२५
अपानो रूक्षगुर्व्वन्न-वेगाघातातिवाहनैः।
यान-पान-समुत्थान-चंक्रमैश्चातिसेवितैः ॥ २६
कुपितः कुरुते वेगान् कृच्छ्रान् पक्वाशयाश्रयान्।
मूत्र-शुक्रप्रदोषार्शो-गुदभ्रंशादिकान् बहून् ॥ २७
सर्व्वाङ्गमाततं सामस्तन्द्रास्तैमित्यगौरवैः।
स्निग्धत्वाद्बोधकालस्य शैत्यशोथाग्निहानयः ॥ २८
कण्डूरूक्षातिनाशेन तद्विधोपशमेन च।
मुक्तिं विद्यान्निरामं तं तन्द्रादीनां विपर्य्ययात् ॥२९
वायोरावरणं वातो बहुभेदं प्रचक्षते।
पित्तलिङ्गावृते दाहस्तृष्णा शूलं भ्रमस्तमः।
कटुकोष्णाम्ललवणैर्विदाहः शीतकामता ॥ ३०
शैत्यगौरवशूलाग्नि-कट्वाद्यपयसोऽधिकम्।
लङ्घनायासरूक्षोष्णकामता च कफावृते ॥ ३१
कफावृतेऽङ्गमर्द्दः स्याद्हल्लासो गुरुतारुचिः।
रक्तावृते सदाहार्त्तिस्त्वङ्मांसाश्रयजा भृशम् ॥ ३२
भवेत् सरागः श्वयथुर्जायन्ते मण्डलानि च।
शोथो मांसेन कठिनो हल्लास-पिटकास्तथा ॥ ३३
चललम्नो मृदुः शीतः शोथो गात्रेष्वरोचकः।
आढ्यवात इव ज्ञेयः स कृच्छ्रो मेदसावृतः ॥ ३४
स्पर्श आच्छादितेऽत्युष्णः शीतलश्च त्वगावृते।
मज्जावृते तु विषमं जृम्भणं परिवेष्टनम्।
शूलञ्च पीड्यमाने च पाणिभ्यां लभते सुखम् ॥ ३५
शुक्रावृते तु शोथे वै चातिवेगो न विद्यते।
भुक्ते कुक्षौ रुजा जीर्णे निवृत्तिर्भवति ध्रुवम् ॥ ३६
मूत्रप्रवृत्तिराध्मानं वस्तेर्मूत्रावृते भवेत्।
छिद्रावृते विबन्धोऽथ स्वस्थानं परिकृन्तति ॥ ३७
पतत्याशु ज्वराक्रान्तो भुक्ते च लभते नरः।
सकृत् पीड़ितमन्नन दुष्टं शुक्रं चिरात् सृजेत् ॥ ३८
सर्व्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक्।
विलोमे मारुते चैव हृदयं परिपीड्यते ॥ ३९
भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते।
रुजा तन्द्रा स्वरभ्रंशो दाहो व्याने तु सर्व्वशः ॥ ४०
क्रमोऽङ्गचेष्टाभङ्गश्च सन्तापः सहवेदनः।
समान उष्मोपहतिः सस्वेदोपरतिः सुतृट् ॥ ४१
दाहश्च स्यादपाने तु मले हारिद्रवर्णता।
रजोवृद्धिस्तापनञ्च तथा चानाहमेहनम् ॥ ४२
श्लेष्मणा प्रावृते प्राणे नादः स्रोतोऽवरोधनम्।
ष्ठीवनञ्चैव सस्वेद-श्वासनिश्वाससंग्रहः ॥ ४३
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः।
बलवर्णप्रणाशश्च व्याने पर्व्वास्थिसंग्रहः ॥ ४४
गुरुताङ्गेषु सर्व्वेषु स्थूलत्वञ्चागतं भृशम्।
समानेऽतिक्रियाश्चलमस्वेदो मन्दवह्निता ॥ ४५
अपाने सकफं मूत्रं शकृतः स्यात् प्रवर्त्तनम्।
इति द्वाविंशतिविधं वातरक्तामयं विदुः ॥ ४६
प्राणादयस्तथान्योन्यं समाक्रान्ता यथाक्रमम्।
सर्व्वेऽपि विंशतिविधं विद्यादावरणञ्च यत् ॥ ४७
हल्लासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः।
हृद्रोगो मुखशोषश्च प्राणेनापान आवृते ॥ ४८
उदानेनावृते प्राणे भवेद्धि बलसंक्षयः।
विचारणेन विभजेत् सर्व्वमावरणं भिषक् ॥ ४९
स्थानान्यपेक्ष्य वातानां वृद्धिहानिश्च कर्म्मणाम्।
प्राणादीनाञ्च पञ्चानां पित्तमावरणं मिथः ॥ ५०
पित्तादीनामावसतिर्मिश्राणां मिश्रितैश्च तैः।
मिश्रैः पित्तादिभिस्तद्वन्मिश्राण्यपि त्वनेकधा ॥ ५१
तान् लक्षयेदवहितो यथा स्वलक्षणोदयात्।
शनैः शनैश्चोपशयं दृढ़ानपि मुहुर्मुहुः ॥ ५२
विशेषाज्जीवितं प्राण उदानो बलमुच्यते।
स्यात् तयोः पीड़नाद्धानिरायुषश्च बलस्य च ॥ ५३
आवृता वायवोऽज्ञाता ज्ञाताः स्वस्थानविच्युताः।
प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपद्रवाः ॥ ५४

विद्रधि-प्लीह-हृद्रोग-गुल्माग्निसदनादयः ।
भवन्त्युपद्रवास्तेषां मारुतानामुपेक्षया ॥ ५५
निदानं सुश्रुत मया आत्रेयोक्तं समीरितम् ।
सर्व्वरोगविवेकाय नराद्यायुःप्रवृद्धये ॥ ५६
एवं विज्ञाय रोगादींश्चिकित्सामथवा चरेत् ।
त्रिफला सर्व्वरोगघ्नी मध्वाज्यगुड़संयुता ॥ ५७
सव्योषा त्रिफला वापि सर्व्वरोगप्रमर्द्दिनी ।
शतावरीगुडूच्यग्निविड़ङ्गेन युताथवा ॥ ५८
शतावरी गुडूच्यग्नि शुण्ठी मुषलिका बला ।
पुनर्नवा च वृहती निर्गुण्डी निम्बपत्रकम् ॥ ५९
भृङ्गराजश्यामलकं वासकस्तद्रसेन वा ।
भाविता त्रिफला सप्तवारमेकमथापि वा ॥ ६०
पूर्व्वोक्ताश्च यथालाभं युक्ताश्चूर्णाश्च मोदकः ।
वटिका घृततैलं वा कषायो शोषरोगनुत् ।
पलं पलार्द्धकं वापि कर्षं कर्षार्द्धमेव वा ॥ ६१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे निदानस्थानं नामैकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

## द्विसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

सर्व्वरोगहरं सिद्धं योगसारं वदाम्यहम् ।
शृणु सुश्रुत संक्षेपात् प्राणिनां जीवहेतवे ॥ १
कषायकटुतिक्ताम्ल-रूक्षाहारादभोजनात् ।
चिन्ताव्यवायव्यायाम-भयशोकप्रजागरात् ॥ २
उच्चैर्भाषातिभाराच्च कर्म्मयोगातिकर्षणात् ।
वायुः कुप्यति पर्ज्जन्ये जीर्णान्ने दिनसंचये ॥ ३
उष्णाम्ल-लवण-क्षार-कटुकाजीर्णभोजनात् ।
तीक्ष्णातपाग्निसन्ताप-मद्यक्रोधनिषेवणात् ॥ ४
विदाहकाले भुक्तस्य मध्याह्ने जलदात्यये ।
ग्रीष्मकालेऽर्द्धरात्रेऽपि पित्तं कुप्यति देहिनः ॥ ५
स्वाद्वम्ललवणस्निग्ध-गुरुशीतातिभोजनात् ।
नवान्नपिच्छिलानूप-मांसादिसेवनादपि ॥ ६
अव्यायामदिवास्वप्न-शय्यासनसुखादिभिः ।
कफः प्रदोषे भुक्ते च वसन्ते च प्रकुप्यति ॥ ७
पारुष्यमूलसङ्कोच-तोदविष्टम्भकादयः ।
खरत्वं सुप्तता रोमहर्षस्तम्भनशोषणम् ॥ ८
श्यावत्वमङ्गविश्लेष-बलमायासवर्द्धनम् ।
वायोर्लिङ्गानि तैर्युक्तं रोगं वातात्मकं वदेत् ॥ ९
दाहोषपादसंक्लेद-कोपरागपरिस्रवाः ।
कट्वम्लगववैगन्ध्य-खेदमूर्च्छातितृड्भ्रमाः ।
हारिद्रं हरितत्वञ्च पित्तलिङ्गानि तैर्नरः ॥ १०
स्निग्धत्वं देहमाधुर्य्य-चिरकारित्वबन्धनम् ।
स्तैमित्यतृप्तिसङ्घात-शोथशीतत्वगौरवम् ॥ ११
कण्डूनिद्राभियोगश्च लक्षणं कफसम्भवम् ।
हेतुलक्षणसंसर्गाद्द्वियाद्व्याधिं द्विदोषजम् ॥ १२
सर्व्वहेतुसमुत्पन्नं त्रिलिङ्गं सान्निपातिकम् ।
दोषधातुमलाधारो देहिनां देह उच्यते ॥ १३
तेषां समत्वमारोग्यं क्षयवृद्धी विपर्य्ययः ।
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ॥ १४
वातपित्तकफा दोषा विण्मूत्राद्या मलाः स्मृताः ।
वायुः शीतो लघुः सूक्ष्मः खरो रूक्षोऽस्थिरो बली ।
पित्तमम्लकटूष्णञ्च पत्त्योजोरोगकारणम् ।
मधुरो लवणः स्निग्धो गुरुः श्लेष्मातिपिच्छिलः ॥
गुदश्रोण्याश्रयो वायुः पित्तं पक्वाशयस्थितम् ।
कफस्यामाशयः स्थानं कण्ठो वा मूर्द्धसन्धयः ॥ १७
कटु-तिक्त-कषायाश्च कोपयन्ति समीरणम् ।
कट्वम्ललवणाः पित्तं स्वादूष्णलवणाः कफम् ॥ १८
एत एव विपर्य्यस्ताः शमायैषां प्रयोजिताः ।
भवन्ति रोगिणां शान्त्यै सुस्थानां सुखहेतवः ॥ १९
चक्षुष्यो मधुरो ज्ञेयो रसधातुविवर्द्धनः ।
अम्लोऽतुलो मनोहृद्यस्तथा दीपन-पाचनः ॥ २०
शोधनः पाचनः क्लेदी लवणः शिथिलः सहृद् ।
स्थौल्यालस्यविषघ्नश्च कटुर्दीपन-पाचनः ॥ २१
दीपनो ज्वरतृष्णाघ्नस्तिक्तः शोधनरोचनः ।
पित्तलो लेखनः स्तम्भी कषायो ग्राहिशोषणः ॥
रसवीर्य्यविपाकानामाश्रयो द्रव्यमुत्तमम् ।
रसः पाकान्तरस्थायी द्रव्याधारव्यपाश्रयः ॥ २२
शीतोष्णत्वं वीर्य्यमथवा शक्तिरिष्यते ।
रसानां द्विविधः पाको मधुरः कटुरेव च ॥ २४
भिषग्भेषजरोगार्त्त-परिचारकसम्पदः ।

चिकित्साङ्गानि चत्वारि विपरीतान्यसिद्धये ॥ २५
देश-काल-वयो-वह्नि-सात्म्य-प्रकृति-भेषजम् ।
देहसत्त्वबलव्याधीन् बुद्धा कर्म्म समारभेत् ॥ २६
बह्वदकनगो रूपः कफमारुतवेगवान् ।
जाङ्गलोत्तरशाखी च रक्तपित्तप्रवर्त्तकः ॥ २७
संसृष्टलक्षणोपेतो देशः साधारणः स्मृतः ।
बाल आ षोड़शान्मध्यः सप्ततेर्वृद्ध इत्यतः ॥ २८
कफपित्तानिलाः प्रायो यथाक्रममुदीरिताः ।
क्षाराग्निशस्त्ररहिता बालप्रवयसोः क्रियाः ॥ २९
कृशस्य बृंहणं कार्य्यं स्थूलदेहस्य कर्शनम् ।
रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः ॥ ३०
स्थैर्य्यव्यायामसन्तोषैर्बोद्धव्यं यत्नतो बलम् ।
अविकारी महोत्साहो महासाहसिको नरः ॥ ३१
पानाहारादयो यस्य विरुद्धाः प्रकृतेरपि ।
सुखत्वायोपकल्पन्ते तत् सात्म्यमिति कथ्यते ॥ ३२
गर्भिण्याः श्लेष्मलैर्भक्ष्यैः श्लैष्मिको जायते नरः ।
वातलैः पित्तलैस्तद्वत् समधातुर्हिताशनात् ॥ ३३
कृशो रूक्षोऽल्पकेशश्च चलचित्तो नरः स्थितः ।
बहुवाक्यरतः स्वप्ने वातप्रकृतिको नरः ॥ ३४
अकालपलितो गौरः प्रस्वेदी कोपनो बुधः ।
स्वप्नेऽपि दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते ॥ ३५
स्थिरचित्तः स्वरः सूक्ष्मः प्रसन्नः स्निग्धमूर्द्धजः ।
स्वप्ने जलशिलालोकी श्लेष्मप्रकृतिको नरः ॥ ३६
संमिश्रलक्षणैर्ज्ञेया द्वित्रिदोषान्वया नराः ।
दोषस्येतरसद्भावेऽप्यधिकप्रकृतिः स्मृतः ॥ ३७
मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः॥३८
समस्य पालनं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ ३९
प्रभवः सर्व्वरोगाणामजीर्णञ्चाग्निनाशनम् ।
आमाम्लरसविष्टब्ध-लक्षणं तच्चतुर्विधम् ॥ ४०
आमाद्विसूचिका-क्लेद-हृल्लासालस्यकादयः ।
वचालवणतोयेन च्छर्द्दनं तत्र कारयेत् ॥ ४१
शुक्राभावो भ्रमो मूर्च्छा तर्षोऽम्लात् सम्प्रवर्त्तते ।
अपक्वं तत्र शीताम्बुपानं वातनिषेवणम् ॥ ४२
गात्रभङ्गशिरोजाड्य-भक्तद्वेषादयो रसात् ।
तस्मिन् स्वापो दिवा कार्य्यो लङ्घनं वारिवर्ज्जनम् ॥४३
शूलान्नग्रन्थिविण्मूत्र-स्तम्भा विष्टम्भसूचकाः ।
विधेयं स्वेदनं तत्र पानीयं लवणोदकम् ॥ ४४
आममम्लञ्च विष्टब्धं कफपित्तानिलैः क्रमात् ।
आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ॥ ४५
दिवास्वप्नं प्रकुर्व्वीत सर्व्वाजीर्णविनाशनम् ।
अहितान्ने रोगराशिरहितान्नं ततस्त्यजेत् ॥ ४६
उष्णाम्बु वानुपानञ्च माहिकैः पाचनं भवेत् ।
करीरदधिमत्स्यैश्च प्रायः क्षीरं विरुध्यते ॥ ४७
विल्व-श्योणाक-गाम्भारी-पाटला-गणिकारिकाः ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥ ४८
शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥ ४९
उभयं दशमूलं स्यात् सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥ ५०
एतैस्तैलानि सर्पींषि प्रलेपान्यलकां जयेत् ।
क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ॥ ५१
स्नेहञ्च तत्समं क्षीरं कल्कश्च स्नेहपादकः ।
संवर्त्तितौषधः पाको वस्तौ पाने भवेत् समः ।
खरोऽभ्यङ्गे मृदुर्नस्ये सामान्येयं प्रकल्पना ॥ ५२
स्थूलदेहेन्द्रियाश्चिन्त्या प्रकृतिर्या त्वधिष्ठिता ।
आरोग्यमिति तं विद्यादायुष्मन्तमुपाचरेत् ॥ ५३
यो गृह्णातीन्द्रियैरर्थान् विपरीतान् स मृत्युभाक् ।
भिषग्द्विजगुरुद्वेषी प्रियारातिश्च यो भवेत् ॥ ५४
गुल्फजानुललाटञ्च हनुर्गण्डस्तथैव च ।
भ्रष्टं स्थानच्युतं यस्य स जह्यात्यचिरादसून् ॥ ५५
वामाक्षिमज्जनं जिह्वा श्यामा नासा विकारिणी ।
कृष्णौ स्थानच्युतौ चोष्ठौ पूत्यास्यं यस्य तं त्यजेत् ५६
इति श्रीगारुड़े पूर्व्वखण्डे वैद्यकशास्त्रे सूत्रस्थानं
नाम द्विसप्तत्यधिकशततमोऽध्यायः ॥१७२॥

---

## त्रिसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।
हिताहितविवेकाय अन्नपानविधिं वदे ।
रक्तशालिस्त्रिदोषघ्नस्तृष्णास्वेदनिवारणः ॥ १

महाशालिः परं वृष्यः कलमः श्लेष्मपित्तहा ।
शीती गुरुस्त्रिदोषघ्नः प्रायशो गौरषष्टिकः ॥ २
श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहृ ।
तद्वत् प्रियङ्गु-नीवार-कोरदोषाः प्रकीर्त्तिताः ॥ ३
बहुवातः सक्तुश्शीतः श्लेष्मपित्तहरो यवः ।
वृष्यः शीती गुरुः स्वादुर्गोधूमो वातनाशनः ॥ ४
कफपित्तास्रजिन्मुद्गः कषायो मधुरो लघुः ।
माषो बहुबलो वृष्यः पित्तश्लेष्मकरो गुरुः ॥ ५
अवृष्यः श्लेष्मपित्तघ्नो राजमाषोऽनिलार्त्तिनुत् ।
कुलत्थः श्वासहिक्काहृत् कफगुल्मानिलापहः ॥ ६
रक्तपित्तज्वरोन्माथी शीती ग्राही सकुष्ठकः ।
गुंश्वासकफपित्तघ्नश्चणको वातलः स्मृतः ॥ ७
मसूरो मधुरः शीतः संग्राही कफपित्तहा ।
कठीनश्चैवमुद्दिष्टः कलायश्चातिवातलः ॥ ८
आढ़की कफपित्तघ्नी शुक्रला कपिकच्छुला ।
अतसी पित्तला ज्ञेया सिद्धार्थः कफवातजित् ॥ ९
सक्षारमधुरस्निग्धो बल्योष्णपित्तकृत् तिलः ।
बलघ्ना रूक्षलाः शीता विविधाः मत्स्यजातयः ॥ १०
चित्रकेङ्गुदिनालीकाः पिप्पलीमधुशिग्रवः ।
चव्याचरणनिर्गुण्डीतर्कारीकाशमर्दकाः ॥ ११
सबिल्वाः कफपित्तघ्नाः क्रिमिघ्ना लघुदीपकाः ।
वर्षाभूमार्करौ वातकफघ्नौ वातनाशनौ ॥ १२
तिक्तः सरः स्यादेरण्डः काकमाची त्रिदोषहृत् ।
लाङ्गेरी कफवातघ्नी सर्षपं सर्व्वदोषदम् ॥ १३
तद्वदेव च कौसुम्भं राजिका वातपित्तला ।
नाड़ीचः कफपित्तघ्नश्चुचुर्मधुरशीतलः ॥ १४
दोषघ्नं पद्मपत्रञ्च त्रिपुटं वातकृत् परम् ।
कालारः सर्व्वदोषघ्नो वास्तूको रोचनः परः ॥ १५
तण्डुलीयो विषहरः पालङ्क्या चोन्द्रिका तथा ।
मूलकं दोषकृच्चामं स्विन्नं वातकफापहम् ॥ १६
सर्व्वदोषहरं हृद्यं कण्ठ्यं तत्पक्वमिष्यते ।
कर्कोटकं सवार्ताकं पटोलं कारवेल्लकम् ॥ १७
कुष्ठ-मेह-ज्वर-श्वास-कास-पित्त-कफापहम् ।
सर्व्वदोषहरं हृद्यं कुष्माण्डं वस्तिशोधनम् ॥ १८
कलिङ्गालाबुनी पित्तनाशिनी वातकारिणी ।
त्रपुषिर्वारुके वातश्लेष्मले पित्तवारणे ॥ १९

वृक्षाम्लं कफवातघ्नं जम्बीरं कफवातनुत् ।
वातघ्नं दाड़िमं ग्राहि नागरङ्गफलं गुरु ॥ २०
कैशरं मातुलुङ्गञ्च दीपनं कफवातनुत् ।
वातपित्तहरं माषं लकुस्निग्धोष्णानिलापहम् ॥ २१
सर्व्वमामलकं वृष्यं मधुरं हृद्यमम्लकृत् ।
भक्तप्ररोचका पुथ्या हरीतक्यमृतोपमा ॥ २२
स्रंसनी कफवातघ्नी अच्छं तद्वत् त्रिदोषजित् ।
वातश्लेष्महरन्त्वम्लं स्रंसनं तिन्तिड़ीफलम् ॥ २३
दोषलं लकुचं स्वादु वकुलं कफवातजित् ।
गुल्म-वात-कफ-श्वास-कासघ्नं वीजपूरकम् ॥ २४
कपित्थं ग्राहि दोषघ्नं पक्वं गुरु विषापहम् ।
कफ-पित्तकरं बालमापूर्णं पित्तवर्द्धनम् ॥ २५
पक्वाम्रं वातहृन्मांस-शुक्र-वर्ण-बलप्रदम् ।
वातलं कफ-पित्तघ्नं ग्राहि विष्टम्भि जाम्बवम् ॥ २६
तिन्दुकं कफ-वातघ्नं बदरं वात-पित्तहृत् ।
विष्टम्भि वातलं बिल्वं पियालं पवनापहम् ॥ २७
तालं राजादनं मोचं पानसं नारिकेलजम् ।
शुक्र-मांसकराण्याहुः स्वादु-स्निग्ध-गुरूणि च ॥ २८
द्राक्षामधूकखर्ज्जूरं कुङ्कुमं वातरक्तजित् ।
मागधी मधुरा पक्वा श्वास-पित्तहरा सरा ॥ २९
आर्द्रकं रोचकं वृष्यं दीपनं कफ-वातहृत् ।
शुण्ठी-मरीच-पिप्पल्यः कफ-वातजितो मताः ॥ ३०
अवृष्यं मरिचं विद्यादितरे वृष्यसम्मते ।
गुल्म-शूल-विबन्धघ्नं हिङ्गु वात-कफापहम् ॥ ३१
यमानीधन्यकाजाज्यो वात-श्लेष्मनुदः परम् ।
चक्षुष्यं सैन्धवं वृष्यं त्रिदोषशमनं स्मृतम् ॥ ३२
सौवर्च्चलं विबन्धघ्नमुष्णां हृच्छूलनाशनम् ।
उष्णं शूलहरं तीक्ष्णं विड़ं वातानुलोमनम् ॥ ३३
रोमकं वातनुत् तस्माद्रोचनं क्लेदनं गुरु ।
हृत्पाण्डुगलरोगघ्नो यवक्षारोऽग्निदीपनः ॥ ३४
दहनो दीपनस्तीक्ष्णः सर्ज्जिक्षारो विदारणः ।
दोषघ्नं नाभसं वारि लघु हृद्यं विषापहम् ॥ ३५
नादेयं वातलं रूक्षं सारसं मधुरं लघु ।
वातश्लेष्महरं वाप्यं ताड़ागं वातलं स्मृतम् ॥ ३६
रौच्यमग्निकरं रूक्षं कफघ्नं लघु नैर्झरम् ।
दीपनं पित्तलं कौपमौद्भिदं पित्तनाशनम् ॥ ३७

दिवार्क्ककिरणैर्जुष्टं रात्रौ चैवेन्दुरश्मिभिः ।
सर्व्वदोषविनिर्म्मुक्तं तत् तुल्यं गगनाम्बुना ॥ ३८
उष्णं वारि ज्वर-श्वास-मेदोऽनिल-कफापहम् ।
शृतशीतं त्रिदोषघ्नमुषितं तच्च दोषलम् ॥ ३९
गोक्षीरं वात-पित्तघ्नं स्निग्धं गुरु रसायनम् ।
गव्याद्गुरुतरं स्निग्धं माहिषं वह्निनाशनम् ॥ ४०
छागं रक्तातिसारघ्नं कास-श्वास-कफापहम् ।
चक्षुष्यं जीवनं स्त्रीणां रक्तपित्ते च लावणम् ॥ ४१
बल्यं वातहरं वृष्यं पित्त-श्लेष्मकरं दधि ।
दोषघ्नं मथ्यजातन्तु मस्तु स्रोतोविशोधनम् ॥ ४२
ग्रहण्यर्शोऽर्द्दितार्त्तिघ्नं नवनीतं नवोद्धृतम् ।
विकाराश्च किलाटाद्या गुरवः कुष्ठहेतवः ॥ ४३
गर-ग्रहणी-शोथार्शः-पाण्डुतीसारगुल्मनुत् ।
त्रिदोषशमनं तक्रमुदतश्लेष्मादिशित् ॥ ४४
वृष्यञ्च मधुरं सर्पिर्वातपित्तकफापहम् ।
गव्यं मेध्यञ्च चक्षुष्यं संस्काराच्च त्रिदोषजित् ॥ ४५
अपस्मारगदोन्माद-मूर्च्छाघ्नमनवं घृतम् ।
अजादीनाञ्च सर्पींषि विद्यात् स्वक्षीरसद्गुणैः ।
कफ-वातहरं मूत्र-सर्व्वक्रिमिविषापहम् ॥ ४६
पाण्डूदर-कुष्ठार्शः-शोथ-गुल्म-प्रमेहनुत् ।
वात-श्लेष्महरं बल्यं तैलं केश्यं तिलोद्भवम् ॥ ४७
सार्षपं क्रिमि-पाण्डुघ्नं कफमेदोऽनिलापहम् ।
क्षौमं तैलमचक्षुष्यं पित्तकृद्वातनाशनम् ॥ ४८
मधुजं कफ-पित्तघ्नं केश्यं लक्ष्म्योवतर्पणम् ।
त्रिदोषघ्नं मधु प्रोक्तं वातलञ्च प्रकीर्त्तितम् ॥ ४९
हिक्का-श्वास-क्रिमि-च्छर्द्दि-मेह-तृष्णा-विषापहम् ।
इक्षवो रक्त-पित्तघ्ना बल्या वृष्याः कफप्रदाः ॥ ५०
फाणितं पित्तलं तीव्रं सिता मत्स्यण्डिका लघुः ।
खण्डं वृष्यं तथा स्निग्धं स्वादसृक्पित्तवातजित् ॥५१
वात-पित्तहरो वृष्यो वातघ्नः कफकृद्गुडः ।
स पित्तघ्नः परः पथ्यः पुराणोऽसृक्प्रसादनः ॥ ५२
रक्तपित्तहरा वृष्या सस्नेहा गुड़शर्करा ।
सर्व्वं पित्तकरं मद्यमम्ललात् कफ-वातजित् ॥ ५३
रक्त-पित्तकरास्तीक्ष्णास्तथा सौवीरजातयः ।
पाचनो दीपनः पथ्यो मण्डः स्याद्भृष्टतण्डुलः ॥ ५४
वातानुलोमनी लघ्वी पेया वस्तिविशोधनी ।
सतक्रादाड़िमव्योषा सगुड़ामलपिप्पली ॥ ५५
हन्तीयं सुकृता पेया कास-श्वासप्रवाहिकाः ।
पायसः कफकृद्बल्यः कृसरा वातनाशिनी ॥ ५६
सुधौतः प्रसृतः स्विन्नः सुखोष्णो लघुरोचनः ।
कन्द-मूल-फलस्नेहैः साधितो वृंहणो गुरुः ॥ ५७
ईषदुष्णसैन्धवनाच्च लघुः सूपः सुसाधितः ।
स्विन्नं निष्पीड़ितं शाकं हितं स्नेहादिसंस्कृतम् ॥५८
दाड़िमामलकैर्यूषो वह्निकृद्वातपित्तहा ।
श्वास-कास-प्रतिश्याय-कफघ्नो मूलकैः कृतः ॥ ५९
यव-कोल-कुलत्थानां यूषः कण्ठ्योऽनिलापहः ।
मुद्गामलकजो ग्राही श्लेष्मपित्तविनाशनः ॥ ६०
सगुड़ं दधि वातघ्नं शक्तवो रूक्षवातलाः ।
घृतपूर्णोऽग्निकारी स्याद्वृष्या गुर्व्वी च शष्कुली ॥ ६१
वृंहणाः सामिषा भक्ष्याः पिष्टका गुरवः स्मृताः ।
तैलकृताश्च दृष्टिघ्नास्तोयस्विन्नाश्च दुर्जराः ॥ ६२
अत्युष्णा मण्डकाः पथ्याः शीतला गुरवो मताः ॥६३
अनुपानञ्च पानीयं श्रमतृष्णादिनाशनम् ।
अनुपानादिरहाकृत् स्याद्विषाद्रोगवर्ज्जितः ॥ ६४
अनुष्णः शिखिकण्ठाभो विषस्यैव विवर्णकृत् ।
गन्धस्पर्शरसस्तीव्रा भोक्तुश्च स्यान्मनोव्यथा ॥ ६५
आघ्राणे चाक्षिरोगः स्यादसाध्यश्च भिषग्वरैः ।
वेपथुर्जृम्भणाद्यं स्याद्विषस्यैतत् तु लक्षणम् ॥ ६६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे अनुपानादिविधिकथनं नाम त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

## चतुःसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

ज्वरोऽष्टधा पृथग्द्वन्द्वसङ्घातागन्तुजः स्मृतः ।
मुस्तपर्पटकोशीर-चन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १
नागरं देवकाष्ठञ्च धन्याकं वृहतीद्वयम् ।
दद्यात् पाचनकं पूर्व्वं ज्वरिताय ज्वरापहम् ॥ २
आरग्वधाभया-मुस्ता-तिक्ता-ग्रन्थिकनिर्म्मितः ।
कषायः पाचनं सामे शूले च ज्वरे हितः ॥ ३

अधूकसार-सिन्धूत्थ-वचोषण-कणाः समाः ।
अच्छं पिष्टाश्मसा नस्यं कुर्यात् संज्ञाप्रबोधनम् ॥ ४
त्रिवृद्विशाला-त्रिफला-कटुकारग्वधैः कृतः ।
सक्षारो भेदनं क्वाथः पेयः सर्व्वज्वरापहः ॥ ५
महौषधामृता-मुस्त-चन्दनोशीर-धान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥ ६
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः ।
बद्धा वारे रवेर्नूनं ज्वरं हन्ति तृतीयकम् ॥ ७
गङ्गाया उत्तरे कूले अपुत्त्रस्तापसो मृतः ।
तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः ॥ ८
गुडूच्याः क्वाथ-कल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ ९
धात्री-शिवा-कणा-वह्निक्वाथः सर्व्वज्वरान्तकः ।
ज्वरातीसारहरणमौषधं प्रवदाम्यथ ॥ १०
पृश्निपर्णी-बला-विल्व-नागरोत्पल-धान्यकैः ।
पाठेन्द्रयव-भूनिम्ब-मुस्त-पर्पटकाः श्रुताः ।
जयन्त्याममतीसारं सज्वरं समहौषधाः ॥ ११
नागरातिविषा-मुस्त-भूनिम्बामृत-वत्सकैः ।
सर्व्वज्वरहरः क्वाथः सर्व्वातीसारनाशनः ॥ १२
मुस्तपर्पटकोदीच्य-शृङ्गवेरशृतं पयः ।
शालपर्णी पृश्निपर्णी वृहती कण्टकारिका ॥ १३
बलाश्वदंष्ट्राविल्वानि पाठा-नागर-धन्यकम् ।
एतदाहारसंयोगे हितं सर्व्वातिसारिणाम् ॥ १४
विल्वचूताम्थिनिर्य्यूहः खण्डं मध्वतिसारनुत् ।
अतीसारे हिता तद्वत् कुटजत्वक् कषायुता ॥ १५
वत्सकातिविषाविल्व-कणाकन्दकषायकः ।
मधुतश्चामशूलाढ्ये ह्यतीसारे सशोणिते ॥ १६
चिकित्साथ ग्रहण्यास्तु ग्रहणी चाग्निनाशिनी ।
चित्रकक्वाथ-कल्काभ्यां ग्रहणीघ्नं शृतं हविः ।
गुल्म-शोथोदर-प्लीह-शूलार्शोघ्नं प्रदीपनम् ॥ १७
सौवर्च्चलं सैन्धवञ्च विड्मौद्भिदमेव च ।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ॥ १८
भेषजं मस्तु वारान्नि चतुर्णां चार्शसां हरम् ।
विद्धि तच्चार्शसोघ्नन्तु तक्रं नवोद्धृतञ्च यत् ॥ १९
सगुडां पिप्पलीयुक्तामभयां घृतभर्ज्जिताम् ।
त्रिवृद्दन्तीविनाशार्थं भक्षयेदक्षसौषिकाम् ॥ २०

तिलेक्षुरससंयोगश्चार्शः-कुष्ठविनाशनः ।
पञ्चकोलं समरिचं सव्यूषणमथाग्निकृत् ॥ २१
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ २२
फलत्रिकामृता-वासा-तिक्ता-भूनिम्ब-निम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥
त्रिवृता त्रिफलाश्यामा-पिप्पली-शर्करामधु ।
मोदकः सन्निपातान्तो रक्तपित्त-ज्वरापहः ॥ २
वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ २
अटरूषक-मृद्वीका-पथ्याक्वाथः सशर्करः ।
क्षौद्राढ्यः कासन-श्वास-रक्तपित्तनिवर्हणः ॥ २
वासारसः खण्ड-मधुयुतः पीतोऽथ रक्तजित् ।
सल्लकी-बदरी-जम्बू-पियालाम्राज्र्जुनं धवः ।
पीताः क्षीरेण मध्वाद्याः पृथक्शोणितवारणाः ॥
समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम् ।
सिद्धं पीत्वा क्षयक्षीणो निर्व्याधिर्भाति दैववत् ।
हरीतकी-कणा-शुण्ठी-मरिचं गुडसंयुतम् ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ २
कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पले रसे ।
प्रस्थं सिद्धं घृतं स्याच्च कासनुद्वह्निदीपनम् ॥ ३
कृष्णा धात्री सिता शुण्ठी हिक्काघ्नी मधुसंयुता ।
हिक्काश्वासी पिबेद्भार्गीं सविश्वामुष्णवारिणा ।
तैलाक्तं स्वरभेदी वा खादिरं धारयेन्मुखे ।
पथ्यां पिप्पलिसंयुक्तां संयुक्तां नागरेण वा ॥ ३
विडङ्गत्रिफला-विश्वचूर्णं छर्द्दिं जयेन्मधु ।
आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् ॥ ३
छर्द्दिं सर्व्वां प्रणुदति तृष्णाञ्चैवापकर्षति ।
त्रिफला भ्रममूर्च्छाहृत् पयसा मधुनापि वा ॥ ३
पञ्चगव्यं हितं पानादपस्मारग्रहादिनुत् ।
कुष्माण्डकरसो वाज्यं सयष्टीकं तदर्थकृत् ॥ ३
ब्राह्मीरस-वचा-कुष्ठ-शङ्खपुष्पीभिरेव च ।
पुराणं सेव्यमुन्माद-ग्रहापस्मारनुद्घृतम् ॥ ३६
अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणे ।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसाय पुत्त्रकृत् ॥ ३
नीलीमुण्डीरिकाचूर्णं मधु-सर्पिःसमन्वितम् ।

छिन्नाक्वाथं पिवन् हन्ति वातरक्तं सुदुस्तरम् ॥ ३८
सगुड़ाः पञ्च पथ्याश्च कुष्ठवातार्शसादनाः।
गुडूचीस्वरसं कल्कं चूर्णं वा क्वाथमेव वा ॥ ३९
वातरक्तान्तकं कालागुडूचीक्वाथकल्कतः।
घृतं शृतं सदुग्धं स्याद्वातोष्मानिलकुष्ठजित् ॥ ४०
त्रिफलागुग्गुलुर्वात-रक्तमूर्च्छापहारकः।
ऊरुस्तम्भविनाशाय गोमूत्रेण च गुग्गुलुः ॥ ४१
शुण्ठी-गोक्षुरकक्वाथः सामवातार्त्तिशूलनुत्।
दशमूलामृतैरण्ड-रास्नानागरदारुभिः ॥ ४२
क्वाथ एरण्डतैलेन सामं हन्त्यनिलं गुरुम्।
बला-पुनर्नवैरण्ड-वृहतीद्वय-गोक्षुरैः ॥ ४३
सहिङ्गुलवणं पीतं वातशूलविमर्द्दनम् ॥ ४४
त्रिफला-निम्ब-यष्टीक-कटुकारग्वधैः शृतम्।
पाययेन्मधुना मिश्रं दाहशूलोपशान्तये ॥ ४५
त्रिफलायं सयष्टीकं परिणामार्त्तिहृन्मधु।
गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ४६
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः।
गुड़िका गुड़तुल्यास्ता विड्विबन्धगदापहाः ॥ ४७
हरीतकी-यवक्षार-पिप्पली-त्रिवृता तथा।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥ ४८
त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भाविताः।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥ ४९
त्र्यूषण-त्रिफला-धन्य-विड़ङ्ग-चव्य-चित्रकैः।
कल्कीकृतैर्घृतं सिद्धं सक्षारं वातगुल्मनुत् ॥ ५०
मूलं नागबलानीतं सक्षीरं हृदयार्त्तिनुत्।
सौवर्च्चलं तदर्द्धन्तु शिवानाञ्च घृतं पिवेत् ॥ ५१
कणा-पाषाणभेदैला-शिलाजतुकचूर्णकम्।
तण्डुलाम्बुर्गुड़ेनापि मूत्रकृच्छ्रभिजीवति ॥ ५२
अमृता-नागरी-धात्री-वाजिगन्धा-त्रिकण्टकान्।
प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥ ५३
सितातुल्यो यवक्षारः सर्व्वकृच्छ्रनिवारणः।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥ ५४
लवणं त्रिफलाकल्कैमूत्राघातहरं स्मृतम्।
मूत्रे विबद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत् ॥ ५५
क्वाथस्त्र शिग्रमूलोत्थः कवोष्णोऽश्मविपातनः।
सर्व्वमेहहरी धात्र्या रसः क्षौद्रनिशायुतः ॥ ५६
त्रिफला-दारु-दार्व्व्यब्दक्वाथः क्षौद्रेण मेहहा।
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च ॥ ५७
स्थौल्यमिच्छन् परित्यक्तं क्रमेणातिप्रवर्द्धयेत्।
यव-श्यामाकभोजी स्यात् स्थूलो मधुरवारिपः ॥ ५८
उष्णमन्नं समण्डं वा पिवन् कृशतनुर्भवेत्।
सचव्यजीरकं व्योषा हिङ्गुसौवर्च्चलामलाः।
मधुना शक्तवः पीता मेदोघ्नाः सर्व्वदीपनाः ॥ ५९
चतुर्गुणे जले मूत्रैर्द्विगुणे चित्रकोत्पले।
कल्के सिद्धं घृतप्रस्थं सक्षीरं जठरी पिवेत् ॥ ६०
क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम्।
वर्द्धयेत् पयसा सार्द्धं तथैवापानयेत् पुनः ॥ ६१
क्षीरयष्टिकभोजी स्यादेवं कृष्णासहस्रकम्।
वृंहणं स्वर्ग्यमायुष्यं प्लीहोदरविनाशनम् ॥ ६२
पुनर्नवाक्वाथकल्कैः सिद्धं शोथहरं घृतम्।
गवां मूत्रेण संसेव्यं पिप्पलीं वा पयोऽन्विताम्।
गुड़ेन वाभयां तुल्यां विश्वं वा शोथरोगिणा ॥ ६३
तैलमेरण्डजं पीत्वा बलासिद्धं पयोऽन्वितम्।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ ६४
कृष्णोरुवकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥ ६५
निर्गुण्डीमूलनस्येन गण्डमाला विनश्यति।
स्नुहीगम्भीरिकास्वेदो नाशयेदर्व्वुदानि च ॥ ६६
हस्तिकर्णपलाशस्य गलगण्डन्तु लेपतः।
धुस्तूरैरण्ड-निर्गुण्डी-वर्षाभू-शिग्रु-सर्षपैः ॥ ६७
प्रलेपः श्लीपदं हन्ति चिरोत्थमतिदारुणम्।
शोभाञ्जनक-सिन्धूत्थ-हिङ्गु विद्रधिनाशनम् ॥ ६८
शरपुङ्खा मधुयुता स्यात् सर्व्वव्रणरोपणी।
निम्बपत्रस्य वा लेपः सपटुव्रणशोषणः ॥ ६९
त्रिफला खदिरो दार्व्वी न्यग्रोधो व्रणशोधनः।
सद्यःक्षतं व्रणं वैद्यः सशूलं परिषिचयेत् ॥ ७०
यष्टीमधुकयुक्तेन किञ्चिदुष्णेन सर्पिषा।
कुर्व्वागन्तुव्रणान् वैद्यो नाशयेत् संप्रलेपनात् ॥ ७१
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम्।
क्वाथो वंशत्वगैरण्ड-श्वदंष्ट्राणाञ्च समधुः ॥ ७२
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक्।

यव-कोल-कुलत्थानां निःस्नेहेन रसेन वा ॥ ७३
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ।
करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणं क्रिमीन् ॥ ७४
त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
निर्यन्त्रणो विबन्धघ्नो व्रणशोषणशोधनः ॥ ७५
दूर्व्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ।
दार्व्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ७६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे ज्वरादि-
चिकित्साकथनं नाम चतुःसप्तत्यधिक-
शततमोऽध्यायः ॥ १७४ ॥

---

## पञ्चसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

नाड़ीव्रणादिरोगाणां चिकित्सां शृणु सुश्रुत ।
नाड़ीं शस्त्रेण संपाद्य नाड़ीनां व्रणवत् क्रिया ॥ १
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितैः ।
नाड़ीदुष्टव्रणं शूलं भगन्दरमथो जयेत् ॥ २
निर्गुण्डीरसतस्तैलं नाड़ीदुष्टव्रणापहम् ।
हितं पामामयीनान्तु पानाभ्यञ्जननस्यकैः ॥ ३
गुग्गुलु-त्रिफला-कृष्णा-त्रिपञ्चैकांशयोजिता ।
गुड़िका शोफगुल्मार्शो-भगन्दरवतां हिता ॥ ४
शिरावेधे ध्वजमध्ये विशुद्धिस्तपदंशके ।
पाको रच्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ ५
पटोल-निम्ब-गुड़ूची-मरीच (क) क्वाथमापिबेत् ।
सगुग्गलुं सखदिरमुपदंशो विनश्यति ॥ ६
दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।
उपदंशे प्रलेपोऽयं सद्यो रोपयते व्रणम् ॥ ७
त्रिफला-निम्ब-भूनिम्ब-करञ्ज-खदिरादिभिः ।
कल्कैः क्वाथैर्घृतं पक्वमुपदंशहरं परम् ॥ ८
आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना ।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम् ॥ ९
मांसं मांसरसः सर्पिः चीरं यूषः सतीलजः ।
बृंहणञ्चान्नपानं स्याद्देयं भग्नाय जानता ॥ १०
रसोनमधुलाजाम्बु-सिताकल्कसमश्नुताम् ।

छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ ११
अश्वत्थत्रिफलाव्योषाः सर्व्वैरेभिः समीकृतैः ।
तुल्यो गुग्गलो योज्यश्च भग्नसन्धिप्रसाधकः ॥ १२
सर्व्वकुष्ठेषु वमनं रेचनं रक्तमोचनम् ।
वचावासापटोलानां निम्बस्य फलिनीत्वचः ॥ १३
कषायो मधुना पीतो वातहृद्वृद्दगणः परः ।
विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ १४
मनःशिलामरीचैस्तु तैलं कुष्ठविनाशनम् ।
सर्व्वकुष्ठे विलेपोऽयं शिवापङ्कगुड़ौदनम् ॥ १५
करञ्ज-तगरौ कुष्ठं गोमूत्रेण प्रलेपतः ।
करवीरोद्वर्त्तनञ्च तैलात्तस्य च कुष्ठहृत् ॥ १६
हरिद्रा मलयं रास्ना गुड़ूची तगरस्तथा ।
आरग्वधः करञ्जश्च लेपः कुष्ठहरः परः ॥ १७
मनःशिलाविड़ङ्गानि वागुजी सर्षपस्तथा ।
करञ्जो मूत्रपिष्टोऽयं लेपः कुष्ठहरोऽर्कवत् ॥ १८
विड़ङ्गैरगजा-कुष्ठ-निशा-सिन्धूत्थसर्षपैः ।
मूत्राम्बुपिष्टो लेपोऽयं दद्रुकुष्ठविनाशनः ॥ १९
प्रपुन्नाड़कवीजानि धात्री-सर्ज्जरस-स्नुही ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥ २०
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिट्टिमकुष्ठानि हन्ति सिध्मानमेव च ॥ २१
उष्णा पीता वागुजी च कुष्ठजित् चीरभोजिनः ।
तिलाज्य-त्रिफला-चौद्र-व्योष-भल्लात-शर्कराः ।
वृष्याः सप्त समा मेध्याः कुष्ठघ्नाः कामचारिणः ॥ २२
विड़ङ्ग-त्रिफला-कृष्णाचूर्णं लीढ़ं समाक्षिकम् ।
हन्ति कुष्ठ-कृमी-मेह-नाड़ीव्रण-भगन्दरान् ॥ २३
यः खादेदभयारिष्टं तथा चामलकानिशाः ।
स जयेत् सर्व्वकुष्ठानि मासादूर्द्ध्वं न संशयः ॥ २४
दह्यमानस्यतः कुम्भे तत्सह खदिराङ्कुरः ।
साहधात्रीरसचौद्रो हन्यात् कुष्ठं रसायनम् ॥ २५
धात्री-खदिरयोः क्वाथं पीत्वा वल्गुजिसंयुतम् ।
शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः ॥ २६
पीत्वा भल्लातकं तैलं मासाद्व्याधिं जयेन्नरः ।
सेवितं खादिरं वारि पानाद्यैः कुष्ठजिद्भवेत् ॥ २७
वासा गुड़ूची त्रिफला पटोलञ्च करञ्जकम् ।
निम्बासनं कृष्णवेत्रं क्वाथकल्केन यद्घृतम् ।

(क) त्रिफलागुड़ूचीति पाठः क्वचिद्दृश्यते ।

वल्कं तद्धरेत् कुष्ठं शतवर्षाणि जीवति ॥ २८

खरसेन च दूर्व्वायाः पचेत् तैलं चतुर्गुणम् ।
कच्छूविचर्च्चिका पामा अभ्यङ्गादेव नश्यति ॥ २९

दुमलगर्कंकुष्ठानि लवणानि च मूत्रकम् ।
गव्हीरिकां चित्रकैस्तैस्तैलं कुष्ठव्रणादिनुत् ॥ ३०

धात्री निम्बफलं तद्दन्नोमूत्रेण च चित्रकम् ।
वासामृतापर्पटकनिम्बभूनिम्बमार्कवैः ।
त्रिफलाकुलत्थैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ ३१

फलत्रिकं पटोलञ्च तिक्ता क्वाथः सितायुतः ।
पीतौ यष्टिमधुयुतौ ज्वरच्छर्द्यम्लपित्तजित् ॥ ३२

वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च ।
अम्लपित्ते प्रयोक्तव्यं गुड़कुष्माण्डकं तथा ॥ ३३

पिप्पली मधुसंयुक्ता अम्लपित्तविनाशिनी ।
श्लेष्माग्निमान्द्यनुत् पथ्यापिप्पलीगुड़मोदकः ॥ ३४

पिष्ट्वाजाजीं सधन्याकां घृतप्रस्थं विपाचयेत् ।
कफपित्तारुचिहरं मन्दानलवमिं हरेत् ॥ ३५

पिप्पल्यमृतभूनिम्ब-वासकारिष्टपर्पटैः ।
खदिरारिष्टकैः क्वाथो विस्फोटार्त्तिज्वरापहः ॥ ३६

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥ ३७

खदिरत्रिफलारिष्ट-पटोलामृतवासकैः ।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ॥ ३८

कुष्ठ-वीसर्प-विस्फोट-कण्ड्वादीनां विघातकः ।
लसूनानान्तु चूर्णस्य घर्षो मशकनाशनः ॥ ३९

चर्म्मकीलं जन्तुमालं मशकांस्तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥ ४०

पटोल-नीलीलेपः स्याज्जाल-गर्द्दभरोगनुत् ।
गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डदारणकृत् कुष्ठ-कापालकुष्ठनाशनम् ॥ ४१

आम्रास्थिमज्जा-त्रिफला-नीलैश्च भृङ्गराजकैः ।
कन्दुपाकलौहचूर्णं काञ्जिकं कृष्णकेशकृत् ॥ ४२

क्षीरोशार्कपर्णरस-द्विप्रस्थे मधुकापले ।
तैलस्य कुड़वं पक्कं वार्द्धक्यपलितापहम् ॥ ४३

मुखरोगी तु त्रिफला-गण्डूषपरिधारणम् ।
गृहधूम-यवक्षार-पाठा-व्योष-रसाञ्जनम् ॥ ४४

सलोध्रं त्रिफलाचूर्णं तथा चित्रकचूर्णितम् ।
सक्षौद्रं धारयेदन्तो ग्रीवादन्तस्य रोगनुत् ॥ ४५

पटोल-निम्ब-जम्बीर-आम्र-मालतीपल्लवाः ।
पञ्चपल्लवकः श्रेष्ठः कषायो मुखधारणे ॥ ४६

लसूनार्द्रकशिग्रूणां पारुल्या मूलकस्य च ।
कदल्याश्च रसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ ४७

तीव्रशूलोत्तरे कर्णे सशब्दे क्लेदवाहिनि ।
स्नुहीपत्ररसं कोष्णं सैन्धवेनावचूर्णितम् ॥ ४८

जातीपत्ररसे तैलं विपक्वं कर्णशूलजित् (क) ।
शुण्ठीतैलं सार्षपञ्च कोष्णं स्यात् कर्णशूलनुत् ॥ ४९

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुड़ः षड़ङ्गश्च यूषः पीनसशान्तये ॥ ५०

अक्षिकुक्षिभवा रोगाः प्रतिश्याय-व्रण-ज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ ५१

धात्रीरसानाञ्च दृशः कोपं हरति पूरणात् ।
सक्षौद्रसैन्धवं वापि शिग्रुदार्व्वीरसाञ्जनम् ॥ ५२

हरिद्रा-दारु-सिन्धूत्थ-रसाञ्जनैः सगैरिकैः ।
पिष्टैर्दत्तो वहिर्लेपो नेत्रव्याधिनिवारकः ॥ ५३

घृतभृष्टाभयालेपात् त्रिफला क्षीरसंयुता ।
शुण्ठीनिम्बदलैः पिष्टैः सुखोष्णैः स्वल्पसैन्धवैः ।
धार्य्यश्चक्षुषि विक्षेपाच्छोथकण्डूरुजापहः ॥ ५४

अभयाक्षामृतञ्चैक-द्विचतुर्भागिकं युतम् ।
मध्वाज्यलीढ़ं क्वाथो वा सर्व्वनेत्ररुगर्द्दनः ॥ ५५

चन्दन-त्रिफला-पूग-पलाश-तरुमूलकैः ।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा ॥ ५६

दध्ना निघृष्टमरिचं रात्र्यन्धापहमञ्जनम् ।
त्रिफलाक्वाथ-कल्काभ्यां सपयस्कं शृतं घृतम् ।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ ५७

पिप्पलीत्रिफलाद्राक्षा (ख) लौहचूर्णं ससैन्धवम् ।
भृङ्गराजरसैर्घृष्टं गुड़िकाञ्जनमिष्यते ।
अर्शः सतिमिरं कोठं हन्त्यन्यान्नेत्ररोगकान् ॥ ५८

त्रिकटु त्रिफला चैव सैन्धवञ्च मनःशिला ।
केतकं शङ्खनाभिश्च जातीपुष्पाणि निम्बकम् ॥ ५९

रसाञ्जनं भृङ्गराजं घृतं मधु पयस्तथा ।
एतत् पिष्ट्वा च वटिका सर्व्वनेत्ररुगर्द्दिनी ॥ ६०

---

(क) पूतिकर्णजिदिति क्वचित् पाठः ।

(ख) क्षारेति लाक्षेति च क्वचित् पाठः ।

दुग्धमेरण्डकं मूलं लेपात् काञ्जिकपेषितम् ।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥ ६१
शताङ्गैरण्डमूलोग्राचक्रव्याघ्रीपलैः शृतम् ।
तैलं नस्यं मरुत्श्लेष्म-तिमिरोर्द्ध्वगदापहम् ॥ ६२
लवणं सगुड़ं विश्वं पिप्पली वा ससैन्धवा ।
भुजस्तम्भादिरोगेषु सर्व्वेषूर्द्ध्वगदेषु च ॥ ६३
सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादिभेषजम् ।
दशमूलीकषायन्तु सर्पिःसैन्धवसंयुतम् ।
नस्यमङ्गविभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥ ६४
दूर्व्वा सौवर्च्चलाजाजी-मधुकं नीलमुत्पलम् ।
पिबेत् चौद्रयुतं नारी वातासृग्दरपीड़िता ॥ ६५
वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ।
जलेनामलकीवीजं शर्करा-मधुसंयुतम् ॥ ६६
आमलक्या रसं मधु मूलं कार्पासमेव वा ।
पाण्डुप्रदरशान्त्यर्थं पिबेत् तण्डुलवारिणा ॥ ६७
तण्डु-लीयकमूलन्तु सचौद्रं सरसाञ्जनम् ।
तण्डुलोदकसम्पीतं सर्व्वांश्चासृग्दरान् जयेत् ॥ ६८
कुशमूलं तण्डुलाद्भिः पीतञ्चासृग्दरान् जयेत् ।

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे कुष्ठादि-
चिकित्साकथनं नाम पञ्चसप्तत्यधिक-
शततमोऽध्यायः ॥ १७५ ॥

---

## षट्सप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

स्त्रीरोगादिचिकित्साञ्च वच्ये सुश्रुत तच्छृणु ।
योनिव्यापत्सु भूयिष्ठं शस्यते कर्म्म वातजित् ॥ १
वचोपकुञ्चिकाजाती-कृष्णावासकसैन्धवम् ।
अजमोदा यवचारं चित्रकं शर्करान्वितम् ॥ २
पिष्टालोड्य जलाद्यैश्च खादयेद्घृतभर्ज्जितम् ।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शों विनिवर्त्तयेत् ॥ ३
बदरीपत्रसंलेपाद्‌योनिर्भिन्ना प्रशाम्यति ।
लोध्रतुम्बीफलालेपात्‌योनेर्दार्ढ्यं करोति च ॥ ४
पद्मपल्लव-यष्ट्यर्क-मालतीकुसुमैर्घृतम् ।
रविपक्वमसृग्धारा योनिगन्धविनाशनम् ॥ ५
सकाञ्जिकं जवापुष्पं प्रस्थं ज्योतिष्मतीदलम् ।
दूर्व्वापिष्टञ्च संप्राश्य चित्रकं शर्करान्वितम् ॥ ६
धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत् ।
सदुग्धा लक्ष्मणा पीता नस्याद्वा पुत्रदाऽऽर्त्तौ ॥ ७
दुग्धस्याढ़ाढ़कञ्चाज्यमश्वगन्धा च पुत्रदा ।
वन्ध्या पुत्त्रं लभेत् पीत्वा घृतेन व्योष-केशरम् ॥ ८
कुशकाशोरुबुकाणां मूलैर्गोक्षुरकस्य च ।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥ ९
पाठालाङ्गल्यपामार्गैस्तथा च कुटजैः पृथक् ।
नाभि-वस्ति-भगालेपात् सुखं नारी प्रसूयते ॥ १०
सूताया हृच्छिरोवस्ति-शूलं वै मन्दसंश्रितम् ।
यवचारं पिबेत् तत्र मस्तु कोष्णोदकेन वा ।
दशमूलीकृतः क्वाथः साज्यः सूतिरुजापहः ॥ ११
शालितण्डुलचूर्णन्तु सदुग्धं दुग्धकृद्भवेत् ॥ १२
विदारीकुसुमरसं मूलं कार्पासजं तथा ।
धात्रीस्तन्यविशुद्ध्यर्थं मुद्गयूषो रसायनः ॥ १३
कुष्ठा वचाभया ब्राह्मी मधूकं चौद्रसर्पिषी ।
वर्णायुःकान्तिजननं लेह्यं बालस्य दापयेत् ॥ १४
स्तन्याभावे पयश्छाग्यं गव्यं वा तद्गुणं पिबेत् ।
स्वेदेन नाभिशोथान्तो मृदा स्यादग्नितप्तया ॥ १५
लौहमुस्तकातिविषा वमि-कासज्वरे पिबेत् ।
मुस्त-शुण्ठी-विषारुणा-कुटजश्चातिसारनुत् ॥ १६
व्योषं मधु मातुलुङ्गं हिक्काच्छर्द्दिनिवारणम् ॥ १७
कुष्ठेन्द्रयवसिद्धार्थौ निशा दूर्व्वा च कुष्ठजित् ।
महामुण्डितिकोदीच्यक्वाथैः स्नानं ग्रहापहम् ॥ १८
सप्तच्छदामयनिशा-चन्दनैश्चानुलेपनम् ।
शङ्खाब्जवीज-रुद्राक्ष-वचा-लौहादिधारणम् ॥ १९
ओं कं टं पं शं वैनतेयाय नमः ओं ह्रीं ह्रां हः ।
मन्त्रेण शान्तिर्बालानां मार्ज्जनाद्बलिदानतः ॥ २०
ओं क्लीं बालग्रहा बलिं गृह्णीत बालं मुञ्चत मुञ्चत स्वाहा ॥ २१
तण्डुलाद्भिः शिरीषस्य मूलं पीतं विषापहम् ।
तण्डुलाद्भिश्च वर्षाभ्वः शुक्लायाः सर्पदंशनुत् ॥ २२
दध्याज्यं तण्डुलीयञ्च गृहधूमो निशा तथा ।
पिष्टं पानं तथा चौद्रं सिन्धूत्थस्य विषान्तकम् ॥ २३
अङ्कोठमूलनिक्वाथः साज्यः पीतो विषान्तकः ।
यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ २४

त्रिवृत्-शर्करा-शुण्ठी-कणा-मधु-गुडैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ २५
ज्वरस्यान्तेऽभया चैका प्रभुङ्क्ते द्वे विभीतके ।
भुक्त्वा मध्वाज्यधात्रीणां चतुष्कं शतवर्षकृत् ॥ २६
पीताश्वगन्धा पयसा घृतेनाशेषरोगनुत् ॥ २७
मण्डूकपर्ण्याः स्वरसो विदार्याश्चामृतोद्भवः ।
तिलधात्रीभृङ्गराजो जग्ध्वा वर्षशती भवेत् ॥ २८
त्रिकटु त्रिफला वह्निर्गुडूची च शतावरी ।
विड़ङ्गलोहचूर्णन्तु मधुना सह रोगनुत् ॥ २९
त्रिफला च कणा शुण्ठी गुडूची च शतावरी ।
विड़ङ्गभृङ्गराजादि भावितं सर्व्वरोगनुत् ॥ ३०
चूर्णं विदार्या मध्वाज्यं लीढ्वा दश स्त्रियो व्रजेत् ।
घृतं शतावरीकल्कैः चीरे दशगुणैः पचेत् ।
शर्करापिप्पलीचौद्र-युक्तं वा जारकं विदुः ॥ ३१
प्रतिमर्षोऽवपीड़श्च नस्यं प्रधमणं तथा ।
शिरोविरेचनञ्चेति पञ्चकर्म्म च कथ्यते ॥ ३२
मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड़ृतवः स्मृताः ।
अग्निसेवामधुचीर-विकृतीः परिषेवयेत् ॥ ३३
स्त्रीयुक्तः शिशिरे तद्वद्वसन्ते न दिवा स्वपेत् ।
त्यजेद्दर्षासु स्वप्नादीन् शरदीन्दोश्च रश्मयः ॥ ३४
पथ्यानि शालयो मुद्गा वर्षाम्भः क्वथितं पयः ।
निम्बातसीकुसुम्भानां शिग्रु-सर्षपयोस्तथा ॥ ३५
ज्योतिष्मती-मूलकानां तैलानि च हरन्ति हि ।
क्रिमि-कुष्ठ-प्रमेहांश्च वातश्लेष्मशिरोरुजः ॥ ३६
दाड़िमामलकी-कोल-करमर्द्द-पियालकम् ।
जम्बीरं नागरङ्गञ्च आम्रातक-कपित्थकम् ॥ ३७
पित्तलान्यनिलघ्नानि कफक्लेशकराणि च ।
कालजीमूतकेच्वाकु-कुटजाकृतबोधनम् ॥ ३८
श्यामार्गवश्च संयोज्याः सर्व्वथा वमनेष्वमी ।
पूर्व्वाह्णे वमनायैते मदनेन्द्रयवौ वचा ॥ ३९
मृदुकोष्ठश्च पित्तेन खरो वातकफाश्रयात् ।
मध्यमः समदोषे स्यात् त्रिवृत् पित्ते विरेचनम् ॥४०
शर्करा-मधुसंयुक्तं सैन्धवं नागरं त्रिवृत् ।
हरीतकीविड़ङ्गानि गोमूत्रेण विरेचनम् ॥ ४१
एरण्डतैलं त्रिफला-क्वाथश्च द्विगुणस्तथा ।
वातोल्बणेषु,दोषेषु भोजयित्वाथ वामयेत् ॥ ४२
वंशादिनेत्रं कुर्व्वीत षड़ष्टद्वादशाङ्गुलम् ।
कर्कन्धूफलवच्छिद्रं वस्तिरुत्तानशायिने ॥ ४३
निरूहदानेऽपि विधिरयमेवमुदीरितः ।
अर्द्धत्रिषट्पले मात्रा लघुमध्योत्तमक्रमात् ॥ ४४
पथ्याचधात्र्य एकद्वि-चतुर्भागा रुगर्द्दनाः ।
शतावर्य्यमृताभृङ्ग-शिन्धुवारादिभाविताः ॥ ४५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे स्त्री-
रोगादिचिकित्साकथनं नाम षट्सप्तत्य-
धिकशततमोऽध्यायः ॥ १७६ ॥

---

## सप्तसप्तत्यधिकशततमोऽध्यायः ।

### धन्वन्तरिरुवाच ।

द्रव्याणि मधुरादीनि वच्ये रोगहराण्यहम् ।
शालि-षष्टिक-गोधूम-चीरं घृतं तथा मधु ॥ १
मज्जा-शृङ्गाटक-यव-कशेर्व्विर्व्वारु-गोचुरम् ।
गाम्भारी पौष्करं वीजं द्राचा खर्ज्जूरकं बला ॥ २
नारिकेलेच्वात्मगुप्ता विदारी च पियालकम् ।
मधूकं तालकुष्माण्डं मुख्योऽयं मधुरो गणः ॥ ३
मूर्च्छा-दाहप्रशमनः षड़िन्द्रियप्रसादनः ।
कृमिकृत् कफकृच्चैव एकोऽत्यर्थं निषेवितः ॥ ४
श्वास-कासास्यमाधुर्य्य-स्वरघातार्व्वुदानि च ।
गलगण्ड-श्लीपदानि गुड़लेपादि कारयेत् ॥ ५
दाड़िमामलकाम्रञ्च कपित्थ-करमर्द्दकौ ।
मातुलुङ्गाम्रातकञ्च बदरं तिन्तिड़ीफलम् ॥ ६
दधि तक्रं काञ्जिकञ्च लकुचञ्चाम्लवेतसम् ।
अम्लो लोणः शुण्ठीयुक्तो जारणः पाचनो रसः ॥ ७
क्लेदनो वातकृद्दृष्यो विदाही चानुलोमनः ।
अम्लोऽत्यर्थं सेव्यमानः कुर्य्याद्वै दन्तहर्षकम् ॥ ८
शरीरस्य च शैथिल्यं स्वरकण्ठास्यहृद्दहेत् ।
छिन्नभिन्नव्रणादीनि पाचयत्यग्निभावितः ॥ ९
लवणानि यवचार-सर्ज्जिकादिश्च लावणः ।
शोधनः पाचनः क्लेदी विश्लेष-सर्पणादिकृत् ॥ १०
मार्गरोधी मार्द्दवकृत् स एकः परिषेवितः ।
गात्रकण्डू-कोठ-शोथ-वैवर्ण्यं जनयेद्रसः ।
रक्तवातं पित्तरक्तं पुंस्त्वेन्द्रियरुजादिकम् ॥ ११

व्योष-शिग्रु-मूलकञ्च देवदारु च कुष्ठकम् ।
लशुनं वल्गुजीफलं मुस्तागुग्गुलुलाङ्गली ॥ १२
कटुको दीपनः शोधी कुष्ठ-कण्डू-कफान्तकृत् ।
स्थौल्यालस्यकृमिहरः शुक्रमेदोविरोधनः ।
एकोऽत्यर्थं सेव्यमानो भ्रमदाहादिकृद्भवेत् ॥ १३
कृतमालः करीराणि हरिद्रेन्द्रयवास्तथा ।
स्वादु-कण्टक-वेत्राणि वृहतीद्वय-शङ्खिनी ॥ १४
गुडूची च द्रवन्ती च त्रिवृन्मण्डूकपर्ण्यपि ।
कारवेल्लक-वार्त्ताकु-करवीरक-वासकाः ॥ १५
रोहिणी शङ्खपुष्पी च कर्कोटो वै जयन्तिका ।
जाती वरुणकं निम्बो ज्योतिष्मती पुनर्नवा ॥ १६
तिक्तो रसश्छेदनः स्याद्रोचनो दीपनस्तथा ।
शोधनो ज्वरतृष्णाघ्नो मूर्च्छाघ्नः कण्डुकादिजित् ॥ १७
विण्मूत्रक्लेदसंशोषी अत्यर्थं स च सेवितः ।
मन्यास्तम्भाक्षेपकार्त्ति-शिरःशूलव्रणादिहृत् ॥ १८
त्रिफला-शल्लकी-जम्बु आम्रातक-वटादिकम् ।
तिन्दुकं वकुलं शालं पालङ्क-मुद्ग-चिल्लकम् ॥ १९
कषायो ग्राहको रोपी स्तम्भनः क्लेदशोषणः ।
एकोऽत्यर्थं सेव्यमानो हृदये चाथ पीड़कृत् ।
मुखशोषज्वराध्मान-मन्यास्तम्भादिकारकः ॥ २०
हरिद्रा-कुष्ठ-लवणं मेषशृङ्गीबलाद्वयम् ।
कच्छुरा शल्लकी चैव पुनर्नवा शतावरी ॥ २१
अग्निमन्थो ब्रह्मदण्डी श्वदंष्ट्रैरण्डके तथा ।
यव-कोल-कुलत्थादि-कर्षांशो दशमूलकम् ।
पृथक् समस्तो वातान्तः कफ-पित्तहरस्तथा ॥ २२
शतावरी विदारी च बालकोशीरचन्दनम् ।
दूर्व्वा वटः पिप्पली च बदरी शल्लकी तथा ॥ २३
कदली चोत्पलं पद्ममुडुम्बर-पटोलकम् ।
अथ श्लेष्महरो वर्गो हरिद्रा-गुड़-कुष्ठकम् ॥ २४
शतपुष्पी च जाती च व्योषारग्वधलाङ्गली ।
सर्पिस्तैल-वसा-मज्ज-स्नेहेषु प्रवरं स्मृतम् ॥ २५
तथा धी-स्मृति-मेधाग्निकाङ्क्षिणां शस्यते घृतम् ।
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥ २६
देयं बहुकफे वापि व्योष-क्षारसमायुतम् ।
ग्रन्थि-नाड़ी-क्रिमि-श्लेष्म-मेदो-मारुतरोगिषु ॥ २७
तैलं लाघवदार्ढ्याय क्रूरकोष्ठेषु देहिषु ।
वातातपाम्बु-भार-स्त्री-व्यायाम-क्षीणधातुषु ॥ २८
रौक्ष्यक्लेशक्षयात्यग्नि-वातावृतपथेषु च ।
अथ दग्ध्वा शिराजालं योनिकर्म्म शिरोरुजि ॥ २९
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥ ३०
जलमुष्णं घृते देयं पृथक् तैले तु शस्यते ।
स्नेहे पीते तु तृष्णायां पिबेदुष्णोदकं नरः ॥ ३१
वातानुलोमं दीप्ताग्निर्वर्च्चः स्निग्धस्य तन्मतम् ।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम् ॥ ३२
श्यामाककोरदोषान्न-तक्र-पिण्याक-शक्तुभिः ।
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
न स्वेदयेदतिस्थूल-रूक्ष-दुर्ब्बल-मूर्च्छितान् ॥ ३३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे योग-
सारादिकथनं नाम सप्तसप्तत्यधिक-
शततमोऽध्यायः ॥ १७७ ॥

---

## अष्टसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

घृततैलादि वक्ष्यामि शृणु सुश्रुत रोगवित् ।
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला ॥ १
अभया च गुडूची च अटरूषक-वागुजी ।
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ २
कण्टकार्य्या रसप्रस्थः क्षीरप्रस्थसमन्वितः ।
एतद्ब्राह्मीघृतं नाम श्रुति-मेधाकरं परम् ॥ ३
त्रिफला-चित्रक-बला-निर्गुण्डी-निम्ब-वासकाः ।
पुनर्नवा गुडूची च वृहती च शतावरी ।
एतैर्घृतं यथालाभं सर्व्वरोगविमर्द्दनम् ॥ ४
बलाशतकषाये तु तैलस्यार्द्धाढ़कं पचेत् ।
कल्कैर्मधुक-मञ्जिष्ठा-चन्दनोत्पल-पद्मकैः ॥ ५
सूक्ष्मैला-पिप्पली-कुष्ठ-त्वगेलागुरु-केशरैः ।
गन्धाश्वजीवनीयैश्च क्षीराढ़कसमाश्रितम् ॥ ६
एवं मृद्वग्निना पक्वं स्थापयेद्रजते शुभे ।
सर्व्ववातविकारांस्तु सर्व्वधात्वन्तराश्रयान् ।
तैलमेतत् प्रशमयेद्बलासं राजवल्लभम् ॥ ७
शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च ।

शतपुष्पा देवदारु मांसी शैलेयकं वला ॥ ८
चन्दनं तगरं कुष्ठं ज्योतिष्मती मनःशिला ।
एतैः कर्षसमैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥ ९
कुब्ज-वामन-पङ्गूनां बधिर-व्यङ्ग-कुष्ठिनाम् ।
वायुना भग्नगात्राणां ये च सीदन्ति मैथुने ॥ १०
जराजर्ज्जरगात्राणामाध्मानमुखशोषिणाम् ।
त्वग्गताश्चापि ये रोगा शिरास्नायुगताश्च ये ॥ ११
सर्व्वांस्तान् नाशयत्याशु तैलं रोगकुलान्तकम् ।
नारायणमिदं तैलं विष्णुनोक्तं रुगर्द्दनम् ॥ १२
पृथक् तैलं घृतं कुर्य्यात् समस्तैरौषधैः पृथक् ।
शतावर्य्या गुडूच्या वा चित्रकैर्व्योषनिम्बकैः ॥ १३
निर्गुण्ड्या वा प्रसारण्या कण्टकार्य्या रसादिभिः ।
वर्षाभूबालया वापि वासकेन फलत्रिकैः ॥ १४
ब्राह्मिकैरण्डकेनापि भृङ्गराजेन यष्टिना ।
सुषव्या दशमूलेन खदिरेण वटादिभिः ॥ १५
वटिका मोदको वापि चूर्णं स्यात् सर्व्वरोगनुत् ।
घृतेन मधुना वापि अद्भिः खण्ड-गुड़ादिभिः ॥ १६
लवणैः कटुकैर्युक्तं यथालाभञ्च रोगनुत् ।
चित्रकार्कं त्रिवृत्पाठै मलपुं हयमारकम् ॥ १७
सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्च्चिकाम् ।
ज्योतिष्मतीञ्च सम्भृत्य तैलं धीरो विपाचयेत् ॥ १८
एतद्धि स्यन्दनं तैलं भृशं दद्याद्भगन्दरे ।
शोधनं रोपणञ्चैव सर्व्ववर्णकरं परम् ।
चित्रकाद्यं महातैलं सर्व्वरोगप्रभञ्जनम् ॥ १९
अजमोदः ससिन्दूरो हरिताल-निशाद्वयम् ।
क्षारद्वयं फेनयुतमार्द्रकं सरलोद्भवम् ॥ २०
इन्द्रवारुण्यपामार्ग-कदलैः कन्दलैः समम् ।
एभिः सर्षपजं तैलमजामूत्रैश्च योजितम् ॥ २१
मृद्वग्निना पचेदेतद्गव्यक्षीरेण संयुतम् ।
अजमोदादिकं तैलं गण्डमालां व्यपोहति ॥ २२
विदग्धस्तु पचेत् पक्वं पक्वञ्चैव विशोधयेत् ।
रोपणं मृदुभावञ्च तैलेनानेन कारयेत् ।
अजमोदादिकं तैलं महावीर्यञ्च रोगनुत् ॥ २३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे घृत-तैलादिकथनं नामाष्टसप्तत्यधिक-शततमोऽध्यायः ॥ १७८ ॥

## एकोनाशीत्यधिकशततमोऽध्यायः ।

सूत उवाच ।

एवं धन्वन्तरिर्विष्णुः सुश्रुतादीनुवाच ह ।
हरिः पुनर्हरायाह नानायोगान् रुगर्द्दनान् ॥ १

हरिरुवाच ।

सर्व्वज्वरेषु प्रथमं कार्य्यं शङ्कर लङ्घनम् ।
क्वथितोदकपानञ्च तथा निर्व्वातसेवनम् ॥ २
अग्निस्वेदो ज्वराश्चैवं नाशमायान्ति हीश्वर ।
वातज्वरहरः क्वाथो गुडूच्या मुस्तकस्य च ॥ ३
दुरालभैः कृतः क्वाथः पित्तज्वरहरं शृणु ।
शुण्ठी-पर्पट-मुस्तैश्च बालकोशीर-चन्दनैः ॥ ४
साज्यः क्वाथः श्लेष्मजन्तु सशुण्ठिः सदुरालभः ।
सबालकः सर्व्वज्वरं सशुण्ठिः सहपर्पटः ॥ ५
क्वाथश्च तिक्तकैरण्ड-गुडूची-शुण्ठि-मुस्तकैः ।
पित्तज्वरहरः स्याच्च शृण्वन्यं योगमुत्तमम् ॥ ६
बालकोशीरपाठाभिः कण्टकारिकमुस्तकैः ।
ज्वरनुच्च कृतः क्वाथस्तथा वै सुरदारुणा ॥ ७
धन्याक-निम्ब-मुस्तानां समधुः स तु शङ्कर ।
पटोलपत्रयुक्तस्तु गुडूची-त्रिफलायुतः ।
पीतोऽखिलज्वरहरः क्षुधाकृद्वातनुत् लयम् ॥ ८
हरीतकी-पिप्पलीनामामली-चित्रकोद्भवम् ।
चूर्णं जलञ्च क्वथितं धन्याकोशीर-पर्पटैः ॥ ९
आमलक्या गुडूच्या च मधुयुक्तं सचन्दनम् ।
समस्तज्वरनुच्च स्यात् सन्निपातहरं शृणु ॥ १०
हरिद्रा-निम्ब-त्रिफला-मुस्तकैर्देवदारुणा ।
कषायं कटुरोहिण्या सपटोलं सपत्रकम् ।
त्रिदोषज्वरनुच्च स्यात् पीतन्तु क्वथितं जलम् ॥ ११
कण्टकार्य्या नागरेण गुडूच्या पुष्करेण च ।
जग्ध्वा नागबलाचूर्णं(क) श्वास-कासादिनुद्भवेत् ॥ १२
कफवातज्वरे देयं जलमुष्णं पिपासिने ।
मण्डो वा मुद्गयूषं वा शाल्यन्नं वाथ यूषवत् ।
ज्वरार्त्तमानुषि देयं ज्वरहानिस्तदा भवेत् ॥ १२
बिल्व-पर्पटकोशीर-मुस्त-चन्दनसाधितम् ।
दद्यात् सुशीतलं वारि तृट्छर्द्दिज्वरदाहनुत् ।

(क) नागरचूर्णञ्चेति पाठान्तरं क्वचित् ।

बिल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ॥ १४
पाचनं पिप्पलीमूलं गुडूची-विश्वभेषजम् ।
वातज्वरे त्वयं क्वाथो दत्तः शान्तिकरः परः ।
पित्तज्वरनुत् समधुः क्वाथः पर्पट-निम्बयोः ॥ १५
विधाने क्रियमाणेऽपि यस्य संज्ञा न जायते ।
पादयोस्तु ललाटे वा दहेल्लौहशलाकया ॥ १६
तिक्ता पाठा पटोलश्च विशाला त्रिफला त्रिवृत् ।
क्षीरो भेदनः क्वाथः सर्व्वज्वरविशोधनः ॥ १७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नाना-
योगादिकथनं नामैकोनाशीत्यधिक-
शततमोऽध्यायः ॥ १७९ ॥

---

## अशीत्यधिकशततमोऽध्यायः ।

भगवानुवाच ।

अस्फुटादातात् प्रजायन्ते खल्वीटस्य कचाः शुभाः ।
हस्तिदन्तलेपात् साजाक्षीररसाञ्जनात् ॥ १
भृङ्गराजरसेनैव चतुर्भागेण साधितम् ।
केशवृद्धिकरं तैलं गुञ्जाचूर्णान्वितेन च ॥ २
मूला-मांसी-कुष्ठ-सुरा-युक्तमभ्युद्धृतं शिरः ।
गुञ्जाफलं समादेयं लेपनञ्चेन्द्रलुप्तनुत् ॥ ३
आम्रास्थिचूर्णलेपाद्धि केशाः सूक्ष्मा भवन्ति च ।
दीर्घमूला घना दीर्घाः स्निग्धाः स्युर्नोत्पतन्ति च ॥ ४
विड़ङ्गगन्धपाषाण-साधितं तैलमुत्तमम् ।
स चतुर्गुणगोमूत्रं मनसः शिलमेव वा ।
शिरोभ्यङ्गाच्छिरोजन्म-यूकालिख्यं चयं नयेत् ॥ ५
भवदग्धं शङ्खचूर्णं घृष्टसीसकलेपितम् ।
कचाः स्वच्छा महाकृष्णा भवन्ति वृषभध्वज ॥ ६
भृङ्गराजं लौहचूर्णं त्रिफला वीजपूरकम् ।
नीली च करवीरश्च गुड़मेतैः समैः शृतम् ।
पलितानीह कृष्णानि कुर्य्याल्लेपान्महौषधम् ॥ ७
आम्रास्थिमज्जा त्रिफला नीली च भृङ्गराजकम् ।
जीर्णं पक्वलौहचूर्णं काञ्जिकं कृष्णकेशकृत् ॥ ८
चक्रमर्द्दकवीजानि कुष्ठमेरण्डमूलकम् ।
साम्लपुष्पाकाञ्जिकं पिष्ट्वा लेपान्मस्तकरोगनुत् ॥ ९
सैन्धवञ्च वचा हिङ्गु कुष्ठं नागेश्वरं तथा ।
शतपुष्पा देवदारु एभिस्तैलन्तु साधितम् ॥ १०
गोपुरीषरसेनैव चतुर्भागेण संयुतम् ।
तत् कर्णभरणाद्रुद्र कर्णशूलं चयं नयेत् ॥ ११
मेषमूत्र-सैन्धवाभ्यां कर्णयोर्भरणाच्छिव ।
कर्णयोः पूतिनाशः स्यात् कृमिस्रावादिकस्य च ॥ १२
मालतीपुष्प-दलयो रसेन भरणात् तथा ।
गोजलेनैव पूरेण पूयस्रावो विनश्यति ॥ १३
कुष्ठ-माष-मरीचानि तगरं मधु पिप्पली ।
अपामार्गाश्वगन्धा च बृहती सितसर्षपाः ॥ १४
यवास्तिलाः सैन्धवञ्चैतेषामुद्वर्त्तनं शुभम् ।
लिङ्ग-बाहुस्तनानाञ्च कर्णयोर्वृद्धिकृद्भवेत् ॥ १५
कटुतैलं भल्लातकं बृहतीफलदाड़िमम् ।
वल्कलैः साधितं लिप्तं लिङ्गं तेन विवर्द्धते ॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डेऽशीत्य-
धिकशततमोऽध्यायः ॥ १८० ॥

---

## एकाशीत्यधिकशततमोऽध्यायः ।

हरिरुवाच ।

शोभाञ्जनपत्ररसं मधुयुक्तं हि चक्षुषोः ।
भरणाद्रोगहरणं भवेन्नास्त्यत्र संशयः ॥ १
अशीतिस्तिलपुष्पाणि जात्याश्च कुसुमानि च ।
जपानिम्बामलाशुण्ठी-पिप्पलीतण्डुलीयकम् ॥ २
छायाशुष्कां वटीं कुर्य्यात् पिष्ट्वा तण्डुलवारिणा ।
मधुना सह सा चाक्ष्णोरञ्जनात् तिमिरादिनुत् ॥ ३
विभीतकास्थिमज्जस्तु शङ्खनाभिर्मनःशिला ।
निम्बपत्र-मरीचानि अजामूत्रेण पेषयेत् ।
पुष्पं रात्र्यन्धतां हन्ति तिमिरं पटलं तथा ॥ ४
चतुर्भागाणि शङ्खस्य तदर्द्धेन मनःशिला ।
सैन्धवञ्च तदर्द्धेन एतत् पिष्टोदकेन तु ॥ ५
छायाशुष्कान्तु वटिकां कृत्वा नयनमञ्जयेत् ।
तिमिरं पटलं हन्ति पिच्छिटस्य महौषधम् ॥ ६
त्रिकटु त्रिफला चैव करञ्जस्य फलानि च ।
सैन्धवं रजनी द्वे च भृङ्गराजरसेन हि ।
पिष्ट्वा तदञ्जनादेव तिमिरादिविनाशनम् ॥ ७
अटरूषकमूलन्तु काञ्जिकापिष्टमेव तु ।

# एकाशीत्यधिकशततमोऽध्यायः ।

तेनाक्ष्णोर्भूरिलेपाच्च चक्षुःशूलं विनश्यति ॥ ८
शतद्रु-बदरीमूलं पीतमक्षिव्यथां हरेत् ।
सैन्धवं कटुतैलञ्च अपामार्गस्य मूलकम् ॥ ९
क्षीर-काञ्जिकसंघृष्टं ताम्रपात्रे तु तेन च ।
अञ्जनात् पिच्चटस्यैव नाशो भवति शङ्कर ॥ १०
ओं हद्रु सर क्रौं क्रौं ठः ठः हद्रु सर क्रौं क्रौं
ओं उं जं सर क्रौं क्रौं ठः ठः आद्या वशमायान्ति
मन्त्रेणानेन चाञ्जनात् ॥ ११
विल्वक-नीलिकामूलं पिष्टमभ्यञ्जनेन च ।
अनेनाञ्जितमात्रेण नश्यन्ति तिमिराणि हि ॥ १२
पिप्पली तगरञ्चैव हरिद्रामलकं वचा ।
खदिरपिष्टवर्त्तिश्च अञ्जनान्नेत्ररोगनुत् ॥ १३
नीरपूर्णमुखो धौति-क्षिप्तजलेन योऽक्षिणी ।
प्रभाते नेत्ररोगैश्च नित्यं सर्व्वैः प्रमुच्यते ॥ १४
शुक्लैरण्डस्य मूलेन पत्रेणापि प्रसाधितम् ।
छागदुग्धसेकयुक्ताच्चक्षुषोर्वातरोगनुत् ॥ १५
चन्दनं सैन्धवं वृद्ध-पलाशाश्च हरीतकी ।
पटोलकुसुमं नीली चक्रिकां हरतेऽञ्जनात् ॥ १६
गुञ्जामूलं छागमूत्रे घृष्टं तिमिरबन्धनुत् ॥ १७
रौप्य-ताम्र-सुवर्णानां हस्तघृष्टशलाकया ।
घृतमुद्वर्त्तनं रुद्र कामलाव्याधिनाशनम् ॥ १८
घोषाफलमथाघ्रातं पीतकामलनाशनम् ।
दूर्व्वा-दाड़िमपुष्पन्तु अलक्तक-हरीतकी ।
नाशार्शवातरक्तान्तु नश्येद्वै स्वरसेन हि ॥ १९
सुपिष्टं जिङ्गिणीमूलं तद्रसेन वृषध्वज ।
नस्यादानाद्विनश्येत नासार्शो नीललोहित ॥ २०
गव्यं घृतं सर्ज्जरसं रुद्र धन्याक-सैन्धवम् ।
गुग्गुलुकं गैरिकञ्च एतैः साधितसिक्थकम् ।
सतैलं व्रणनुत् स्याच्च स्फटितोच्चटिताधरे ॥ २१
जातीपत्रञ्च चर्व्वित्वा विधृतं मुखरोगनुत् ।
भक्षणात् कोशवीजस्य दन्ताः स्युश्चलिताः स्थिराः॥२२
मुस्तकं कुष्ठमेला च यष्टिकं मधु वालकम् ।
धन्याकमेतद्रदनान्मुखदुर्गन्धनुद्धर ॥ २३
कषायं कटुकं वापि तिक्तशाकस्य भक्षणात् ।
तैलयुक्तस्य नित्यं स्यान्मुखदुर्गन्धताक्षयः ।
दन्तव्रणानि सर्व्वाणि क्षयं गच्छन्त्यनेन तु ॥ २४
काञ्जिकस्य सतैलस्य गण्डूष-कवलादिभिः ।
ताम्बूलचूर्णदग्धस्य मुखस्य व्याधिनुच्छिव ॥ २५
परित्यक्तिः श्लेष्मणश्च शुण्ठीचर्व्वणतो यथा ।
मातुलुङ्गदलान्येला यष्टीमधु च पिप्पली ॥ २६
जातीपत्रमथैषाञ्च चूर्णं लीढ़ं तदा कृतम् ।
शेफालिकाजटायाश्च चर्व्वणं गलगण्डनुत् ॥ २७
नासाशिरारक्तकर्षान्नश्येच्छङ्कर जिह्विका ।
रसः शिरीषवीजानां हरिद्रायाश्चतुर्गुणः ॥ २८
तेन पक्वेन भूतेश नस्यं मस्तकरोगनुत् ।
गलरोगा विनश्यन्ति नस्यमात्रेण तत्क्षणात् ॥ २९
दन्तकीटविनाशः स्याद्गुञ्जामूलस्य चर्व्वणात् ।
काकजङ्घा-स्नुही-नीली-कषायो मधुयोजितः ।
दन्ताक्रान्तान् दन्तजांश्च कृमीन् नाशयते शिव ॥ ३०
घृतं कर्कटपादेन दुग्धमिश्रेण साधितम् ।
तेन चाभ्यर्हिता दन्ताः कुर्य्युः कटकटा न हि ॥ ३१
लिप्त्वा कर्कटपादेन केवलेनाथवा शिव ।
त्रिसप्ताहं वारि पिष्ट्वा ज्योतिष्मत्याः फलानि हि ।
शुक्लाभयामञ्जलेपाद्दन्तस्याङ्कलङ्कनुत् ॥ ३२
लोध्र-कुङ्कुम-मञ्जिष्ठा-लोह-कालेयकानि च ।
यवतण्डुलमेतैश्च यष्टीमधुसमन्वितैः ।
वारिपिष्टैर्वक्त्रलेपः स्त्रीणां शोभनवक्त्रकृत् ॥ ३३
द्विभागं छागदुग्धेन तैलप्रस्थन्तु साधितम् ।
रक्तचन्दन-मञ्जिष्ठा-लाक्षाणां कर्षकेण वा ।
यष्टिमधु-कुङ्कुमाभ्यां सप्ताहान्मुखकान्तिकृत् ॥ ३४
शुण्ठी-पिप्पलीचूर्णन्तु गुडूची कण्टकारिका ।
एभिश्च क्वथितं वारि पीतञ्चाग्निं करोति वै ॥ ३५
वातशूलक्षयञ्चैव करोति प्रमथेश्वर ।
करञ्ज-कर्कटोशीरं वृहती कटुरोहिणी ॥ ३६
गोक्षुरं क्वथितन्त्वेभिर्वारि पीतं श्रमापहम् ।
दाहं पित्तज्वरं शोषं मूर्च्छाञ्चैव क्षयं नयेत् ॥ ३७
मध्वाज्यपिप्पलीचूर्णं क्वथितं क्षीरसंयुतम् ।
पीतं हृद्रोग-कासस्य विषमज्वरनुद्भवेत् ॥ ३८
क्वाथौषधीनां सर्व्वासां कर्षार्द्धं ग्राह्यमेव च ।
वयोऽनुरूपतो ज्ञेयो विशेषो वृषभध्वज ॥ ३९
दुग्धं पीतन्तु संयुक्तं गोक्षुरीषरसेन च ।
विषमज्वरनुत् स्याच्च काकजङ्घारसस्तथा ॥ ४०

शुण्ठीक्वथितं क्षीरं मज्ज्या ज्वरनुद्भवेत्।
यष्टीमधुकमुस्तञ्च सैन्धवं बृहतीफलम्॥ ४१
एतैर्नस्यप्रदानाच्च निद्रा स्यात् पुरुषस्य च।
मरीच-मधुयुक्तानां नस्यान्निद्रा भवेच्छिव॥ ४२
मूलन्तु काकजङ्घाया निद्राकृत् स्याच्छिव स्थिरम्।
सिद्धं तैलं काञ्जिकेन तथा सर्ज्जरसेन च॥ ४३
शीतोदकसमायुक्तं लेपात् सन्तापनाशनम्।
शोणितज्वरदाहेभ्यो जातसन्तापनुत्तथा॥ ४४
शालि-शैवालाग्निमन्थः शुण्ठी पाषाणभेदकम्।
शोभाञ्जनं गोक्षुरं वा वरुणच्छदनमेव च॥ ४५
शोभाञ्जनस्य मूलञ्च एतैः क्वथितवारि च।
दत्वा हिङ्गु यवक्षारं पित्त-वातविनाशनम्॥ ४६
पिप्पली पिप्पलीमूलं तथा भल्लातकं शिव।
क्वार्थितैः क्वथितं पीतं शूलापस्मारनुद्भवेत्॥ ४७
अश्वगन्धा-मूलकाभ्यां सिद्धा वल्मीकमृत्तिका।
एतया मर्द्दनाद्रुद्र जरुस्तम्भः प्रशाम्यति॥ ४८
बृहतीकस्य वै मूलं संपिष्टमुदकेन च।
शीतं सञ्जातवातस्य विपाटनकृदेव च॥ ४९
शीतं तक्रेण मूलञ्च आर्द्रस्य तगरस्य च।
हरेद्दै किङ्किनीवातं वृचमिन्द्राशनियथा॥ ५०
अस्थिसंहारमेकेन भक्तेन सह खादितम्।
शीतं मांसरसेनापि वातनुच्चास्थिभङ्गनुत्॥ ५१
घृतलिप्तं शक्तुकञ्च च्छागक्षीरेण संयुतम्।
तल्लपात् पादयोर्नश्येत् सन्तापो नात्र संशयः॥ ५२
मध्वाज्यसैन्धवैः सिक्थं गुड़-गैरिक-गुग्गुलैः।
ससर्ज्जरसं स्फुटितं कोमलाङ्घ्रिश्च लेपनात्॥ ५३
कटुतैलेन लिप्तो वै विधूमाग्नौ प्रतापितः।
मृत्तिकाखादितः पादः समः स्याद्दृषभध्वज॥ ५४
सर्ज्जरसः सिक्थकञ्च जीरकञ्च हरीतकी।
तत्साधितघृताभ्यङ्गो ह्यग्निदग्धव्यथापनुत्॥ ५५
तिलतैलञ्चाग्निदग्ध-यवभस्मसमन्वितम्।
अग्निदग्धव्रणं नश्येद्द्रुतशः कृतलेपतः॥ ५६
नवनीतं माहिषञ्च दग्धपिष्टतिलानि च।
सभल्लातं व्रणं नश्येत्तन्मूलं नस्य-लेपतः॥ ५७
कर्पूर-गव्यसर्पिर्भ्यां प्रहारः पूरितो हर।
शस्त्रोद्भवः सुबद्धश्च शुक्लवस्त्रेण शङ्कर।
पाकञ्च वेदनाञ्चैव न स्याद्दृषभध्वज॥ ५८
आम्रमूलरसेनैव शस्त्रघातः प्रपूरितः।
ढौकते शस्त्रघातः स्यान्निर्व्रणो घृतपूरितः॥ ५९
शरपुङ्खालज्जालुका-पाठा चासान्तु मूलकम्।
जलपिष्टं तस्य लेपाच्छस्त्रघातः प्रशाम्यति॥ ६०
मूलञ्च काकजङ्घायास्त्रिरात्रेणैव शोधितः।
पाकपूतिवेदनाञ्च हन्ति वै रोहिते व्रणे॥ ६१
सजलं तिलतैलञ्च अपामार्गस्य मूलकम्।
तत्सेकदानान्नश्येच्च प्रहारोद्भववेदना॥ ६२
अभया सैन्धवं शुण्ठीरेतत् पिष्टोदकेन तु।
भक्षयित्वा ह्यजीर्णस्य नाशो भवति शङ्कर॥ ६३
कटिबद्धं निम्बमूलमक्षिशूलहरं भवेत्।
शणमूलं सताम्बूलं दृग्धमिन्द्रियकल्पहृत्॥ ६४
अनन्तिन्नहरिद्रा च श्वेतसर्षपमूलकम्।
वीजानि मातुलुङ्गस्य एषामुद्वर्त्तनं समम्।
सप्तरात्रप्रयोगेण शुभदेहकरं भवेत्॥ ६५
श्वेतापराजितापत्रं निम्बपत्ररसेन तु।
नस्यदानाड्डाकिनीनां माहणां ब्रह्मरक्षसाम्।
मोक्षः स्यान्मधुसारेण नस्याच्च वृषभध्वज॥ ६६
मूलं श्वेतजयन्त्याश्च पुष्यर्क्षे तु समाहृतम्।
श्वेतापराजितार्कस्य चित्रकस्य च मूलकम्।
कृत्वा तु वटिकां नारी तिलकेन वशीभवेत्॥ ६७
पिप्पलीलौहचूर्णन्तु शुण्ठिरामलकानि च।
समानि रुद्र जानीयात् सैन्धवं मधुशर्करा॥ ६८
उडुम्बरप्रमाणेन सप्ताहभक्षणात् समम्।
पुमांश्च बलवान् स स्याज्जीवेद्वर्षशतद्वयम्।
ओं ठ ठ ठ इति
सर्व्वतन्त्रप्रयोगेषु प्रयुक्तः सर्व्वकामकृत्॥ ६९
संगृह्य वृक्षात् काकस्य निलयं प्रदहेच्च तत्।
चिताग्नौ भस्म तच्छत्रोर्दत्तं शिरसि शङ्कर॥ ७०
तमुच्चाटयते रुद्र शृणु तं योगमुत्तमम्।
निक्षिपञ्च पुरीषं वै वनमूषिकचर्म्मणि॥ ७१
कटितन्तुनिबद्धं वै कुर्य्यान्मलनिरोधनम्।
कृष्णकाकस्य रक्तेन यस्य नाम प्रलिख्यते॥ ७२
चूतदलेऽमेध्यमध्ये ततो निक्षिप्यते हर।
स खाद्यते काकवृन्दैर्नारी पुरुष एव च॥ ७३

अर्करामश्वजावीरं तिलगोक्षुरकं समम् ।
यस्तैलं नाशयेद्रुद्र आखादितमिदं हर ॥ ७४
उलूक-कृष्णकाकस्य विष्ठस्याथ समिच्छतम् ।
रुधिरेण समायुक्तं ययोर्नाम्ना तु हूयते ।
तयोर्मध्ये महावैरं भवेन्नास्त्यत्र संशयः ॥ ७५
भावितं चद्गन्धेन रोहितस्य भ्रषस्य च ।
मांसं तत्साधितं तैलं तदभ्यङ्गाच्च रोगनुत् ।
चन्दनोदकनस्यात् तु रोमोत्थानं भवेत् पुनः ॥ ७६
हस्ते लाङ्गलिकाकन्दं गृहीतं तेन लेपितम् ।
शरीरं येन स पुमान् हृद्रोगं व्यपोहति ॥ ७७
मयूररुधिरेणैव जीवं संहरते शिव ।
ज्वलतात्तु भुजङ्गानां विलस्थानामपीश्वर ॥ ७८
दृहशितान्नी दग्धश्च सर्पस्याजगरस्य हि ।
तद्भस्म सम्मुखे क्षिप्तं शत्रूणां भङ्गकृद्भवेत् ॥ ७९
मन्त्रेणानेन तत् क्षिप्तं महाभङ्गकरं रिपोः ॥
ओँ ठ ठ ठ चाहीहि चाहीति स्वाहा ।
ओँ उदरं पाहिहि पाहिहि स्वाहा ॥ ८०
सुदर्शनाया मूलन्तु पुष्यर्क्षे तु समाहृतम् ।
निक्षिप्तं गृहमध्ये तु भुजङ्गा वर्ज्जयन्ति तत् ॥ ८१
अर्कमूलेन रविणा अर्काग्निज्वलिता शिव ।
युक्ता सिद्धार्थतैलेन वर्त्तिर्मार्गाहिनाशिनी ॥ ८२
मार्ज्जारपललं विष्ठा हरितालञ्च भावितम् ।
छागमूत्रेण तल्लिप्तो मूषिको मूषिकान् हरेत् ॥ ८३
युक्तो हि मन्दिरे रुद्र नात्र कार्य्या विचारणा ।
त्रिफलार्ज्जुनपुष्पाणि भल्लातकशिरीषकम् ॥ ८४
लाचा सर्ज्जरसश्चैव विडङ्गश्चैव गुग्गलुः ।
एतैर्धूपो मक्षिकाणां मशकानां विनाशनः ॥ ८५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

## द्व्यशीत्यधिकशततमोऽध्यायः ।

हरिरुवाच ।

ब्रह्मदण्डी वचा कुष्ठं प्रियङ्गुनागकेशरम् ।
दद्यात् ताम्बूलसंयुक्तं स्त्रीणां मन्त्रेण तद्वशम् ।
ओँ नारायणी स्वाहा ॥ १
ताम्बूलं दीयते यस्य स वशी स्यात् समन्त्रतः ।
ओँ हरि हरि स्वाहा ॥ २
गोदन्तं हरितालञ्च संयुक्तं काकजिह्वया ।
चूर्णं कृत्वा यस्य शिरे दीयते स वशी भवेत् ।
श्वेतसर्षपनिर्म्माल्यं यद्गृहे तद्विनाशकृत् ॥ ३
वैभीतकं शाकोटकं मूलं पत्रञ्च संयुतम् ।
स्थाप्यते यद्गृहद्वारे तत्र वै कलहो भवेत् ॥ ४
खञ्जरीटस्य मांसन्तु मधुना सह पेषयेत् ।
ऋतुकाले योनिलेपात् पुरुषो दासतामियात् ॥ ५
अगुरुं गुग्गलुञ्चैव नीलोत्पलसमन्वितम् ।
गुड़ेन धूपयित्वा तु राजद्वारे प्रियो भवेत् ॥ ६
श्वेतापराजितामूलं पिष्टं रोचनया युतम् ।
यं पश्येत् तिलकेनैव वशी कुर्य्यान्नृपालये ॥ ७
काकजङ्घा वचा कुष्ठं निम्बपत्रं सकुङ्कुमम् ।
आत्मरक्तसमायुक्तं वशी भवति मानवः ॥ ८
आरण्यस्य विड़ालस्य गृहीत्वा रुधिरं शुभम् ।
करञ्जतैले तद्भाव्यं रुद्राग्नौ कज्जलं ततः ।
पातयेत् पद्मपत्रेण अदृश्यः स्यात् तदञ्जनात् ॥ ९
ओँ नमः खड्गवज्रपाणये महायक्षसेनापतये स्वाहा। ओँ रुद्रं क्रां क्रीं वरशक्ता त्वरिता विद्या। ओँ मातरो वः स्तम्भय स्वाहा ॥
महासुगन्धिकामूलं शुक्रं स्तम्भेत् कटौ स्थितम् ॥ १०
ओँ नमः सर्व्वसत्त्वेभ्यो नमः सिद्धिं कुरु कुरु स्वाहा ।
सप्ताभिमन्त्रितं कृत्वा करवीरस्य पुष्पकम् ।
स्त्रीणामग्रे भ्रामयेच्च चणाद्वै सा वशा भवेत् ॥ ११
ब्रह्मदण्डी वचा पत्रं मधुना सह पेषयेत् ।
अङ्गलेपाच्च वनिता नान्यं भर्त्तारमिच्छति ॥ १२
ब्रह्मदण्डीशिफा वक्त्रे क्षिप्ता शुक्रस्य स्तम्भनम् ।
मूलं जयन्त्या वक्त्रस्थं व्यवहारे जयप्रदम् ॥ १३
भृङ्गराजस्य मूलन्तु पिष्टं शुक्रेण संयुतम् ।
अक्षिणी चाञ्जयित्वा तु वशी कुर्य्यान्नरं किल ॥ १४
अपराजिताशिफान्तु नीलोतालसमन्विताम् ।
ताम्बूलेन प्रदानाच्च वशीकरणमुत्तमम् ॥ १५
अङ्गुष्ठे च पदे गुल्फे जानौ च जघने तथा ।
नाभौ वक्षसि कुचौ च कक्षे कण्ठे कपोलके ।
ओष्ठे नेत्रे ललाटे च मूर्द्ध्नि चन्द्रकलाः स्थिताः ॥ १६

स्त्रीणां पक्षे सिते कृष्णे जङ्घाधः संस्थिता नृणाम्।
वामाङ्गे दक्षिणाङ्गे च क्रमादुद्र द्रवादिकृत् ॥ १७
चतुःषष्टिकलाः प्रोक्ताः कामशास्त्रे वशीकराः।
आलिङ्गनाद्या नारीणां कुमारीणां वशीकराः ॥१८
रोचनागन्धपुष्पाणि निम्बपुष्पं प्रियङ्गवः।
कुङ्कुमं चन्दनञ्चैव तिलकेन जगद्दशेत् ॥ १९
ओं ह्रीं गौरि देवि सौभाग्यं पुत्त्रवश्यादि देहि मे।
ओं ह्रींलक्ष्मिदेविसौभाग्यंसर्व्वं त्रैलोक्यमोहनम्॥२०
सुगन्धश्च हरिद्रा च कङ्कुमानि च लेपतः।
वशयेद्रुद्र धूपश्च पुष्पधूपं सुगन्धिकम् ॥ २१
दुरालभा वचा कुष्ठं कुङ्कुमञ्च शतावरी।
तिलतैलेन संयुक्तं योनिलेपाद्दशो नरः ॥ २२
निम्बकाष्ठस्य धूमेन धूपयित्वा भगं स्त्रियः।
सुभगा स्यात् याति रुद्र पतिर्दासो भविष्यति ॥ २३
माहिषं नवनीतञ्च कुष्ठञ्च मधुयष्टिका।
सौभाग्यं भगलेपात् स्यात् पतिर्दासो भवेत् तथा॥२४
मधुयष्टिञ्च गोक्षीरं तथा च कण्टकारिका।
एतानि समभागानि पिबेदुष्णेन वारिणा।
चतुर्भागावशेषेण गर्भस्रावमुत्तमम् ॥ २५
मातुलुङ्गस्य वीजानि क्षीरेण सह भावयेत्।
तत् पीत्वा लभते गर्भं नात्र कार्य्या विचारणा ॥ २६
मातुलुङ्गस्य वीजानि मूलान्यरण्डकस्य च।
घृतेन सह संयोज्य पाययेत् पुत्त्रकाङ्क्षिणी ॥ २७
अश्वगन्धाघृतं दुग्धं क्वाथितं पुत्त्रकारकम् ॥
पलाशस्य तु वीजानि क्षौद्रेण सह पेषयेत्।
रजस्वला तु पीत्वा स्यात् पुष्पगर्भविवर्ज्जिता ॥ १८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे द्व्यशीत्य-
धिकशततमोऽध्यायः ॥ १८२ ॥

---

## त्र्यशीत्यधिकशततमोऽध्यायः।

### हरिरुवाच।

हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम्।
जाति-हिङ्गुलकं लाक्षा पक्वतैलेन पेषयेत् ॥ १
हरीतकीकषायेण मृष्ट्वा दन्तान् प्रलेपयेत्।
दन्ताः स्युर्लोहिताः पुंसः श्वेता रुद्र न संशयः ॥ २
मूलकं छिद्य मन्दाग्नौ रसं तस्य प्रपूरयेत्।
कर्णयोः पूरणात् तेन कर्णस्रावो विनश्यति ॥ ३
अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः।
निष्पीड्य पूरयेत् कर्णौ कर्णशूलं विनश्यति ॥ ४
प्रियङ्गुमधुकायष्टि-धातक्युत्पलपङ्क्तिभिः।
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च।
पचेत् तैलं तथा स्त्रीणां नश्येत् क्लेदः प्रपूरणात्॥५
शुष्कमूलक-शुण्ठीनां क्षारो हिङ्गु महौषधम्।
शतपुष्पा वचा कुष्ठं दारु-शिग्रु-रसायनम् ॥ ६
सौवर्च्चलं यवक्षारं तथा सर्ज्जिक-सैन्धवम्।
तथा ग्रन्थि विड़ं मुस्तं मधुयुक्तं चतुर्गुणम् ॥ ७
मातुलुङ्गरसस्तद्वत् कदल्याश्च रसो हि तैः।
पक्वतैलं हरेदाशु स्रावादींश्च न संशयः ॥ ८
कर्णयोः कृमिनाशः स्यात् कटुतैलस्य पूरणात्॥९
हरिद्रा-निम्बपत्राणि पिप्पल्यो मरिचानि च।
विड़ङ्गभद्रं मुस्तञ्च सप्तमं विश्वभेषजम् ॥ १०
गोमूत्रेण च पिष्ट्वैव कृत्वा च वटिकां हर।
अजीर्णहृद्वद्वेच्चैकं दयं विसूचिकापहम् ॥ ११
पटोलं मधुना हन्ति गोमूत्रेण तथार्व्वुदम्।
एषा च शङ्करी वर्त्तिः सर्व्वनेत्रामयापहा॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे त्र्यशीत्य-
धिकशततमोऽध्यायः ॥ १८३ ॥

---

## चतुरशीत्यधिकशततमोऽध्यायः।

### हरिरुवाच।

वचा मांसी च विल्वञ्च तगरं पद्मकेशरम्।
नागपुष्पं प्रियङ्गुञ्च समभागानि चूर्णयेत्।
अनेन धूपितो मर्त्त्यः कामवद्विचरेन्महीम् ॥ १
कर्पूरं देवदारुञ्च मधुना सह योजयेत्।
लिङ्गलेपाच्च तेनैव वशीकुर्य्यात् स्त्रियं किल ॥ २
मैथुनं पुरुषो गच्छेद्गृह्णीयात् स्वकमिन्द्रियम्।
वामहस्तेन वामञ्च हस्तं यस्या स्त्रिया लिपेत्।
आलिप्ता स्त्री वशं याति नान्यं पुरुषमिच्छति॥३
ओं रक्तचण्डिके अमुकं मे वशमानय आ[illegible]
ओं ह्रीं ह्रीं क्षः फट्।

द्रूर्म जलायुतं मन्त्रं तिलकेन च शङ्कर।
गोरोचनासंयुतेन खरक्तेन वशीभवेत्॥ ४
सम्भवं कृष्णालवणं सौवीरं मत्स्यपित्तकम्।
मधुसर्पिः-सितायुक्तं स्त्रीणां तद्भगलेपनम्॥ ५
यः पुमान् मैथुनं गच्छेन्नान्यां नारीं गमिष्यति॥ ६
शङ्खपुष्पी वचा मांसी सोमराजी च फल्गुकम्।
माहिषं नवनीतञ्च गाढ़ीकरणमुत्तमम्॥ ७
सनालानि च पद्मानि क्षीरेणाज्येन पेषयेत्।
गुटिकां शोधितां कृत्वा नारी योन्यां प्रवेशयेत्।
दशवारं प्रसूतापि पुनः कन्या भविष्यति॥ ८
सर्षपाश्च वचा चैव मदनस्य फलानि च।
मार्ज्जारविष्ठाधुस्तूरं स्त्रीकेशेन समन्वितः।
चातुर्थकहरो धूपो डाकिनीज्वरनाशकः॥ ९
अर्ज्जुनस्य च पुष्पाणि भल्लातक-विड़ङ्गके।
वाला चैव सर्ज्जरसं सौवीर-सर्षपास्तथा।
सर्प-यूका-मक्षिकाणां धूमो मशकनाशनः॥ १०
भूलतायाश्च चूर्णेन स्तम्भः स्याद्दयोनिपूरणात्।
तेन लेपनतो योनौ भगस्तम्भस्तु जायते॥ ११

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे चतुर-
शीत्यधिकशततमोऽध्यायः॥ १८४॥

---

## पञ्चाशीत्यधिकशततमोऽध्यायः।

हरिरुवाच।

ताम्बूलञ्च घृतं क्षौद्रं लवणं ताम्रभाजने।
घृष्टं पयःसमायुक्तं चक्षुःशूलहरं परम्॥ १
विभीतकस्य वीजानि हरितालं मनःशिला।
सर्व्वाक्षिरोगान् नश्येयुरजाक्षीरसमन्विताः॥ २
तत्क्षणात् पुष्पनाशः स्यान्मालतीकुसुमाञ्जनात्॥ ३
हरीतकी वचा कुष्ठं व्योषं हिङ्गु मनःशिला।
कासे श्वासे च हिक्कायां लिह्यात् क्षौद्रं घृतप्लतम्॥ ४
पिप्पली-त्रिफलाचूर्णं मधुना लेहयेन्नरः।
नश्यते पीनसः कासः श्वासश्च बलवत्तर॥ ५
समूलचित्रकं भस्म पिप्पलीचूर्णकं लिहेत्।
श्वासं कासञ्च हिक्काञ्च मधुमिश्रं वृषध्वज॥ ६
नीलोत्पलं शर्करा च मधुकं पद्मकं समम्।
तण्डुलोदकसंमिश्रं प्रशमेद्रक्तविक्रिया॥ ७
शुण्ठी च शर्करा चैव तथा क्षौद्रेण संयुता।
कोकिलस्वर एव स्याद्गुण्डिकाभुक्तिमात्रतः॥ ८
हरितालं शङ्खचूर्णं कदलीदलभस्मना।
एतद्द्रव्येण चोद्वर्त्त्यं लोमशातनमुत्तमम्॥ ९
लवणं हरितालञ्च तुम्बिन्याश्च फलानि च।
लाक्षारससमायुक्तं लोमशातनमुत्तमम्॥ १०
सुधा च हरितालञ्च शङ्खभस्म मनःशिला।
सैन्धवेन सहैकत्र च्छागमूत्रेण पेषयेत्।
तत्क्षणादुद्वर्त्तनादेव लोमशातनमुत्तमम्॥ ११
शङ्खमामालकं पत्रं धातक्याः कुसुमानि च।
पिष्ट्वा तत् पयसा सार्द्धं सप्ताहं धारयेन्मुखे।
स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति विमलप्रभाः॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पञ्चा-
शीत्यधिकशततमोऽध्यायः॥ १८५॥

---

## षड़शीत्यधिकशततमोऽध्यायः।

हरिरुवाच।

शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते॥ १
भुक्ते तु शर्करा पीता नवनीतेन बुद्धिकृत्।
गुड़स्य तु पुराणस्य पलमेकन्तु भक्षयेत्॥ २
प्रत्यहं वर्षमेकन्तु निरन्तरमथो हर।
स्त्रीसहस्रञ्च गच्छेच्च पुमान् बलयुतो हर॥ ३
कुष्ठं सुचूर्णितं कृत्वा घृत-माक्षिकसंयुतम्।
भक्षयेत् स्वप्नवेलायां (क) वली-पलितनाशनम्॥ ४
अतसी-माष-गोधूम-चूर्णं कृत्वा तु पिप्पलीम्।
घृतेन लेपयेद्गात्रमेभिः सार्द्धं विचक्षणः।
कन्दर्पसदृशो मर्त्त्यो नित्यं भवति शङ्कर॥ ५
यवास्तिलाश्वगन्धा च मुषली सरला गुड़म्।
एभिश्च वटिकां जग्ध्वा तरुणो बलवान् भवेत्॥ ६
हिङ्गुं सौवर्च्चलं शुण्ठीं पीत्वा तु क्वथितोदकैः।
परिणामाख्यशूलञ्च अजीर्णञ्चैव नश्यति॥ ७
धातकीं सोमराजीञ्च क्षीरेण सह पेषयेत्।

(क) स्वल्पवेलायामिति पाठोऽपि दृश्यते।

दुर्ब्बलस्य भवेत् स्थूलो नात्र कार्य्या विचारणा ॥ ८
शर्करा-मधुसंयुक्तं नवनीतं बली लिहेत्।
क्षीराशी च क्षयी पुष्टिं मेधाञ्चैवातुलां लभेत् ॥ ९
कुलीरचूर्णं सक्षीरं पीतञ्च क्षयरोगनुत् ॥ १०
भल्लातकं विड़ङ्गञ्च यवक्षारञ्च सैन्धवम्।
मनःशिला-शङ्खचूर्णं तैलपक्वं तथैव च।
लोमानि शातयत्येव नात्र कार्य्या विचारणा ॥ ११
मातुलुङ्गस्य रसं गृह्य जलौकां तत्र पेषयेत्।
हस्तौ संलेपयेत् तेन अग्निस्तम्भनमुत्तमम् ॥ १२
शाल्मलीरसमादाय खरमूत्रे निधाय तम्।
अग्न्यादौ विक्षिपेत् तेन अग्निस्तम्भनमुत्तमम् ॥ १३
वायसी-उदरं गृह्य मण्डूकवसया सह।
गुटिकां कारयेत् तेन ततोऽग्नौ संक्षिपेत् सुधीः ॥१४
ओं अग्निस्तम्भनं कुरु कुरु ॥
एवमेतत् प्रयोगेण अग्निस्तम्भनमुत्तमम् ॥ १५
मुण्डीतकवचामुस्तं मरीचं तगरं तथा।
चर्व्विला च इमं सद्यो जिह्वया ज्वलनं लिहेत् ॥१६
गोरोचनां भृङ्गराजं चूर्णीकृत्य घृतं समम्।
दिव्याम्भसः स्तम्भनं स्याल्लेपानेन वै तथा ॥ १७
ओं नमो भगवति जलं स्तम्भय स्तम्भय सं सं
सं कैक कैक चर चर ॥
जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ॥ १८
व्याघ्रास्थिञ्च गवास्थिञ्च तथा निर्म्माल्यमेव च।
यस्यारेर्निखनेद्द्वारे पञ्चत्वमुपयाति सः ॥ १९
सप्त रक्तानि पुष्पाणि पृथग्जात्याः समालभेत्।
कुङ्कुमेन समायुक्तमात्मरक्तसमन्वितम् ॥ २०
पुष्येण तु समं पिष्ट्वा रोचनायाः पलैकतः।
स्त्रिया पुंसा कृतो रुद्र तिलकोऽयं वशीकरः ॥ २१
ब्रह्मदण्डी तु पुष्येण भक्ष्ये पाने वशीकरः।
यष्टीमधुपलैकेन पक्वमुष्णोदकं पिबेत्।
विष्टम्भिकाञ्च हृच्छूलं हरत्येव महेश्वर ॥ २२
ओं क्रूं जः ॥
मन्त्रोऽयं हरते रुद्र सर्व्ववृश्चिकजं विषम् ॥ २३
पिप्पलीं नवनीतञ्च शृङ्गवेरञ्च सैन्धवम्।
मरीचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत् ॥ २४
त्रिफलार्द्रककुष्ठञ्च चन्दनं घृतसंयुतम्।
एतत्पानाच्च लेपाच्च विषनाशो भवेच्छिव ॥ २५
पारावतस्य चाक्षीणि हरितालं मनःशिला।
एतद्द्वयोगो विषं हन्ति वैनतेय इवोरगान् ॥ २६
सैन्धवं त्र्यूषणं चूर्णं दधिमध्वाज्यसंयुतम्।
वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज ॥ २७
ब्रह्मदण्डी-तिलान् क्वाथ्य चूर्णं त्रिकटुकं पिबेत्।
नाशयेद्रुद्र गुल्मानि निरुद्धं रक्तमेव च ॥ २८
पीला क्षीरं क्षौद्रयुतं नाशयेद्दक्षजः स्तुतिम् ॥ २९
अटरूषकमूलेन भगं नाभिञ्च लेपयेत्।
सुखं प्रसूयते नारी नात्र कार्य्या विचारणा ॥ ३०
शर्करां मधुसंयुक्तां पीला तण्डुलवारिणा।
रक्तातिसारशमनं भवतीति वृषध्वज ॥ ३१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे षड़-
शीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

---

## सप्ताशीत्यधिकशततमोऽध्यायः।

हरिरुवाच।

मरीचं शृङ्गवेरञ्च कुटजलचमेव च।
पानाच्च ग्रहणी नश्येच्छशाङ्काङ्कितशेखर ॥ १
पिप्पली पिप्पलीमूलं मरीचं तगरं वचा।
देवदारुरसं पाठां क्षीरेण सह पेषयेत् ॥ २
अनेनैव प्रयोगेण अतीसारो विनश्यति।
मरीच-तिलपुष्पाभ्यामञ्जनं कामलापहम् ॥ ३
हरीतकी समगुड़ा मधुना सह योजिता।
विरेचनकरी रुद्र भवतीति न संशयः ॥ ४
त्रिफला-चित्रकं चित्रं तथा कटुकरोहिणी।
जरस्तम्भहरो ह्येष उत्तमन्तु विरेचनम् ॥ ५
हरीतकी शृङ्गवेरं देवदारु च चन्दनम्।
क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम्।
जङ्घामूलमूरुस्तम्भं सप्तरात्रेण नाशयेत् ॥ ६
अनन्त-शृङ्गवेरञ्च सूक्ष्मचूर्णानि कारयेत्।
गुग्गलुं गुड़तुल्यञ्च गुलिकामुपयुज्य च।
वायु-स्नायुगतञ्चैव अग्निमान्द्यञ्च नाशयेत् ॥ ७
शङ्खपुष्पीन्तु पुष्येण समुद्धृत्य रुपत्रिकाम्।
समूलां छागदुग्धेन अपस्मारहरां पिबेत् ॥ ८

...खगन्धामया चैव उदकेन समं पिबेत् ।
...तरपित्तं विनश्येत नात्र कार्य्या विचारणा ॥ ९
हरीतकी-कुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ।
...गीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ॥ १०
गुडूची-पद्मकारिष्ट-धन्याकं रक्तचन्दनम् ।
पित्तश्लेष्मज्वर-च्छर्द्दि-दाह-तृष्णाघ्नमग्निकृत् ॥ ११

ओं हूं नम इति ।

...वद्धा शङ्खपुष्पी ज्वरं मन्त्रेण वै हरेत् ॥ १२
ओं जम्भिनी स्तम्भिनी मोहय सर्व्वव्याधीन्
...वज्रेण ठः ठः सर्व्वव्याधीन् वज्रेण फड़िति ।
...मष्टशतं जप्त्वा हस्ते दत्त्वा नखं स्पृशेत् ।
चातुर्थको ज्वरो रुद्र अन्ये चैव ज्वरास्तथा ॥ १३
जम्बूफलं हरिद्रा च सर्पस्यैव च कञ्चुकम् ।
सर्व्वज्वराणां धूपोऽयं हरश्चातुर्थकस्य च ॥ १४
करवीरं भृङ्गपत्रं लवणं कुष्ठ-कर्कटम् ।
चतुर्गुणेन मूत्रेण पचेत् तैलं हरेच्च तत् ।
पामां विचर्च्चिकां कुष्ठमस्यङ्गाद्वि व्रणानि वै ॥ १५
पिप्पली-मधुपानाच्च तथा मधुरभोजनात् ।
प्लीहा विनश्यते रुद्र तथा शूरणसेवनात् ॥ १६
पिप्पलीञ्च हरिद्राञ्च गोमूत्रेण समन्विताम् ।
...लिपेच्च गुदद्वारे अर्शांसि विनिवारयेत् ॥ १७
...जादुग्धमार्द्रकञ्च पीतं प्लीहादिनाशनम् ।
...वञ्च विडङ्गानि सोमराजी तु सर्षपाः ॥ १८
...जनी द्वे विषञ्चैव गोमूत्रेणैव पेषयेत् ।
कुष्ठनाशस्य तल्लेपान्निम्बपत्रादिना तथा ॥ १९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सप्ताशीत्यधिकशततमोऽध्यायः ॥१८७॥

---

## अष्टाशीत्यधिकशततमोऽध्यायः ।

हरिरुवाच ।

रजनी-कदलीक्षारलेपः सिध्मविनाशनः ।
कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ।
उष्णोदकेन सम्पीत्वा कटिशूलविनाशनम् ॥ १
...मयानवनीतञ्च शर्करापिप्पलीयुतम् ।
पानादर्शोहरं स्याच्च नात्र कार्य्या विचारणा ॥ २

अटरूषकपत्रेण घृतं मृद्वग्निना पचेत् ।
चूर्णं कृत्वा तु लेपोऽयं अर्शोरोगहरः परः ॥ ३
गुग्गलु-त्रिफलायुक्तं पीत्वा नश्येद्भगन्दरम् ॥ ४
अजाजी-शृङ्गवेरञ्च दध्ना मण्डं विपाचयेत् ।
लवणेन तु संयुक्तं मूत्रकृच्छ्रविनाशनम् ॥ ५
यवक्षारं शर्करा च मूत्रकृच्छ्रविनाशनम् ॥ ६
चिताग्निः खञ्जरीटस्य विष्ठा फेनो हयस्य च ।
शोभाञ्जनं वासनेत्रं नर एतैस्तु धूपितः ।
अष्टधाच्छिद्रशेः सर्व्वैः किं पुनर्मानवैः शिव ॥ ७
तिलतैलं यवान् दग्ध्वा मसीं कृत्वा तु लेपयेत् ।
तेनैव सह तैलेन अग्निदग्धः सुखी भवेत् ॥ ८
लज्जालुः शरपुङ्खा च लेपः साज्योऽग्निनाशनः ।

ओं नमो भगवते ठ ठ छिन्धि छिन्धि ज्वलनं
प्रज्वलितं नाशय नाशय हूं फट् ॥ ९

करे बध्नन्तु निर्गुण्ड्या मूलं ज्वरहरं द्रुतम् ॥ १०
मूलञ्च श्वेतगुञ्जायाः कृत्वा तत् सप्तखण्डकम् ।
हस्ते बद्धा नाशयेच्च अर्शांस्येव न संशयः ॥ ११
विष्णुक्रान्ताजमूलेन चौर-व्याघ्रादिरक्षणम् ॥ १२
ब्रह्मदण्ड्यास्तु मूलानि सर्व्वकर्म्माणि कारयेत् ।
त्रिफलायास्तु चूर्णन्तु साज्यं कुष्ठविनाशनम् ॥ १३
आज्यं पुनर्नवाविल्वैः पिप्पलीभिश्च संयुतम् ।
हरेद्धिक्कां श्वास-कासं पीतं स्त्रीणाञ्च गर्भकृत् ॥ १४
भक्षयेच्चैवमादीनि पयसाज्येन पाचितम् ।
घृतशर्करया युक्तं शुक्रं स्यादक्षयं ततः ॥ १५
विड़ङ्गं मधुकं पाठां मांसीं सर्ज्जरसं तथा ।
हरिद्रां त्रिफलाञ्चैवमपामार्गं मनःशिलाम् ॥ १६
उडुम्बरं धातकीञ्च तिलतैलेन पेषयेत् ।
योनिं लिङ्गञ्च म्रक्षेत स्त्रीपुंसोःस्यात्प्रियंमिथः ॥१७

नमस्ते ईश वरदाय आकर्षिणि विकर्षिणि
मुग्धे स्वाहा इति ।

योनि-लिङ्गस्य तैलेन शङ्कर म्रक्षणात् ततः ॥ १८
पुनर्नवामृता दूर्व्वा कनकञ्चेन्द्रवारुणी ।
वीजैनैषां जातिकाया रसेन करमर्द्दनम् ॥ १९
मूषाया मध्यगं कृत्वा रसं मारणमीरितम् ।
मध्वाज्यसहितं दुग्धं बलीपलितनाशनम् ॥ २०
मध्वाज्यं गुड़ताम्रञ्च कारवेल्लरसस्तथा ।

दहनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥ २१
धौतं धुस्तूरपुष्पञ्च सीसकञ्च पलं मतम्।
लाङ्गलिकायाः शाखाञ्च स्वर्णञ्च दहनाद्भवेत् ॥ २२
तैलं धुस्तूरवृक्षस्य तेन दीपं प्रदीपयेत्।
समाधावुपविष्टन्तु गगनस्थो न पश्यति ॥ २३
वृषस्य मृत्तसयस्यैव युक्तो भेको निरुध्यते।
अङ्कुरावयवैर्युक्तो धूपं घ्रात्वा च गर्ज्जति।
विस्मयं कुरुते चैव वृषवन्नात्र संशयः ॥ २४
रात्रौ च सार्षपं तैलं कीटं खद्योतनामकम्।
ताभ्यां दीपः प्रज्वलितो वाग्निज्वालाकलापवत् ॥ २५
चर्णं छुच्छुन्दरीदेहं दग्ध्वा रुद्र प्रलेपयेत्।
तपन्ते तत्चणाद्दग्ध्वा यदि सम्यक् प्रलेपयेत्।
चन्दनेन भवेन्मोचः पानाल्लेपात् सुखी भवेत् ॥ २६
कुञ्जरस्य मदार्त्तस्य स्वयं नेत्रे शिवाञ्जयेत्।
संग्रामं जयते सोऽपि महाशूरश्च जायते ॥ २७
त्वचं डुण्डुभसर्पस्य मुखे संरुह्य वै चिपेत्।
तिष्ठते जलमध्ये तु निर्व्विकल्पं स्थले यथा ॥ २८
कुम्भीरनेत्रदंष्ट्राणि शास्थीनि रुधिरं तथा।
वसातैलसमायुक्तमेकत्र तन्नियोजयेत्।
आत्मानं म्रचयेत् तेन जले तिष्ठेद्दिनत्रयम् ॥ २९
कुम्भीरकस्य नेत्राणि हृदयं कच्छपस्य च।
मूषिकस्य वसास्थीनि शिशुमारवसा तथा।
एतान्येकत्र संलेपाज्जले तिष्ठेद्दयथा गृहे ॥ ३०
लौहचूर्णं तक्रपीतं पाण्डुरोगहरं भवेत् ॥ ३१
तण्डुलीयक-गोचुर-मूलं पीतं पयोऽन्वितम्।
कामलादिहरं पीतं मुखरोगहरं तथा ॥ ३२
जातीमूलं तक्रपीतं कोलमूलन्त्वजीर्णनुत् ॥ ३३
सतक्रकुशमूलं वा वाकुचीमूलमेव वा।
काञ्जिकेन च वाकुच्या मूलं वै दन्तरोगनुत् ॥ ३४
तथेन्द्रवारुणीमूलं वारिपीतं विषादिहृत्।
सुरभिकामूलपानाद्वातनाशो भवेच्छिव ॥ ३५
शिरोरोगहरं लेपाद्गुञ्जाचूर्णं सकाञ्जिकम्।
बला चातिबला यष्टी शर्करा मधुसंयुता ॥ ३६
बन्ध्यागर्भकरं पीतं नात्र कार्य्या विचारणा ॥ ३७
श्वेतापराजितामूलं पिप्पली-शुण्ठिकायुतम्।
अरिपिष्टं शिरोलेपाच्छिरःशूलविनाशनम् ॥ ३८

अरत्निकामूलपानात् तालुशोभा भवेच्छिव।
शिरोरोगहरं लेपाद्गुञ्जामूलं सकाञ्जिकम् ॥ ३९
निर्गुण्डिकाशिफां पीत्वा गण्डमालाविनाशनम्।
केतकीपत्रजं चारं गुड़ेन सह भक्षयेत्।
तक्रेण शरपुङ्खां वा पीत्वा प्लीहां विनाशयेत्।
मातुलुङ्गस्य निर्यासं गुड़ाज्येन समन्वितम्।
वातपित्तजशूलानि हन्ति वै पानयोगतः ॥ ४
शुण्ठीं सौवर्चलं हिङ्गुं पीत्वा हृदयरोगनुत् ॥

इति श्रीगारुड़े पूर्व्वखण्डे वैद्यशास्त्रेऽष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

---

## एकोननवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

ओं गं गणपतये स्वाहा इति।
अयं गणपतेर्मन्त्रो धन-विद्याप्रदायकः ॥ १
इममष्टसहस्रञ्च जप्त्वा बद्ध्वा शिखां ततः।
व्यवहारे जयः स्याच्च शतजापान्नृणां प्रियः।
तिलानान्तु घृताक्तानां कृष्णानां रुद्र होमयेत्
अष्टोत्तरसहस्रन्तु राजा वश्यस्त्रिभिर्दिनैः ॥
अष्टम्याञ्च चतुर्द्दश्यामुपोष्याभ्यर्च्य विघ्नराट्।
तिलाक्षतानां जुहुयादष्टोत्तरसहस्रकम्।
अपराजितः स्याद्युद्धे सर्व्वं तच्च शिशिविरे।
जप्त्वा चाष्टसहस्रन्तु ततश्चाष्टशतेन हि।
शिखां बद्ध्वा राजकुले व्यवहारे जयी भवेत्।
क्लीङ्कारं सविसर्गञ्च प्रातःकाले नरस्तु यः।
स्त्रीणां ललाटे विन्यस्य वश्यतां नयति ध्रुवम्
सुसमाहितचित्तेन न्यस्य तु प्रमदालये।
सोल्कामां कामिनीं कुर्य्यात् स्खलन्मदजलार्द्र
जुहुयादयुतं यस्तु शुचिः प्रयतमानसः।
दृष्टिमात्रे सदा तस्य वश्यमायान्ति योषितः ॥
मनःशिलापत्रकञ्च सगोरचनकुङ्कुमम्।
एभिः कृते च तिलके वश्यमायान्ति योषितः ॥
सहदेवा भृङ्गराजः श्वेतापराजिता वचा।
तेनैव तिलकं कृत्वा त्रैलोक्यं वशतां नयेत् ॥
गोरोचना मीनपित्तमाभ्याञ्च कृतवर्त्तिकाम्।

पुमांस्तिलकं कुर्य्याद्वामहस्तकनिष्ठया ।
करोति वशं सर्व्वं त्रैलोक्यं नात्र संशयः ॥ ११
रोचना महादेव ऋतुशोणितभाविता ।
तः कृताच्च तिलकान्तरं यं सा निरीच्यते ।
चणात् तं वशं कुर्य्यान्नात्र कार्य्या विचारणा॥१२
गीश्वरश्च शैलेयं लकुपत्रञ्च हरीतकी ।
न्दनं कुष्ठ-सूक्ष्मैला रक्तशालिसमन्विता ।
तैधूपो वशकरः स्मरवाण इवेश्वर ॥ १३
तिकाले महादेव पार्व्वतीप्रिय शङ्कर ।
निजशुक्रं गृहीला तु वामहस्तेन यः पुमान् ।
कामिनीचरणं वामं लिप्येत स्यात् स्त्रियाः प्रियः॥१४
न्धवञ्च महादेव पारावतमलं मधु ।
भिर्लिप्तन्तु लिङ्गं वै कामिनीवशकृद्भवेत् ॥ १५
पुष्पाणि पञ्च रक्तानि गृहीला यानि कानि च ॥ १६
तत्तुल्यञ्च प्रियङ्गुञ्च पेषयेदेकयोगतः ।
नेन लिप्तलिङ्गस्य कामिनी वशतामियात् ॥ १७
हयगन्धा च मञ्जिष्ठा मालतीकुसुमानि च ।
श्वेतसर्षप एतैश्च लिप्तलिङ्गः स्त्रियाः प्रियः ॥ १८
मूलन्तु काकजङ्घाया दुग्धपीतन्तु शोषनुत् ।
अश्वगन्धा-नागबला-गुड़-माषनिषेविणः ।
रूपं भवेद्दयथा तद्वन्नवयौवनचारिणाम् ॥ १९
लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेव वा ।
मधुना सेवितं रुद्र परिणामाख्यशूलनुत् ॥ २०
क्वथितोदकपानन्तु शम्बूकक्षारकं तथा ।
शृङ्गं ह्यग्निदग्धं गव्याज्येन समन्वितम् ।
पीतं हृत्पृष्ठशूलानां भवेन्नाशकरं शिव ॥ २१
हिङ्गु-सौवर्च्चलं शुण्ठी वृषध्वज महौषधम् ।
एभिस्तु क्वथितं वारि पीतं वै सर्व्वशूलनुत् ॥ २२
अपामार्गस्य वै मूलं सामुद्रलवणान्वितम् ।
आस्वादितमजीर्णस्य शूलस्य स्याद्विमर्द्दनम् ॥ २३
कटोहाङ्कुरो रुद्र तण्डुलोदकघर्षितः ।
पीतः सतक्रोऽतीसारं क्षयं नयति शङ्कर ॥ २४
अङ्कोठमूलकर्षार्द्धं पिष्टं तण्डुलवारिणा ।
सर्व्वातीसारग्रहणीं पीतं हरति भूतप ॥ २५
मरीच-शुण्ठी-कुटजत्वक्चूर्णञ्च गुड़ान्वितम् ।
समात् तद्द्विगुणं पीतं ग्रहणीव्याधिनाशनम् ॥ २६
श्वेतापराजितामूलं हरिद्रासिक्थतण्डुलम् ।
अपामार्गत्रिकटुकमेषाञ्च वटिकां शिव ।
विसूचिकामहाव्याधिं हरत्येव न संशयः ॥ २७
त्रिकटु त्रिफला चैव शिलाजतु हरीतकी ।
एकैकमेषां चर्णन्तु मधुना च विमिश्रितम् ।
पीतं सर्व्वञ्च मेहन्तु क्षयं नयति शङ्कर ॥ २८
अर्कक्षीरं प्रस्थमेकं तिलतैलं तथैव च ।
मनःशिलामरीचानां सिन्दूरस्य पलं पलम् ॥ २९
चूर्णं कृत्वा ताम्रपात्रे त्वातपैः शोषयेत् ततः ।
पीतं स्नुहीगतं दुग्धं सैन्धवं शूलनुद्भवेत् ॥ ३०
त्रिकटु त्रिफलालक्तं तिलतैलं तथैव च ।
मनःशिला निम्बपत्रं जातीपुष्पमजापयः ॥ ३१
तन्मूत्रं शङ्खनाभिश्च चन्दनं घर्षयेत् ततः ।
एभिश्च वर्त्तिकां कृत्वा त्वक्षिणी चाञ्जयेत् ततः
नश्यते पटलं काचं पुष्पञ्च तिमिरादिकम् ॥ ३२
विभीतकस्य वै चूर्णं समधु श्वासनाशनम् ॥ ३३
पिप्पली त्रिफलाचूर्णं मधु-सैन्धवसंयुतम् ।
सर्व्वरूपज्वर-श्वास-शोष-पीनसहृद्भवेत् ॥ ३४
देवदारोश्च वै चूर्णमजामूत्रेण भावयेत् ।
एकविंशति वै वारमक्षिणी तेन चाञ्जयेत् ।
रात्र्यन्धता पटलता नश्येन्निर्लोमता तथा ॥ ३५
पिप्पली केतकं रुद्र हरिद्रामलकं वचा ।
सर्व्वाक्षिरोगा नश्येयुः सक्षीरादञ्जनात् ततः ॥ ३६
काकजङ्घा-शिग्रुमूले मुखेन विधृते शिव ।
चर्व्विता दन्तरोगाणां विनाशो हि भवेद्धर ॥ ३७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एकोन-
नवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

---

## नवत्यधिकशततमोऽध्यायः ।

### हरिरुवाच ।

पीतं सारं गुडूच्याश्च मधुना च प्रमेहनुत् ।
पीतं गोहालिकामूलं तिलदध्याज्यसंयुतम् ॥ १
निरुहमूलं क्वथितं निवर्त्तयति शङ्कर ।
तथा हिक्कां हरेत् पीतं सौवर्च्चलयुतञ्च वै ॥ २
गोरक्ष-कर्कटीमूलं पिष्टं वास्योदकेन च ।

पीतं दिनत्रयेणैव नाशयेद्वन्तशर्करान् ॥ ३
पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहितम् ।
साधितं छागदुग्धेन पीतं शर्करयान्वितम् ।
हरेन्मूत्रनिरोधञ्च हरेद्दै पाण्डुशर्कराम् ॥ ४
विजयश्चाश्च वै मूलं पिष्टं तण्डुलवारिणा ।
गण्डमालां हरेल्लेपात् कुरण्ड-गलगण्डकौ ॥ ५
रसाञ्जनं हरीतक्याश्चूर्णं तेनैव गुण्ठनात् ।
नश्येद्दै पुरुषव्याधीन् नात्र कार्य्या विचारणा ॥ ६
करवीरमूललेपाल्लेपात् पूगफलस्य च ।
पुंव्याधिर्नश्यति रुद्र योगमन्यं वदाम्यहम् ॥ ७
दन्तिमूलं हरिद्रा च चित्रकं तस्य लेपनात् ।
भगन्दरविनाशः स्यादन्यं योगं वदाम्यहम् ॥ ८
जलौकाजग्धरक्तञ्च भगन्दरमुमापते ।
त्रिफलाजलघृष्टञ्च मार्ज्जारास्थिविलेपितम् ॥ ९
ततो न प्रस्रवेद्रक्तं नात्र कार्य्या विचारणा ।
हरिद्रानेकवारञ्च स्नुहीक्षीरेण भाविता ॥ १०
झटित्यर्शोविनाशाय तल्लेपाद्वृषभध्वज ।
घोषाफलं सैन्धवञ्च पिष्ट्वा चार्शोहरं परम् ॥ ११
गव्याज्यं साधितं पीतं पलाशक्षारवारिणा ।
त्रिगुणेन त्रिकटुकमर्शांसि क्षययेच्छिव ॥ १२
बिल्वस्य च फलं दग्धं रक्तार्शःप्रविनाशनम् ।
जग्ध्वा कृष्णतिलान्येव नवनीतयुतान्यपि ॥ १३
यवक्षारं शुण्ठीचूर्णं युक्तं तुल्यगुड़ान्वितम् ।
क्षौद्रमग्निं करोत्येष प्रत्यषि वृषभध्वज ॥ १४
शुण्ठ्या च क्वथितं वारि पीतञ्चाग्निं करोति वै ।
हरीतकीं सैन्धवञ्च चित्रकं रुद्र पिप्पली ॥ १५
चूर्णमुष्णोदकेनैषां पीतञ्चातिक्षुधाकरम् ।
आज्यं शूकरमांसं वै पीतञ्चातिक्षुधाकरम् ॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

---

## एकनवत्यधिकशततमोऽध्यायः ।

### हरिरुवाच ।

हस्तिकर्णस्य वै मूलं गृहीत्वा चूर्णयेद्धर ।
सर्व्वरोगविनिर्मुक्तं चूर्णं पलशतं पिब ॥ १
सक्षीरं भक्षितं कुर्य्यात् सप्ताहेन वृषध्वज ।
नरं श्रुतिधरं रुद्र मृगेन्द्रगतिविक्रमम् ॥ २
पद्मरागप्रतीकाशं युक्तं दशशतायुषा ।
षोड़शाब्दाकृतिं रुद्र सततं दुग्धभोजनात् ॥ ३
मधु-सर्पिःसमायुक्तं जग्धमायुष्करं भवेत् ।
तज्जग्धं मधुना सार्द्धं दशवर्षसहस्रिकम् ।
कुर्य्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम् ॥ ४
दध्ना नित्यं भक्षितन्तु वज्रदेहकरं भवेत् ।
केशराजिसमायुक्तं नरं वर्षसहस्रिणम् ॥ ५
तच्च काञ्जिकसंयुक्तं नरं कुर्य्याच्च भक्षितम् ।
शतवर्षं दिव्यदेहं वलीपलितवर्ज्जितम् ॥ ६
जग्धं त्रिफलया युक्तं चक्षुष्मन्तं करोति वै ।
अन्धः पश्येत् तु चूर्णस्य साज्यस्यैव तु भक्षणात् ।
महिषीक्षीरसंयुक्तस्तल्लेपः कृष्णकेशकृत् ।
खल्वीटस्य च वै केशा भवन्ति वृषभध्वज ॥ ७
तैलयुक्तेन चूर्णेन वली-पलितनाशनम् ।
तदुद्वर्त्तनमात्रेण सर्व्वरोगैः प्रमुच्यते ॥ ८
सच्छागक्षीरचूर्णेन दृष्टिः स्यान्मासतोऽञ्जनात् ।
पलाशस्य च वीजानि श्रावणे वितुषाणि च ।
गृहीत्वा नवनीतेन तेषां चूर्णञ्च भक्षयेत् ॥ ११
वर्षार्द्धमेककल्माषं नत्वा नित्यं हरिं प्रभुम् ।
षष्टिपुराणधान्यस्य पथ्यमम्बुवर्ज्जं हर ।
जीवेद्वर्षसहस्राणि वली-पलितवर्ज्जितः ॥ १२
भृङ्गराजस्य वै मूलं पुष्यर्क्षे तु समाहृतम् ।
विड़ालपदमात्रन्तु ससौवीरञ्च भक्षयेत् ॥ १३
मासमात्रप्रयोगेण वलीपलितवर्ज्जितः ।
शतानि पञ्च जीवेच्च नरो नागबलो भवेत् ।
भवेच्छ्रुतिधरो रुद्र पुष्यर्क्षे चैव भक्षणात् ॥ १४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एक-
नवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

---

## द्विनवत्यधिकशततमोऽध्यायः ।

### हरिरुवाच ।

निर्व्रणः स्यात् पूयहीनो प्रहारो घृतपूरितः ।
अपामार्गस्य वै मूलं हस्ताभ्याञ्च विमर्दितम् ।

तद्दृष्टैन प्रहारस्य रक्तस्रावो न पूरणात् ॥ १
तद्रवलाङ्गलिकामूलं हिज्जलस्य तथैव च ।
तेन व्रणमुखं लिप्तं शल्यो निःसरति व्रणात् ।
चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर ॥ २
वालमूलं सेषशृङ्गी-मूलं वा वारिघर्षितम् ।
तेन लिप्तं चिरं जातं नाडीव्रणं प्रशाम्यति ॥ ३
माहिषदधियुक्तेन जग्धं कोद्रवभक्तकम् ।
कङ्कुमूलस्य वै चूर्णं दत्तं नाडीव्रणापहम् ॥ ४
ब्रह्मयष्टिफलं पिष्टं वारिणा तेन लेपितम् ।
तेन दृष्टं रक्तदोषः प्रणश्यति न संशयः ॥ ५
यवभस्म विडङ्गञ्च गन्धपाषाणमेव च ।
गुडिरसेणाश्च चूर्णं भावितं रुधिरेण वै ।
कृकलासस्य तल्लिप्तं विद्रधिं नाशयेच्छिव ॥ ६
शोभाञ्जनस्य मूलन्तु शतशीमसिना सह ।
गौरसर्षपयुक्तानि सर्व्वाण्येतानि शङ्कर ।
पिष्टान्यनलतक्रेण ग्रन्थिकं नाशयेद्धि व ॥ ७
श्वेतापराजितामूलं पिष्टं तण्डुलवारिणा ।
तेन नस्यप्रदानात् स्याद्भूतवृन्दस्य विद्रवः ॥ ८
अगस्त्यपुष्पनस्यं वै समरीचन्तु मूलहृत् ॥ ९
भुजङ्गवर्मं वै हिङ्गु निम्बपत्राणि वै यवाः ।
गौरसर्षप एभिः स्याल्लेपो भूतहरः शिव ॥ १०
गोरोचना मरीचानि पिप्पली सैन्धवं मधु ।
अञ्जनं कृतमेभिः स्याद्ब्रह्मभूतहरं शिव ॥ ११
गुग्गुलूलूकपुच्छाभ्यां धूपाद्ब्रह्महरो भवेत् ।
चातुर्थकज्वरैर्मुक्तो कृष्णावस्त्रावगुण्ठितः ॥ १२
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

---

## त्रिनवत्यधिकशततमोऽध्यायः ।

हरिरुवाच ।

श्वेतापराजितापुष्प-रसेनाच्छोस्न पूरणे ।
पटलं नाशमायाति नात्र कार्य्या विचारणा ॥ १
मूलं गोक्षुरकस्यैव चर्व्विता नीललोहित ।
रक्तकीटव्यथा नश्येदन्धासुरविमर्द्दन ॥ २
नारी पुष्पादि लेपिता गोक्षीरेणोपवासतः ।
श्वेतार्कस्य तु वै मूलं तस्यास्तद्गुल्ममूलनुत् ॥ ३
श्वेतार्कपुष्पं विधिना गृहीतं पूर्व्वमन्त्रितम् ।
ऋतुस्नाता च ललना कटौ बद्धा नरोऽथवा ।
नारी पुत्रं हि लभते सुरते वृषभध्वज ॥ ४
हस्तबद्धं पलाशस्य अपामार्गस्य वा हर ।
मूलं सर्व्वज्वरहरं भूतप्रेतादिनुद्भवेत् ॥ ५
पीतं वृश्चिकमूलञ्च पर्य्युषितजलेन वै ।
साद्धं विनाशयेद्दाह-ज्वरञ्च परमेश्वर ॥ ६
शिखायाश्चैव तद्बद्धं भवेदैकाहिकादिनुत् ।
एतत् सकाञ्जिकं पीतं रक्तकुष्ठज्वरादिनुत् ।
वास्योदकेन पीतं तद्वद्विषहरं भवेत् ॥ ७
यस्य लज्जालुकामूलं दीयते च स्वरेतसा ।
साद्धं स वैरं संयाति पुमान् स्त्री वा न संशयः ॥ ८
पिष्ट्वा गव्यघृतेनैव पाठामूलं पिबेत् तु यः ।
सर्व्वं विषं विनश्येत नात्र कार्य्या विचारणा ॥ ९
वास्योदकयुतं मूलं शिरीषस्य यथा तथा ।
रक्तचित्रकमूलस्य रसस्य भरणाद्धर ।
कर्णयोः कामलाव्याधि-नाशः स्यान्नात्र संशयः ॥ १०
श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ।
त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत् ॥ ११
नारिकेलस्य वै पुष्पं छागीक्षीरेण संयुतम् ।
पिबेच्च त्रिविधस्तस्य वातरक्तो विनश्यति ॥ १२
कुर्य्यात् सुदर्शनामूलं माल्येन सुसमाहृतम् ।
कण्ठबद्धं त्र्याहिकादि-ग्रहभूतविनाशनम् ॥ १३
पुष्ये धवलगुञ्जाया गृहीतं मूलमुत्तमम् ।
मुखे तु निहितं रुद्र हरेन्नानाविषं बहु ॥ १४
हस्ते बद्धं काण्डयुक्तं कण्ठे बद्धं ग्रहादिहृत् ।
कृष्णायान्तु चतुर्द्दश्यां कटिबद्धं समाहृतम् ।
सिंहादिश्वापदाद्भीतिं हरेच्च नीललोहित ॥ १५
विष्णुक्रान्तामूलमीश कर्णबद्धन्तु धारयेत् ।
पट्टसूत्रेण भूतेश मकरादिभयं न वै ॥ १६
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे वैद्यशास्त्र त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

## चतुर्नवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

अपराजिताया मूलञ्च गोमूत्रेण समन्वितम्।
पीतञ्चापि हरत्येव गण्डमालां न संशयः॥ १
अथेन्द्रवारुणीमूलं विधिना पीतमीश्वर।
जिङ्गिन्येरण्डकं रुद्र शूकशिम्ब्या समन्वितम्।
शीतोदकञ्च तन्नस्यो बाहु-ग्रीवाव्यथां हरेत्॥ २
माहिषं नवनीतञ्च अश्वगन्धा च पिप्पली।
वचा-कुष्ठद्वयं लेपो लिङ्गस्रोतःस्तनार्त्तिहृत्॥ ३
कुष्ठ-नागबलाचूर्णं नवनीतसमन्वितम्।
तल्लेपो युवतीनाञ्च कुर्य्यान्मनोहरं स्तनम्॥ ४
इन्द्रवारुणिकामूलं यस्य नाम्ना सुदूरतः।
निक्षिप्यते समुत्पाट्य तस्य प्लीहा विनश्यति॥ ५
पुनर्नवायाः शुक्लाया मूलं तण्डुलवारिणा।
पीतं विद्रधिनुत् स्याच्च नात्र कार्य्या विचारणा॥६
कदलीपत्रक्षारन्तु पानीयेन प्रसाधितम्।
तस्यादनाद्विनश्यन्ति उदरव्याधयोऽखिलाः॥ ७
कटुत्वा मूलमादाय गुड़ाज्येन समन्वितम्।
अग्निना साधितं जग्धमुदरस्थक्रिमीन् हरेत्॥ ८
नित्यं निम्बदलानाञ्च चूर्णमामलकस्य च।
प्रत्यूषे भक्षयेच्चैव तस्य कुष्ठं विनश्यति॥ ९
हरीतकी विड़ङ्गञ्च दरिद्रा सितसर्षपाः।
सोमराजस्य वीजानि (क) करञ्जस्य च सैन्धवम्।
गोमूत्रपिष्टान्येतानि कुष्ठरोगहराणि वै॥ १०
एकश्च त्रिफलाभागस्तथा भागद्वयं शिव।
सोमराजस्य वीजानां जग्धं पथ्यया दद्रुनुत्॥ ११
अम्लतक्रं स गोमूत्रं क्वथितं लवणान्वितम्।
कांस्यघृष्टं खरं लेपात् कुष्ठरोगविनाशनम्॥ १२
हरिद्रा हरितालञ्च दूर्व्वागोमूत्रसैन्धवम्।
अयं लेपो हन्ति दद्रुं पामामेव गरं तथा॥ १३
सोमराजस्य वीजानि नवनीतयुतानि च।
मधुनास्वादितानि स्युः शुक्लकुष्ठहराणि वै।
तक्रान्नपानतो रुद्र नात्र कार्य्या विचारणा॥ १४
श्वेतापराजितामूलं वर्त्तितञ्चास्य वारिणा।
तल्लेपो रुद्र मासेन शुक्लकुष्ठविनाशनः॥ १५
माहिषं नवनीतञ्च सिन्दूरञ्च मरीचकम्।
पामा विलेपनान्नश्येद्धुर्नामा वृषभध्वज॥ १६
विशुष्कगाम्भारीमूलं पक्वं क्षीरेण संयुतम्।
भक्षितं शुक्लपित्तस्य विनाशकरमीश्वर॥ १७
मूलकस्य तु वीजानि अपामार्गरसेन वै।
पिष्टानि तेन लेपेन शिध्मिका रुद्र नश्यति।
कदलीक्षारसंयुक्ताहरिद्रा शिध्मिकापहा॥ १८
रम्भापामार्गयोः क्षार एरण्डेन विमिश्रितः।
तदभ्यङ्गान्महादेव सद्यः सिध्म विनश्यति॥ १९
कुष्माण्डलताक्षारश्च सगोमूत्रश्च तत्त्वचः।
जलपिष्टा हरिद्रा च सिद्धा मन्दानलेन हि॥२०
माहिषेण पुरीषेण वेष्टिता वृषभध्वज।
अस्या उद्वर्त्तनं कुर्य्यादङ्गसौष्ठवमीश्वर॥ २१
तिलसर्षपसंयुक्तं हरिद्राद्वयकुष्ठकम्।
तेनोद्वर्त्तितदेहः स्यादुज्ज्वलः सुरभिः पुमान्॥२२
मनोहरश्चानुदिनं दूर्व्वाणां काकजङ्घया।
अर्ज्जुनस्य तु पत्राणि जम्बुपत्रयुतानि च।
सलोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत्॥२३
युक्तं लोध्रभवैर्नीरैश्चूर्णन्तु कनकस्य च।
तेनोद्वर्त्तितदेहस्य न स्याद्ग्रीष्मप्रबाधनम्॥२४
दुग्धेनोषसि सेकश्च घर्म्मदोषश्च नश्यति।
काकजङ्घोद्वर्त्तनन्तु अङ्गरागकरं भवेत्॥२५
यष्टीमधु शर्क्करा च वासकस्य रसो मधु।
एतत् पीतं रक्तपित्त-कामला-पाण्डुरोगनुत्॥२६
रक्तपित्तं हरेत् पीतो वासकस्य रसो मधु।
प्रातःकाले तोयपानात् पीनसं दारुणं हरेत्॥२७
विभीतकस्य वै चूर्णं पिप्पल्याः सैन्धवस्य च।
पीतं सकाञ्जिकं हन्ति स्वरभेदं महेश्वर।२८
चूर्णमामलकं सेव्यं पीतं गव्यपयोऽन्वितम्।
मनःशिला बलामूलं कोलपर्णञ्च गुग्गुलुः॥ २९
जातिपत्रं कोलपत्रं तथा चैव मनःशिला।
एभिश्चैव कृता वर्त्तिर्वदर्य्यग्नौ महेश्वर।
धूमपानं कासहरं नात्र कार्य्या विचारणा॥३०
त्रिफला-पिप्पलीचूर्णं भक्षितं मधुना युतम्।
भोजनादौ हि समधु पिपासाज्वरितं हरेत्॥३१

(क) म्लानीति वा पाठः।

विल्वमूलञ्च समधु गुडूचीक्वथितं जलम्।
पीतं हरेच्च विविधं छर्द्दिं नैवात्र संशयः।
पीता दूर्व्वा च्छर्द्दिनुत् स्यात् पिष्ट्वा तण्डुलवारिणा॥२२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे चतुर्नवत्यधिकशततमोऽध्यायः॥ १९४॥

---

## पञ्चनवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

पुनर्नवाया मूलञ्च श्वेतं पुष्ये समाहृतम्।
वारिपीतं तस्य पार्श्वे भवनेषु न पन्नगाः॥ १
तार्क्ष्यमूर्त्तिं वहेद्यो वै भल्लूकदन्तनिर्म्मिताम्।
स पन्नगैर्न दश्येत यावज्जीवं वृषध्वज॥ २
पिबेच्छाल्मलिमूलं यः पुष्यर्क्षे रुद्र वारिणा।
तस्मिन्नपास्तदशना नागाः स्युर्नात्र संशयः॥ ३
पुष्ये लज्जालुकामूले हस्तबद्धे तु पन्नगान्।
गृह्णीयाल्लेपतो वापि नात्र कार्य्या विचारणा॥ ४
पुष्ये श्वेतार्कमूलन्तु पीतं शीतेन वारिणा।
नश्येत दंशकविषं करवीरादिजं विषम्॥ ५
महाकालस्य वै मूलं पिष्टं तत् काञ्जिकेन वै।
वोद्गाणां कुङ्कुभानाञ्च तल्लेपो हरते विषम्॥ ६
तण्डुलीयकमूलञ्च पिष्टं तण्डुलवारिणा।
घृतेन (क) सह पीतन्तु हरेत् सर्व्वविषाणि च॥ ७
नीली-लज्जालुकामूलं पिष्टं तण्डुलवारिणा।
पीता तद्दंशकविषं नश्येदेके न चोभयोः॥ ८
कुष्माण्डकस्य स्वरसः सगुड़ः सहशर्करः।
पीतः सदुग्धो नाशः स्याद्दंशकस्य विषस्य वै।
तथा कोद्रवमूलस्य मोहस्य हर एव च॥ ९
यष्टीमधुसमायुक्ता तथा पीता च शर्करा।
सदुग्धा च त्रिरात्रेण मूषाविषहरा भवेत्॥ १०
तुम्बुकत्वयपानाच्च वारिणः शीतलस्य वै।
ताम्बूलदग्धमुखस्य लालास्रावो विनश्यति॥ ११
घृतं सशर्करं पीत्वा मद्यपानमदो न वै॥ १२
कृष्णाङ्कोठस्य मूलेन पीतं सुक्वथितं जलम्।
ततो नश्येन्नरविषं त्रिरात्रेण महेश्वर॥ १३

(क) मधुनेति वा पाठः।

उष्णं गव्यघृतञ्चैव सैन्धवेन समन्वितम्।
नाशयेत् तन्महादेव वेदनां वृश्चिकोद्भवाम्॥ १४
कुसुम्भं कुङ्कुमञ्चैव हरितालं मनःशिला।
करञ्जं पिषितञ्चैव अर्कमूलञ्च शङ्कर।
विषं नृणां विनश्येत एतेषां भक्षणाच्छिव॥ १५
दीपतैलप्रदानाच्च दंशे वृश्चिकजे शिव।
खर्ज्जूरकविषं नश्येत् तदा वै नात्र संशयः॥ १६
दंशस्थानं वृश्चिकस्य रुद्र गुग्गलुधूपितम्।
विषं नश्येत् ततो रुद्र नात्र कार्य्या विचारणा॥ १७
अङ्कोठपत्रधूपेन नश्येन्मक्षिकजं विषम्॥ १८
नागेश्वर-मरीचानि शुण्ठी-तगरपादिका।
नश्येन्मधुमक्षिकाया एतेषां लेपतो विषम्।
शतपुष्पा सैन्धवञ्च आज्यं वा तेन लेपयेत्॥ १९
शिरीषस्य तु बीजं वै सिद्धं क्षीरेण घर्षितम्।
तल्लेपेन महादेव नश्येदुन्दुरुजं विषम्।
ज्वलिताग्निर्वारिसेकी तथा दर्दुरजं विषम्॥ २०
धुस्तूरकरसं मिश्रं क्षीराज्यगुड़पानतः।
शुनां विषं विनश्येत शशाङ्ककृतशेखर॥ २१
वट-निम्ब-शमीनाञ्च वल्कलैः क्वथितं जलम्।
तल्लेकान्मुखदन्तानां नश्येद्वै विषवेदना॥ २२
लेपनाद्देवदारोश्च गैरिकस्य च लेपनात्।
नागेश्वरो हरिद्रे द्वे तथा चैव मञ्जिष्ठका।
एभिर्लेपादिनश्येत लूताविषमुमापते॥ ॥ २३
करञ्जस्य तु बीजानि वरुणाच्छदमेव च।
तिलाश्च सर्षपा हन्युर्विषं वै नात्र संशयः॥ २४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पञ्चनवत्यधिकशततमोऽध्यायः॥ १९५॥

---

## षण्णवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

एकं पुनर्नवामूलमपामार्गस्य वा शिव।
सरसं योनिविक्षिप्तं वराङ्गस्य व्यथां हरेत्।
प्रसूतिवेदनाञ्चैव तरुणीनां व्यथां हरेत्॥ १
भूमिकुष्माण्डमूलं वै शालिचूर्णमयापि वा (क)।

(क) शालितण्डुलवारिणेति पाठान्तरम्।

सप्ताहं दुग्धपीतं स्यात् स्त्रीणां बहुपयस्करम् ॥ २
रुद्रेन्द्रवारुणीमूलं लेपात् स्त्रीस्तनवेदना।
नश्येत घृतपक्वा च कार्य्याविश्यन्तु पालिका ॥ ३
भक्षिता सा महेशान योनिशूलं विनाशयेत् ॥ ४
प्रलेपिता कारवेल्ल-मूलेनैव विनिर्गता।
योनिः प्रवेशमायाति नात्र कार्य्या विचारणा ॥ ५
नीली-पटोलमूलानि साज्यानि तिलवारिणा।
पिष्टान्येषां प्रलेपो वै ज्वाला-गर्द्दभरोगनुत् ॥ ६
पाठामूलं रुद्र पीतं पिष्टं तण्डुलवारिणा।
पापरोगहरं स्याच्च कुष्ठपानं तथैव च ॥ ७
वास्योदकञ्च समधु पीतमन्तर्गतस्य व।
पापरोगस्य सन्ताप-निवृत्तिं कुरुते शिव ॥ ८
घृततुल्या रुद्र लाक्षा पीता क्षीरेण वै सह।
प्रदरं हरते रोगं नात्रकार्य्या विचारणा ॥ ९
द्विजयष्टी-त्रिकटुकं चूर्णं पीतं हरेच्छिव।
तिलक्वाथेन संयुक्तं रक्तगुल्मं स्त्रिया हर ॥ १०
कुसुमस्य निबद्धञ्च तरुणीनां महेश्वर।
रक्तोत्पलस्य वै कन्दं शर्करातिलसंयुतम्।
पीतं सशर्करं स्त्रीणां धारयेद्गर्भपाचनम् ॥ ११
रक्तस्रावस्य नाशः स्याच्छीतोदकनिषेवणात् ॥ १२
पीतन्तु काञ्जिकं रुद्र क्वथितं शरपुङ्खया।
हिङ्गु सन्धवसंयुक्तं शीघ्रं स्त्रीणां प्रसूतिकृत्।
मातुलुङ्गस्य वै मूलं कटिबद्धं प्रसूतिकृत् ॥ १३
अपामार्गस्य वै मूले गर्भवत्यास्तु नामतः।
उत्पाट्यमाने सकले पुत्त्रः स्यादनन्यथा सुता ॥ १४
अपामार्गस्य वै मूले नारीणां शिरसि स्थिते।
गर्भशूलं विनश्येत नात्र कार्य्या विचारणा ॥ १५
कपूर-मदनफल-मधुकैः पूरितः शिव।
योनिः शुभः स्याद्वृद्धाया युवत्याः किं पुनर्हर ॥ १६
यस्य बालस्य तिलकः कृतो गोरोचनाख्यया।
शर्करा-कुष्ठपानञ्च दत्तं स स्याच्च निर्भयः।
विष-भूत-ग्रहादिभ्यो व्याधिभ्यो बालकः शिव ॥ १७
शङ्ख-नाभि-वचा-कुष्ठ-लोहानां धारणं सदा।
बालानामुपसर्गेभ्यो रुद्र रक्षाकरं भवेत् ॥ १८
पलाशचूर्णं समधु गव्याज्यामलकान्वितम्।
सविड़ङ्गं पीतमात्रं नरं कुर्य्यान्महामतिम् ॥ १९
मासैकेन महादेव जरा-मरणवर्ज्जितः ॥ २०
पलाशवीजं सघृतं तिल-मध्वन्वितं समम्।
सप्ताहं भक्षितं रुद्र जरां नयति संक्षयम् ॥ २१
रुद्रामलकचूर्णं वै मधु-तैल-घृतान्वितम्।
जग्ध्वा मासं युवा स्याच्च नरो वागीश्वरो भवेत् ॥ २२
शिवामलकचूर्णं वै मधुना उदकेन वा।
बलानि कुर्य्यान्नासाया प्रत्यूषे भक्षितं शिव ॥ २३
कुष्ठचूर्णं साज्य-मधु प्रातर्जग्ध्वा भवेन्नरः।
साक्षात् सुरभिदेहो वै जीवेद्वर्षसहस्रकम् ॥ २४
माषस्य विदलान्येव वितुषाणि महेश्वर।
घृतभावितशुष्काणि पयसा साधितानि वै ॥ २५
समध्वाज्यपयोभिश्च भक्षयित्वा च कामयेत्।
स्त्रीणां शतं महादेव तत्क्षणान्नात्र संशयः ॥ २६
रसश्चैरण्डतैलेन गन्धकेन शुभो भवेत्।
त्रिकालोदकसंघुष्टो बलकृद्भक्षणाद्भवेत् ॥ २७
दुग्धं वितुषमाषैश्च शिम्बीवीजैश्च साधितम्।
अपामार्गस्य तैलेन पीतं स्त्रीशतकामकृत् ॥ २८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
षण्णवत्यधिकशततमोऽध्यायः ॥१९६॥

---

## सप्तनवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

या गौर्द्वेष्टि स्वकं वत्सं तस्या देयं स्वकं पयः।
लवणेन समायुक्तं तस्या वत्सः प्रियो भवेत् ॥ १
शुनोऽस्थि कण्ठबद्धं हि महिषाणां गवां तथा।
कृमिजालं पातयति सकलं नात्र संशयः ॥ २
गोजङ्गनाभिपातः स्याद्गुञ्जामूलस्य भक्षणात् ॥ ३
वरुणफलस्य रसं करेण मथितं शिव।
चतुष्पाद-द्विपदयोः कृमिजालं निपातयेत् ॥ ४
व्रणाञ्च शमयेद्रुद्र जयायां पूरणात् तथा।
गजमूत्रस्य वै पानं गो-महिष्युपसर्गनुत् ॥ ५
समसूरं शालिवीजं पीतं तक्रेण घर्षितम्।
क्षीरे गो-महिषस्यैव गोः पुंसश्च हितं भवेत् ॥ ६
पवञ्च शरपुङ्खाया दत्तं सलवणं शिव।
वारिस्फोटं हरत्याशु वेसराणां विनाशयेत् ॥ ७

घृतकुमारी पत्रमेव दत्त सलवणं हर।
तुरङ्ग-वेसराणां कण्डूर्नश्येन्न संशयः॥ ८
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सप्त-
नवत्यधिकशततमोऽध्यायः॥ १९७॥

---

## अष्टनवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

चित्रकस्याष्टभागानि शूरणस्य च षोड़श।
शुण्ठ्याश्चत्वारि भागानि मरीचानां द्वयं तथा॥ १
त्रितयं पिप्पलीमूलं विड़ङ्गानां चतुष्टयम्।
अष्टौ मुषलिकाभागास्त्रिफलायाश्चतुष्टयम्॥ २
द्विगुणेन गुड़ेनैषां मोदकानि हि कारयेत्।
तद्भक्षणमजीर्णं हि पाण्डुरोगञ्च कामलाम्।
अतीसाराणि मन्दाग्निं प्लीहाञ्चैव निवारयेत्॥ ३
विल्वाग्निमन्थः श्योणाक-पाटला-पारिभद्रकम्।
प्रसारण्यश्वगन्धा च वृहती कण्टकारिका॥ ४
वला चातिबला रास्ना श्वदंष्ट्रा च पुनर्नवा।
एरण्डः शारिवा पर्णी गुडूची कपिकच्छुका॥ ५
एषां दश-पलान् भागान् क्वाथयेत् सलिलेऽमले।
तेन पादावशेषेण तैलपात्रे विपाचयेत्॥ ६
आजं वा यदि वा गव्यं चीरं दत्वा चतुर्गुणम्।
शतावरीं सैन्धवञ्च तैलतुल्यं प्रदापयेत्॥ ७
द्रव्याणि यानि पेष्याणि तानि वच्यामि तच्छृणु।
शतपुष्पा देवदारु बला पर्णी वचागुरु॥ ८
कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्नवा।
पाने नस्ये तथाभ्यङ्गे तैलमेतत् प्रदापयेत्॥ ९
हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत्।
अपस्मारं वातरक्तं वपुसांश्च पुमान् भवेत्॥ १०
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी हर।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा।
तैलमेतत् प्रयोक्तव्यं सर्व्ववातविकारिणाम्॥ ११
हिङ्गु-तुम्बुरु-शुण्ठ्या च साध्यं तैलन्तु सार्षपम्।
एतद्धि पूरणं श्रेष्ठं कर्णशूलापहं परम्॥ १२
शुष्कमूलक-शुण्ठीनां चारो हिङ्गुल-नागरम्।
शुक्तं चतुर्गुणं दद्यात् तैलमेतैर्विपाचयेत्॥ १३
बाधिर्य्यं कर्णशूलञ्च पूयस्रावश्च कर्णयोः।
क्रिमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात्॥ १४
शुष्कमूलक-शुण्ठीनां चारो हिङ्गुल-नागरम्।
शतपुष्पा वचा कुष्ठं दारु-शिग्रू रसाञ्जनम्॥ १५
सौवर्च्चलं यवचारं सामुद्रं सैन्धवं तथा।
ग्रन्थिकं विड़मुस्तञ्च मधु शुक्तं चतुर्गुणम्॥ १६
मातुलुङ्गरसश्चैव कदलीरस एव च।
तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम॥ १७
बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः।
पूरणादस्य तैलस्य क्रिमयः कर्णयोर्हर॥ १८
सद्यो विनाशमायान्ति शशाङ्ककृतशेखर।
चारतैलमिदं श्रेष्ठं मुख-दन्तमलापहम्॥ १९
चन्दनं कुङ्कुमं मांसी कर्पूरो जातिपत्रिका।
जाती-कक्कोल-पूगानां लवङ्गस्य फलानि च॥ २०
अगुरुश्चीरकस्तूर्य्यः कुष्ठं तगरपादिका।
गोरोचना प्रियङ्गुश्च बला चैव तथा नखी॥ २१
सरलं सप्तपर्णञ्च लाचा चामलकी तथा।
तथा तु पद्मकञ्चैव एतैस्तैलं प्रसाधयेत्॥ २२
प्रस्वेदामलदुर्गन्ध-कण्डू-कुष्ठहरं परम्।
स्यात् पुमांश्चैव शुक्राढ्यः स्त्रीणाञ्चात्यन्तवल्लभः।
स्त्रीशतं गच्छते रुद्र बन्ध्यापि लभते सुतम्॥ २३
यमानी चित्रकं धन्यं त्र्यूषणं जीरकं तथा।
सौवर्च्चलं विड़ङ्गञ्च पिप्पलीमूल-राजिकम्॥ २४
एभिः पचेद्घृतप्रस्थं जलप्रस्थाष्टसंयुतम्।
तथार्शो-गुल्मशूलघ्नं हन्ति वह्निं करोति व॥ २५
मरिचं त्रिवृतं कुष्ठं हरितालं मनःशिला।
देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम्॥ २६
विशाला करवीरञ्च अर्कचीरं शकृद्रसम्।
एषाञ्च कार्षिको भागो विषस्यार्द्धपलं भवेत्॥ २७
प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत्।
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत्॥ २८
पामा विचर्च्चिका चैव दद्रु-विस्फोटकानि च।
अभ्यङ्गेन प्रणश्यन्ति कोमलत्वञ्च जायते॥ २९
प्रसूतान्यपि श्वित्राणि तैलेनानेन स्रक्षयेत्।
चिरोत्थितमपि श्वित्रं विनष्टं तत्क्षणाद्भवेत्॥ ३०
पटोलपत्रंकटुका मञ्जिष्ठा शारिवा निशा।

जाती-शमी-निम्बपत्रं मधुकं क्वथितं घृतम् ॥ ३१
एभिर्लेपात् स्वरुजो व्रणा विस्राविणः शिव।
अग्निमन्थो वचा वासा पिप्पली-मधु-सैन्धवम्।
सप्तरात्रप्रयोगेण किन्नरैरिव गीयते ॥ ३२
अपामार्गो गुडूची च कुष्ठं शतावरी वचा।
शङ्खपुष्पाभया साज्यं विड़ङ्गं भक्षितं समम्।
त्रिभिर्दिनैर्नरं कुर्य्याद्ग्रन्थाष्टशतधारिणम् ॥ ३३
शङ्खिर्वा पयसाज्येन मासमेकन्तु सेविता।
वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥ ३४
चन्द्र-सूर्य्यग्रहे पीतं पलमेकं पयोऽन्वितम्।
वचायास्तत्क्षणं कुर्य्यान्महाप्रज्ञायुतं नरम् ॥ ३५
भूनिम्ब-निम्ब-त्रिफला-पर्पटैश्च शृतं जलम्।
पटोली-मुस्तकाभ्याञ्च वासकेन च नाशयेत् ॥ ३६
विस्फोटकानि व्यक्तानि नात्र कार्य्या विचारणा।
केतकस्य फलं शङ्खं सैन्धवं त्र्यषणं वचा ॥ ३७
फेनो रसाञ्जनं चौद्रं विड़ङ्गानि मनःशिला।
एषां वर्त्तिर्हन्ति कासं तिमिरं पटलं तथा ॥ ३८
प्रस्थद्वयं माषकस्य क्वाथश्च द्रोणमम्भसाम्।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥ ३९
काञ्जिकस्याढ़कं दत्त्वा पिष्टान्येतानि दापयेत्।
पुनर्नवा गोक्षुरकं सैन्धवं त्र्यूषणं वचा ॥ ४०
लवणं सुरदारु च मञ्जिष्ठा कण्टकारिका।
नस्यात् पानाद्धरत्येव कर्णशूलं सुदारुणम् ॥ ४१
बाधिर्य्यं सर्व्वरोगांश्च अभ्यङ्गाच्च महेश्वर।
पलद्वयं सैन्धवञ्च शुण्ठीचित्रकपञ्चकम् ॥ ४२
सौवीरपञ्चप्रस्थञ्च (क) तैलप्रस्थं पचेत् ततः।
अष्ठगद्र-स्वर-प्लीहा-सर्व्ववातविकारनुत् ॥ ४३
उडुम्बरं वटं प्लक्षं जम्बूद्वयमथार्ज्जुनम्।
पिप्पलञ्च कदम्बञ्च पलाशं लोध्रतिन्दुकम् ॥ ४४
मधूकमाम्रसञ्ज्ञञ्च बदरं पद्मकेशरम्।
शिरीषवीजं कैतकमेतत्क्वाथेन साधितम्।
तैलं हन्ति व्रणान् लेपाच्चिरकालभवानपि ॥ ४५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे अष्ट-
नवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

---

(क) पञ्चप्रस्थन्त्वारनालमिति वा पाठः।

## नवनवत्यधिकशततमोऽध्यायः।

हरिरुवाच।

पाठा द्वे रजनी (क) कुष्ठमश्वगन्धाजमोदकम्।
वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ॥ १
ब्राह्मीरसैर्भावितञ्च सर्पिर्मधुसमन्वितम्।
सप्ताहं भक्षितं कुर्य्यान्निर्म्मलाञ्च मतिं पराम् ॥ २
सिद्धार्थकं वचा हिङ्गुः करञ्जं देवदारु च।
मञ्जिष्ठा त्रिफला विश्वं शिरीषो रजनीद्वयम् ॥ ३
प्रियङ्गु-निम्ब-त्रिकटु गोमूत्रेणैव घर्षितम्।
नस्यमालेपनञ्चैव तथा चोद्वर्त्तनं हि तत् ॥ ४
अपस्मारविषोन्माद-शोषालक्ष्मीज्वरापहम्।
भूतेभ्यश्च भयं हन्ति राजद्वारे तु पूजनम् ॥ ५
निम्बं कुष्ठं हरिद्रे द्वे शिग्रु-सर्षपजं तथा।
देवदारु पटोलञ्च धन्यं तक्रेण घर्षितम् ॥ ६
देहं तैलाक्तगात्रं वै अनेनोद्वर्त्तनं तथा।
पामाः कुष्ठानि नश्येयुः कण्डूं हन्ति च निश्चितम् ॥ ७
सामुद्रं सैन्धवं क्षारं राजिका लवणं विड़म्।
कटुलोहरजश्चैवं त्रिवृच्छूरणकं समम्।
दधि-गोमूत्र-पयसा मन्दपावकपाचितम् ॥ ८
एतच्चाग्निबलं चूर्णं पिवेदुष्णेन वारिणा।
जीर्णेजीर्णे तु भुञ्जीत मासादि घृतभोजनम् ॥ ९
नाभिशूलं मूत्रशूलं गुल्म-प्लीहभवञ्च यत्।
सर्व्वं शूलहरं चूर्णं जठरानलदीपनम्।
परिणामसमुत्थस्य शूलस्य च हितं परम् ॥ १०
अभयामलकं द्राक्षा पिप्पली कण्टकारिका।
शृङ्गी पुनर्नवा शुण्ठी जग्ध्वा कासं निहन्ति वै ॥ ११
अभयामलकं द्राक्षा पाठा चैव विभीतकम्।
शर्कंरा च समञ्चैव जग्धं ज्वरहरं भवेत् ॥ १२
त्रिफला बदरं द्राक्षा पिप्पली च विरेचकृत्।
हरितकी सोष्णनीर-लवणञ्च विरेचकृत् ॥ १३
कूर्म्म-मत्स्याश्व-महिष-गो-शृगालाश्च वानराः।
विड़ाल-वर्हि-काकाश्च वराहोलूककुक्कुटाः ॥ १४
हंस एषाञ्च विगसतं मांसं वा रोम-शोणितम्।
धूपं दद्याज्ज्वरार्त्तेभ्य उन्मत्तेभ्यश्च शान्तये ॥ १५

---

(क) पलाण्डुजीरके इति क्वचित् पाठः।

एतान्यौषधजातानि धूपितानि महेश्वर ।
निघ्नन्ति तानि रोगाणि वृत्तमिन्द्राशनिर्यथा ॥ १६
औषधे भगवान् विष्णुः स स्मृतो रोगनुद्भवेत् ।
ध्यातोऽर्चितः स्तुतो वापि नात्र कार्य्या विचारणा॥ १७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नव-
नवत्यधिकशततमोऽध्यायः ॥ १९९ ॥

---

## द्विशततमोऽध्यायः ।

हरिरुवाच ।

सर्व्वव्याधिहरं वक्ष्ये वैष्णवं कवचं शुभम् ।
येन रक्षा कृता शम्भोर्नात्र कार्य्या विचारणा । १
प्रणम्य देवमीशानमजं नित्यमनामयम् ।
देवं सर्व्वेश्वरं विष्णुं सर्व्वव्यापिनमव्ययम् ॥ २
बध्नाम्यहं प्रतीकारं नमस्कृत्य जनार्द्दनम् ।
अमोघाप्रतिमं सर्व्वं सर्व्वदुःखनिवारणम् ॥ ३
विष्णुर्मामग्रतः पातु कृष्णो रक्षतु पृष्ठतः ।
हरिर्मे रक्षतु शिरो हृदयञ्च जनार्द्दनः ॥ ४
मनो मम हृषीकेशो जिह्वां रक्षतु केशवः ।
पातु नेत्रे वासुदेवः श्रोत्रे सङ्कर्षणो विभुः ॥ ५
प्रद्युम्नः पातु मे घ्राणमनिरुद्धस्तु चर्म्म च ।
वनमाली गलस्यान्तं श्रीवत्सो रक्षतामधः ॥ ६
पार्श्वं रक्षतु मे चक्री वामं दैत्यनिवारणः ।
दक्षिणन्तु गदा देवी सर्व्वासुरनिवारिणी ॥ ७
उदरं मुषलं पातु पृष्ठं मे पातु लाङ्गलम् ।
ऊर्द्ध्वं रक्षतु मे शार्ङ्गं जङ्घे रक्षतु नन्दकः ॥ ८
पार्ष्णी रक्षतु शङ्खश्च पद्मं मे चरणावुभौ ।
सर्व्वकार्य्यार्थसिद्ध्यर्थं पातु मां गरुड़ः सदा ॥ ९
वराहो रक्षतु जले विषमेषु च वामनः ।
अटव्यां नारसिंहश्च सर्व्वतः पातु केशवः ॥ १०
हिरण्यगर्भो भगवान् हिरण्यं मे प्रयच्छतु ।
सांख्याचार्य्यस्तु कपिलो धातुसाम्यं करोतु मे ॥ ११
श्वेतद्वीपनिवासी च श्वेतद्वीपं नयत्वजः ।
सर्व्वान् शत्रून् सूदयतु मधु-कैटभसूदनः ॥ १२
विष्णुः सदा विकिरतु किल्बिषं मम विग्रहात् ।
हंसो मत्स्यस्तथा कूर्म्मः पातु मां सर्व्वतो दिशः ॥ १३
त्रिविक्रमस्तु मे देवः सर्व्वान् पापान् निकृन्ततु ।
तथा नारायणो देवो बुद्धिं पालयतां मम ॥ १४
शेषो मे निर्म्मलं ज्ञानं करोत्वज्ञाननाशनम् ।
वड़वामुखो नाशयतु कल्मषं यत् कृतं मया ॥ १५
पद्भ्यां ददातु परमो सुखं मूर्द्ध्नि मम प्रभुः ।
दत्तात्रेयः कलयतु सपुत्र-पशु-बान्धवम् ॥ १६
सर्व्वानरीन् नाशयतु रामः परशुना मम ।
रक्षोघ्नस्तु दाशरथिः पातु नित्यं महाभुजः ॥ १७
शत्रून् हलेन मे हन्याद्रामो यादवनन्दनः ।
प्रलम्ब-केशी-चाणूर-पूतना-कंसनाशनः ।
कृष्णस्य यो बालभावः स मे कामान् प्रयच्छतु ॥ १८
अन्धकारतमोघोरं पुरुषं कृष्णपिङ्गलम् ।
पश्यामि भयसन्त्रस्तः पाशहस्तमिवान्तकम् ॥ १९
ततोऽहं पुण्डरीकाक्षमच्युतं शरणं गतः ।
धन्योऽहं निर्भयो नित्यं यस्य मे भगवान् हरिः ॥ २०
ध्यात्वा नारायणं देवं सर्व्वोपद्रवनाशनम् ।
वैष्णवं कवचं बद्ध्वा विचरामि महीतले ॥ २१
अप्रधृष्योऽस्मि भूतानां सर्व्वदेवमयो ह्यहम् ।
स्मरणाद्देवदेवस्य विष्णोरमिततेजसः ॥ २२
सिद्धिर्भवतु मे नित्यं यथामन्त्रमुदाहृतम् ॥ २३
यो मां पश्यति चक्षुर्भ्यां यञ्च पश्यामि चक्षुषा ।
सर्व्वेषां पापदुष्टानां विष्णुर्बध्नाति चक्षुषा ॥ २४
वासुदेवस्य यच्चक्रं तस्य चक्रस्य ये लराः ।
ते हि छिन्दन्तु पापान् मे मम हिंसन्तु हिंसकान्॥ २५
राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ।
विवादे राजमार्गेषु द्यूतेषु कलहेषु च ॥ २६
नदीसन्तरणे घोरे सम्प्राप्ते प्राणसंशये ।
अग्नि-चौरनिपातेषु सर्व्वग्रहनिवारणे ॥ २७
विद्युत्सर्पविषोद्वेगे रोगेऽथ विघ्नसङ्कटे ।
जप्यमेतज्जपेन्नित्यं शरीरे भयमागते ॥ २८
अयं भगवतो मन्त्रो मन्त्राणां परमो महान् ।
विख्यातं कवचं गुह्यं सर्व्वपापप्रणाशनम् ।
स्वमायाकृतनिर्म्माण-कल्पान्तगहनो महत् ॥ २९
अनाद्यन्तं जगद्बीज पद्मनाभ नमोऽस्तु ते ॥ ३०
ओं कालाय स्वाहा । ओं कालपुरुषाय स्वाहा ।
ओं कृष्णाय स्वाहा । ओं कृष्णरूपाय स्वाहा ।

ओँ चण्डाय स्वाहा। ओँ चण्डरूपाय स्वाहा।
ओँ प्रचण्डाय स्वाहा। ओँ प्रचण्डरूपाय स्वाहा।
ओँ सर्व्वाय स्वाहा। ओँ सर्व्वरूपाय स्वाहा।
ओँ नमो भुवनेशाय त्रिलोकधात्रे इह विटि स्विटि शिविटि स्वाहा। ओँ नमः अयोखितये ये ये संज्ञायापात्र दैत्य-दानव-यक्ष-राक्षस-भूत-पिशाच-कुष्माण्डान्तापस्मारक-च्छर्द्दन-दुर्द्धराणामै-काहिक-द्वितीय-तृतीय-चातुर्थक-मौहूर्त्तिक-दिन-ज्वर-रात्रिज्वर-सन्ध्याज्वर-सर्व्वज्वरादीनां लूता-कीट-कण्टक-पूतना-भुजङ्ग-स्थावर-जङ्गमविषादी-नामिदं शरीरं मम पथ्यं तुम्बुरु स्फुट स्फुट प्रकोट लफट विकटदंष्ट्र पूर्व्वतो रक्षतु। ओँ हे हे हे हे दिनकरसहस्रकालसमाहतो जयपश्चिमतो रक्ष। ओँ निवि निवि प्रदीप्तज्वलनज्वालाकार महा-कपिल उत्तरतो रक्ष ओँ विलि विलि मिलि मिलि गरुड़ि गरुड़ि गौरी-गान्धारी-विषमोह-विषम-विषमां मोहयतु स्वाहा दक्षिणतो रक्ष। मां पश्य सर्व्वभूतभयोपद्रवेभ्यो रक्ष रक्ष जय जय विजय तेन हीयते रिपुत्रासाहङ्कृतवाद्यतो भयरुदय-वोभयो अभयं दिशतु च्युतः तदुदरमखिलं विशन्तु युगपरिवर्त्तसहस्रसंख्येयोऽस्तमलमिव प्रविशन्ति रश्मयः॥ ३१

वासुदेव-सङ्कर्षण-प्रद्युम्नश्चानिरुद्धकः।
सर्व्वज्वरान् मम घ्नन्तु विष्णुर्नारायणो हरिः॥ ३२

इति श्रीगारुड़े महापुराणे वैष्णवकवचकथनं नाम द्विशततमोऽध्यायः॥ २००॥

---

## एकाधिकद्विशततमोऽध्यायः।

हरिरुवाच।

सर्व्वकामप्रदां विद्यां सप्तरात्रेण तां शृणु।
नमस्तुभ्यं भगवते वासुदेवाय धीमहि॥ १
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च।
नमो विज्ञानदात्रे च परमानन्दमूर्त्तये॥ २
आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये।
त्वं रूपाणि च सर्व्वाणि तस्मात् तुभ्यं नमो नमः॥ ३
हृषीकेशाय महते नमस्तेऽनन्तमूर्त्तये।
यस्मिन्निदं यतश्चैतत् तिष्ठत्यन्योऽपि जायते॥ ४
मृत्मयीं वहसि चौणीं तस्मै ते ब्रह्मणे नमः।
यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः॥ ५
अन्तर्वहिश्च विततं व्योमतुल्यं नमाम्यहम्॥ ६
ओँ नमो भगवते महापुरुषाय महाभूतपतये सकलसात्वत-परिवृढ़-निकर-कमलरेणूत्पल-निभ-धर्म्माख्यविद्यया चरणारविन्दयुगल परमेष्ठिन् नमस्ते॥ ७
अवाप विद्याधरतां चित्रकेतुश्च विद्यया॥ ८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एका-धिकद्विशततमोऽध्यायः॥ २०१॥

---

## द्व्यधिकद्विशततमोऽध्यायः।

हरिरुवाच।

अवाप जप्त्वा चेन्द्रत्वं विष्णुधर्म्माख्यविद्यया।
सर्व्वान् शत्रून् विनिर्ज्जित्य तान्त्र वक्ष्ये महेश्वर॥ १
पादयोर्जानुनोरूर्व्वोरुदरे हृदयोरसि।
मुखे शिरस्यानुपूर्व्वमोङ्कारादीनि विन्यसेत्॥ २
नमो नारायणायेति विपर्य्यासमथापि च।
करन्यासं ततः कुर्य्याद्द्वादशाक्षरविद्यया॥ ३
प्रणवादि-यकारान्तमङ्गुल्यङ्गुष्ठपर्व्वसु।
न्यसेद्धृदय ओङ्कारं मतुं मूर्ध्नि समस्तकम्॥ ४
ओङ्कारन्तु भ्रुवोर्मध्ये शिखानेत्रादिमूर्द्धतः।
ओँ विष्णवे नम इति इमं मन्त्रमुदीरयेत्॥ ५
आत्मानं परमं ध्यायेच्छेषं षट्शक्तिभिर्युतम्।
मम रक्षां हरिः कुर्य्यान्मत्स्यमूर्त्तिर्जलेऽवतु॥ ६
त्रिविक्रमस्तथाकाशे स्थले रक्षतु वामनः।
अटव्यां नरसिंहस्तु रामो रक्षतु पर्व्वते॥ ७
भूमौ रक्षतु वाराहो व्योम्नि नारायणोऽवतु।
कर्म्मबन्धाच्च कपिलो दत्तो योगांश्च रक्षतु॥ ८
हयग्रीवो देवतानां कुमारे मकरध्वजः।
नारदोऽन्यार्च्चनात् पायात् कूर्म्मो वै नैर्ऋते सदा॥ ९
धन्वन्तरिश्चापथ्याच्च नागः क्रोधवशात् किल।
यज्ञो रोगात् समस्ताच्च व्यासोऽज्ञानाच्च रक्षतु॥ १०

…बुद्धः पाषण्डसङ्घातात् कल्किरवतु कल्मषात् ।
…पायान्मध्यन्दिने विष्णुः प्रातर्नारायणोऽवतु ॥ ११
मधुहा चापराह्णे च सायं रक्षतु माधवः ।
हृषीकेशः प्रदोषेऽव्यात् प्रत्यूषेऽव्याज्जनार्द्दनः ॥ १२
श्रीधरोऽव्यादर्द्धरात्रे पद्मनाभो निशान्तके ।
चक्र-कौमोदकी-वाणा घ्नन्तु शत्रूंश्च राक्षसान् ॥ १३
शङ्खः पद्मश्च शत्रुभ्यः शार्ङ्गं वै गरुड़स्तथा ।
बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणम् ॥ १४
शेषः सर्व्वस्व रूपश्च सदा सर्व्वत्र पान्तु माम् ।
विदिक्षु दिक्षु च सदा नारसिंहश्च रक्षतु ॥ १५
एतद्धारयमाणस्य यं यं पश्यति चक्षुषा ।
स वशी स्याद्विपाप्मा च रोगमुक्तो दिवं व्रजेत् ॥ १६

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे द्व्यधिक-
द्विशततमोऽध्यायः ॥ २०२ ॥

---

## त्र्यधिकद्विशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

गारुड़ं सम्प्रवक्ष्यामि गरुड़ेन उदीरितम् ।
कश्यपाय सुमित्रेण विषह्वद्द्वयेन गारुड़ी ॥ १
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
क्षित्यादिष्वेव वर्णाश्च एते वै मण्डलाधिपाः ॥ २
पञ्चतत्त्वे स्थिता देवाः सकथः शिववाचकः ।
दीर्घस्वरविभिन्नश्च नपुंसकविवर्ज्जितः ॥ ३
स षड़ङ्गः शिवः प्रोक्तो हृच्छिरश्च शिखा क्रमात् ।
कवचं नेत्रमस्त्रं स्यान्न्यासः स्वस्थलसंस्थितिः ॥ ४
सर्व्वसिद्धिपदस्यान्ते कालवह्निरधोऽनिलः ।
षष्ठस्वरसमायुक्तमर्द्धेन्दुसंयुतं परम् ॥ ५
परापरविभिन्नश्च शिवस्योद्धार ईरितः ।
रेफेणाङ्गेषु सर्व्वत्र न्यासं कुर्य्याद्यथाविधि ॥ ६
हृदि पाणितले देहे कर्णे नेत्रे करोति च ।
जपात् तु सर्व्वसिद्धिः स्याच्चतुर्व्वज्रसमायुतम् ॥ ७
चतुरस्रां सुविस्तारां पीतवर्णान्तु चिन्तयेत् ।
पृथिवीश्चेन्द्रदैवत्यां मध्ये वरुणमण्डलम् ॥ ८
मध्ये पद्मं तथा युतमर्द्धचन्द्रं सुशीतलम् ।
इन्द्रनीलद्युतिं सौम्यमथवाग्नेयमण्डलम् ॥ ९
त्रिकोणं स्वस्तिकैर्युक्तं ज्वालामालाकुलं स्मरेत् ।
भिन्नाञ्जननिभाकारं स्ववृत्तं विन्दुभूषितम् ॥ १०
वायव्यमण्डलं व्याप्य तीक्ष्णवेगं भयङ्करम् ।
क्षीरोर्म्मिसदृशाकारं शुद्धस्फटिकवर्च्चसम् ।
प्लावयन्तं जगत् सर्व्वं व्योमावृतमनुं स्मरेत् ॥ ११
वासुकिः शङ्खपालश्च स्थितौ पार्थिवमण्डले ।
कर्कोटः पद्मनाभश्च वारुणे तौ व्यवस्थितौ ॥ १२
आग्नेयेन तु कुलिकस्तक्षकश्च महाब्जकौ ।
वायुमण्डलसंस्थौ च पञ्च भूतानि विन्यसेत् ॥ १३
अङ्गुष्ठादि-कनिष्ठान्तमनुलोम-विलोमतः ।
पर्व्वसन्धिषु च न्यास्याः जया च विजया च तथा१४
आस्यादि स्वपुरस्थाने न्यासः शिवषड़ङ्गकम् ।
कनिष्ठादौ हृदाद्येव शिखायां करयोर्न्यसेत् ॥ १५
व्यापकन्तु ततः पूर्व्वं क्रमादङ्गुलिपर्व्वसु ।
भूतानाञ्च पुनर्न्यासः शिवाङ्गानि तथैव च ॥ १६
प्रणवादि-नमस्कान्ते नाम्नैव च समन्विताः ।
सर्व्वमन्त्रेषु कथितो विधिः स्थापन-पूजने ॥ १७
आद्याक्षरं तन्नाम्नश्च मन्त्रोऽयं परिकीर्त्तितः ।
अष्टानां नागजातीनां मन्त्रः सान्निध्यकारकः ॥ १८
ओं स्वाहा क्रमशश्चैव पञ्चभूतपुरोगतम् ।
एष साक्षाद्भवेत् तार्क्ष्यः सर्व्वकर्म्मप्रसाधकः ॥ १९
करन्यासं स्वरैः कृत्वा शरीरे तु पुनर्न्यसेत् ।
ज्वलन्तं चिन्तयेत् प्राणमात्मसंशुद्धिकारकम् ॥ २०
वीजन्तु चिन्तयेत् पश्चाद्वर्षान्तममृतात्मकम् ।
एवञ्चाप्यायनं कृत्वा मूर्द्ध्नि सञ्चिन्त्य चात्मनः ॥ २१
पृथिवीं पादयोर्दद्यात् तप्तकाञ्चनसप्रभाम् ।
अशेषभुवनाकीर्णां लोकपालसमन्विताम् ॥ २२
एतां भगवतीं पृथ्वीं स्वदेहे विन्यसेद्बुधः ।
तत आपः प्रसन्नाश्च ध्येया हृन्नाभि चान्तरा ।
श्यामवर्णमयं ध्यायेत् पृथिवीद्विगुणं भवेत् ॥ २३
ज्वालामालाकुलं दीप्तमाब्रह्म-भुवनान्तिकम् ।
नाभिग्रीवान्तरे न्यस्य त्रिकोणं मण्डलं रवेः ॥ २४
भिन्नाञ्जननिभाकारं निखिलं व्याप्य संस्थितम् ।
आत्ममूर्त्तिस्थितं ध्यायेद्वायव्यं तीक्ष्णमण्डलम् ॥ २५
शिखोपरि स्थितं दिव्यं शुद्धस्फटिकवर्च्चसम् ।
अप्रमाणमहाव्योम व्यापकञ्चामृतोपमम् ॥ २६

भूतन्यासं पुरा कृत्वा नागानाञ्च यथाक्रमम् ।
लकाराद्या बिन्दुयुता मन्त्रा भूतक्रमेण तु ॥ २७
शिववीजं ततो दद्यात् ततो ध्यायेच्च मण्डलम् ।
यद्द्वयस्य क्रममाख्यातं मण्डलस्य विचक्षण ।
तस्य तच्चिन्तयेद्दर्पां कर्म्मकाले विधानवित् ॥ २८
पादपञ्चैस्तथा चञ्च-कृष्णनागैर्विभूषितम् ।
तार्क्ष्यं ध्यायेत् ततो नित्यं विषे स्थावरजङ्गमे ॥ २९
ग्रहभूत-पिशाचे च डाकिनी-यक्ष-राक्षसे ।
नागैर्विवेष्टितं कृत्वा स्वदेहे विन्यसेच्छिवम् ॥ ३०
द्विधान्यासः समाख्यातो नागानाञ्चैव भूतयोः ।
एवं ध्यात्वा कर्म्म कुर्य्यादात्मतत्त्वादिकं क्रमात् ॥३१
त्रितत्त्वं प्रथमं दत्त्वा शिवतत्त्वं ततोपरि ।
यथा देहे तथा देवे अङ्गुलीनाञ्च पर्व्वसु ॥ ३२
देहन्यासं पुरा कृत्वा अनुलोमविलोमतः ।
कन्दं नालं तथा पद्मं धर्म्मं ज्ञानादिमेव च ॥ ३३
द्वितीयस्वरसम्भिन्नं वर्गान्तेन तु पूजयेत् ।
ह्रौमिति कर्णिकामध्ये मूर्द्ध्नि रेफेण संयुतम् ॥ ३४
अ क च ट त प य श वर्गाः पूर्व्वादिके न्यसेत् ।
पत्रान्तकेशरान्ते तु द्वौ द्वौ पूर्व्वादिकौ तथा ॥ ३५
केशरे तु स्वरा न्यास्या ईशान्तान् षोड़शार्च्चयेत् ।
वामाद्याः शक्तयः प्रोक्ताश्चितत्त्वन्तु ततो न्यसेत् ॥३६
आवाहयेत् ततो मूर्द्ध्नि शिवमङ्गं ततोपरि ।
कर्णिकायां न्यसेद्देवं शाङ्गं तत्र पुरःसरम् ॥ ३७
पृथिवी पश्चिमे पत्रे आपश्चोत्तरसंस्थिताः ।
तेजस्तु दक्षिणे पत्रे वायुं पूर्व्वेण पूजयेत् ॥ ३८
खवीजं मूर्त्तिरूपन्तु प्रागुक्तं परिकल्पयेत् ।
यं वायुमूलं नैर्ऋत्ये रेफस्त्वनलसंस्थितः ॥ ३९
वं च ईशे सदा पूज्य श्रों हृदिस्थञ्च पूजयेत् ।
तन्मात्रान् भूतमात्रांस्तान् वह्निरेव प्रपूजयेत् ॥ ४०
शिवाङ्गानि ततः पश्चाद्ध्यात्वा सम्पूजयेत् ततः ।
आग्नेय्यां हृदयं पूज्य शिर ईशानगोचरे ॥ ४१
नैर्ऋत्ये तु शिखां दद्याद्वायव्यां कवचं न्यसेत् ।
अस्त्रन्तु वाह्यतो दद्यान्नेत्रमुत्तरसंयुतम् ॥ ४२
पत्राग्रे कर्णिकाग्रे तु वीजानि परिपूजयेत् ।
अनन्तादिकुलीरान्ता अष्टौ नागाः क्रमात् स्थिताः४३
पूर्व्वादिकक्रमेणैव ईशपर्य्यन्तमेव च ।
पूजयेच्च सदा मन्त्री विधानेन पृथक् पृथक् ॥ ४४
हृदि पद्मे विधानेन शिलादौ दत्तमण्डले ।
एतत् कार्य्यं समुद्दिष्टं नित्य-नैमित्तिकेऽपि च ॥ ४५
आत्मानं चिन्तयेन्नित्यं कामरूपं मनोहरम् ।
प्लावयन्तं जगत् सर्व्वं सृष्टि-संहारकारकम् ॥ ४६
ज्वालामालाभिरुद्दीप्तं आब्रह्म-भुवनान्तिकम् ।
दशबाहुं चतुर्व्वक्त्रं पिङ्गाक्षं शूलपाणिनम् ॥ ४७
दंष्ट्राकरालमत्युग्रं त्रिनेत्रं शशिशेखरम् ।
भैरवन्तु स्मरेत् सिद्ध्यै गरुड़ं सर्व्वकर्म्मसु ॥ ४८
नागानां नाशनार्थाय गरुड़ं भीमभीषणम् ।
पादौ पातालसंस्थौ च दिशां पक्षास्तु संश्रिताः॥४९
सप्त स्वर्गा उरसि च ब्रह्माण्डं कण्ठमाश्रितम् ।
रुद्रादि ईशपर्य्यन्तं शिरस्तस्य विचिन्तयेत् ॥ ५०
सदाशिवशिखान्तस्थं शक्तित्रितयमेव च ।
परात्परं शिवः साक्षात् तार्क्ष्यं भुवननायकम् ॥ ५१
त्रिनेत्रमुग्ररूपञ्च विषनागक्षयङ्करम् ।
ग्रसन्तं भीमवक्त्रञ्च गरुड़ं मन्त्रविग्रहम् ।
कालाग्निमिव दीप्तञ्च चिन्तयेत् सर्व्वकर्म्मसु ॥ ५२
एवं न्यासविधिं कृत्वा यं यं मनसि चिन्तयेत् ।
तत् तस्यैव भवेत् साध्यं नरो वै गरुड़ायते ॥ ५३
प्रेता भूतास्तथा यक्षा नागा गन्धर्व्वराक्षसाः ।
दर्शनात् तस्य नश्यन्ति ज्वराश्चातुर्थकादयः ॥ ५४

धन्वन्तरिरुवाच ।

एवं स गरुड़ं प्रोचे गरुड़ः कश्यपाय च ।
महेश्वरो यथा गौरीं प्राह विद्यां तथा शृणु ॥ ५५
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

---

## चतुरधिकद्विशततमोऽध्यायः ।

भैरव उवाच ।

नित्यक्लिन्नामथो वक्ष्ये त्रिपुरां भुक्ति-मुक्तिदाम् ॥ १
ओं क्लीं आगच्छ देवि च ऐं क्लीं क्लीं रेखाकरणम् ।
ओं क्लीं क्लेदिनि ते नमः मदनक्षोभिणी तथा ॥ २
ऐं यं क्लीं वा गणरेखया क्लीं मदनान्तरे च ।
ऐं क्लीं क्लीं च निरञ्जना ॥ ३

वागति मदनान्तरे खि खनेलावलीति च।
वेगवति महाप्रेतासनाय च प्रपूजयेत् ॥ ४
श्रीं ह्रां क्लीं क्रैं नैं क्रैं नित्ये मदद्रवे क्रौं क्लीं नमः।
ऐं क्लीं त्रिपुरायै नमः ॥ ५
श्रीं क्लीं क्रौं पश्चिमवक्त्रं श्रौं ऐं क्लीं च तथोत्तरम्।
ऐं क्लीं दक्षिणं पूर्व्वमूर्द्ध्ववक्त्रान्तु पश्चिमम्।
गणाय क्रौं अङ्कुशाय ऐं कपालाय वै नमः ॥ ६
आद्यं भयं ऐं क्लीं क्लीं च तथा शिरस्तथा
शिखायै कवचे। ऐं क्लीं क्रौं अस्त्राय फट् ॥ ७
पूर्व्वे च कामरूपाय अमिताङ्गाय वै नमः।
ब्रह्माख्ये दक्षिणे चैव वेश्मनिर्म्माय वै नमः ॥ ८
रुरुभैरवाय माहेश्वर्य्यै तथा पश्चिमे चण्डाय
वै नमः कौमार्य्यै। उत्तरे चोल्काय क्रोधाय नमो
वैष्णव्यै ॥ ९
अग्निकोणे अघोरायावाहनञ्चाग्निकोणकम्।
उन्मत्तभैरवायेति वाय्वाख्ये राक्षसालये ॥ १०
कुलान्तका विलीना च माहेन्द्री वायुकोणकम्।
जालन्धरं भीषणाञ्च चामुण्डा चैशकोणके ॥ ११
देवीकव्यां संहारञ्च चण्डिकाञ्च प्रपूजयेत्।
रतिप्रीतिकामदेवान् पञ्च वाणान् यजेदथ ॥ १२
श्रों क्लीं कामदेवाय ऐं क्लीं क्लीं ह्रां क्लीं ठं नमः।
ह्रं गणेशक्षेत्रपालाः पूज्या ऊर्द्ध्वं स्मरेच्च ताम् ॥ १३
ध्यानार्च्चनाज्जपहोमाद्देवी सिद्धा च सर्व्वदा।
नित्या च त्रिपुरा व्याधिं हन्याज्ज्वालामुखी क्रमात् १४
ज्वालामुखीक्रमं वक्ष्ये सा पूज्या मध्यतः शुभा।
नित्यारुणा मदनातुरा मदा मोहा प्रकृत्यपि ॥ १५
कलना श्रीभारती च आकर्षणी महेन्द्राणी।
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ॥ १६
वाराही चैव माहेन्द्री चामुण्डा चापराजिता।
विजया चाजिता चैव मोहिनी त्वरिता तथा ॥१७
स्तम्भिनी जृम्भिणी पूज्या कालिका पद्मवाह्यतः।
ज्वालामुखीक्रमं पूज्य विषादिहरणं भवेत् ॥ १८
इति श्रीगारुडे महापुराणे पूर्व्वखण्डे नित्य-
क्लिन्नात्रिपुराज्वालामुखीविद्या नाम चतुर-
धिकद्विशततमोऽध्यायः ॥ २०४ ॥

## पञ्चाधिकद्विशततमोऽध्यायः।

### भैरव उवाच।

अपि चूडामणिं वक्ष्ये शुभाशुभविशुद्धये।
सूर्य्यं देवीं गणं सोमं स्मृत्वा तु विलिखिन्नरः ॥ १
त्रिरेखा गोमूत्रिकाभा अथवा प्रश्नवाक्यतः।
द्विप्रस्थानप्रसूतो वा ध्वजादीन् गणयेत् क्रमात् ॥ २
ध्वजो धूम्रोऽथ सिंहश्च श्वा वृषः खरदन्तिनः।
ध्वाङ्क्षश्च अष्टमो ज्ञेयो नाम-मन्त्रैश्च तान् न्यसेत् ॥ ३
ध्वजस्थाने ध्वजं दृष्ट्वा राज्यचिन्ताधनादिकम्।
ध्वजस्थाने स्थितो धूम्रो धातुचिन्ता च लाभकम् ॥४
ध्वजस्थाने स्थिते सिंहे धनलाभादिकं भवेत्।
ध्वजस्थाने स्थिते श्वाने दासीचिन्तासुखादिकम् ॥५
ध्वजस्थाने वृषं दृष्ट्वा स्थानचिन्ता च लाभकम्।
ध्वजस्थाने खरं दृष्ट्वा दुःखक्लेशादिकं भवेत् ॥ ६
ध्वजस्थाने गजं दृष्ट्वा स्थानचिन्ता-जयादिकम्।
ध्वजस्थाने तथा ध्वाङ्क्षे क्लेशचिन्ता धनक्षयः ॥ ७
धूम्रस्थाने ध्वजं दृष्ट्वा पूर्व्वं दुःखं ततो धनम्।
धूम्रे धूम्रं तथा दृष्ट्वा कलिदुःखादिकं भवेत् ॥ ८
धूम्रस्थाने स्थिते सिंहे मनश्चिन्ता-धनादिकम्।
धूम्रस्थाने स्थिते श्वाने जयलाभादिकं भवेत् ॥ ९
धूम्रस्थाने वृषं दृष्ट्वा नारी-गो-ऽश्वधनादिकम्।
धूम्रस्ताने खरं दृष्ट्वा व्याधिश्चापि धनक्षयः ॥ १०
धूम्रस्थाने गजे दृष्टे राज्यलाभजयादिकम्।
धूम्रस्थाने स्थिते ध्वाङ्क्षे धनराज्यविनाशनम् ॥ ११
सिंहस्थाने ध्वजं दृष्ट्वा राज्यलाभादि निर्द्दिशेत्।
सिंहस्थाने स्थिते धूम्रे कन्याप्राप्तिधनादिकम् ॥ १२
सिंहस्थाने स्थिते सिंहे जयो मित्रसमागमः।
सिंहस्थानेस्थितेश्वानेस्त्रीचिन्ताग्रामलाभकम्(क) १३
सिंहस्थाने वृषं दृष्ट्वा गृहक्षेत्रार्थलाभकम्।
सिंहस्थाने खरं दृष्ट्वा ग्रामस्वामित्वमेव च ॥ १४
सिंहस्थाने गजं दृष्ट्वा आरोग्यायुःसुखादिकम्।
सिंहस्थाने स्थिते ध्वाङ्क्षे कन्याधान्यगुणादिकम् ॥१५
श्वानस्थाने ध्वजं दृष्ट्वा स्थानचिन्तासुखादिकम्।
श्वानस्थाने स्थिते धूम्रे कलहं कार्य्यनाशनम् ॥ १६

(क) श्रीचिन्तेति क्वचित् पाठः।

श्वानस्थाने स्थिते सिंहे कार्य्यसिद्धिर्भविष्यति ।
श्वानस्थाने स्थिते श्वाने धननाशो भविष्यति ॥ १७
श्वानस्थाने वृषं दृष्ट्वा रोगी रोगाद्विमुच्यते ।
श्वानस्थाने खरं दृष्ट्वा कलहश्च भयं भवेत् ॥ १८
श्वानस्थाने गजं दृष्ट्वा पुत्त्रभार्य्यासमागमः ।
श्वानस्थानेस्थिते ध्वाङ्क्षे पीड़ास्याद्दलनाशनम्(क)१९
वृषस्थाने ध्वजं दृष्ट्वा राजपूजादिकं भवेत् ।
वृषस्थाने स्थिते धूम्रे राजपूजासुखादिकम् ॥ २०
वृषस्थाने स्थिते सिंहे सौभाग्यञ्च धनादिकम् ।
वृषस्थाने स्थिते श्वाने बलश्रीकाम ईरितः ॥ २१
वृषस्थाने वृषं दृष्ट्वा कीर्त्तितुष्टिसुखादिकम् ।
वृषस्थाने खरं दृष्ट्वा महालाभादिकं भवेत् ॥ २२
वृषस्थाने गजं दृष्ट्वा स्त्रीगजादिसमागमः ।
वृषस्थाने स्थिते ध्वाङ्क्षे स्थानमानसमागमः ॥ २३
खरस्थाने ध्वजं दृष्ट्वा रोगशोकादिकं भवेत् ।
खरस्थाने स्थिते धूम्रे तस्करादिभयं भवेत् ॥ २४
खरस्थाने स्थिते सिंहे पूजाश्रीविजयादिकम् ।
खरस्थाने स्थिते श्वाने सन्तापधननाशनम् ॥ २५
खरस्थाने वृषं दृष्ट्वा सुखं प्रियसमागमः ।
खरस्थाने खरं दृष्ट्वा दुःखपीड़ादि निर्द्दिशेत् ॥ २६
खरस्थाने गजं दृष्ट्वा सुखपुत्त्रादिकं भवेत् ।
खरस्थाने स्थिते ध्वाङ्क्षे कलहो व्याधिरेव ॥ २७
गजस्थाने ध्वजं दृष्ट्वा स्त्रीजयश्रीसुखादिकम् ।
गजस्थाने स्थिते धूम्रे धनधान्यसमागमः ॥ २८
गजस्थाने स्थिते सिंहे जयसिद्धिसमागमः ।
गजस्थाने स्थिते श्वाने आरोग्यसुखसम्पदः ॥ २९
गजस्थाने वृषं दृष्ट्वा राजमानधनादिकम् ।
गजस्थाने खरं दृष्ट्वा पूर्व्वं दुःखं ततः सुखम् ॥ ३०
गजस्थाने गजं दृष्ट्वा चैवधान्यसुखादिकम् ।
गजस्थाने स्थिते ध्वाङ्क्षे धनधान्यसमागमः ॥ ३१
ध्वाङ्क्षस्थाने ध्वजं दृष्ट्वा कार्य्यनाशो भविष्यति ।
ध्वाङ्क्षस्थाने स्थिते धूम्रे कलिदुःखं गमिष्यति ॥ ३२
ध्वाङ्क्षस्थाने स्थिते सिंहे विग्रहो दुःखमेव च ।
ध्वाङ्क्षस्थाने स्थिते श्वाने गृहभङ्गभयादिकम् ॥ ३३
ध्वाङ्क्षस्थाने वृषं दृष्ट्वा स्थानभ्रंशभयादिकम् ।
ध्वाङ्क्षस्थाने खरं दृष्ट्वा धननाशपराजयः ॥ ३४
ध्वाङ्क्षस्थाने गजं दृष्ट्वा धनकीर्त्त्यादिकं भवेत् ।
ध्वाङ्क्षस्थाने स्थिते ध्वाङ्क्षे विदेशगमनादिकम् ॥ ३५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

---

## षड़धिकद्विशततमोऽध्यायः ।

### भैरव उवाच ।

वक्ष्ये वायुजयं देवि जयाजयविवेकम् ।
वाय्वग्निजलशक्राख्यं मण्डलानां चतुष्टयम् ॥ १
वामदक्षिणसंस्थश्च वायुश्च बहुलो भवेत् ।
ऊर्द्ध्ववाही भवेदग्निरधस्तु वरुणो भवेत् ॥ २
माहेन्द्री मध्यसंस्थस्तु शुक्लपक्षे तु वामगः ।
कृष्णपक्षे दक्षिणग उदयस्य त्र्यहं त्र्यहम् ॥ ३
वहेत् प्रतिपदाद्ये च विपरीते भवेन्नतिः ।
उदयं सूर्य्यमार्गेण चन्द्रेणास्तमयो यदि ॥ ४
वर्द्धन्ते गुणसंघाता अन्यथा विघ्नमौचितम् ।
संक्रान्त्यः षोड़श प्रोक्ता दिनरात्रौ वरानने ॥ ५
यदा च संक्रमेद्वायुरर्द्धार्द्धप्रहरे स्थितः ।
स्वास्थ्यहानिस्तदा ज्ञेया वायुर्भ्रमति दिक्षु ॥ ६
दक्षिणे च पुटे वायुर्हितो भोजनमैथुने ।
खड्गहस्तो जयेद्युद्धे रिपून् कामसमन्वितः ॥ ७
वामेन गमनं श्रेष्ठं सर्व्वकार्य्येषु भूषितम् ।
वायौ वहति तत्रस्थः प्रश्नो भवति शोभनः ॥ ८
माहेन्द्रे वारुणे वाते कोऽपि दोषो न जायते ।
अनावृष्टिर्दहवाहे वृष्टिः स्याद्वामवाहके ॥ ९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे षड़धिकद्विशततमोऽध्यायः ॥ २०६ ॥

---

## सप्ताधिकद्विशततमोऽध्यायः ।

### धन्वन्तरिरुवाच ।

हयायुर्व्वेदमाख्यास्ये हयः सर्व्वार्थरक्षणं (क) ।
काकतुण्डी कृष्णजिह्वः वृक्षास्यश्चोष्णतालुकः ॥ १

(क) कुलनाशनमिति पाठान्तरम् ।

(क) हयसर्व्वार्थलक्षणमिति क्वचित् पाठः ।

करालो हीनदन्तश्च शृङ्गी चाधिकदन्तकः । (क)
एकाण्डश्चैव जाताण्डः कञ्चकी द्विखुरी स्तनी ॥ २
मार्ज्जारपादी व्याघ्राभः कुष्ठविद्रधिसन्निभः ।
यमजो वामनश्चैव मार्ज्जारः कपिलोचनः ॥ ३
एतद्दोषी हयस्त्याज्य उत्तमोऽर्द्धचतुष्कर ( ख ) ।
मध्योऽर्द्धहस्तहीनोऽश्वो मुष्टिहस्तविहीनकः ॥ ४
कनीयांश्चार्द्धमानः स्यादर्द्धसप्तस्तु दीर्घतः ॥ ५
पञ्चमुष्टिहीनः पञ्चोन उत्तमाश्वास्तु दीर्घतः ।
असंहता ये च वाहा ह्रस्वकर्णास्तथैव च ।
शवलाभाः प्रभाविषु न हीनाश्चिरजीविनः ॥ ६
देवन्तपूजनाद्धोमाद्दूरच्चाश्च द्विजभोजनात् ।
शरलं निम्बपत्राणि गुग्गुलुः सर्षपा घृतम् ॥ ७
तिलश्चैव वचा हिङ्गु बध्नीयाद्वाजिनां गले ।
आगन्तुजं दोषजन्तु व्रणं द्विविधमीरितम् ॥ ८
चिरपाकं वातजन्तु श्लेष्मजं चिप्रपादिकम् ।
कण्ठदाहात्मकं पित्ताच्छोणितान्मन्दवेदनम् ॥ ९
घनं कफात् सन्निपातात् सर्व्वरूपं द्विदोषजम् ।
आगन्तुजन्तु शस्त्राद्यैर्दुष्टव्रणविशोधनम् ॥ १०
दन्तीमूलं हरिद्रे द्वे चित्रकं विश्वभेषजम् ।
रसोनं सैन्धवं वापि तक्रकाञ्जिकपेषितम् ॥ ११
तिलशक्तुकपिण्डीका दधियुक्ता ससैन्धवा ।
निम्बपत्रयुतं पिण्डं व्रणशोधनरोपणम् ॥ १२
करवीर-कदल्यर्क-स्नुही-कटुजचित्रकैः ।
भल्लातस्य पचेत् तैलं नाड़ीव्रणहरं परम् ॥ १३
पञ्चवल्कलकल्केन घृतेन च प्रलेपयेत् ।
द्वे हरिद्रे विड़ङ्गानि तथा लवणपञ्चकम् ॥ १४
पटोलं निम्बपत्रञ्च वचा चित्रकमेव च ।
पिप्पलीशृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ।
एतत् पानं क्रिमिश्लेष्म-मदानिलविनाशनम् ॥ १५
निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा ।
क्वाथयित्वा ततो वाहं स्रुतरक्तं विचक्षणः ।
त्र्यहमेव प्रदातव्यं हयकुष्ठोपशान्तये ॥ १६
सव्रणेषु च कुष्ठेषु तैलं सर्षपजं हितम् ।
लशुनादिकषायश्च पानभुक्त्योपशान्तये ॥ १७
मातुलुङ्गरसोपेतं मांसीनां रसकेन वा ।
सद्यो दद्यात् तत्र नस्यमन्यैर्वा तिलसंयुतैः ॥ १८
पलद्वयं प्रथमेऽह्नि एकैकपलवर्द्धितः ।
यावद्दिनानि पूर्णानि पलान्यष्टादशोत्तमे ॥ १९
अधमेऽष्टपलानि स्युर्मध्यमे स्युश्चतुर्द्दश ।
शरन्निदाघयोर्नैव देयो नैव तु दापयेत् ॥ २०
तैलेन वातिके रोगे शर्कराज्यपयोऽन्वितैः ।
कटुतैलैः कफे व्योषैः पित्ते त्रिफलवारिभिः ॥ २१
शालिषष्टिकदुग्धाशी हयो हि न जुगुप्सितः ।
पङ्कजम्बूनिभो हेम-वर्णोऽश्वो न जुगुप्सितः ॥ २२
अर्द्धप्रहरणे धुर्य्यं गुग्गलुं प्राशयेद्धयम् ।
भोजयेत् पायसं दुग्धं सलरं सुस्थिरो हयः ॥ २३
विकारे भोजने दुग्धं शाल्यन्नं वातुले दरेत् ।
कर्षमांसरसैः पित्ते मधु-मुद्गरसाज्यकैः ॥ २४
कफे मुद्गान् कुलत्थान् वा कटुतिक्तान् कफे हये ।
बाधिर्य्ये व्याधिते शासे त्रिदोषादौ तु गुग्गुलुः ॥ २५
घासैर्दूर्व्वा सर्व्वरोगे प्रथमेऽह्नि पलं ददेत् ।
विवर्द्धयेत् ततो कर्षमेकाह्नि पलपञ्चकम् ॥ २६
पाने च भोजने चैव अशीतिपलकं वरम् ।
मध्ये षष्टिश्चाधमेषु चत्वारिंशच्च भोगिषु ॥ २७
व्रणे कुष्ठेषु खञ्जेषु त्रिफलाक्वाथसंयुतम् ।
मन्दाग्नौ शोथरोगे च गवां मूत्रेण योजितम् ॥ २८
वातपित्ते व्रणे व्याधौ गोक्षीरघृतसंयुतम् ।
देयं कृशानां पुष्ट्यर्थं माषैर्युक्तञ्च भोजनम् ॥ २९
सपिष्टायाः प्रदातव्यं गुडूच्याः पलपञ्चकम् ।
प्रभाते घृतसंयुक्तं शरद्ग्रीष्मे च वाजिनाम् ॥ ३०
रोगघ्नं पुष्टिदञ्चापि बल-तेजोविवर्द्धनम् ।
तदेवाश्वाय दातव्यं क्षीरयुक्तमथापि वा ॥ ३१
गुडूचीकल्कयोगेन शतावर्य्यश्वगन्धयोः ।
चत्वारि त्रीणि मध्यस्य जघन्यस्य पलानि हि ॥ ३२
अकस्माद्दृयत्र वाहानामेकरूपं यदा भवेत् ।
म्रियते च यदा क्षिप्रमुपसर्गं तमादिशेत् ॥ ३३
होमाद्यै रक्षया विप्र-भोजनैर्वलिकर्म्मणा ।
शान्त्योपसर्गशान्तिः स्याद्धरीतक्यादिकल्पतः ॥ ३४
हरीतकी गवां मूत्रैस्तैलेन लवणान्विता ।

(क) विरलदन्तक इति च पाठः ।
(ख) एतद्दोषी हयस्त्याज्य उत्तमोऽश्वस्तुरुष्कज । मध्यमः पञ्चहस्तश्च कनीयांश्च त्रिहस्तकः पाठान्तरम् ।

आदौ पञ्च ततः पञ्च वृद्धा पूर्णशतावधि ।
उत्तमस्य शतं मात्रा लक्षणीतिः षष्टिरेव वा ॥ ३५
गजायुर्व्वेदमाख्याते उक्ताः कल्पा गजे हिताः ।
गजे चतुर्गुणा मात्रा ताभिर्गजरुगर्द्दनम् ॥ ३६
गजोपसर्गव्याधीनां शमनं शान्तिकर्म्म च ।
पूजयित्वा सुरान् विप्रान् रत्नैर्गां कपिलां ददेत् ॥ ३७
दन्तिदन्तहयी मात्रां निबध्नीयादुपोषितः ।
मन्त्रेण मन्त्रिता वैद्यैर्वचा सिद्धार्थकास्तथा ॥ ३८
सूर्य्यादि-शिव-दुर्गा-श्री-विष्णवर्चा रचयेद्गजम् ।
बलिं दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥ ३९
भोजनं मन्त्रितं दद्याद्गुसनोद्भूनयेद्गजम् ।
भूतरक्षा शुभा मेध्या वारणं रक्षयेत् सदा ॥ ४०
त्रिफला-पञ्चकोले च दशमूलं विड़ङ्गकम् ।
शतावरी गुडूची च निम्ब-वासक-किंशुकाः ॥ ४१
गजरोगविनाशाय हितो रूक्षः कषायकः ।
आयुर्व्वेदो गजाश्वानामुक्तः संक्षेपशरतः ॥ ४२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

## अष्टाधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

एवं धन्वन्तरिः प्राह सुश्रुताय च वैद्यकम् ।
अथ नामानि वक्ष्यामि औषधीनां समासतः ॥ १
स्थिरा विदारिगन्धा च शालपर्ण्यंशुमत्यपि ।
लाङ्गली कलसी चैव क्रोष्टुपुच्छा गुहा मता ॥ २
पुनर्नवाथ वर्षाभूः कारविल्लः कठिल्लकः ।
एरण्डश्चोरुवूकः स्याद्दामण्डो वर्द्धमानकः ॥ ३
क्षुपा नागबला ज्ञेया श्वदंष्ट्रा गोक्षुरो मतः ।
शतावरी वरा भीरु पीवरीन्दीवरी वरी ॥ ४
व्याघ्री तु वृहती कृष्णा हंसपादी मधुस्रवा ।
श्यामनी कण्टकारी स्यात् क्षुद्रा सिंही निदिग्धिका ॥ ५
वृश्चिकाल्यमृता काली विषघ्नी सर्पदंष्ट्रिका ।
मर्कटी चात्मगुप्ता स्यादार्षेयी कपिकच्छुका ॥ ६
मुद्गपर्णी क्षुद्रसहा माषपर्णी महासहा ।
न्यग्रोधस्तु वटो ज्ञेयो अश्वत्थः कपिलो मतः ॥ ७
प्लक्षोऽथ गर्द्दभाण्डः स्यात् पर्क्कटी च कपीतनः ।
पार्थस्तु ककुभो धन्वी विज्ञेयोऽर्ज्जुननामभिः ॥ ८
नन्दीवृक्षः प्ररोही स्यात् पुष्टिकारीति चोच्यते ।
वञ्जुलो वेतसो ज्ञेयो भल्लातश्चाग्न्यरुष्करः ॥ ९
लोध्रः शावरको वृष्टस्तिरीटश्चापि कीर्त्तितः ।
वृहत्फला महाजम्बूर्ज्ञेया बालफला परा ॥ १०
तृतीया जलजम्बूः स्यान्नादेयी सा च कीर्त्तिता ।
कणा कृष्णोपकुल्या च शौण्डी मागधिकेति च ॥ ११
कथिता पिप्पली तज्ज्ञैस्तन्मूलं ग्रन्थिकं स्मृतम् ।
ऊषणं मरिचं ज्ञेयं शुण्ठी विश्वं महौषधम् ॥ १२
व्योषं कटुत्रयं विद्यात् त्र्यूषणं तच्च कीर्त्यते ।
लाङ्गली हलिनी च स्याच्छ्रेयसी गजपिप्पली ॥ १३
त्रायन्ती त्रायमाणा स्यादुक्ता वङ्गवल्ला स्मृता ।
चित्रकः स्याच्छिखी वह्निरग्निसंज्ञाभिरुच्यते ॥ १४
षड्ग्रन्थोग्रा वचा ज्ञेया श्वेता हैमवतीति च ।
कुटजो वृक्षकः शक्रो वत्सको गिरिमल्लिका ॥ १५
कलिङ्गेन्द्रयवारिष्टं तस्य वीजानि लक्षयेत् ।
मुस्तको मेघनामा स्यात् कौन्ती ज्ञेया हरेणुका ॥ १६
एला च बहुला प्रोक्ता सूक्ष्मैला च तथा त्रुटिः ।
पद्मा भार्गी तथा काञ्जी ज्ञेया ब्राह्मणयष्टिका ॥ १७
मूर्व्वा मधुरसा ज्ञेया तेजनी तिक्तवल्कला ।
महानिम्बो वृहन्निम्बो दीप्यकः स्याद्यमानिका ॥ १८
विड़ङ्गं क्रिमिशत्रुः स्याद्रामठं हिङ्गुरुच्यते ।
अजाजी जीरकं ज्ञेयं कारवी चोपकुञ्चिका ॥ १९
विज्ञेया कटुका तिक्ता तथा कटुकरोहिणी ।
तगरं स्यान्नतं चक्रं चोचं त्वचवराङ्गकम् ॥ २०
उदीच्यं बालकं प्रोक्तं ह्रीवेरं चाम्बुनामभिः ।
पत्रकं दलसंज्ञाभिश्चोरकं तस्कराह्वयम् ॥ २१
हेमाभं नागसंज्ञाभिर्नागकेशर उच्यते ।
असृक्कुङ्कुममाख्यातं तथा काश्मीरवाह्लिकम् ॥ २२
अयोगुरुः समुद्दिष्टो योगिको लोहनामभिः ।
यविष्ठा च तथा चैव प्राचीना केलिकेति च ॥ २३
सुषवी तोषनाशा स्याद्रम्भा च कदली मता ।
पुरं कुटन्नटं विद्यान्महिषाक्षः पलङ्कषा ॥ २४
काश्मरी कटफला ज्ञेया श्रीपर्णी चैति कीर्त्तिता ।
शल्लकी गजभक्ष्या च पत्नी च सुरभी स्रवाः ॥ २५

शिवोमामलकौं विद्यादचश्चैव विभीतकः ।
पथ्याभया च विज्ञेया पूतना च हरीतकी ॥ २६
त्रिफला फलमेवोक्ता तच्च ज्ञेयं फलत्रिकम् ।
उदकीर्य्यौ दीर्घवृन्तः करञ्जश्चेति कीर्त्तितः ॥ २७
यष्टी यष्ट्याह्वयं प्रोक्तं मधुकं मधुयष्टिका ।
धातकी ताम्रपर्णी स्यात् समङ्गा कुञ्जरा मता ॥२८
सितं मलयजं शीतं गोशीर्षं सितचन्दनम् ।
विद्याद्रक्तं चन्दनञ्च द्वितीयं रक्तचन्दनम् ॥ २९
काकोली च स्मृता वीरा वयस्या चार्कपुष्पिका ।
शृङ्गी कर्कटशृङ्गी च महाघोषा च कीर्त्तिता ॥ ३०
तुगाक्षीरी शुभा वांशी विज्ञेया वंशलोचना ।
मृद्विका च स्मृता द्राक्षा तथा गोस्तनिका मता ॥ ३१
स्यादुशीरं मृणालञ्च सेव्यं लामज्जकं तथा ।
शारञ्च गोपवल्ली च गोपी भद्रा च कथ्यते ॥ ३२
दन्ती कटङ्कटेरी च ज्ञेया दारु निशेति च ।
हरिद्रा रजनी प्रोक्ता पीतिका रात्रिनामिका ॥ ३३
वीरवृक्षो वरतरुस्तथा वीरतरुः स्मृतः ।
वृक्षादनी छिन्नरुहा नीलवल्ली रसामृता ॥ ३४
कपोता चैव संज्ञा च सूर्य्यभक्ताभिधीयते ।
कण्ठभल्ला कण्ठशाला कटपं परिकीर्त्त्यते ॥ ३५
वसुकोटश्च विज्ञेयो वाशिरः काम्पिको मतः ।
पाषाणभेदकोऽरिष्टो ह्यश्मभित् कट्टभेदकः ॥ ३६
शण्टाकः शुष्कको ज्ञेयो वचोऽथ सूचको मतः ।
सगन्धश्च कुसुम्भश्च च्छत्रादि च्छत्रसंज्ञकः ॥ ३७
सुरसो वीजकश्चैव पीतशालोऽभिधीयते ।
वज्रवृक्षो महावृक्षः स्नुही स्नुच सुधा गुड़ा ॥ ३८
शालस्तु यक्षवृक्षः स्यादनिशस्तिनिशो मतः ।
तुलसीं सुरसां विद्यादुपस्थेति च कथ्यते ॥ ३९
एतैरेव च पर्य्यायैर्द्वितीया कथिता सिता ।
कुठेरकोऽप्यर्ज्जुनकः पर्णी सौगन्धिपर्णिकः ॥ ४०
नीलश्च सिन्धुवारश्च निर्गुण्डीति सुगन्धिका ।
ज्ञेया सुगन्धिपर्णीति वासन्ती कुलजेति च ॥ ४१
कालीयकं पीतकाष्ठं कतकाख्यः पुनः स्मृतः ।
गायत्री खदिरो ज्ञेयस्तद्भेदः कन्दरो मतः ॥ ४२
इन्दीवरं कुवलयं पद्मं नीलोत्पलं स्मृतम् ।
सौगन्धिकं शतदलमब्जं कमलमुच्यते ॥ ४३

अजकर्णौ भवेदूर्ज्जौ वाजिकर्णोऽश्वकर्णकः ।
श्लेष्मातकस्तथा शेलुर्बहुवारश्च कथ्यते ॥ ४४
अलम्बुषमृगीच्छातः कुलाङ्गन इति स्मृतः ।
सुनन्दकः ककुद्भद्रं छत्राकी च्छत्रसंज्ञकः ॥ ४५
कवरी कुम्भको दृष्टः त्रुद्विधो घनकृत् तथा ।
कृष्णाञ्जिकः करालश्च काममानः प्रकीर्त्तितः ॥ ४६
प्राची वला नदीक्रान्ता काकजङ्घाथ वायसी ।
ज्ञेया मूषिककर्णी तु द्रवन्ती चाखुकर्णिका ॥ ४७
विषमुष्टिर्द्राविणञ्च केशमुष्टिरुदाहृता ।
किलिहीं कटुकीं विद्यादन्तकश्चाम्लवेतसः ॥ ४८
अश्वत्था बहुपुत्रा च विज्ञेया चामलक्यपि ।
अरूषकं पत्रशूकं चोरी राजादनं मतम् ॥ ४९
महापात्रञ्च दाड़िम्बं तमेव करकं वदेत् ।
मसूरी विदली श्यामा कालिन्दीति निरुच्यते ॥ ५०
कण्टकाख्या महाश्यामा वृक्षपादीति वच्यते ।
विद्या कुन्ती निकुम्भा च त्रिभङ्गी त्रिपुटी त्रिवृत्॥५१
सप्तला यवतिक्ता च चर्म्मा चर्म्मरुहेति च (क) ।
शङ्खिनी सुकुमारी च तिक्ताक्षी चाक्षि पीलुकम्॥५२
गवाक्षी चामृता श्वेता गिरिकर्णी गवादनी ।
काम्पिल्लकोऽथ-रक्ताङ्गो गुण्डा रोचनिकेति च ॥ ५३
हेमक्षीरी स्मृता पीता गौरी च कालदुग्धिका ।
गाङ्गेरुकी नागबला विशाला चेन्द्रवारुणी ॥ ५४
तार्क्ष्यं शैलं नीलवर्णमञ्जनञ्च रसाञ्जनम् ।
निर्यासोऽयञ्च शाल्मल्याः स मोचरससंज्ञकः ॥ ५५
प्रत्यक्पुष्पी खरी ज्ञेया अपामार्गौ मयूरकः ।
सिंहास्य-वृष-वासाकमटरूषकमादिशेत् ॥ ५६
जीवको जीवशाकश्च कर्व्वूरश्च शटीं विदुः ।
कट्फलं सोमवृक्षः स्यादग्निगन्धा सुगन्धिका ॥ ५७
शताङ्गं शतपुष्पा च मिसिर्मधुरिका मता ।
ज्ञेयं पुष्करमूलञ्च पुष्करं पुष्कराह्वयम् ॥ ५८
यासोऽथ धन्वयासश्च दुष्पर्शोऽथ दुरालभा ।
वागुजी सोमराजी च सोमवल्लीति कीर्त्तिता ॥ ५९
मार्कवः केशराजश्च भृङ्गराजो निगद्यते ।
प्रोक्तश्वेड़गजस्तज्ज्ञैश्चक्रमर्दकसंज्ञकः ॥ ६०
सुरङ्गी तगरः स्नायुः कलनासा तु वायसी ।

(क चर्म्मकषेति चेति वा पाठः ।

महाकालः स्मृतो वेलस्त्वङ्कुलीयो घनस्तनः ॥ ६१
इक्ष्वाकुस्तिक्ततुम्बी स्यात् तिक्तालाबुर्निगद्यते ।
धामार्गवोऽथ विज्ञेयः कोषातक्यथ जामिनी ॥ ६२
विद्यात् कोषातकीभेदं कृतभेदनसंज्ञकम् ।
तथा जीमूतकाख्या च खुड्डाको देवताड़कः ॥ ६३
गृध्रादना गृध्रनखी हिङ्गु काकादनी मता ।
अश्वारिश्चैव बोद्धव्यः करवीरोऽश्वमारकः ॥ ६४
ज्ञेया कपित्थपुत्री च तुरसी कुशजेति च ।
सिन्धु-सैन्धव-सिन्धूत्थ-मणिमुख्यसुदाहृतम् ॥ ६५
क्षारो यवाग्रजश्चैव यवक्षारोऽभिधीयते ।
सर्ज्जिका सर्ज्जिकाक्षारो द्वितीयः परिकीर्त्तितः ॥६६
उष्णक्षारश्च निःसारमूषरौषधमादिशेत् ।
तुत्थकं शिखिकण्ठाभं चित्रमाकमिति स्मृतम् ॥ ६७
काशीशं पुष्पकाशीशं विज्ञेयं नेत्रभेषजम् ।
धातुकाशीशकाशी च संज्ञेयं तच्च कीर्त्तितम् ॥ ६८
सौराष्ट्री मृत्तिका चारं काची च पङ्कपर्पटी ।
विद्यात् समाचिका धातु-तार्क्ष्यं ताप्युत्थसम्भवम्॥६९
शिला मनःशिला ज्ञेया नेपाली कुलटीति च ।
शालं मनस्तालकं वा हरितालं विनिर्द्दिशेत् ॥ ७०
गन्धको गन्धपाषाणो रसः पारद उच्यते ।
ताम्रमौडुम्बरं शूल्वं विद्यान्म्लेच्छमुखं तथा ॥ ७१
अद्रिसारस्त्वयस्तीक्ष्णं लोहकञ्चापि कथ्यते ।
माक्षिकं मधु च क्षौद्रं तच्च पुष्परसं स्मृतम् ॥ ७२
ज्येष्ठन्तु सोदकं तत् स्यात् काञ्जिकन्तु सौवीरकम् ।
सिता सितोपला चैव मत्स्यण्डी शर्करा स्मृता ॥ ७३
लवीलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेशरसंयुक्तं तच्चतुर्जातमिष्यते ॥ ७४
पिप्पली पिप्पलीमूलं चव्य-चित्रक-नागरैः ।
कथितं पञ्चकोलञ्च कौलकं कोलसंज्ञया ॥ ७५
भर्त्तृलाङ्गो महाशाली नीवारः शालिका स्मृता ।
प्रियङ्गुः कङ्गुका ज्ञेया कोरदूषश्च कोद्रवः ॥ ७६
त्रिपुटः पुटसंज्ञश्च कलापो लाङ्गको मतः ।
सतीनो वर्त्तुलश्चैव वेणुश्चापि प्रकीर्त्तितः ॥ ७७
पिचुकं पित्तन्नाचं विड़ालपादकं तथा ॥ ७८
विद्यात् कर्षं तथा चापि सुवर्णं कवलग्रहम् ।
पलार्द्धं शुक्तिमिच्छन्ति तथाष्ट-माषकन्त्विति ॥७९

पलं विल्वञ्च मुष्टिः स्यादृ पले प्रसृतिं वदेत् ।
अञ्जलिं कुड़वञ्चैव विद्यात् पलचतुष्टयम् ॥ ८०
अष्टमानं पलान्यष्टौ तच्च मानमिति स्मृतम् ।
चतुर्भिः कुड़वैः प्रस्थं प्रस्थाश्चत्वार आढ़कः ॥ ८१
कांस्यपात्रञ्च सम्प्रोक्तो द्रोणञ्च चतुराढ़कैः ।
तुला पलशतं प्रोक्तं भारो विंशत्पलः स्मृतः ॥ ८२
मानमेवंविधं प्रोक्तं प्रस्थद्रव्येषु पण्डितैः ।
द्रवद्रव्येषु चोद्दिष्टं द्विगुणं परिकीर्त्तितम् ॥ ८३
वलं तुरुष्कमेवोक्तं दारु स्याद्देवदारु च ।
ग्रन्थिस्थौणेयकं विद्याद्भूमिकं वासकं त्वचम् ॥ ८४
कुष्ठमामयमाख्यातं मांसी च नलदंशनम् ।
शुक्तिः शुक्तिनखः शङ्खो व्याघ्रो व्याघ्रनखः स्मृतः ॥ ८५
पुरं पलङ्कषं विद्यान्महिषाक्षञ्च गुग्गुलुम् ।
रसं गन्धरसो वोलं सर्ज्जः सर्ज्जरसो मतः ॥ ८६
कुन्दं कुन्दुरुकं दृष्टं द्रवं श्रीवेष्टकं मतम् ।
प्रियङ्गुः फलिनी श्यामा गौरीकान्तेति चोच्यते ॥ ८७
स्यादार्त्तगलनामार्त्त-भीषणो बहुकण्टकः ।
सैरीयकः सहचरो द्वितीयो वाणसंज्ञकः ॥ ८८
करञ्जो नक्तमालः स्यात् पूतिकश्चिरविल्वकः ।
शिग्रुः शोभाञ्जनो नाम ज्वालो मांसश्च कीर्त्तितः ॥
जया जयन्ती शरणी निर्गुण्डी सिन्धुवारकः ।
मोरटा पिलुपर्णी च तुण्डी स्यात् तुण्डिकेरिका ॥
मदनो गालवो बोधो घोटा घोटी च कथ्यते ।
चतुरङ्गुलसम्पाको व्याधिघाताभिसंज्ञकः ॥ ९१
विद्यादारग्वधं राज-वृक्षं रैवतसंज्ञकम् ।
दृष्टका चातितिक्ता स्यात् कण्टकी च विकङ्कता ॥
निम्बोऽरिष्टः समाख्यातः पटोलं कोलकं विदुः ।
वयःस्था चैव विशल्या च छिन्ना छिन्नरुहा मता ॥
वत्सादन्यमृता चेति गुडूचीनामसंग्रहः ।
किरातस्तिक्तकश्चैव भूनिम्बः काण्डतिक्तकः ॥ ९४
नामान्येतानि च हरेवन्यानां भेषजां तथा ।
अतो व्याकरणं वच्मे कुमारोक्तञ्च शौनक ॥ ९५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
औषधनामकथनं नामाष्टाधिक-
द्विशततमोऽध्यायः ॥ २०८ ॥

---

## नवाधिकद्विशततमोऽध्यायः ।

कुमार उवाच ।

अथ व्याकरणं वच्ये कात्यायन समासतः ।
सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे ॥ १
सुप्तिङन्तं पदं ख्यातं सुपः सप्त विभक्तयः ।
स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकात्मके ॥ २
सम्बोधने च लिङ्गादावुक्ते कर्म्मणि कर्त्तरि ।
अर्थवत् प्रातिपदिकं धातुप्रत्ययवर्ज्जितम् ॥ ३
अमौशसो द्वितीया स्यात् तत् कर्म्म क्रियते च यत् ।
द्वितीया कर्म्मणि प्रोक्तान्तरान्तरेण संयुते ॥ ४
टाभ्याम्भिसस्तृतीया स्यात् करणे कर्त्तरीरिता ।
करणं क्रियते येन कर्त्ता यस्य करोति सः ॥ ५
ङेभ्याम्भ्यसश्चतुर्थी स्यात् सम्प्रदाने च कारके ।
यस्मै दित्सा धारयते रोचते सम्प्रदानकम् ॥ ६
पञ्चमी स्यान्ङसिभ्याम्भ्यो ह्यपादाने च कारके ।
यतोऽपैति समादत्ते अपादत्ते भयं यतः ॥ ७
ङसोसामश्च षष्ठी स्यात् स्वामिसम्बन्धमुख्यके ।
ङ्योःसुपश्च सप्तमी स्यात् सा चाधिकरणे भवेत् ॥ ८
आधारश्चाधिकरणे रक्षार्थानां प्रयोगतः ।
ईप्सितञ्चानिप्सितं यत् तदपादानकं स्मृतम् ॥ ९
पञ्चमी पर्य्यपाङ्योगे इतरर्त्तेऽन्यदिङ्मुखे ।
एनयोगे द्वितीया स्यात् कर्म्मप्रवचनीयकैः ॥ १०
वीप्सेत्थम्भावचिह्नेऽभिर्भागे चैव परिप्रती ।
अनुरेषु सहार्थे च हीनेऽनूपश्च कथ्यते ॥ ११
द्वितीया च चतुर्थी स्याच्चेष्टायां गतिकर्म्मणि ।
अप्राणे हि विभक्ती द्वे मन्यकर्म्मण्यनादरे ॥ १२
नमः-स्वस्ति-स्वधा-स्वाहालं-वषड्योग ईरिता ।
चतुर्थी चैव तादर्थ्ये तुमर्थाद्भाववाचिनः ॥ १३
तृतीया सहयोगे स्यात् कुत्सितेऽङ्गे विशेषणे ।
काले भावे सप्तमी स्यादेतैर्योगेऽपि षष्ठ्यपि ।
स्वामीश्वराधिपतिभिः साक्षिदायादसूतकैः ॥ १४
निर्द्धारणे द्वे विभक्ती षष्ठी हेतुप्रयोगके ।
स्मृत्यर्थकर्म्मणि तथा करोतेः प्रतियत्नके ॥ १५
हिंसार्थानां प्रयोगे च कृति कर्म्मणि कर्त्तरि ।
न कर्त्तृकर्म्मणोः षष्ठी निष्ठयोः प्रतिपादिता ॥ १६
द्विविधं प्रातिपदिकं नाम धातुस्तथैव च ।
भूवादिभ्यस्तिङो लः स्याल्लकारा दश वै स्मृताः॥१७
तिप्तसन्ति प्रथमो मध्यः सिप्थस्थोत्तमपुरुषः ।
मिप्वस्मः परस्मै तु पदानाञ्चात्मनेपदम् ॥ १८
ते आते अन्ते प्रथमः से आथे ध्वे च मध्यमः ।
ए वहे मह उत्तमः पुरुषो हि निरूप्यते ॥ १९
नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवेत् ।
मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि ॥ २०
भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तथा ततः ।
लड़ीरिते वर्त्तमाने स्मेनातीते च धातुतः ॥ २१
भूतेऽनद्यतने लङ् वा लिङाशिषि च धातुतः ।
विध्यादावेवानुमतौ लोड्वाच्यो मन्त्रणे भवेत् ॥२२
निमन्त्रणाधीष्टसम्प्रश्ने प्रार्थनेषु तथाशिषि ।
लिड़तीते परोक्षे स्यादद्भुते लुङ् भविष्यति ॥ २३
भविष्यत्यपरोक्षे ऌट् लुट् परोक्षे भविष्यति ।
धातोर्लृङ् क्रियातिपत्तौ लिड़र्थे लेट्प्रकीर्त्तितः॥२४
कृतस्त्रिष्वपि वर्त्तन्ते भावे कर्म्मणि कर्त्तरि ।
तृन्तव्यधङनीयः स्यात् घञङाद्याश्च धातुतः ॥ २५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नवा-
धिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

## दशाधिकद्विशततमोऽध्यायः ।

कुमार उवाच ।

सिद्धोदाहरणं वच्ये संहितादिपुरःसरम् ।
विप्राग्रं सागता वीदं सूत्तमं स्यात् पितृषभः ॥ १
लृकारो विश्रुताश्लेषं लाङ्गलीषा मनीषया ।
गङ्गोदकं तवल्कार ऋणार्णं प्रार्णमित्यपि ॥ २
शीतार्त्तश्च तवाल्कारः सैन्द्री सौकार इत्यपि ।
वध्वासनञ्च पित्रर्थो लनुबन्धो नये जयेत् ॥ ३
नायको लवणं गावस्त एतेन त ईश्वराः ।
देवीगृहं अथो अत्र अ अवेहि पट् इमौ ॥ ४
अमी अश्वाः षड़स्येति तन्नवाक् षड्ढलानि च ।
तच्चरेत् तल्लुनातीति तज्जलं तत् श्मशानकम् ॥ ५
सुगरत्र पचन्नत्र भवांश्छादयतीति च ।
भवाञ्छनङ्करश्चैव भवांस्तरति संस्मृतम् ॥ ६

भवांल्लिखति ताच्छेते भवाञ्शेतेऽप्यमीदृशम्।
भवाच्छीनं त्वन्तरषि लच्छरोषि सदार्च्चनम्॥ ७
कश्चरेत् कष्ठकारेण क×कुर्य्यात् क ᳵ फले स्थितः।
कष्शेते चैव कष्षण्डः कोऽर्थः को याति गौरवम् ८
क इहात्र क एवाङ्गदेवा आङ्गश्च भो व्रज।
स्वपूर्विष्णुर्व्रजति च गोष्पतिश्चैव धूष्पति॥ ९
असानेष व्रजेत् स स्याट्टक्षाम स च गच्छति।
कुटीच्छाया तथा च्छाया सन्धयोऽन्ये तथेदृशाः॥१०
समासाः षट् समाख्याताः सद्विजः कर्म्मधारयः।
द्विगुस्त्रिवेदी प्रायश्च अयं तत्पुरुषः स्मृतः॥ ११
तत्कृतश्च तदर्थश्च वृकभीतिश्च यद्वनम्।
ज्ञानदक्षेण तत्त्वज्ञो बहुव्रीहिरथाव्ययी-
भावोऽधिस्त्रि यथोक्ति च द्वन्द्वो देवर्षिमानवाः॥१२
तद्धिताः पाण्डवः शैवो ब्राह्म्यञ्च ब्रह्मतादयः॥ १३
देवाग्निसखिपत्यंशु-क्रोष्टुस्वायम्भुवः पिता।
ना प्रशास्ता च रा गौर्ग्लौरङ्जन्ताश्च पुंस्यपि॥१४
हलन्तश्चाश्वयुक् क्षाभुक् तथा क्रव्यान्मृगाविधः।
आत्मा राजा युवा पन्थाः पूष-ब्रह्महणौ शशी।
विद्वेधा उशनाऽनड्वान् मधुलिट् काष्ठतट् तथा॥ १५
वनवार्य्यस्थिवस्तूनि जगत् सामाह्वनी तथा।
कर्म्मसर्पिर्वपुस्तेजः अजन्भलन्ता नपुंसके॥ १६
जाया जरा नदी लक्ष्मीः श्रीः स्त्री भूमिर्वधूरपि।
भ्रूः पुनर्भूस्तथा धेनुः स्वसा माता च नौः स्त्रियः॥१७
वाक्स्रग्दिक्क्षुधः प्रायो युवतिः ककुभस्तथा।
द्यौ-दृति-प्रावृषश्चैव उष्णिक् सुमनसः स्त्रियाम्॥१८
गुणद्रव्यक्रियायोगा स्त्रीलिङ्गाश्च वदामि ते।
शुक्लः कीलालपाश्चैव शुचिश्च ग्रामणीः सुधीः॥ १९
बाङ्गः कमलभूः कर्त्ता सुमती बहवः सुनौः।
सत्या नाम्न्यस्तथा पुंसो मधुतच्चा च दीर्घपात्॥ २०
सर्व्वविश्वोभये चोभौ तथान्यान्यतराणि च।
इतरो इतमो नेमस्त्वः समोऽथ सिमस्तथा॥ २१
पूर्व्वपरावराश्चैव दक्षिणश्चोत्तराधरौ।
अपरश्चान्तरोऽप्येतद्दुयद्दुतद्दुकिमदसो द्वयम्॥ २२
युष्मदस्मद्दुप्रथमश्च चरमाल्पे तथार्द्धके।
एकः कतिपयो द्वौ च त्रयं सर्व्वादयस्तथा॥ २३
सर्व्व तिष्ठन्ति सर्व्वस्मै सर्व्वस्मात् सर्व्वतो गतः।
सर्व्वेषाञ्चैव सर्व्वस्मिन्नेवं विश्वादयस्तथा॥ २४
पूर्व्वं पूर्व्वांश्च पूर्व्वस्मात् पूर्व्वस्मिन् पूर्व्व ईरितः॥२५
गीर्धूर्विद्या जुहोतिश्च जहातिश्च दधात्यपि।
दीप्यतिः स्तूयतिश्चैव पुत्रीयति धनायति॥ २६
तुष्यति म्रियते चैव चिचीषति निनीषति।
सनिः करोति क्रीणाति वृणोति द्यतिरर्च्चति॥ २७
कार्य्यं कृतश्च कृत्या च प्रत्ययाः स्युस्तथापरे।
सूर्य्याहारौ सुराः सन्ति देवविप्रवनान्यजः॥ २८
नरेण कार्य्यं वेदैश्च क्रियते देहि भोजनम्।
द्विजाय च वरिष्ठाभ्यां मा तेभ्योऽथ समागतः॥२९
तीर्थात् तथाश्रमाभ्याञ्च पञ्चभ्यः श्वशुरस्य च।
ज्ञानतत्त्वेषु चेत्येवमन्ये नेया यथामति॥ ३०

सूत उवाच।

सुप्तिङन्तं सिद्धरूपं नाममात्रेण दर्शितम्।
कात्यायनः कुमारात् तु श्रुत्वा विस्तरमब्रवीत्॥३१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे दशाधिकद्विशततमोऽध्यायः॥ २१०॥

---

## एकादशाधिकद्विशततमोऽध्यायः।

सूत उवाच।

वासुदेवं गुरुं नत्वा गणं शम्भुं सरस्वतीम्।
मात्रावर्णप्रभेदेन च्छन्दो वक्ष्येऽल्पबुद्धये॥ १
सर्व्वादिमध्यान्तगलौ म्नौ भ्यौ ज्यौ स्तौ त्रिका गणाः।
आर्य्या चतुष्कलाद्यन्तसर्व्वमध्ये चतुर्गणाः॥ २
व्यञ्जनान्तो विसर्गान्तो दीर्घो युक्तपरो गुरुः।
सानुस्वारश्च पादान्तो वा इत्युक्तो द्विमात्रकः॥ ३
यदा नापि क्रमं योगी लघुतापि क्वचिद्गुरोः।
श्लोकचाव्वर्गादिसंज्ञा स्याद्दुयतिविच्छेदसंज्ञिका॥
ज्ञेयः पादश्च तुर्य्यांशो युक् समं विषमन्त्वयुक्।
सममर्द्धसमं वृत्तं विषमञ्च तृतीयकम्॥ ५ ;

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे छन्दःशास्त्रे एकादशाधिकद्विशततमोऽध्यायः॥ २११॥

---

## द्वादशाधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

आर्य्यालक्ष्म लष्ट गणाः सदा जो विषमे न हि ।
षष्ठे जो न्लौ वापि भवेत् पदं षष्ठे द्वितीयलात् ॥१
आदितः सप्तमे ऋस्वा द्वितीयार्द्धे शरे ततः ।
त्रिगणाङ्घ्रिश्च पथ्या स्याद्विपुला वङ्क्तिलङ्घनात् ॥ २
गुमध्ये द्वितुर्य्यौ जौ चपला मुखपूर्व्वादिचापला ।
द्वितीयार्द्धे सजघना आर्य्याजातेश्च लक्षणम् ॥ ३
आर्य्याप्रथमार्द्धलक्ष्म गीतिः स्याच्चेद्दलद्वये ।
उपगोतिर्द्वितीयार्द्धादुद्गीतिर्व्यत्ययाद्भवेत् ।
आर्य्यागीतिश्चान्तगुरुर्गीतिजातेश्च लक्षणम् ॥ ४
षट् कला विषमे यदि समेऽष्टौ न निरन्तराः ।
समा पराश्रिता न स्याद्वैतालीये रलौ गुरुः ॥ ५
अन्ते यौ पूर्व्ववदिदमौपच्छन्दसिकं मतम् ॥ ६
भान्तौ स्यादापातलिका ज्ञेयाथो दक्षिणान्तिका ।
पराश्रितो द्वितीयो लः पादेषु निखिलेष्वपि ॥ ७
उदीच्यवृत्तिरसमे प्राच्यवृत्तिस्तु युग्मके ।
सपञ्चमश्चतुर्थांघ्रि युगपत् तौ प्रवृत्तकम् ॥ ८
उदीच्याद्यङ्घ्रिसंयोगाद्युग्मपादैकपादिका (क) ।
चारुहासिन्ययुग्माङ्घ्रौ वैतालीयस्य संग्रहः ॥ ९
वक्त्रं नाद्यान्नसौ स्यातां चतुर्थाद्यगणो भवेत् ।
पथ्यावक्त्रं जेन समे विपरीतादिरन्यथा ॥ १०
असमे नश्च चपला विपुला लघुसप्तमा ।
निखिले वा सैतवस्य म्नौ न्तौ चाब्धेस्तत्पूर्व्वकौ ॥ ११
षोड़शलोऽचलधृतिर्मात्रासमकमुच्यते ॥ १२
नवमलस्तथा गोऽन्त्यः जो न्लौ वाथाम्बुधेर्यथा ।
विश्लोकः स्यात्तच्चतुष्कद्विगुणाद्वानवासिका ॥ १३
वाणाष्टनवकेषु स्याल्लश्चित्रा षोड़शात्मिका ।
सममात्रासमादिष्टं पदाकुलकमीरितम् ॥ १४
वृत्तमात्रा विना वर्णौर्लो वर्णा गुरुभिर्विना ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ १५
अष्टाविंशतिला गन्ता प्रथमार्द्धे द्वितीयके ।
विंशदस्यां शिखा गन्ता खञ्जा तद्व्यत्ययाद्भवेत् ॥१६
षोड़शानङ्गक्रीड़ा गा द्वात्रिंशच्चरमे च लाः ।
सप्तविंशतिला गन्ता दलयो रुचिरा द्वयोः ॥१७
मात्रावृत्तानि चोक्तानि वर्णवृत्तानि वच्मि वै ॥१८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
छन्दःशास्त्रे द्वादशाधिकद्विशत-
तमोऽध्यायः ॥ २१२ ॥

---

## त्रयोदशाधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

श्रीरुक्था गेन सा ज्ञेया अत्युक्था स्त्री गुरुद्वयम् ।
मो नारी रो मृगी मध्या मगौ कन्या प्रतिष्ठया ॥१
भो गौ पङ्क्तिः सुप्रतिष्ठा तनुमध्या तयौ स्मृता ।
नयाभ्यां बालललिता(क)गायत्त्रीच्छन्द एव हि ॥ २
मसगैर्मदलेखा स्यादुष्णिक् छन्दः स्मृतं बुधैः ।
भौ गौ चित्रपदा ख्याता विद्युन्माला ममौ गगौ ॥३
मानवकं भात् तलगा म्नौ गौ हंसरुतं स्मृतम् ।
समानिका रजगला जरला गः प्रमाणिका ।
आभ्यामन्यद्वितानं स्यादनुष्टप्छन्द ईरितम् ॥ ४
रनसैः स्याद्धलमुखी नौ मः शिशुभृता भवेत् ।
वृहतीच्छन्द इत्युक्तं समौ जगौ विराजितम्(ख) ॥५
पणवं स्यान्मनयगैर्मयूरसारिणी भवेत् ।
रजाभ्याञ्च रगाभ्याञ्च रुक्मवती भमौ सगौ ॥ ६
मत्ता मभसगैर्युक्ता नरजा गो मनोरमा ।
पङ्क्तिच्छन्दः समाख्यातं जसता गावुपस्थितम् ॥ ७
तौ जो गाविन्द्रवज्रा स्याज्जतज्गा शुपपूर्व्विका ॥८
उपजातयोऽन्याद्यन्ताः सुमुखी नजजा लगौ ।
भभंभा गौ दोधकं स्याच्छालिनी मतता गगौ ॥९
अब्धिलोकैश्च विच्छेदो वातोर्म्मी मभता गगौ ।
श्रीर्भतौ ननगाः प्रोक्ता पञ्चभिः षड्भिरेव च ॥ १०
मगना नो गो भ्रमरविलासितमुदाहृतम् ।
रथोद्धता नौ रलगाः स्वागता रनभा गगौ ॥ ११
वृत्ता ननौ सगौ गः स्यान्नौ रलौ ग स्रग्विका ।
रजरा ल्गौ श्येनिका स्याज्जसता गौ शिखण्डितम् ।

(क) अपरान्तिकेति पिङ्गलादौ ।

(क) चञ्चरसेति प्राकृतपैङ्गले नाम. शशिवदनेति वृत्तरत्नाकरादौ ।

(ख) शुद्धविराड़िति पैङ्गलादौ ।

त्रिष्टुप्छन्दः समाख्यातं पिङ्गलेन महात्मना ॥ १२
रनौ भसौ चन्द्रवर्त्म वंशस्थं स्याज्जतौ जरौ।
ततौ जराविन्द्रवंशा वेदसैस्तोटकं स्मृतम्।
न्भौ भ्रौ द्रुतविलम्बितं पुटश्च स्यान्ननौ मयौ ॥ १३
वसु-वेदैश्च विरतिर्मुदितवदना स्त्रियम्।
ननररैः समाख्याता नयना यस्तथा भवेत् ॥ १४
सा तु कुसुमविचित्रा जलोद्धतगती रसैः।
जसौ जसौ च पादेषु चतूरैः स्रग्विणी मता ॥ १५
भुजङ्गप्रयातं वृत्तं चतुर्भिर्यैः प्रकीर्त्तितम्।
प्रियंवदा नभज्रैश्च मणिमाला तयौ तयौ ॥ १६
गुहवक्त्रेण सन्निद्रा ललिता स्यात् तभौ जरौ।
प्रमिताक्षरा सजससैरुज्ज्वला तु ननौ भरौ ॥ १७
ममौ यथौ वैश्वदेवी पञ्चाश्वैश्च यतिर्भवेत्।
मभौ समौ जलधरमालाब्ध्यन्त्यैर्यतिर्भवेत् ॥ १८
नौ ततौ गः क्षमावृत्तं तुरगैश्च रसैर्यतिः।
प्रहर्षिणी मनौ ज्रौ गा वह्निभिर्दशभिर्यतिः ॥ १९
जभौ सजौ गो रुचिरा चतुर्भिश्च ग्रहैर्यतिः।
मत्तमयूरं मतयाः सगौ वेदग्रहैर्यतिः ॥ २०
मञ्जुभाषिणी सजसा जगौ सुनन्दिनी सजसा मगौ।
ननौ ततौ चन्द्रिका गः सप्तभिश्च रसैर्यतिः ॥ २१
असम्बाधा मतनसा गगौ बाणग्रहैर्यतिः।
ननराः सो लघुगुरुः स्वरैः प्रोक्तापराजिता ॥ २२
ननौ भनौ प्रहरणकलिकेयं लगौ तथा।
वसन्ततिलकं सिंहोन्नता तभ्जा जगौ गुरुः ॥ २३
भजौ सनौ गगाविन्दुवदनाथ सुकेशरम्।
नरना रलगाः पादे शर्करी प्रतिपादिता ॥ २४
चतुर्दशलघुः स्याच्च श्रेष्ठा शशिकला सगा।
रसग्रहयतिः स्रक् सा वसुशैलयतिस्तथा ॥ २५
स्यान्मणिगुणनिकरो मालिनी ननमा ययौ।
वसुस्वरयतिः स्याच्च नजौ भज्राः प्रभद्रकम् ॥ २६
एला सजौ ननौ यः स्याच्चित्रलेखा स्वराष्टकैः।
मरौ मयौ यस्य भवेदुक्तेयमतिशर्करी ॥ २७
स्वरात् खं वृषभगजजृम्भितं भनना नगौ।
नजभज्रा वाणिनी गः पिङ्गलेनाष्टिरीरिता ॥ २८
रस-रुद्रैः शिखरिणी यमौ नसभला गुरुः।
वसुग्रहयतिः पृथ्वी जसौ जसयला गुरुः ॥ २९

दशस्वरैर्वंशपत्रपतितं भ्रौ नृनभा लगौ।
षड्वेदाश्वैश्च हरिणी नसमा रसला गुरुः ॥ ३०
मन्दाक्रान्ताब्धिषड्नगैर्मभनास्ततगा गुरुः।
नर्द्दटकं नजभजा जलौ गो यतिरेव च ॥ ३१
सप्तर्लब्धिः कोकिलकमत्यष्टिः स्याच्च पूर्ववत्।
भूतर्लब्धैः कुसुमितलता मतौ न्यौ ययौ धृतिः ॥ ३२
रसर्लब्धैर्यमौ नृसौ रौ मेघविस्फूर्ज्जिता रगौ।
शार्दूलविक्रीड़ितं मः सूर्याश्वैः सज्सतास्तगौ ॥ ३३
छन्दो ह्यतिधृतिः प्रोक्तमत ऊर्द्धं कृतिर्भवेत्।
सप्ताश्वर्त्तुः सुवदना म्रौ भनौ यभला गुरुः ॥ ३४
वृत्तं रजौ रजौ पादे रजौ गो लः कृतिर्भवेत्।
त्रिसप्तकैः स्रग्धरा स्यात् प्रकृतिर्म्रभनैस्त्रियः ॥ ३५
दिगर्कैर्भद्रकं भ्रौ न्रौ नरना गो यथाकृतिः।
नजौ भश्वाश्वललितं जभौ जभलगा भवेत् ॥ ३६
मत्ताक्रीड़ा ह्याष्टबाणदशकैर्मौ तनौ ननौ।
नलौ गुरुश्च विकृतिश्छिन्ना संकृतिरुच्यते ॥ ३७
पञ्चाश्वार्कैर्भतौ तन्वी नसभा भनया गणाः।
क्रौञ्चपदा बाणशरवसुशैलैर्भमौ सभौ ॥ ३८
नौ नौ गोऽतिकृतिः प्रोक्ता छन्दो ह्युत्कृतिरुच्यते।
वस्वीशाश्वैर्मसतनैः स्याद्भुजङ्गविजृम्भितम् ॥ ३९
ननरसैर्लगयुक्तैश्च अपवाहाख्यकं यतिः।
गुहैः प्रभूभी रसैर्वाणैर्मीनाः षट् सगगा गणाः ॥ ४०
चण्डवृत्तिप्रपातोऽसौ दण्डको नौ ततोऽगराः।
रेफवृद्धान्तकादस्य व्यालजीमूतकादयः ॥ ४१

इति श्रीगारुड़े महापुराणे पूर्वखण्डे
समवृत्तकथनं नाम त्रयोदशाधिक-
द्विशततमोऽध्यायः ॥ २१३ ॥

---

## चतुर्दशाधिकद्विशततमोऽध्यायः।

### सूत उवाच।

सससलगाश्च विषमे पादे यद्युपचित्रकम्।
समे भौ भगगाः स्युश्च द्रुतमध्या भभौ भगौ ॥ १
गः पादे विषमेऽन्यत्र नजौ ज्यौ च गणौ कृतौ।
विषमे वेगवती सा गः समे भौ भौ गणौ गणाः।
पादेऽसमे तजौ रौ गः समे मसौ जगौ गुरुः।

भवेद्वद्रविराट् केतुमती तु विषमे सजौ ॥ ३
सगौ समे भौ नगगा आख्यानकी लयासमे ।
तौ जौ गगौ समे पादे जतजा गुरुकद्वयम् ॥ ४
विपरीताख्यानकं स्याद्विषमे जस्तजौ गगौ ।
ततौ जगौ समे गः स्यात् पिङ्गलेन ह्युदाहृतम् ॥ ५
पादेऽथ विषमे चैव पुष्पिताग्रा ननौ रयौ ।
समे नजौ जरौ गश्च वैतालीयं वदन्ति हि ।
वृत्तञ्चापरवक्त्राख्यमौपच्छन्दसिकं परम् ॥ ६
वाङ्मती(क)रजरा यः स्यादयुग्मे जरजा रगौ॥७
इति श्रीगारुड़े पूर्व्वखण्डे अर्द्धसमवृत्तकथनं
नाम चतुर्द्दशाधिकद्विशततमोऽध्यायः ॥२१४॥

---

## पञ्चदशाधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

प्रथमोऽष्टाक्षरैः पादो द्वितीयो द्वादशाक्षरैः ।
तृतीयः षोड़शार्णैश्च विंशदर्णैश्चतुर्थकः ।
सामान्यलक्षणं पदचतुरूर्द्धाभिरधस्य हि ॥ १
आपीड़ः सर्व्वलः प्रोक्तः पूर्व्वपादान्तगद्वयः ॥ २
द्वितीयेऽष्टाक्षरैः पादे कलिका प्रथमेऽर्कजे ।
लवली स्यात् तृतीयेऽथ पूर्व्ववच्चाष्टकाक्षरे ।
प्रोक्ता चामृतधारेयं चतुरष्टाक्षरे सति ॥ ३
इति पदचतुरूर्द्धप्रकरणम् ।
सजौ सलौ च प्रथमे नसजा गो द्वितीयके ।
तृतीये भनभा गश्च चतुर्थे सजसा जगौ ॥ ४
पूर्व्ववत् स्यात् सौरभकं तृतीयेऽङ्घ्रौ रनौ भगौ ।
ललितञ्चोर्द्धतावत् स्यात् तृतीयेऽङ्घ्रौ ननौ ससौ ॥ ५
इत्यद्गताप्रकरणम् ।
उपस्थितप्रचुपितं प्रथमेऽङ्घ्रौ मसौ जभौ ।
गौ द्वितीये सनजरा गस्तृतीये ननौ च सः ।
नौ नजा यश्चतुर्थे स्याच्छेषपादाश्च पूर्व्ववत् ॥ ६
तृतीयेऽङ्घ्रौ विशेषश्च वृत्तं स्यान्नौ सनौ नसौ ॥ ७
आर्षभं तजराः पादे तृतीयेऽन्यच्च पूर्व्ववत् ।
पूर्व्ववत् प्रथमं शेषे तज्राः शुद्धविराड्भवेत् ॥ ८
इत्युपस्थितप्रचुपितप्रकरणम् ।

(क) मतीति पैङ्गले ।

विषमाक्षरपादं वा पञ्चषट्कादि यावकम् ।
छन्दोऽत्र नोक्ता गाथेति दशधर्म्मादिवद्भवेत् ॥ ९
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे विषम-
वृत्तकथनं नाम पञ्चदशाधिकद्विशत-
तमोऽध्यायः ॥ २१५ ॥

---

## षोड़शाधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

प्रस्तार आद्यगोऽधो लः परतुल्योऽथ पूर्व्वगः ।
नष्टमध्ये समेऽङ्के लः समेऽर्द्धे विषमे गुरुः ॥ १
प्रतिलोमगुणं लाद्यं द्विरुद्दिष्टक एकनुत् ॥ २
संख्या द्विरर्द्धे रूपे तु शून्यं शून्ये द्विरीरितम् ।
तावदर्द्धे तद्गुणितं द्विर्द्व्यूनन्तु तदन्ततः ॥ ३
परे पूर्णं परे पूर्णं मेरुः प्रस्तारतो भवेत् ॥ ४
लगसंख्या वृत्तसंख्या चाद्याङ्गुलमथोर्द्धतः ।
संख्येव द्विगुणैकोना च्छन्दःसारोऽयमीरितः ॥ ५
इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
छन्दःप्रकरणं नाम षोड़शाधिक-
द्विशततमोऽध्यायः ॥२१६॥

---

## सप्तदशाधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

हरेः श्रुत्वाब्रवीद्ब्रह्मा यथा व्यासाय शौनक ।
ब्राह्मणादिसमाचारं सर्व्वदं ते तथा वदे ॥ १
श्रुतिस्मृती तु विज्ञाय श्रौतं कर्म्म समाचरेत् ।
श्रौतं कर्म्म न चेच्छक्तं तदा स्मार्त्तं समाचरेत् ॥ २
तत्राप्यशक्तः करणे सदाचारं चरेद्बुधः ।
श्रुतिस्मृती हि विप्राणां लोचने धर्म्मदर्शने ॥ ३
काणः स्यादेकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः ।
श्रुत्युक्तः परमो धर्म्मः स्मृतिशास्त्रगतोऽपरः ।
शिष्टाचारश्च शिष्टानां त्रयो धर्म्माः सनातनाः ॥ ४
सत्यं दानं दयाऽलोभो विद्येज्या पूजनं दमः ।
अष्टौ तानि पवित्राणि शिष्टाचारस्य लक्षणम् ॥ ५
तेजोमयानि पूर्व्वेषां शरीराणीन्द्रियाणि च ।

न च लिप्यन्ति पापेन पद्मपत्रमिवाम्भसा ॥ ६
निवासमुख्या वर्णानां धर्म्माचाराः प्रकीर्त्तिताः ।
सत्यं यज्ञस्तपो दानमेतद्धर्म्मस्य लक्षणम् ॥ ७
अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोध इज्या धर्म्मस्य लक्षणम् ॥ ८
विद्या वित्तं तपः शौर्य्यं कुले जन्म त्वरोगिता ।
संसारोच्छित्तिहेतुश्च धर्म्मादेव प्रवर्त्तते ॥ ९
धर्म्मात् सुखञ्च ज्ञानञ्च ज्ञानान्मोक्षोऽधिगम्यते ।
इज्याध्ययनदानानि यथाशास्त्रं सनातनः ।
ब्रह्म-क्षत्रिय-वैश्यानां सामान्यो धर्म्म उच्यते ॥ १०
याजनाध्ययने शुद्धे विशुद्धाच्च प्रतिग्रहः ।
वृत्तित्रयमिदं प्राहुर्मुनयो ज्येष्ठवर्णिनः ॥ ११
शस्त्रेणाजीवनं राज्ञो भूतानाञ्चाभिरक्षणम् ।
पाशुपाल्यं कृषिः पण्यं वैश्यस्याजीवनं स्मृतम् ॥ १२
शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्व्वशः ।
गुरौ वासोऽग्निशुश्रूषा स्वाध्यायो ब्रह्मचारिणः ॥ १३
त्रिस्नाता स्नापिता भैक्ष्यं गुरौ प्राणान्तिकी स्थितिः ।
समेखलो जटी दण्डी मुण्डी वा गुरुसंश्रयः ॥ १४
अग्निहोत्रोपचरणं जीवनञ्च स्वकर्म्मभिः ।
धर्म्मदारेषु कल्पेत पर्व्ववर्ज्जं रतिक्रियाः ॥ १५
देवपित्रतिथिभ्यश्च पूजादिष्वनुकल्पनम् ।
श्रुतिस्मृत्यर्थसंस्थानं धर्म्मोऽयं गृहमेधिनः ॥ १६
जटित्वमग्निहोत्रत्वं भूशय्याजिनधारणम् ।
वने वासः पयो-मूल-नीवार-फलवृत्तिता ॥ १७
प्रतिषिद्धान्निवृत्तिश्च त्रिःस्नानं व्रतधारिता ।
देवतातिथिपूजा च धर्म्मोऽयं वनवासिनः ॥ १८
सर्व्वारम्भपरित्यागो भैक्ष्याश्यं वृक्षमूलता ।
निष्परिग्रहताऽद्रोहः समता सर्व्वजन्तुषु ॥ १९
प्रियाप्रियपरिष्वङ्गे सुखदुःखाधिकारिता ।
सवाह्याभ्यन्तरं शौचं वाग्यमो ध्यानचारिता ॥ २०
सर्व्वेन्द्रियसमाहारो धारणा ध्याननित्यता ।
भावसंशुद्धिरित्येष परिव्राड्धर्म्म उच्यते ॥ २१
अहिंसा सूनृता वाणी सत्यशौचे क्षमा दया ।
वर्णिनां लिङ्गिनाञ्चैव सामान्यो धर्म्म उच्यते ॥ २२
यथोक्तकारिणः सर्व्वे प्रयान्ति परमां गतिम् ।
आ वोधात् स्वपनं यावद्गृहस्थधर्म्मं वच्मि ते ॥ २३
ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् ।
शर्व्वर्य्यन्ते समुत्थाय कृतशौचः समाहितः ॥ २४
स्नात्वा सन्ध्यामुपासीत सर्व्वकालमतन्द्रितः ।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्व्विकाम् ॥ २५
उभे मूत्र-पुरीषे च दिवा कुर्य्यादुदङ्मुखः ।
रात्रौ च दक्षिणे कुर्य्यादुभे सन्ध्ये यथा दिवा ॥ २६
छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्य्यात् प्राणबाधभयेषु च ॥ २७
गोमयाङ्गार-वल्मीक-फालकृष्टे जले शुचौ ।
मार्गोपजीव्यच्छायासु न मेहेत सभादिके (क) ॥ २८
अन्तर्ज्जलाद्देवगृहाद्वल्मीकान्मूषिकस्थलात् ।
परेषां शौचशिष्टाच्च श्मशानाच्च मृदं त्यजेत् ॥ २९
एकां लिङ्गे मृदं दद्याद्वामहस्ते मृदं त्रयम् ।
उभयोर्द्वे च दातव्ये मूत्रशौचं प्रचक्ष्यते ॥ ३०
एकां लिङ्गे गुदे तिस्रस्तथा वामकरे दश ।
पञ्च पादे दशैकस्मिन् करयोः सप्त मृत्तिकाः ॥ ३१
अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्द्धार्द्धा प्रकीर्त्तिता ॥ ३२
उपविष्टस्तु विण्मूत्रं कर्त्तुं यस्तु न विन्दति ।
स कुर्य्यादर्द्धशौचन्तु अस्य शौचस्य सर्व्वदा ॥ ३३
दिवा शौचस्य रात्र्यर्द्धं यद्वा पादो विधीयते ।
स्वस्थस्य तु यथोद्दिष्टमार्त्तः कुर्य्याद्यथाबलम् ॥ ३४
वसा शुक्रमसृङ्मज्जा लाला-विण्मूत्र-कर्णविट् ।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥ ३५
यावता शुद्धिं मन्येत तावच्छौचं समाचरेत् ।
प्रमाणं शौचसंख्याया नादिष्टैरुपदिश्यते ॥ ३६
शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिरथान्तरम् ॥ ३७
त्रिराचामेदपः पूर्व्वं द्विः प्रमृज्यात् ततो मुखम् ।
संमृज्याङ्गुष्ठमूलेन त्रिभिरास्यमुपस्पृशेत् ॥ ३८
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ॥ ३९
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै ।
सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥ ४०
ऋचो यजूंषि सामानि त्रिः पिबन् प्रीणयेत् क्रमात् ।
अथर्व्वाङ्गिरसौ पूर्व्वं द्विः प्रमार्ज्य नयेन्मुखम् ॥ ४१

इतिहासपुराणानि वेदाङ्गानि यथाक्रमम् ।
खं मुखे नासिके वायुं नेत्रे सूर्य्यं श्रुती दिशः ॥ ४२
प्राणग्रन्थिमथो नाभिं ब्रह्माणं हृदये स्पृशेत् ।
रुद्रं मूर्द्धानमालभ्य प्रीणात्यथ शिखास्पृषीन् ॥ ४३
बाहू यमेन्द्र-वरुण-कुबेर-वसुधानलान् ।
अभ्युक्ष्य चरणौ विष्णुमिन्द्रं विष्णुं करद्वयम् ॥ ४४
वासुकिप्रमुखान् नागान् जलं क्षिपति यत् क्षितौ ।
येऽन्तरा विन्दवो यान्ति भूतग्रामञ्च तेर्द्विज ॥ ४५
अग्निर्वायुश्च सूर्य्येन्द्रौ गिरयोऽङ्गुलिपर्व्वसु ।
तले सोमः सतीर्थश्च स्मृतोऽतः पावनः करः ।
गङ्गाद्याः सरितस्तासु या रेखाः करमध्यगाः ॥ ४६
उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत् ।
ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्व्वकम् ॥ ४७
मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्व्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥ ४८
कदम्ब-विल्व-खदिर-करवीर-वटार्ज्जुनाः ।
यूथी च वृहती जाती करञ्जार्कातिमुक्तकाः ॥ ४९
जम्बू-मधूकापामार्ग-शिरीषोडुम्बरासनाः ।
क्षीरि-कण्टकिवृक्षाद्याः प्रशस्ता दन्तधावने ॥ ५०
कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः ।
प्रक्षाल्य भुक्त्वा च शुचौ देशे त्यक्त्वा तदाचमेत् ॥ ५१
अमायां वा तथा षष्ठ्यां नवम्यां प्रतिपद्यपि ।
वर्ज्जयेद्दन्तकाष्ठन्तु तथैवार्कस्य वासरे ॥ ५२
अभावे दन्तकाष्ठस्य निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैः कुर्व्वीत मुखशोधनम् ॥ ५३
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।
सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ ५४
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥ ५५
मनःप्रसादजननं रूपसौभाग्यवर्द्धनम् ।
शोक-दुःखप्रशमनं गङ्गास्नानवदाचरेत् ॥ ५६
अद्य हस्ते तु नक्षत्रे दशम्यां ज्यैष्ठके सिते ।
दशपापहरायाञ्च अदत्तादानकल्मषम् ॥ ५७
विरुद्धाचरणं हिंसा परदारोपसेवनम् ।
पारुष्यानृतपैशुन्यमसम्बद्धाभिभाषणम् ॥ ५८
परद्रव्याभिध्यानञ्च मनसानिष्टचिन्तनम् ।
एतद्दशाघघातार्थं गङ्गास्नानं करोम्यहम् ॥ ५९
प्रातः संक्षेपतः स्नानं मध्याह्ने विधिविस्तरम् ।
प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः ॥ ६०
यतेस्त्रिषवणं स्नानं सकृत् तु ब्रह्मचारिणः ।
आचम्य तीर्थमावाह्य स्नायात् स्मृत्वाव्ययं हरिम् ॥ ६१
तिस्रः कोट्यस्तु विज्ञेया मन्देहा नाम राक्षसाः ।
उदयन्तं दुरात्मानः सूर्य्यमिच्छन्ति खादितुम् ॥ ६२
स हन्ति सूर्य्यं सन्ध्यायां नोपास्तिं कुरुते तु यः ।
दह्यन्ति मन्त्रपूतेन तोयेनानलरूपिणा ॥ ६३
अहोरात्रस्य यः सन्धिः सा सन्ध्या भवतीति ह ।
द्विनाड़िका भवेत् सन्ध्या यावद्‌ज्योतिर्दर्शनम् ॥ ६४
सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमे फलं यत् तु तदन्येन न जायते ॥ ६५
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत् तु तद्धुतं स्वयमेव हि ॥ ६६
ब्रह्मा वै गार्हपत्याग्निर्दक्षिणाग्निस्त्रिलोचनः ।
विष्णुराहवनीयोऽग्निः कुमारः सत्य उच्यते ॥ ६७
कृत्वा होमं यथाकालं शैवान्(क)मन्त्रान्जपेत् ततः ।
समाहितात्मा सावित्रीं प्रणवञ्च यथोदितम् ॥ ६८
प्रणवैर्नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायाञ्च सावित्र्यां न भयं विद्यते क्वचित् ॥ ६९
गायत्रीं यो जपेन्नित्यं कल्यमुत्थाय मानवः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ७०
श्वेतवर्णा समुद्दिष्टा कौषियवसना तथा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ ७१
आवाह्य यजुषानेन तेजोऽसीति विधानतः ।
एतद्‌यजुः पुरा देवैर्दृष्टिदर्शनकाङ्क्षिभिः ॥ ७२
आदित्यमण्डलान्तःस्थां ब्रह्मलोकस्थितामपि ।
तत्रावाह्य जपित्वातो नमस्काराद्विसर्ज्जयेत् ॥ ७३
पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम् ।
न विष्णोः परमो देवस्तस्मात् तं पूजयेत् सदा ॥ ७४
ब्रह्म-विष्णु-शिवान् देवान् न पृथग्भावयेत् सुधीः ।
लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ॥ ७५
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ।
एतानि सततं पश्येदर्च्चयेच्च प्रदक्षिणम् ॥ ७६

(क) सौरानिति वा पाठः ।

वेदस्याध्ययनं पूर्व्वं सर्व्वदाभ्यसनं जपः।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ ७७
वेदार्थं यज्ञशास्त्राणि धर्म्मशास्त्राणि चैव हि।
मूल्येन लेखयित्वा यो दद्याद्याति स वैदिकम् ॥ ७८
इतिहास-पुराणानि लिखित्वा यः प्रयच्छति।
ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणीकृतम् ॥ ७९
तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ॥ ८०
माता पिता गुरुर्भ्राता प्रजा दीनाः समाश्रिताः।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा उदाहृताः ॥ ८१
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्।
भरणं पोष्यवर्गस्य तस्माद्यत्नेन कारयेत् ॥ ८२
स जीवति नरश्चैको बहुभिर्योपजीव्यति।
जीवन्तो मृतकास्त्वन्ये पुरुषाः स्वोदरम्भराः ॥ ८३
स्वकीयोदरपूर्णञ्च कुक्कुरस्यापि विद्यते ॥ ८४
अर्थेभ्योऽपि विवृद्धेभ्यः सम्भृतेभ्यस्ततस्ततः।
क्रियाः सर्व्वाः प्रवर्त्तन्ते पर्व्वतेभ्य इवापगाः ॥ ८५
सर्व्वरत्नाकरा भूमिर्धान्यानि पशवः स्त्रियः।
अर्थस्य कार्य्ययोगत्वादर्थ इत्यभिधीयते ॥ ८६
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥ ८७
धनन्तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च।
कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पृथक् ॥ ८८
क्रमायत्तं प्रीतिदायं प्राप्तञ्च सह भार्य्यया।
अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनम् ॥ ८९
वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम्।
याजनाध्यापने नित्यं विशुद्धाच्च प्रतिग्रहः ॥ ९०
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्।
युद्धार्थलब्धकरजं दण्डाप्तं जयजं तथा ॥ ९१
वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम्।
कृषि-गोरक्ष-वाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् ॥ ९२
कुषीद-कृषि-वाणिज्यं प्रकुर्व्वीत स्वयं कृतम्।
आपत्काले स्वयं कुर्व्वन् नैनसा युज्यते द्विजः ॥ ९३
बहवो वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः।
सर्व्वेषामपि चैवैषां कुषीदमधिकं विदुः ॥ ९४
अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः।
कृष्यादिके भवेद्बाधा सा कुषीदे न विद्यते ॥ ९५

शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा।
उष्णे वर्षति शीते वा वर्द्धनं न निवर्त्तते ॥ ९६
देशं गतानां या वृद्धिर्नानापण्योपजीविनाम्।
कुषीदं कुर्व्वतः सम्यक् संस्थितस्यैव जायते ॥ ९७
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत्।
ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः ॥ ९८
वणिक् कुषीदं दद्यात् तु वस्त्रं गां काञ्चनादिकम्।
पादञ्च प्रार्थ्यमानस्य मूलभूतं विवर्द्धयेत् ॥ ९९
कृषीवलोऽन्नपानादि-यान-शय्यासनानि च।
राजभ्यो विंशतिं दत्त्वा पशुस्वर्णादिकं शतम् ॥ १०
विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः।
वृत्तिर्भैक्ष्यं कुषीदञ्च दश जीवनहेतवः ॥ १०१
प्रतिग्रहार्ज्जिता विप्रे क्षत्रिये शस्त्रनिर्ज्जिताः।
वैश्ये न्यायार्ज्जिताश्चार्थाः शूद्रे शुश्रूषयार्ज्जिताः ॥ १०
नदी बहूदका शाकमृत्पर्णानि समित्कुशाः।
अग्नयो ब्रह्मघोषश्च विप्राणां धनमुत्तमम् ॥ १०३
अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे।
अमृतं तं विदुर्देवास्तस्मात् तन्नैव वर्ज्जयेत् ॥ १०
गुरुभृत्यांश्चोज्जिहीर्षुरर्च्चिष्यन् देवतातिथीन्।
सर्व्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥ १०
साधुतः प्रतिगृह्णीयादथवाऽसाधुतो द्विजः।
गुणवानल्पदोषश्च निर्गुणो हि निमज्जति ॥ १०६
एवन्त्वचरवृत्त्या वा कृत्वा भरणमात्मनः।
कुर्य्याद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः ॥ १०
चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिल-पुष्प-कुशादीनि स्नानञ्चाकृत्रिमे जले ॥ १०
नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।
क्रियास्नानं तथा षष्ठं षोढ़ा स्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान् नार्हो जपाग्निहवनादिषु।
प्रातःस्नानं तदर्थन्तु नित्यं स्नानं प्रकीर्त्तितम् ॥
चाण्डाल-शव-विष्ठाद्यान् स्पृष्ट्वा स्नानं रजस्वला
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत्
पुष्यस्नानादिकं स्नानं दैवज्ञविधिचोदितम्।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत् ॥
जप्तुकामः पवित्राणि अर्च्चिष्यन् देवतातिथीन्।
स्नानं समाचरेद्यत् तु क्रियाङ्गं तच्च कीर्त्तितम्

# सप्तदशाधिकद्विशततमोऽध्यायः ।

मलापकर्षणं नाम्ना स्नानमभ्यङ्गपूर्व्वकम् ।
मलापकर्षणार्थाय प्रवृत्तिस्तत्र नान्यथा ॥ ११४
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानमेव क्रिया यस्मात् क्रियास्नानमतः स्मृतम्॥११५
अङ्गिर्गात्राणि शुध्यन्ति तीर्थस्नानाद्भवेत् फलम् ।
मार्ज्जनाद्वारुणैर्मन्त्रैः पापमाशु प्रणश्यति ॥ ११६
नित्यं नैमित्तिकञ्चापि क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥ ११७
भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणादिकम् ।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ॥ ११८
तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यन्तु सर्व्वतः ।
गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम् ॥ ११९
गयायाञ्च कुरुक्षेत्रे यत् तोयं समुपस्थितम् ।
तस्मात् तु गाङ्गमपरं जानीयात् तोयमुत्तमम् ॥१२०
सर्व्वतीर्थाभिषेकाद्धि पवित्रं विदुषां गिरः ।
धर्म्मश्रवणवेलायां विप्रो व्यासमते स्थितः ॥ १२१
पुत्रजन्मनि योगेषु तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं निशि नान्यथा ॥ १२२
उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत् तुल्यं महापातकनाशनम् ॥ १२३
यत् फलं द्वादशाब्दानि प्राजापत्यैः कृतैर्भवेत् ।
प्रातःस्नायी तदाप्नोति वर्षेण श्रद्धयान्वितः ॥ १२४
य इच्छेद्विपुलान् भोगांश्चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघ-फाल्गुनौ॥१२५
षट्तिली माघमासन्तु प्रातःस्नायी हविष्यभुक् ।
अतिपापं महाघोरं मासादेव व्यपोहति ॥ १२६
मातरं पितरञ्चापि भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत द्वादशांशं लभेत् तु सः ॥ १२७
तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।
श्रीकामः सर्व्वदा स्नानं कुर्व्वीतामलकैर्नरः ॥ १२८
सन्तापः कीर्त्तिरल्पायुर्धनं निधनमेव च ।
आरोग्यं सर्व्वकामाप्तिरभ्यङ्गाद्भास्करादिषु ॥ १२९
उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः ।
तावच्छ्रीस्तिष्ठति प्रीता यावत् तैलं न संस्पृशेत्॥१३०
एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः ।
नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः ॥ १३१

आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ।
त्रींस्त्रीनञ्जलीन् दद्यादाकाशे दक्षिणे तथा ॥ १३२
वसित्वा वसनं शुष्कं स्थले चास्तीर्णबर्हिषि ।
विधिज्ञास्तर्पणं कुर्य्युर्न पात्रे तु कदाचन ॥ १३३
यदपां क्रूरमांसन्तु यदमेध्यन्तु किञ्चन ।
अशान्तं मलिनं यच्च तत् सर्व्वमपगच्छतु ॥ १३४
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना ।
प्रक्षिपेद्दिशि नैरृत्यां रक्षोपहतये तु तत् ॥ १३५
निषिद्धभक्षणाद्यच्च पापाद्यच्च प्रतिग्रहम् ।
दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्म्मभिः ॥ १३६
पुनातु मे तदिन्द्रस्तु वरुणः सबृहस्पतिः ।
सविता च भगश्चैव मुनयः सनकादयः ॥ १३७
आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यत्विति ब्रुवन् ।
क्षिपेदपोऽञ्जलींस्त्रींस्तु कुर्व्वन् संक्षेपतर्पणम् ॥१३८
सुराणामर्च्चनं कुर्य्याद्ब्रह्मादीनाममत्सरी ।
ब्राह्म-वैष्णव-रौद्रैश्च सावित्रैर्मैत्रवारुणैः ॥ १३९
तल्लिङ्गैरर्च्चयेन्मन्त्रैः सर्व्वदेवान् नमस्य च ।
नमस्कारेण पुष्पाणि विन्यसेत् तु पृथक् पृथक् ॥१४०
सर्व्वदेवमयं विष्णुं भास्करञ्चाथ चार्च्चयेत् ।
दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ॥ १४१
अर्च्चितं स्याज्जगदिदं तेन सर्व्वं चराचरम् ।
अन्यैश्च तान्त्रिकैर्मन्त्रैः पूजयेच्च जनार्द्दनम् ॥ १४२
आदावर्घ्यं प्रदातव्यं ततः पश्चाद्विलेपनम् ।
ततः पुष्पाञ्जलिं धूपमुपहारफलानि च ॥ १४३
स्नानमन्त्रज्जले चैव मार्ज्जनाचमनं तथा ।
जलाभिमन्त्रणं यच्च तीर्थस्य परिकल्पनम् ॥ १४४
अघमर्षणसूक्तेन त्रिरावर्त्तेत नित्यशः ।
स्नाने चरितमित्येतत् समुद्दिष्टं महात्मभिः ॥ १४५
ब्रह्म-क्षत्त्र-विशाञ्चैव मन्त्रवत् स्नानमिष्यते ।
तुष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥ १४६
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ १४७
गृहे लेकगुणं जप्यं नद्यान्तु द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यागारे शताधिकम् ॥ १४८
सिद्धक्षेत्रेषु तीर्थेषु देवतायतनेषु च ।
सहस्रं शतकोटीनामनन्तं विष्णुसन्निधौ ॥ १४९

पञ्चमे च तथा भागी संविभागो यथार्थतः।
पितृ-देव-मनुष्याणां कीटानाञ्चोपदिश्यते ॥ १५०
ब्राह्मणेभ्यः प्रदायान्नं यः सुहृद्भिः सहाश्नुते।
स प्रेत्य लभते स्वर्गमन्नदानं समाचरन् ॥ १५१
पूर्व्वं मधुरमश्नीयाल्लवणाम्लौ च मध्यतः।
कटु-तिक्त-कषायांश्च पयश्चैव तथान्ततः ॥ १५२
शाकञ्च रात्रिभूमिष्ठमत्यम्लञ्च विवर्ज्जयेत्।
न चैकरससेवायां प्रसज्येत कदाचन ॥ १५३
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥ १५४
अमावास्यां वसेद्वृक्षस्तु एकच्छायनमेव वा।
तत्र योश्चैव लक्ष्मीश्च वसते नात्र संशयः ॥ १५५
उदरे गार्हपत्याग्निः पृष्ठदेशे तु दक्षिणः।
आस्ये आहवनीयोऽग्निः सभ्यः सर्व्वत्र मूर्द्धनि।
यः पञ्चाग्नीनिमान् वेद आहिताग्निः स उच्यते॥१५६
शरीरमापः सोमश्च विविधञ्चान्नमुच्यते।
प्राणो ह्यग्निस्तथादित्यस्त्रिभोक्ता एक एव तु ॥ १५७
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च।
भवत्येतत्परिणतौ ममाप्यव्याहतं सुखम् ॥ १५८
हस्तेन परिमार्ज्ज्याथ कुर्य्यात् ताम्बूलभक्षणम्।
श्रवणञ्चेतिहासस्य तत् कुर्य्यात् सुसमाहितः ॥१५९
इतिहास-पुराणाद्यैः षष्ठसप्तमकौ नयेत्।
ततः सन्ध्यामुपासीत स्नात्वा वै पश्चिमां नरः ॥ १६०
एतदुद्दे शतः प्रोक्तमनुष्ठानं मया द्विज।
यः पठेदाचरेद्विद्वान् शृणुयात् स दिवं व्रजेत् ॥१६१
आचारादिर्हरिर्धर्म्माधर्म्मवक्ता च केशवः।
प्रायश्चित्तादिकं विद्धि स्वर्गमर्थादिकं हरिः ॥ १६२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

---

## अष्टादशाधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच।

अथ स्नानविधिं वक्ष्ये स्नानमूला क्रिया यतः।
मृद्गोमयतिलान् दर्भान् पुष्पाणि सुरभीणि च ॥ १
आहरेत् स्नानकाले च स्नानार्थी प्रयतः शुचिः।
गन्धोदकान्तं विविक्तं स्थापयेत् तान्यथ क्षितौ ॥ २
त्रिधा कृत्वा मृदं तान्तु गोमयञ्च विचक्षणः।
अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याथ करौ तथा ॥ ३
उपवीती बद्धशिखः सम्यगाचम्य वाग्यतः।
उरुं राजेत्यृचा तोयमुपस्थाय प्रदक्षिणम्।
आवर्त्तयेत् तदुदकं ये ते शतमृतीत्यृचा ॥ ४

ओं उरुं हि राजा वरुणश्चकार
सूर्य्याय पन्थामन्वेतवा उ।
अपदे पादा प्रतिधातवेऽकः
उतापवक्ता हृदयाविधश्चित् ॥
नमो वरुणायाभिष्ठितो वरुणस्य पाशः वरुणाय नमः ॥ ५

ओं ये ते शतं वरुण ये सहस्रं
यज्ञियाः पाशा वितता महान्तः।
तेभिर्नोऽद्य सवितोत विष्णु-
विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ ६

सुमित्रिया न इत्यपोऽञ्जलिमाकृत्योत्तरेण तोयं
पश्चाद्विराज्य चैव विनिक्षिपेत् ॥ ७

ओं सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः।
पादौ जङ्घे कटिञ्चैव पूर्व्वमृद्भिस्त्रिभिस्त्रिभिः।
प्रक्षाल्य हस्तावाचम्य नमस्कृत्य जलं ततः ॥ ८

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढ़मस्य पांशुले ॥ ९

महाव्याहृतिभिः पश्चादाचामेत् प्रयतोऽपि सन्।
मार्ज्जयेद् मृदाङ्गानि इदं विष्णुरिति त्वृचा।
भास्कराभिमुखो मज्जेदापो अस्मानिति त्वृचा ॥१०

ओं आपो अस्मान्मातरः शुन्धयन्तु
घृतेन नो घृतप्वः पुनन्तु।
विश्वं हि रिप्रं प्रवहन्ति देवीः ॥ ११

ततोऽवहृष्य पात्राणि निमज्ज्योन्मज्ज्य वै शनैः।
गोमयेन विलिप्याथ मानस्तोक इति त्वृचा ॥ १२

ओं मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः।
मा नो वीरान् रुद्र भामिनोवधी-
र्हविष्मन्तः सदमित् त्वा हवामहे ॥ १३

ततोऽभिषिञ्चेन्मन्त्रैस्तु वारुणैस्तु यथाक्रमम्।
इमं मे वरुण द्वाभ्यां त्वन्नः स त्वन्न इत्यपि।
आपो वरुणोदुत्तमं मुञ्चत्त्ववभृथेति च ॥ १४
ओं इमं मे वरुण श्रुधी हवमद्या च मृड़य।
त्वामवस्युराचके ॥ १५
ओं तत् त्वा यामि ब्रह्मणा वन्दमान-
स्तदाशास्ते यजमानो हविर्भिः।
अहेलमानो वरुणेह बोध्यु-
रुशꣳस मा न आयुः प्रमोषीः ॥ १६
ओं त्वन्नो अग्ने वरुणस्य विद्वान्
देवस्य हेलो अवयासिसीष्ठाः।
यजिष्ठो वह्नितमः शोशुचानो
विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ १७
ओं स त्वन्नो अग्ने अवमो भवोती
नेदिष्ठो अस्या उषसो व्युष्टौ।
अवयक्ष्व नो वरुणꣳ रराणो
वीहि मृलीकꣳ सुहवो न एधि ॥ १८
ओं आपो नौषधीर्हिंसिर्द्धान्नो राजंस्ततो वरुणो नो मुञ्च यदा हरस्या इति ॥ १९
ओं वरुणेति शपामहे ततो वरुण नो मुञ्च ॥२०
ओं उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय अथा वयमादित्यव्रते तवानागसो अदितये स्यामः ॥ २१
मुञ्चन्तु मामपथ्याद्वरुणस्य त्वत्। अथो यमस्य पड्वी शां नः सर्व्वस्माद्देव किल्बिषात् ॥ २२
अवभृथ निचुम्बुन निचेरुरसि निचुम्पुणः। अवदेवैर्देवकृत मेऽनो यासि षमवमर्त्यैर्मर्त्य कृतं पुरुराव्णो देवरिषः पाहि ॥ २३
अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः।
दर्भेण पावयेन्मन्त्रैरलिङ्गैः पारणैरिमैः ॥ २४
आपो हि ष्ठेति तिसृभिरिदमापो हविष्मती।
देवीराप इति द्वाभ्यां आपो देवा इति त्र्यृचा ॥ २५
द्रुपदादिव इति च मन्त्रो देवीरपां रसः।
आपो देवीः पावमान्यः पुनन्त्वाद्यास्तृचो नव ॥२६
चितातिर्मीति च मन्त्रैः प्लाव्यात्मानं समाहितः।
हिरण्यवर्णा इति च पावमन्यस्तथापराः। २७
तरत् समा मुद्रवत्यः पवित्राणि च शक्तितः।
वारुण्या बह्वः पुण्याः शक्तितः सम्प्रयोजयेत् ॥ २८
ओङ्कारेण व्याहृतिभिर्गायत्र्या च समन्वितः।
आद्यावन्ते च कुर्व्वीत अभिषेकं यथाक्रमम् ॥ २९
जलमध्यस्थितस्यैव मार्ज्जनन्तु विधीयते।
अन्तर्ज्जले जपेन्मन्त्रं त्रिः कृत्वा अघमर्षणम् ॥ ३०
द्रुपदाद्या त्रिरावर्त्त्यैदयं गौरिति चैत्यृचम्।
अन्यांश्चैव तु मन्त्रान् वा स्मृतिदृष्टान् समाहितः ॥ ३१
सव्याहृतिं सप्रणवां गायत्रीं वा जपेद्बुधः।
आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥ ३२
विष्णोरायतनं आपः स एवाप्पतिरुच्यते।
तस्यैवं तमवस्त्वेतस्तस्मात् तं ह्यप् च संस्मरेत् ॥ ३३
तद्विष्णोरितिमन्त्रेण निमज्याप्सु पुनः पुनः।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥ ३४
ओं इदमापः प्रवहता यद्बानं मलं हि तत्।
यथा त्वहोत्रास्तृतं यच्च शोके अभीषणम्।
आपो मातः स्वादिनसः पावमानश्च मुञ्चतु ॥ ३५
हविष्मती विना आपो हविष्मां आविरासति। हविष्मान् नो वा अध्वरो हविष्मान् अस्तु सूर्य्यः। देवीरापो अपा पत्या यश्च ऊर्म्मि-र्हविष्यः। इन्द्रियावान्मादित्यन्तनः तं देवेभ्यो देवता दाभुष्मक्त्लेभ्यः तेषां भागकर्षिवसि-समुद्रस्य दृढियाग्रयासिमेनापोग्रभिरश्मत-मोधीः। आपो देवी मधुमतीरगृह्णन्तु ह्यन्नती राजस्वतिलाः। याभिर्मित्रावरुणस्य सिञ्चयाभि-रिन्द्रमनयत्नवातीव द्रुपदां मन्त्रो देवी अपा-मस्गृह्यसंसूर्य्यं सन्तं समाहितमपां रसस्य यो रस्य यो गृह्णास्युत्तमम्। आपो देवी-रुपसूर्य्य मधुमती वयस्या य प्रजाभ्यः तासामास्थानाल्र्ज्जिहतामोषधयः सापिप्पलाः। पुनन्तु मा पितरः सौम्यासः पुनन्तनापि पिता सहसाः पवित्रेण गतायुषा। पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पवित्रेण गता-युषा विश्वमायुर्वा वैष्णवैः। अग्न आयुषि परसत्वाश्वरोर्ज्जमिषञ्च त्वचे वावस्त्वच्छूनाम्। पुनन्तु मा देवजनाः पुनन्तु मां मासाधियः

पुनन्तु विश्वा भूतानि जातवेद पुनीहि माम्। पवित्रेण पुनीहि मा शुक्रेण देवदी अग्ने क्रत्वा क्रतुधन्वः। यत्ते पवित्रमर्च्चिष्यग्ने विततमन्तरा-ब्रह्मा तेन पुनातु मा। पवमानः सोऽद्य नः पवित्रेण विचार्षणीय पोता मा पुनातु मा। उभाभ्यां देव सवितः पवित्रेण वसेन च मां स्वनौ-विश्वतः। वैश्वदेवी पुनता देव्या यस्यामिमा-बह्व्यस्तान्वोवीत पूज्याः। तमयादन्तस्वधमादेषु वयं स्यामपतयोरयीणाम्। चित्पतिर्मा पुनात्व-च्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्र पूतस्य यत्कामः। पुनेतच्छकेयम् वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत् कामः। पुनेतच्छकेयम् द्युपतिमयं गौः पृश्निवक्र-मीसदयभतं पुनः पितरञ्च प्रयस्मः। देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्। ओं तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीवचक्षुराततम्॥ ३६

स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च।
प्रक्षाल्य च मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तदा॥ ३७
आचान्ते पुनराचामेन्मन्त्रेण स्नानभोजने।
द्रुपदाञ्च त्रिरावर्त्त्य तथा चैवाघमर्षणम्॥ ३८
आचम्याप्लाव्य चात्मानं त्रिराचम्य शनैरसून्।
ततोपतिष्ठेदादित्यं मूर्ध्नि पुष्पान्विताञ्जलिः॥ ३९
प्रक्षिप्योदकमुद्धूय उदेत्यं चित्रमित्यपि।
तच्चक्षुर्देव इति च हंसः शुचिसदित्यपि॥ ४०
एतां जपेदूर्द्ध्वबाहुः सूर्य्यमीक्ष्य समाहितः।
गायत्रीञ्च तथा शक्त्या उपस्थाय दिवाकरम्॥ ४१
विभ्राड़ित्यनुवाकेन सूक्तेन पुरुषस्य च।
शिवसङ्कल्पेन तथा मण्डलब्राह्मणेन च॥ ४२
दिवा कियत् तथा चान्यैः सौरैर्मन्त्रैश्च शक्तितः।
जपयज्ञस्तु कर्त्तव्यः सर्व्वदेवप्रणीतकैः॥ ४३
अध्यात्मविद्या विधिवज्जपेद्वा जपसिद्धये।
सव्यं कृत्वा त्रिराचम्य श्रियं मेधा धृतिं क्षितिम्॥ ४४
वाचं वागीश्वरं पुष्टिं तुष्टिञ्च परितर्पयेत्।
उमामरुन्धतीञ्चैव शचीं मातरमेव च॥ ४५
जयाञ्च विजयाञ्चैव सावित्रीं शान्तिमेव च।
स्वाहां स्वधां धृतिञ्चैव तथैवादितिमुत्तमम्॥ ४६
ऋषिपत्नीश्च कन्याश्च तर्पयेत् काम्यदेवताः।
देवलोका यमाश्चैव वसुसत्यौ समाहितः।
सर्व्वमङ्गलकामस्तु तर्पयेत् सर्व्वमङ्गलाम्॥ ४७
आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यत्विदं ब्रुवन्।
क्षिपेत्पोऽञ्जलीं स्त्रींश्च कुर्व्वन् काङ्क्षेत तर्पणम्॥ ४८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे अष्टा-दशाधिकद्विशततमोऽध्यायः॥ २१८॥

---

## एकोनविंशत्यधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच।

तर्पणं सम्प्रवक्ष्यामि देवादिपितृतुष्टिदम्॥ १

ओं मोदास्तृप्यन्ताम्। ओं प्रमोदास्तृप्यन्ताम्। ओं सुमुखास्तृप्यन्ताम्। ओं दुर्मुखास्तृप्यन्ताम्। ओं विघ्नास्तृप्यन्ताम्। ओं अविघ्नास्तृप्यन्ताम्। ओं विघ्नकर्त्तारस्तृप्यन्ताम्। ओं छन्दांसि तृप्यन्ताम्। ओं वेदास्तृप्यन्ताम्। ओं ऋषयस्तृप्यन्ताम्। ओं सनातनस्तृप्यताम्। ओं इतराचार्य्यास्तृप्यन्ताम्। ओं संवत्सरस्सावयवस्तृप्यन्ताम्। ओं देवास्तृप्यन्ताम्। ओं अप्सरसस्तृप्यन्ताम्। ओं देवानुगास्तृप्यन्ताम्। ओं सागरास्तृप्यन्ताम्। ओं नागास्तृप्यन्ताम्। ओं पर्व्वतास्तृप्यन्ताम्। ओं सरिन्मनुष्या यक्षास्तृप्यन्ताम्। ओं रक्षांसि तृप्यन्ताम्। ओं पिशाचास्तृप्यन्ताम्। ओं सुपर्णास्तृप्यन्ताम्। ओं भूतानि तृप्यन्ताम्। ओं भूतग्रामाश्चतुर्विधास्तृप्यन्ताम्। ओं दक्षस्तृप्यताम्। ओं प्रचेतास्तृप्यताम्। ओं मरीचिस्तृप्यताम्। ओं अत्रिस्तृप्यताम्। ओं अङ्गिरास्तृप्यताम्। ओं पुलस्त्यस्तृप्यताम्। ओं पुलहस्तृप्यताम्। ओं क्रतुस्तृप्यताम्। ओं नारदस्तृप्यताम्। ओं वसिष्ठस्तृप्यताम्। ओं विश्वामित्रस्तृप्यताम्। ओं कश्यपस्तृप्यताम्। ओं जमदग्निस्तृप्यताम्।

वशिष्ठस्तृप्यताम्। ओँ स्वायम्भुवस्तृप्यताम्। ओँ स्वारोचिषस्तृप्यताम्। ओँ तामसस्तृप्यताम्। ओँ रैवतस्तृप्यताम्। ओँ चाक्षुषस्तृप्यताम्। ओँ महातेजास्तृप्यताम्। ओँ वैवस्वतस्तृप्यताम्। ओँ ध्रुवस्तृप्यताम्। ओँ धवस्तृप्यताम्। ओँ अनिलस्तृप्यताम्। ओँ प्रभाषस्तृप्यताम्॥ २

निवीती—ओँ सनकस्तृप्यताम्। ओँ सनन्दस्तृप्यताम्। ओँ सनातनस्तृप्यताम्। ओँ कपिलस्तृप्यताम्। ओँ आसुरिस्तृप्यताम्। ओँ वोढुस्तृप्यताम्। ओँ मनुष्याणां कव्यवालस्तृप्यताम्। ओँ सोमस्तृप्यताम्। ओँ यमस्तृप्यताम्। ओँ अर्य्यमा तृप्यताम्॥ ३

प्राचीनावीती—ओँ अग्निष्वात्ताः पितरस्तृप्यन्ताम्। ओँ सौम्याः पितरस्तृप्यन्ताम्। ओँ हविष्मन्तः पितरस्तृप्यन्ताम्। ओँ उष्मपाः पितरस्तृप्यन्ताम्। ओँ सुकालिनः पितरस्तृप्यन्ताम्। ओँ बर्हिषदः पितरस्तृप्यन्ताम्। ओँ आज्यपाः पितरस्तृप्यन्ताम्॥ ४

यमाय नमः। धर्म्मराजाय नमः। मृत्यवे नमः। अन्तकाय नमः। वैवस्वताय नमः। कालाय नमः। सर्व्वभूतक्षयाय नमः। औडुम्बराय नमः। दध्नाय नमः। नीलाय नमः। परमेष्ठिने नमः। वृकोदराय नमः। चित्राय नमः। चित्रगुप्ताय नमः॥ ५

ब्रह्मादिस्तम्भपर्य्यन्तं जगत् तृप्यतु॥ ६

पितृभ्यः स्वधा नमः। पितामहेभ्यः स्वधा नमः। ओँ प्रपितामहेभ्यः स्वधा नमः। ओँ मातृभ्यः स्वधा नमः। ओँ पितामहीभ्यः स्वधा नमः। ओँ मातामहेभ्यः स्वधा नमः। ओँ प्रमातामहेभ्यः स्वधा नमः। ओँ वृद्धप्रमातामहेभ्यः स्वधा नमः॥ ७

तृप्यतामिति उदीरतामववतत् परामतन्मध्यमाः पितरः सौम्यासः। अयं य इतर वला ऋतज्ञास्तेऽनोवन्तु पितरो हवे अगोत्रोच्चारणप्रथमाञ्जलिं पितुः अङ्गिरसो नः। पितरो न वद्या सुपर्व्वाणो भृगवः सौम्यासः। तेषां वयञ्च प्रमतौ यज्ञियानां अपित्तवे सौनसः सौनसः सैस्थाय॥ ८

आयान्तु नः पितरः सौम्यासो अग्निष्वात्ताः पथिभिर्द्देवयानैरस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु ते अवन्त्वस्मान्। ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतꣳ स्वधा स्थ तर्पयत मे पितॄन्। पितृभ्यः स्वधा नमः। पितामहेभ्यः स्वधा नमः। प्रपितामहेभ्यः स्वधा नमः। मातामहेभ्यः स्वधा नमः। प्रमातामहेभ्यः स्वधा नमः। वृद्धप्रमातामहेभ्यः स्वधा नमः॥ ९

पितामहस्य अञ्चयः पितरो अमी मदन्त पितरो अमी तृप्यन्तः पितरः स्वधध्वं पिबेह पितरोऽपि वानप्रयांश्च विवश्वयांश्च भवनपवित्रला रथपति ते जातवेदाः स्वधाभिर्यज्ञं सुकृतं जुषस्व। ओँ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥ ओँ मधुनक्तमुतोषसो मधुमत् पार्थिवꣳ रजः। मधुद्यौरस्तु नः पिता॥ ओँ मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः॥ १०

प्रपितामहस्याञ्जलित्रयदानम्। नमो वः पितरो रसाय। नमो वः पितरः शुष्माय। नमो वः पितरो जीवाय। नमो वः पितरः स्वधायै। नमो वः पितरो घोराय। नमो वः पितरो मन्यवे। नमो वः पितरो गृहान्नः पितरो दत्त। नमो वः पितरो दद्मे। ओँ एतद्वः पितरो वासः॥ ११

मातामहानां त्रिरञ्जलिः। ततो मात्रादीनाम्॥ १२

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः।
ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम्॥ १३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एकोनविंशत्यधिकद्विशततमोऽध्यायः॥ २१९॥

---

## विंशत्यधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच।

वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम्॥ १

प्रज्वाल्य चाग्निं पर्य्युक्ष्य—क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः॥ २

ओँ इहवायमितरो जातवेदा देवेभ्यो हव्यं

वहतु प्रजानन्। ओं पावक वैश्वानर इदमासनमवनीगर्भसंस्थतः। तेजोरूप महाब्रह्मन्मुहूर्त्तास्त्रिषु वैश्वानरं प्रतिबोधयामि। ओं वैश्वानरो न ऊभयं आप्रयातु परावतः अग्निर्नखद्यतीरुपपृष्ठो दिवि पृष्ठोऽग्निः पृथिव्यां पृष्ठा विश्वा ओषधी चाविविश वैश्वानरः सह सा पृष्ठोऽग्निः नमो दिवाशोषसा स षष्ठां नक्तम् ॥ ३

ओं प्रजापतये स्वाहा। ओं सोमाय स्वाहा। ओं वृहस्पतये स्वाहा। ओं अग्नीषोमाभ्यां स्वाहा। ओं इन्द्राग्निभ्यां स्वाहा। ओं द्यावापृथिवीभ्यां स्वाहा। ओं धन्वन्तरये स्वाहा। ओं इन्द्राय स्वाहा। ओं विश्वेभ्यो देवेभ्यः स्वाहा। ओं ब्रह्मणे स्वाहा। ओं अद्भ्यः स्वाहा। ओं ओषधिवनस्पतिभ्यः स्वाहा। ओं गृहाय स्वाहा। ओं देवदेवताभ्यः स्वाहा। ओं इन्द्राय स्वाहा। ओं इन्द्रपुरुषेभ्यः स्वाहा। ओं यमाय स्वाहा। ओं यमपुरुषाय स्वाहा। ओं सर्व्वेभ्यो भूतेभ्यो दिवाचारिभ्यः स्वाहा। ओं वसुधापिढभ्यः स्वाहा। ओं ये भूता प्रचरन्ति दिवा च निमिहन्तो भुवनस्य मध्ये तेभ्यो बलिं पुष्टिकामो ददामि। मयि पुष्टिं पुष्टिपतिर्ददातु। ओं आचाण्डालपतिर्ददातु आचाण्डालपतितवायसेभ्यः ॥ ४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

---

## एकविंशत्यधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच।

अथ सन्ध्याविधिं वक्ष्ये द्विजातीनां समासतः ॥ १
अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॥ २

गायत्री छन्दो विश्वामित्र ऋषिस्त्रिपात् समुद्राः कुक्षिश्चन्द्रादित्यौ लोचने अग्निर्मुखं विष्णुर्हृदयं ब्रह्म शिरो रुद्र शिखा उपनयने विनियोगः। ओं भूः पादे। भुवः जानुनि। स्वः हृदये। महः शिरसि। जनः शिखायां। तपः कण्ठे। सत्यं ललाटे। ओं हृदयाय नमः। भूः शिरसे स्वाहा। भुवः शिखायै वषट्। स्वः कवचाय हुं। ओं भूर्भुवः स्वः अस्त्राय फट् ॥ ३

ओं भूः। ओं भुवः। ओं स्वः। ओं महः। ओं जनः। ओं तपः। ओं सत्यं। ततस्त्रिपदा। ओं तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥ ओं आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ ४

ओं सूर्य्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत् किञ्चिद्दुरितं मयि इदमहमापोऽमृतयोनौ सूर्य्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा ॥ ५

ओं आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्।
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम।
सर्व्वं पुनन्तु मामापो असताञ्च प्रतिग्रहं स्वाहा ॥ ६

ओं अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु यत् किञ्चिद्दुरितं मयि इदमहमापोऽमृतयोनौ सत्ये ज्योतिषि परमात्मनि जुहोमि स्वाहा ॥ ७

आयातु वरदा देवी पूर्व्वाह्णे ब्रह्मदेवता।
गायत्री नाम या सन्ध्या रक्ताङ्गी रक्तवाससा ॥ ८
हंसस्कन्धे समारूढ़ा श्रीमत्पुष्करसंयुता।
कमण्डलुधरा शान्ता अक्षसूत्रधरा परा ॥ ९
आयातु वरदा देवी मध्याह्ने श्वेतरूपिणी।
माहेश्वरी च सावित्री शुक्लवस्त्रादिमण्डिता।
वृषस्कन्धसमारूढ़ा त्रिशूलवरधारिणी ॥ १०
आयातु वरदा देवी अपराह्णे सरस्वती।
अतसीकुसुमप्रख्या वैष्णवी गरुड़ासना।
पीतवस्त्रा शङ्ख-चक्र-गदा-पद्म-समन्विता ॥ ११
श्वेतवर्णा समुद्दिष्टा रविमण्डलसंस्थिता।
श्वेतपद्मसमासीना श्वेतपुष्पोपशोभिता ॥ १२
आयातु वरदा देवी अपराह्णे सरस्वती।

ओं आपो हि ष्ठा मयो भुवस्ता न ऊर्ज्जे दधा-
तन। महेरणाय चक्षसे ॥ ओं यो वः शिवतमो
रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥
ओं तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ १३

ओं सुमित्रिया न आप ओषधयः सन्तु। ओं
दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं
द्विष्मः ॥ १४

ओं द्रुपदादिव मुमुचानः खिन्नः स्नातो
मलादिव। पूतं पवित्रेणेवाज्यमापः शुन्धन्तु
मैनसः ॥ १५

ओं ऋतञ्च सत्यञ्चाभीद्धात् तपसोऽध्यजायत
ततो रात्र्यजायत ततः समुद्रोऽर्णवः समुद्रादर्णवा-
दधिसंवत्सरोऽजायत अहोरात्राणि विदध-
द्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथा-
पूर्व्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः॥१६

गायत्र्या विश्वामित्र ऋषिर्गायत्री छन्दः
सविता देवता जपे विनियोगः।

ओं उदुत्यं जातवेदसं देवं वहन्ति केतवः
दृशे विश्वाय सूर्य्यम्। ओं चित्रं देवानामुदगा-
दनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्राद्यावापृथि-
वीअन्तरीक्षꣳसूर्य्य आत्मा जगतस्तस्थुषश्च ॥ १७

ओं तच्चक्षुर्द्देवहितं पुरस्ताच्छुक्रमुच्चरत्।
पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम
शरदः शतं प्रब्रवाम शरदः शतं भूयश्च
शरदः शतात् ॥ १८

ओं विश्वतश्चक्षुरुत विश्वतो मुखं विश्वतः
स्वाहुभ्यां धमति संपतत्रैर्द्यावाभूमिं जनयन्
देव एकः ॥ १९

देवानां भुवि गोऽङ्गविद्वानाङ्गवेत् मनसस्पत इव
देवयज्ञं स्वाहा वा त्रेधा जपेत् ॥ २०

उत्तरे शिखरे जाता भूम्यां पर्व्वतवासिनी।
ब्राह्मणैरभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥ २१

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे एकविंश-
त्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

---

## द्वाविंशत्यधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

व्यास श्राद्धमहं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम्।
पूर्व्वं निमन्त्रयेद्विप्रान् विशेषाद्ब्रह्मचारिणः ॥ १
प्रदक्षिणोपवीतेन देवान् वामोपवीतिना।
पितॄन् निमन्त्रयेत् पादौ ततो संयोगमन्त्रतः ॥ २

ओं स्वागतं भवद्भिरिति प्रश्नः। ओं सुस्वागत-
मिति तैरुक्ते—ओं विश्वेभ्यो देवेभ्य एतत् पादो-
दकमर्घ्यं स्वाहा इति देवब्राह्मणपादयोर्द्देव-
तीर्थेनाभग्नकुशसहितजलदानम् ॥ ३

ततो दक्षिणाभिमुखेन वामोपवीतेन अमुक-
गोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यो यथा-
नामशर्म्मभ्य एतत् पादोदकमर्घ्यं स्वधेति पित्रादि-
ब्राह्मणपादयोः पितृतीर्थेन भग्नकुश-कुसुमसहित-
जलदानम् ॥ ४

एवं मातामहादिभ्य एतत् आचमनीयं स्वाहा
स्वधेति ब्राह्मणहस्ते एष वोऽर्घः। इति ब्राह्मण-
हस्ते पुष्पदानम् ॥ ५

ओं सिद्धमिदमासनं इह सिद्धमित्यभिज्ञातः
ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः
ओं तपः ओं सत्यं सप्तव्याहृतिभिः पूर्व्वमुखदेव-
ब्राह्मणोपवेशनम्। उत्तरादिङ्मुखाः पितृब्राह्म-
णोपवेशनम् ॥ ६

ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः।

इति त्रिर्जपेत् ॥ ७

ओं अद्यास्मिन् देशे अमुकमासे अमुकगते
सवितरि अमुकतिथौ अमुकगोत्राणामस्मत्पितृ-
पितामह-प्रपितामहानां यथानामशर्म्मणां विश्व-
देवपूर्व्वकं करिष्ये। ओं विश्वेभ्यो देवेभ्यः
स्वाहा ॥ ८

ओं विश्वान् देवानावाहयिष्ये। ओं आवा-
हयेत्युक्ते—ओं विश्वे देवास आगत शृणुताम
इमꣳहवम्। एदं वर्हिर्निषीदत ॥

ओं विश्वे देवाः शृणुतेमꣳहवं ये मे अन्त-

रौचे य उपयविष्ठ। ये अग्निजिह्वा उतवा-
यजत्रा आसायास्मिन् वर्हिषि मादयध्वम्॥

ओं ओषधयः समवदन्त सोमेन सह राज्ञा
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि॥
ओं आगच्छन्तु महाभागा विश्वे देवा महाबलाः।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते॥ ९
ओं अपहतासुरा रक्षांऽसि वेदिषद॥

इति त्रिभिर्यवविकिरणम्॥१०

ओं पात्रमहं करिष्ये। ओ कुरुष्वेति अनु-
ज्ञातः साग्रकुशपत्रद्वयं प्रादेशप्रमाणं कृत्वा—ओं
पवित्रे स्थो वैष्णव्यौ अनेन कुशान्तरेण छित्त्वा—
ओं विष्णोर्मनसा पूते स्थः। इत्यनुच्य कुशान्तरेण
त्रिवृतं कृत्वा पात्रे पवित्रनिषेचणम्॥ ११

ओं शन्नो देवीरभीष्टये आपो भवन्तु पीतये॥
शंयोरभिस्रवन्तु नः॥ इति पात्रे जलदानम्॥१२

ओं यवोऽसि यवयास्मद्द्वेषो यवयारातीः। इति
यवदानम्॥ १३
ओं गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्॥

इति गन्धदानम्॥ १४

ओं या दिव्या आपः पयसा संबभूवुर्या अन्त-
रीक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता
न आपः शिवाः शऽंस्योनाः सुहवा भवन्तु।
ओं एषोऽर्घो नमः इति ब्राह्मणहस्ते जलं दत्त्वा
अनेनैव पात्रेण पवित्रग्रहणं कृत्वा संस्रवं पवित्रञ्च
ब्राह्मणपार्श्वे दद्यात्। ततः प्रथमपात्रे संस्रव-
जलं संस्थाप्य कुशोपरि ऊर्द्ध्वमुखं स्थापनं कुर्य्यात्
तदुपरि कुशदानम्॥ १५

विश्वेभ्यो देवेभ्य एतानि गन्ध-पुष्प-धूप-दीप-
वासोयुग-यज्ञोपवीतानि नमः। गन्धादिदानम-
च्छिद्रमस्तु। अस्त्विति ब्राह्मणप्रतिवचनम्॥ १६

ततः पितृ-पितामह-प्रपितामहानां मातामह-
प्रमातामह-वृद्धप्रमातामहानां श्राद्धमहं करिष्ये
इति अनुज्ञावचनम्। ततः कुरुष्वेति ब्राह्मणेनुक्ते—
ओं देवताभ्यः पितृभ्यश्चेति त्रिजपेत्॥ १७

ओं अमुकगोत्रेभ्योऽस्मत्पितृपितामहेभ्यो यथा-
नामशर्म्मभ्यः सपत्नीकेभ्यः इदमासनं स्वधा। इति
ब्राह्मणवामे आसनदानम्॥ १८

ओं पितॄनावाहयिष्ये। ओं आवाहयेत्युक्ते—
ओं उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि।
उशन्नशत आवह पितॄन हविषे अत्तवे॥

ओं आयान्तु नः पितरः सौम्यासो अग्निष्वात्ताः
पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मद-
न्तोऽधिब्रुवन्तु ते अवन्त्वस्मान्। इत्यावाहनम्॥ १९

ओं अपहताअसुरा रक्षांऽसि वेदिषदः। इति
तिलविकरणम्। ओंतिलोऽसि सोमदेवत्यो गोसवो
देवनिर्म्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन्
लोकान् प्रीणाहि नः स्वाहा। इतितिलदानम्॥२०

गन्धपुष्पे हस्ताभ्यां दत्त्वा पितृपात्रमुत्थाप्य
या दिव्येति पठित्वा अमुकगोत्रास्मत्पितरमुकदेव-
शर्म्मन् सपत्नीक एष तेऽर्घः स्वधा। सपवित्रं पात्रं
गृहीत्वा वामपार्श्वे दक्षिणे कुशोपरि ओं
पितृभ्यः स्थानमसीत्यधोमुखपात्रस्थापनम्॥ २१

ओं शुध्यन्तां लोकाः पितृसदनाः पितृसदन-
मसीत्यधोमुखपात्रस्पर्शनम्॥ २२

ततो घृतात्क्तमन्नं गृहीत्वा दक्षिणोपवीती
पितृब्राह्मणम्—ओं अग्नौकरणमहं करिष्ये। ओं
कुरुष्वेति तेनोक्तम्। ओं अग्नये कव्यवाहनाय
स्वाहा। ओं सोमाय पितृमते स्वाहा आहुति-
द्वयं देवब्राह्मणहस्ते दत्त्वा अवशिष्टान्नं पित्राद्यं
स्थापयित्वा अपरमद्धं पित्रादिपात्रे मातामहादि-
पात्रे च निक्षिपेत्॥ २३

पात्रमुद्रादि निधाय कुशं दत्त्वा अधोमुखाभ्यां
पाणिभ्यां पात्रं गृहीत्वा—ओं पृथिवी ते पात्रं
द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं
जुहोमि स्वाहा। इति पात्राभिमन्त्रणम्॥ २४

ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढ़मस्य पाऽंशुले॥ ओं विष्णो हव्यकव्यं रक्षस्व
इत्यन्नमध्ये अधोमुखद्विजाङ्गुष्ठनिवेशनम्॥ २५

अपहतेति त्रियवविकिरणम्॥ २६

ओं निहन्मि सर्व्वं यदमेध्यवद्भवे-
द्धताश्च सर्व्वेऽसुरदानवा मया।

रक्षांसि यक्षाः सपिशाचसङ्घा
हता मया यातुधानाश्च सर्व्वे ॥
इति सिद्धार्थविकिरणम् ॥ २७

ततो मधुविलोचनसंज्ञकेभ्यो दैवेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं स्वाहेति वारिकुशाद्यैरन्नसङ्कल्पनम् ॥ २८

ओँ अन्नमिदमच्छिद्रमस्तु। ओँ सङ्कल्पसिद्धिरस्तु ॥ २९

ततो विपरीतोपवीतेन सव्यञ्जनं सघृतमन्नं पित्रादिब्राह्मणपात्रे निधाय तदुपरि भूमिसंलग्नकुशं दत्त्वा ओँ पृथिवी ते पात्रमिति मन्त्रेण उत्तानाभ्यां पात्रं गृहीत्वा ओँ इदं विष्णोरित्यन्नोपरि उत्तानं द्विजाङ्गुष्ठं निवेशयेत्। ओँ अपहतेति तिलविकिरणम्। भूमिपातितवामजानुः—अमुकगोत्रेभ्योऽस्मत्पितृपितामहेभ्यः सपत्नीकेभ्यः एतदन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्ज्जितं स्वधा। अन्नं सङ्कल्प्य—ओँ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत मे पितॄन् ॥ दक्षिणामुखवारिधारात्यागः। ओँ आद्यमिदमच्छिद्रमस्तु ओँ सङ्कल्पसिद्धिरस्तु ॥ ३०

ओँ भूर्भुवः स्वः इति विसर्ज्जयित्वा—ओँ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥ ओँ मधुनक्तमुतोषसो मधुमत् पार्थिवꣳरजः। मधु द्यौरस्तु नः पिता ॥ ओँ मधुमान् नो वनस्पतिर्मधुमां अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः॥ ओँ मधु मधु मधु इति जपः ॥ ३१

यथासुखं वाग्यता जुषध्वमिति ब्रूयात् ॥ ३२

भक्तवत् सप्तव्याधादिकं पितृस्तोत्रं जपेत् ॥ ३३

ओँ सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे।
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत ॥ ३४

ततस्तृप्यस्व दक्षिणाभिमुखो वामोपवीती तदुच्छिष्टाग्रतः—

ओँ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति भूमौ कुशोपरि सघृतमन्नं जलप्लुतं विकिरेत् ॥ ३५

ततो ब्राह्मणक्रमेण जलगण्डूषं दत्त्वा पूर्व्ववत् सव्याहृतिकां गायत्रीं मधुवातेत्यृचं जप्त्वा—ओँ स्वदितं भवद्भिरिति दैवब्राह्मणप्रश्नः। सुस्वदितमिति तेनोक्ते—ओँ शेषमन्नमिति प्रश्नः। ओँ इष्टैः सह भोजनम् ॥ ३६

पित्रादिब्राह्मणं वामोपवीतेन—ओँ तृप्ताः स्थ इति प्रश्नः। ओँ तृप्ताः स्म इति तेनोक्ते—ओँ शेषान्नमिति प्रश्नः। ओँ इष्टैः सह भुङ्क्ष्वेति तेनोक्ते मातामहादिब्राह्मणे तथैव प्रश्नः ॥ ३७

ततः पित्रादिब्राह्मणे—ओँ पिण्डानहं पातयिष्ये। पातयेत्युक्ते तदुच्छिष्टाग्रतो भूम्यभ्युक्षणं मण्डलचतुष्कोणं तिलविकिरणम् ॥ ३८

ओँ अमुकगोत्र अस्मत्पितः अमुकदेवशर्म्मन् सपत्नीक एतत् ते पिण्डासनं स्वधा। इत्थं रेखामध्ये पितामहाय सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन् अन्नं साज्यं पिण्डं कृत्वा कुशोपरि अमुकगोत्र अस्मत्पित अमुकदेवशर्म्मन् सपत्नीक एष ते पिण्डः स्वधा। इत्थं रेखामध्य पितामहाय ततः सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन् पिण्डविकिरणं पिण्डान्तिके। ओँ लेपभुजः प्रीयन्तामिति स्तरणकुशेषु हस्तमार्ज्जनम् ॥ ३९

प्रक्षालितपिण्डोदकेन ओँ अमुकगोत्र अस्मत्पितः अमुकदेवशर्म्मन् सपत्नीक एतत् ते जलमवनेनिक्ष्व ये चात्र त्वामनुजांश्च त्वमनु तस्मै ते स्वधेति पितृपिण्डसेचनम् ॥ ४०

पिण्डपात्रमधोमुखं कृत्वा बद्धाञ्जलिः ओँ पितरोमादयध्वं यथाभागमावृषायध्वमिति जपेत्। अपः स्पृष्ट्वा वामेन परावृत्य उदङ्मुखः प्राणांश्चि संयम्य षड्भ्य ऋतुभ्यो नमः इति जपः ॥ ४१

वामेनैव परावृत्य पुष्पदानम्। अक्षतञ्चारिष्टञ्चास्तु मे पुण्यं शान्तिः पुष्टिः। दक्षिणामुखः ओँ अमीमदन्त। पितरो यथाभागमावृषायिषत इति जपः। वासः शिथिलीकृत्याञ्जलिं कृत्वा—ओँ

नमो वः पितरः पितरो नमो वः इति जपः। गृहान्नः पितरो दत्त इति गृहवीक्षणम्। सदो वः पितरो देष्म इति वीक्ष्य—एतद्वः पितरो वासः इत्युच्चार्य्य अमुकगोत्र एतत् ते वासः स्वधा ततः सूत्रदानम् ॥ ४२

वामेन पाणिना उदकपात्रं गृहीत्वा ऊर्ज्जं वहन्तीरमृतं घृतं पयः इत्यादि पिण्डोपरि धारात्यागः ॥ ४३

पूर्व्वस्थापितपात्रशेषोदकैः प्रत्येकं पिण्डसेचनं पिण्डमावाह्य गन्धादिदानं पिण्डोपरि कुशपत्रञ्च दत्त्वा—ओँ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत अस्तोषत सुभानवो विप्रा नविष्ठयामती यो जान् विन्द्रते हरीति विसर्जनः ॥ ४४

इत्यं मातामहादिब्राह्मणानामाचमनम्। ओँ सुसम्प्रोक्षितमस्त्विति भूम्यभ्युक्षणं कृत्वा— ओँ अपां मध्ये स्थिता देवाः सर्व्वमप्सु प्रतिष्ठितम्। ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः॥

ओँ शिवा आपः सन्त्विति ब्राह्मणहस्ते जलदानम् ॥ ४५

लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे। लक्ष्मीर्वसति सदा गोष्ठे सौमनस्यं सदास्तु मे॥

सौमनस्यमस्त्विति पुष्पदानम् ॥ ४६

ओँ अक्षतञ्चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे। यद्यच्छ्रेयस्करं लोके तत् तदस्तु सदा मम।

ओँ अक्षतञ्चारिष्टञ्चास्त्विति यवतण्डुलदानम्। ओँ अमुकगोत्राणामस्मत्पितृ-पितामह-प्रपितामहानां सपत्नीकानामिदमन्नपानादिकमक्षय्यमस्त्विति पित्रादिब्राह्मणहस्ते तिलजलदानम् ॥४७

यजमानस्येति प्रश्ने अस्त्विति ब्राह्मणो वदेत् ॥ ४८

एतन्मात्र महादीनामक्षय्यमाशिषः।

ओँ अघोराः पितरः सन्तु गोत्रं नो वर्द्धताम् ॥ ४९

ओँ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति। अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कञ्चन॥

एता एवाशिषः सन्तु ॥ ५०

सौमनस्यमस्तु सुसुखञ्च अस्त्वित्युक्ते प्रदत्त-पिण्डस्थाने अर्घ्यार्थपवित्रमोचनम्। कुशपवित्रं गृहीत्वा तेन कुशेन पित्रादिब्राह्मणं स्पृष्ट्वा—ओँ स्वधां वाचयिष्ये। ओँ वाच्यताम्। ओँ पितृपितामहेभ्यो यथानामशर्म्मभ्यः सपत्नीकेभ्यः स्वधोच्यताम्। ओँ अस्तु स्वधेत्युक्ते—ऊर्ज्जं वहन्तीरमृतं घृतमिति पिण्डोपरि वारिधारां दद्यात् ॥ ५१

ततः ओँ विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तां। देव ब्राह्मणहस्ते यवोदकदानम्। ओँ प्रीयन्तामिति तेनोक्ते ओँ देवताभ्य इति विसर्जयेत् ॥ ५२

अधोमुखः पिण्डपात्राणि चालयित्वा आचम्य दक्षिणोपवीती पूर्व्वाभिमुखः ओँ अमुकगोत्राय अमुकदेवशर्म्मणे ब्राह्मणाय सपत्नीकाय श्राद्धप्रतिष्ठार्थदक्षिणामेतद्रजतं तुभ्यमहं सम्प्रददे। इति दक्षिणां दद्यात्। ततो मातामहादौ ततो देवब्राह्मणाय दक्षिणादानम् ॥ ५३

ततः पितृब्राह्मणे ओँ पिण्डाः सम्पन्ना इति प्रश्नः। ओँ सुसम्पन्ना इति पिण्डे क्षीरधारां दत्त्वा पिण्डचालनम् अतिथिब्राह्मणे पिण्डपात्रमुत्तानं कृत्वा—

ओँ वाजे वाजे वत वाजिनो नो
धनेषु विप्रा अमृता ऋतज्ञाः।
अस्यमध्वः पिबत मादयध्वं
तृप्ता यात पथिभिर्देवयानैः॥

इति पिण्डादिविसर्ज्जनम् ॥ ५४

ओँ आमावाजस्य प्रसवो जगम्या-
देमे द्यावापृथिवी विश्वरूपे।
आमागन्तं पितरा मातरा युव-
मामा सोमो अमृतत्वाय गम्यात्॥

इति देवविसर्ज्जनम् ॥ ५५

ओँ अभिरमतामिति पितृब्राह्मणविसर्ज्जनम्। ब्राह्मणैरनुव्रतस्य निवर्त्तनम्। गवादिषु पिण्डप्रतिपादनमिति शेषः ॥ ५६

अयं श्राद्धविधिः प्रोक्तः पठितः पापनाशनः। अनेन विधिना श्राद्धं कृतं वै यत्र कुत्रचित् ॥ ५७

मद्रया स्यात् पितृणाञ्च स्वर्गप्राप्तिर्ध्रुवा तथा।
इत्युक्तं पार्व्वणश्राद्धं पितृणां ब्रह्मलोकदम् ॥ ५९

इति श्रीगारुड़े पूर्व्वखण्डे पार्व्वणश्राद्धं नाम
द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

---

## त्रयोविंशत्यधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच।

नित्यश्राद्धं प्रवक्ष्यामि पूर्व्ववत् तद्विशेषयेत् ॥१

ओं अमुकगोत्राणामस्मत्पितृपितामहानाम-मुकशर्म्मणां सपत्नीकानां श्राद्धं सिद्धान्नेन युष्मत्-स्वहं करिष्ये ॥ २

आसनादिकमत्र स्याद्विश्वेदेवाविवर्ज्जितम् ॥ ३

वृद्धिश्राद्धं प्रवक्ष्यामि पूर्व्ववत् तद्विशेषकम् ॥ ४

जातपुत्रमुखदर्शनादौ वृद्धिश्राद्धं पूर्व्वाभिमुखेषु दक्षिणोपवीतिषु मधु-यव-बदर-कुशैर्देवतीर्थेन नमस्कारान्तेन दक्षिणोपचारेण कर्त्तव्यम् ॥ ५

दक्षिणजानु गृहीत्वा ओं अद्यास्मदीयामुक-वृद्धौ अमुकगोत्राणामस्मत्पितृपितामहादि-पिता-मही-मातृणामसुकदेवीनामसुकगोत्राणां श्राद्धे कर्त्तव्ये वसुसत्यसंज्ञकानां विश्वेषां देवानां श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति देवब्राह्मणा-मन्त्रणम्। ओं करिष्यसीति तेनोक्त इत्यमेवापर-देवब्राह्मणामन्त्रणम् ॥ ६

ततः अमुकवृद्धौ अमुकगोत्राया मत्प्रपिता-मह्या अमुकदेव्या नान्दीमुख्याः श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति प्रपितामहीब्राह्मणा-मन्त्रणम्। करिष्यसीति तेनोक्त इत्यमेव प्रमाता-मह्यादिब्राह्मणामन्त्रणम् ॥ ७

देवपितृसर्व्वदेवब्राह्मणं श्राद्धकरणानुज्ञापनम्। आसने ओं विश्वे देवास आगत शृणुताम इमं हव एदं वर्हिर्निषीदत ॥ ओं विश्वेदेवाः शृणुतेमं हवं ये मे अन्तरीक्षे य उपाद्यविष्ठ। ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन् वर्हिषि मादयध्वम् ॥ ओं आगच्छन्तु इति विश्वेदेवावाहनम्। गन्धादि-दानम्। अच्छिद्रावधारणवाचनम् ॥ ८

ततः प्रपितामहीप्रभृतीनामनुज्ञापनम् आसन-दानं गन्धादिदानञ्च अच्छिद्रावधारणवाचनम्। इत्थं पितामह्याः मातुः। ततः प्रपितामहादीना-मनुज्ञापनम् आसनम् आवाहनं गन्धादिदानम् वृद्धप्रमातामहादीनामनुज्ञापनादिकरणम्। ओं वसुसत्य-संज्ञकेभ्यो देवेभ्य एतदन्नं सव्यञ्जनं सवदरं सदधि प्रतिषिद्धवर्ज्जितं नम इति अन्न-सङ्कल्पनम्। ओं अमुकगोत्रे मत्पितामहि अमुकि देवि नान्दीमुखि एतदन्नं सवदरं सदधि नमः। एवं मातामह-प्रमातामहेभ्यः ॥ ९

एकोद्दिष्टं पुरावत् ते तद्विशेषं वदे शृणु ॥ १०

प्रथमं निमन्त्रणं पादप्रक्षालनम् आसनम् अर्घ्य अमुकगोत्रस्य मत्पितुरमुकदेवशर्म्मणः प्रति-सांवत्सरिकमेकोद्दिष्टश्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये इति श्राद्धकरणानुज्ञापनम्। आसनम् अर्घ्यं गन्धादिदानम् अन्नानुकल्पनं जप्यम् निवीती उत्तराभिमुखीभूयातिथिश्राद्धं कुर्य्यात् ॥ ११

ततस्तृप्तिं ज्ञात्वा दक्षिणाभिमुखो वामो-पवीती उच्छिष्टसमीपे अग्निदग्धा इति अन्न-विकिरणम्। अमुकगोत्र मत्पितरमुकदेवशर्म्मन्ने-तत् ते जलमवनेनिक्ष्व ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा नम इति रेखोपरि दक्षिणासुख्य वारिधारादानम्। शेषं पूर्व्ववत् ॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे त्रयो-विंशत्यधिकद्विशततमोऽध्यायः ॥२२३॥

---

## चतुर्व्विंशत्यधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच।

सपिण्डीकरणं वक्ष्ये पूर्णेऽब्दे तत्क्षयेऽहनि।
कृतं सम्यग्यथाकाले प्रेतादेः पितृलोकदम् ॥ १
सपिण्डीकरणं कुर्य्यादपराह्ने तु पूर्व्ववत् ॥ २

पितामहादिब्राह्मणनिमन्त्रणम्। ओं पुरू-रवोमाद्रवःसंज्ञकेभ्यो देवेभ्य एतदासनं नमः। वामपार्श्वे चासनदानम्. आवाहनम्। ततः पितामहप्रपितामहानां सपत्नीकानां श्राद्धमहं

करिष्ये इत्यनुज्ञाग्रहणम्। पात्रत्रयकरणं पात्रोपरि कुशं दत्त्वा पात्रान्तरेण पिधाय अच्छिद्रावधारणान्तं परिसमाप्य तथैव पितुरपि सपत्नीकस्य प्रेतपदान्तनाम्ना श्राद्धकरणानुज्ञापनं दैवपात्राच्छिद्रावधारणम्॥ ३

तत् परिसमाप्य पितृ-पितामह-प्रपितामह-वृद्धप्रपितामहक्रमेण पात्राणां मनाक् चालनं उद्घाटनं कृत्वा—

ओं ये समानाः समनसः पितरो यमराज्ये।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्॥
ओं ये समानाः समनसो जीवा जीवेषु मामकाः।
तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः॥

एतन्मन्त्रद्वयेन पितृपात्रोदकं पितामह-प्रपितामहपात्रे वृद्धप्रपितामहपात्रं परित्यज्य पितामह-प्रपितामहयोरुदकं पवित्रञ्च पितृपात्रे क्षिपेत्॥ ४

ततः पितृब्राह्मणहस्ते पात्रस्थपवित्रदानम्। पात्रस्थ-पुष्पेण शिरसः करपादार्च्चनं ब्राह्मणहस्तेऽन्यजलदानं हस्ताभ्यां पात्रमुत्थाप्य या दिव्या इति पठित्वा अमुकगोत्र मत्पितामह अमुकदेवशर्म्मन् सपत्नीक एष ते अर्घः स्वधा॥ ५

पितृपात्रेणैव पितामह-ब्राह्मणहस्ते स्तोकमर्घोदकं कृत्वा स्तोकमुदकं पिण्डसेचनार्थं पात्रान्तरेण पिधाय पितृब्राह्मणवामपार्श्वे दक्षिणाग्रकुशोपरि पितृभ्यः स्थानमसीति अधोमुखपात्रस्थापनम्॥ ६

पितामह-प्रपितामह-वृद्धप्रपितामहान् गन्धादिदानमग्नौकरणम्। अवशिष्टान्नं प्रपितामहादिपात्रे क्षिपेत्। पितामहादिपात्राभिमन्त्रणक्रमेण सपाप्यापि ब्राह्मणपात्राभिमर्षणम् अङ्गुष्ठनिवेशनं तिलविकिरणं कृत्वा—अमुकगोत्र एतत् ते अन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्ज्जितं ये चात्र त्वामनुजांश्च त्वमनु तस्मै ते स्वधा इति॥ ७

ततो देवप्रभृतिभ्य आपोशानं दद्यात्। अतिथिप्राप्तावतिथिश्राद्धं कुर्य्यात्। अस्मिन्नवसरे विकिरणम्॥ ८

पितामहादौ प्रश्नं कृत्वा पितृब्राह्मणम्—ओं स्वदितं भवद्भिरिति प्रश्नः। ओं अमुकगोत्र मत्पितरमुकदेवशर्म्मन् सपत्नीक एष ते पिण्डो ये चात्र त्वामनुजांश्च त्वमनु तस्मै स्वधेति। ओं पिण्डपात्रमच्छिद्रमस्तु। ततः सङ्कल्पसिद्धिवाचनं समाप्य पिण्डं द्विधा कृत्वा ये समानाः समनस इति मन्त्रद्वयं पठित्वा पितामह-वृद्धप्रपितामहपात्रेषु क्षिपेत्। पिण्डेषु गन्धादिकं दत्त्वा पिण्डचालनम्। अतिथिब्राह्मणे स्वदितादिप्रश्नः। ब्राह्मणानामाचमनं भुक्तिक्रमेण ताम्बूलदानम्। सुसु प्रोक्षितमस्तु। शिवा आपः सन्तु। वृद्धप्रपितामहक्रमेण ब्राह्मणहस्ते जलदानम्। गोत्रस्याक्षय्यमस्तु। पितृब्राह्मणहस्ते उपतिष्ठतामिति सतिलजलदानम्॥ ९

अघोराः पितरः सन्तु। अस्त्वित्युक्ते—स्वधां वाचयिष्ये इति पितामहादिब्राह्मणानुज्ञापनम्। ओं वाच्यतामित्युक्ते—ओं पितामहादिभ्यः स्वधोच्यताम्। अस्तु स्वधेत्युक्ते पितृब्राह्मणं—पितृभ्यः स्वधोच्यतामिति। अस्तु स्वधेत्युक्ते ओं ऊर्जं वहन्तीरिति दक्षिणाभिमुखवारिधारात्यागः। ओं विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तामिति दैवब्राह्मणहस्ते यवोदकदानम्। ओं देवताभ्य इति त्रिर्जपः॥ १०

पिण्डपात्राणि चालयित्वा आचम्य पितामहादिभ्यो दक्षिणां दत्त्वा ततः पितृब्राह्मणाय आशिषो मे प्रदीयन्तामित्याशीःप्रार्थनम्। प्रतिगृह्यतामित्युक्ते दातारो नोऽभिवर्द्धन्तामिति पात्रमुत्तानं कृत्वा वाजे वाजे विसर्ज्जनम् अभिरम्यतामिति पितृब्राह्मणम्॥ ११

सपिण्डीकरणश्राद्धं व्यास प्रोक्तं मया तव।
श्राद्धं विष्णुः श्राद्धकर्त्ता फलं श्राद्धादिकं हरिः॥ १२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
श्राद्धानुष्ठानं नाम चतुर्व्विंशत्यधिक-
द्विशततमोऽध्यायः॥ २२४॥

—

## पञ्चविंशत्यधिकद्विशततमोऽध्यायः ।

हरिरुवाच ।

धर्म्मसारमहं वच्मि संक्षेपाच्छृणु शङ्कर ।
भुक्तिमुक्तिप्रदं सूक्ष्मं सर्व्वपापविनाशनम् ॥ १
श्रुतं धर्म्मं बलं धैर्य्यं सुखमुत्साहमेव च ।
शोको हरति वै नृणां तस्माच्छोकं परित्यजेत् ॥ २
कर्म्म देवाः कर्म्म लोकाः कर्म्म सम्बन्धिबान्धवाः ।
कर्म्माणि प्रेरयन्तीह पुरुषं सुखदुःखयोः ॥ ३
दानमेव परो धर्म्मो दानात् सर्व्वमवाप्यते ।
दानाद्भुक्तिश्च राज्यञ्च दद्याद्दानं ततो नरः ॥ ४
एकतो दानमेवाङ्गः समग्रवरदक्षिणः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ५
तपसा ब्रह्मचर्य्येण यज्ञैः स्नानेन वा पुनः ।
धर्म्मस्य नाशका ये च ते वै निरयगामिणः ॥ ६
ये च होम-जप-स्नान-देवतार्च्चनतत्पराः ।
सत्य-क्षमा-दयायुक्तास्ते नराः स्वर्गगामिणः ॥ ७
न दाता सुख-दुःखानां न च हर्त्तास्ति कश्चन ।
स्वकृतान्येव भुञ्जन्ते दुःखानि च सुखानि च ॥ ८
धर्म्मार्थं जीवितं येषां सन्तानार्थञ्च मैथुनम् ।
देवार्थं तर्पणं येषां दुर्गाण्यतितरन्ति ते ॥ ९
सन्तुष्टः को न शक्नोति फलमूलैश्च वर्त्तितुम् ।
सर्व्व एव हि सौख्येन सङ्कटान्यवगाहते ॥ १०
एष एव हि लोभस्य कार्य्योऽयमतिदुष्करः ।
लोभात् क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्त्तते ॥ ११
लोभान्मोहश्च माया च मानो मत्सर एव च ।
राग-द्वेषानृत-क्रोध-लोभ-मोहमदोज्झितः ॥१२
यः शान्तः स परं लोकं याति पापविवर्ज्जितः ।
देवता मुनयो नागा गन्धर्व्वा गुह्यका हर (क) ।
धार्म्मिकं पूजयन्तीह न धनाढ्यं न कामिनम् ॥ १३
न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण वा ।
अलभ्यं लभते मर्त्त्यस्तत्र का परिदेवना ॥ १४
यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिर्नित्यं तथा सर्व्वत्र वित्तवान् ॥ १५
सर्व्वसत्त्वदयालुत्वं सर्व्वेन्द्रियविनिग्रहः ।
सर्व्वत्रानित्यबुद्धित्वं श्रेयः परमिदं स्मृतम् ॥ १६
पश्यन्निवाग्रतो मृत्युं यो धर्म्मं नाचरेन्नरः ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १७
भ्रूणहा ब्रह्महा गोघ्नः पितृहा गुरुतल्पगः ।
भूमिं सर्व्वगुणोपेतां दत्त्वा पापैः प्रमुच्यते ॥ १८
न गोदानात् परं दानं किञ्चिदस्तीह मे मतिः ।
या गौर्न्यायार्ज्जिता दत्ता कृत्स्नं तारयते कुलम् ॥१९
नान्नदानात् परं दानं किञ्चिदस्ति वृषध्वज ।
अन्नेन धार्य्यते सर्व्वं चराचरमिदं जगत् ॥ २०
कन्यादानं वृषोत्सर्गो जपस्तीर्थं श्रुतं तथा ।
हस्त्यश्वरथदानानि मणिरत्नवसुन्धराः ॥ २१
अन्नदानस्य सर्व्वाणि कलां नार्हन्ति षोड़शीम् ।
अन्नात् प्राणा बलं तेजश्चान्नाद्वीर्य्यं धृतिः स्मृतिः॥२२
कूप-वापीत-ड़ागादि आरामाणि च कारयेत् ।
त्रिःसप्तकुलमुद्धृत्य विष्णुलोके महीयते ॥ २३
साधूनां दर्शनं पुण्यं तीर्थादपि विशिष्यते ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ २४
सत्यं दमस्तपः शौचं सन्तोषश्च क्षमार्ज्जवम् ।
ज्ञानं शमो दया दानमेष धर्म्मः सनातनः ॥ २५

इति श्रीगारुड़े पूर्व्वखण्डे धर्म्मसारकथनं नाम
पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥२२५॥

---

## षड्विंशत्यधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

प्रायश्चित्तादि वक्ष्येऽहं नरकाशौघमर्द्दनम् ।
मक्षिका विप्रुषो नारी भुवि तोयं हुताशनः ।
मार्ज्जारो नकुलश्चैव शुचीन्येतानि नित्यशः ॥ १
यः शूद्रोच्छिष्टसंस्पृष्टं प्रमादाद्भुञ्जते द्विजः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ २
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन ।
स्नानं जप्यञ्च कर्त्तव्यं दिनस्यान्ते च भोजनम् ॥ ३
अन्नं समक्षिकाकेशं शुध्येद्वान्तेन तत्क्षणात् ।
यश्च पाणितले भुङ्क्ते अङ्गुल्या बाहुना च यः ॥ ४
अहोरात्रेण शुध्येत पिबेत् पतितवार्य्युत ।
पीतशेषन्तु यत् तोयं वामहस्तेन मद्यवत् ॥ ५

(क) नराः इति वा पाठः ।

चर्म्ममध्यगतं तोयमशुचि स्यान्न तत् पिबेत्।
अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि ॥ ६
चान्द्रायणं पराकं वा द्विजातीनां विशोधनम्।
प्राजापत्यन्तु शूद्रस्य पश्चाज्ज्ञाते तथापरे ॥ ७
यस्तत्र भुङ्क्ते पक्वान्नं कृच्छ्रार्द्धं तस्य दापयेत्।
तेषामपि च यो भुङ्क्ते कृच्छ्रपादो विधीयते ॥ ८
रजकानाञ्च शैलूषी-वेणुचर्म्मोपजीविनाम्।
एतदन्नञ्च यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥ ९
चाण्डालकूपभाण्डेषु अज्ञानात् पिबते जलम्।
कुर्य्यात् सान्तपनं विप्रस्तदर्द्धञ्च विशः स्मृतम् ॥ १०
पादं शूद्रस्य दातव्यमज्ञानादन्त्यवेश्मनि।
प्रायश्चित्तं त्रिकृच्छ्रं स्यात् पराकमन्त्यजातके ॥ ११
अन्त्यजोच्छिष्टभुक् शुध्येद्द्विजश्चान्द्रायणेन च।
षड्रात्रादिश्च विप्रादिर्वा पीते त्वन्त्यवेश्मनि ॥ १२
चाण्डालान्नं यदा भुङ्क्ते प्रमादादितदाचरेत्।
क्षत्रजातिः सान्तपनं षट् त्रिरात्रं परे तथा ॥ १३
एकवृक्षे तु चण्डालः प्रमादाद्ब्राह्मणो यदि।
फलं भक्षयते तत्र अहोरात्रेण शुध्यति ॥ १४
भुक्तोच्छिष्टो ह्यनाचान्तश्चाण्डालं स्पृशते यदि।
गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ॥ १५
चाण्डाल-श्वपचान्ने वा विण्मूत्रे तु कृतेऽथ वा।
प्रायश्चित्तं त्रिरात्रं स्यात् पराकश्चान्त्यजागतौ ॥ १६
अकामतस्त्रियो गत्वा पराकं तत्र साधकम्।
अन्त्यजातिप्रसूतस्य प्रायश्चित्तं न विद्यते ॥ १७
मद्यादिदुष्टभाण्डेषु यदापः पिबते द्विजः।
कृच्छ्रपादेन शुध्येत पुनः संस्कारकर्म्मणा ॥ १८
ये प्रत्यवसिता विप्रा प्रव्रज्याग्निव्रतादिषु।
अन्नपानादि संग्राह्य चिकीर्षन्ति गृहान्तरम् ॥ १९
चारयेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वै।
जातकर्म्मादिसंस्कारं वशिष्ठो मुनिरब्रवीत् ॥ २०
प्राजापत्यादिभिभ्रष्टा स्त्री शुध्येद्द्विजभोजनात् ॥
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः ॥ २१
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति।
वर्णबाह्येन संस्पृष्टः पञ्चरात्रेण वै तथा ॥ २२
अदुष्टाः सन्तता धारा वातोद्धूताश्च रेणवः।
स्त्रियो बालाश्च वृद्धाश्च न दुष्यन्ति कदाचन ॥ २३

नित्यमास्यं शुचि स्त्रीणां शकुन्तैः पातितं फलम्।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ २४
उदके चोदकस्थन्तु स्थलेषु स्थलजं शुचि।
पादौ स्वाप्यौ च तत्रैव आचान्तः शुचितामियात् ॥ २५
भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते।
मूत्रेण सुरया मिश्रं तापनैः खलु शुध्यति ॥ २६
गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च।
काक-श्वानहतान्येव शुध्यन्ते दशभस्मना ॥ २७
शूद्रभाजनभोक्ता यः पञ्चगव्यमुपोषितः।
उच्छिष्टं स्पृशते विप्रः श्वशूद्रश्वापदादिकम् ॥ २८
उपोषितः पञ्चगव्याच्छुध्येत् स्पृष्ट्वा रजस्वलाम्।
अनूदकेषु देशेषु चौरव्याघ्राकुले पथि ॥ २९
कृत्वा मूत्रपुरीषन्तु द्रव्यहस्तो न दुष्यति।
भूमौ निक्षिप्य तद्द्रव्यं शौचं कृत्वा समाहितः ॥ ३०
आरनालं दधि क्षीरं तक्रान्तु कृशरञ्च यत्।
शूद्रादपि च तक्राद्यं मांसं मधु तथान्त्यजात् ॥ ३१
गौड़ीं पैष्टिञ्च माध्वीकं विप्रादिर्यः सुरां पिबेत्।
सुरां पिबन् द्विजः शुध्येदग्निवर्णां सुरां पिबेत्।
गोमूत्रमुदकं वापि अशुद्धः शुद्धतां व्रजेत् ॥ ३२
नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविकाम्।
मातुलस्य सुतां गत्वा मातुलानीं व्रजन् नरः ॥ ३३
गुरुपत्नीं भ्रातृभार्य्यां सख्युः स्यात् तप्तकृच्छ्रकम्।
मातृस्वसृर्दुहितृश्च गच्छतो नास्ति निष्कृतिः ॥ ३४
शृगालशूकरोच्छिष्टभोजी षड्रात्रकृच्छ्रुचिः।
तप्तकृच्छ्राच्छुचिर्भूत्वा कवचं शुष्कमांसकम् ॥ ३५
अग्निदो गरदश्छेदी तप्तकृच्छ्रेण शुध्यति।
सूतके मृतके भुङ्क्ते शूद्रस्याष्टशतं जपेत् ॥ ३६
वैश्ये पञ्चशतं जप्यं गायत्र्याः क्षत्रियस्य च।
शतं विप्रस्य भुक्त्वान्नं प्राणपातेन सूतके ॥ ३७
शुचिर्विप्रो दशाहेन क्षत्रियो द्वादशाहतः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ३८
राज्ञां युद्धेषु यज्वादौ देशान्तरगतेषु च।
बाले प्रेते च सन्न्यासे सद्यः शौचं विधीयते ॥ ३९
अविवाह्या तथा कन्या द्विजो यो मौञ्जिवर्ज्जितः।
जातदन्तस्य बालस्य कुमारी च त्रिवर्षिका ॥ ४०
तेषां शुद्धिस्त्रिरात्रेण गर्भस्रावे च रात्रिभिः।

सूतके मासतुल्याभिश्चतुर्थेऽह्नि रजस्वला ॥ ४१
दुर्भिक्षे राष्ट्रसम्पाते सूतके मृतकेऽपि वा ।
नियमाश्च न दुष्यन्ति दानधर्म्मपरास्तथा ।
दीक्षिताश्चाभिषिक्ताश्च व्रततीर्थपरास्तथा ॥ ४२
दीक्षाकाले विवाहादौ देवद्विजनिमन्त्रिते ।
पूर्व्वसङ्कल्पिते वापि नाशौचं मृतसूतके ॥ ४३
प्रसूतपत्नीसंस्पर्शादशुचिः स्यात् तथा द्विजः ॥ ४४
अग्नयो यत्र हूयन्ते वेदो वा यत्र पठ्यते ।
सततं वैश्वदेवादि न तेषां सूतकं भवेत् ॥ ४५
शूद्रो धर्म्ममन्त्रपूतः सार्द्धमासेन शुध्यति ।
विप्रादीनां विपन्नानामेकरात्रमशौचकम् ॥ ४६
अग्निहोत्री व्रती मन्त्री न तेषां सूतकं भवेत् ।
रजस्वला यदा स्पृष्टा श्वान-चण्डाल-पुक्कसैः ॥ ४७
निराहारा भवेत् तावत् स्नानकालेन शुध्यति ।
तया कृते गृहे कर्म्म पापित्वं तत्कृतञ्च यत् ।
अशुद्धे च गृहे भुक्ते त्रिरात्राच्छुध्यति द्विजः ॥ ४८
ब्राह्मणी क्षत्रिया वैश्या शूद्रा चैव रजस्वला ।
अन्योन्यस्पर्शनात् तत्र ब्राह्मणी तु त्रिरात्रतः ॥ ४९
द्विरात्रतः क्षत्रिया च शुद्धा वैश्या ह्युपोषिता ।
शूद्रा स्नानेन शुध्येत द्रोणान्नं न विसर्ज्जयेत् ॥ ५०
काकश्वानोपनीतन्तु अन्नं वाह्यन्तु तत् त्यजेत् ।
सुवर्णाद्भिः समभ्युक्ष्य हुताशे च प्रतापयेत् ॥ ५१
कूपे च पतितौ दृष्ट्वा श्व-शृगालौ च मर्कटम् ।
तत्कूपस्योदकं पीत्वा शुध्येद्विप्रस्त्रिभिर्द्दिनैः ।
क्षत्रियोऽहर्द्वयेनैव वैश्यः शुध्येद्दिनैकतः ॥ ५२
अस्थि चर्म्म मलं वापि मूषिकं यदि कूपतः ।
उद्धृत्य चोदकं पञ्चगव्याच्छुध्येत शोधितम् ॥ ५३
तड़ागे पुष्करिण्यादौ भस्मादिपतिते तथा ।
षष्टिकुम्भाप उद्धृत्य पञ्चगव्येन शुध्यति ॥ ५४
स्त्रीरजःपतितेऽमेध्ये त्रिंशत् कुम्भान् समुद्धरेत् ॥५५
अगम्यागमनं कृत्वा मद्य-गोमांसभक्षणम् ।
शुध्येच्चान्द्रायणाद्विप्रः प्राजापत्येन भूमिपः ॥ ५६
वैश्यः सान्तपनाच्छूद्रः पञ्चाहोभिर्विशुध्यति ।
प्रायश्चित्ते कृते दद्याद्गवां ब्राह्मणभोजनम् ॥ ५७
क्रीड़ायां शयनीयादौ नीलीवस्त्रं न दुष्यति ।
नीलीवस्त्रं न स्पृशेच्च नीली च निरयं व्रजेत् ॥ ५८

ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
सेतुं दृष्ट्वा विशुध्यन्ते तत्संयोगी च पञ्चमः ॥ ५९
ततो धेनुशतं दद्याद्ब्राह्मणानान्तु भोजनम् ।
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ॥ ६०
भैक्ष्यस्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ।
प्रास्येदात्मानमग्नौ वा समृद्धे द्विजकारणे ॥ ६१
सर्व्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
न्यस्येदात्मानमग्नौ वा सुसमिद्धे सुरापी तु ॥ ६२
स्तेयी सर्व्वं वेदविदे ब्राह्मणायोपपादयेत् ।
वृषभैकसहस्रं गां दद्याच्च गुरुतल्पगः (क) ॥ ६३
कृच्छ्रपादं चरेद्रोधे द्वौ पादौ बन्धने पशोः ।
सर्व्वकृच्छ्रं निपाते स्यात् कान्तारे गृहदाहतः ॥ ६४
घण्टाभरणदोषेण कृच्छ्रपादं मृते गवि ॥ ६५
अस्थिभङ्गं गवां कृत्वा शृङ्गभङ्गमथापि वा ।
त्वग्भेदं पुच्छनाशं वा मासार्द्धं यावकं पिबेत् ॥ ६६
अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ ६७
वपनं मेखला दण्डो भैक्ष्यचर्य्या व्रतानि च ।
निवर्त्तन्ते द्विजातीनां पुनः संस्कारकर्म्मणि ॥ ६८
आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
अन्त्यभाण्डस्थिताः सर्व्वे निष्क्रान्ताः शुचयः स्मृताः ६९
एकभक्तं क्रमान्नक्तमेकैकाहमयाचितम् ।
उपवासः पादकृच्छ्रं कृच्छ्रार्द्धं द्विगुणं हि तत् ॥ ७०
प्रजापात्यं तत्त्रिगुणं सर्व्वपातकनाशनम् ।
कृच्छ्रं सप्तोपवासैश्च महासान्तपनं स्मृतम् ॥ ७१
त्र्यहमुष्णां पिबेदापस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं पिबेत् सर्पिस्तप्तकृच्छ्रमघापहम् ॥ ७२
द्वादशाहोपवासेन पराकः सर्व्वपापहा ।
एकैकं वर्द्धयेत् पिण्डं शुक्ले कृष्णे च ह्रासयेत् ॥ ७३
पयः काञ्चनवर्णायाः श्वेतवर्णोत्थगोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलवर्णाभवं घृतम् ॥ ७४
दधि स्यात् कृष्णवर्णाया दर्भोदकसमायुतम् ।
गोमूत्रमाषकाश्चाष्टौ गोमयस्य चतुष्टयम् ॥ ७५
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश उच्यते ।
घृतस्य माषकाः पञ्च पञ्चगव्यं मलापहम् ॥ ७६

(क) दद्याद्विप्राय शुद्धये इति पाठान्तरम् ।

मुनिभिश्वरिता धर्म्मा भक्त्या व्यास मयोदिताः ।
येविष्णुस्तुष्यते चैव सुखादिपरिचारिकाः ॥ ७७
तर्पणेन च होमेन सन्ध्याया वन्दनेन च ।
प्राप्यते भगवान् विष्णुर्धर्म्मकामार्थमोक्षदः ॥ ७८
धर्म्मो विष्णुर्व्रतो विष्णुः पूजा विष्णुस्तु तर्पणम् ।
होमः सन्ध्या तथा ध्यानं धारणा सकलं हरिः ॥७९

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे प्रायश्चित्तकथनं नाम षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

---

## सप्तविंशत्यधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

प्रलयं जगतो वक्ष्ये तत् सर्व्वं शृणु शौनक ।
चतुर्युगसहस्रन्तु कल्पैकाऽहदिनं स्मृतम् ॥ १
कृत-त्रेता-द्वापरादि-युगावस्थां निबोध मे ।
कृते धर्म्मश्चतुष्पाच्च सत्यं दानं तपो दया ॥ २
धर्म्मपाता हरिः श्वेतः सन्तुष्टा ज्ञानिनो नराः ।
चतुर्वर्षसहस्राणि नरा जीवन्ति वै तदा ॥ ३
कृतान्ते क्षत्रियैर्विप्रा विट्शूद्राश्च जिता द्विजैः ।
शूरश्चातिबलो विष्णा रक्षांसि च जघान ह ॥ ४
त्रेतायुगे त्रिपाद्धर्म्मः सत्यदानदयात्मकः ।
नरा यज्ञपरास्तस्मिंस्तथा क्षत्त्रोद्भवं जगत् ॥ ५
रक्तो हरिर्नरैः पूज्यो नरा दशशतायुषः ।
तत्र विष्णुर्भीमरथः क्षत्त्रियो राक्षसानहन् ॥ ६
द्विपादविग्रहो धर्म्मः पीततान्वाच्युते गते ।
चतुःशतायुषो लोका द्विजक्षत्त्रोद्भवाः प्रजाः ॥ ७
तत्र दृष्ट्वाल्पबुद्धींश्च विष्णुर्व्यासस्वरूपधृक् ।
तदेकन्तु चतुर्वेदं चतुर्द्धा व्यभजत् पुनः ॥ ८
शिष्यानध्यापयामास नामतस्तान् निबोध मे ।
ऋग्वेदमथ पैलन्तु सामवेदञ्च जैमिनिम् ॥ ९
अथर्व्वाणं सुमन्तुन्तु यजुर्व्वेदं महामुनिम् ।
वैशम्पायनसंज्ञन्तु पुराणं सूतमेव च ।
अष्टादशपुराणानि येर्व्वेद्यो हरिरेव हि ॥ १०
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥ ११
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ।
भविष्यं नारदीयञ्च स्कान्दं लैङ्गं वराहकम् ॥ १२
मार्कण्डेयं तथाग्नेयं ब्रह्मवैवर्त्तमेव च ।
कौर्म्मं मात्स्यं गारुड़ञ्च वायवीयमनन्तरम् ।
अष्टादशं समुदितं ब्रह्माण्डमिति संज्ञितम् ॥ १३
अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ॥ १४
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्म्माख्यं साक्षान्नन्दीशभाषितम् ॥ १५
दुर्व्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ।
कापिलं वामनञ्चैव तथैवोशनसेरितम् ॥ १६
ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा शाम्बमेवं सर्व्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥ १७
पुराणं धर्म्मशास्त्रञ्च वेदास्त्वङ्गानि षण्मुने ।
न्यायः शौनक मीमांसा आयुर्व्वेदार्थशास्त्रकम् ।
गान्धर्व्वश्च धनुर्व्वेदो विद्या ह्यष्टादश स्मृताः ॥ १८
द्वापरान्तेन च हरिर्भुवो भारमपाहरत् ।
एकपादस्थिते धर्म्मे कृष्णताञ्चाच्युते गते ॥ १९
जनास्तदा दुराचारा भविष्यन्ति च निर्द्दयाः ।
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥ २०
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः ॥ २१
यदा कर्म्मसु काम्येषु शक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोभूतिरिति जानीहि शौनक ॥ २२
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २३
यदा सदानृतं तन्द्रा निद्रा हिंसादिसाधनम् ।
शोकमोहौ भयं दैन्यं स कलिस्तमसि स्मृतः ॥ २४
यस्मिन् जनाः कामिनः स्युः शश्वत् कटुकभाषिणः ।
दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः ॥ २५
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ।
अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥ २६
तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः ।
ह्रस्वकाया महाहाराश्चौर्य्यमायोरुसाहसाः ॥ २७

त्यक्ष्यन्ति भृत्याश्च पतिं तापसा ह्यखिलं व्रतम्(क) ।
शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ॥ २८
उद्विग्नाश्वानलङ्काराः पिशाचसदृशाः प्रजाः ।
अस्नातभोजनेनाग्नि-देवतातिथिपूजनम् ।
करिष्यन्ति कलौ प्राप्ते न च पित्रुदकक्रियाम् ॥ २९
स्त्रीपराश्च जनाः सर्व्वे शूद्रप्रायाश्च शौनक ॥ ३०
वहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ।
शिरःकण्डूयनपरा आज्ञां भेत्स्यन्ति सत्पतेः ॥ ३१
विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः ॥ ३२
कलेर्दोषनिधेर्विप्रा अस्ति ह्येको महागुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ ३३
कृते यद्ध्यायतो विष्णुं त्रेतायां यजतः फलम् ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ।
तस्माद्ध्येयो हरिर्नित्यं ध्येयः पूज्यश्च शौनक ॥ ३४

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे युग-
धर्म्मकथनं नाम सप्तविंशत्यधिक-
द्विशततमोऽध्यायः ॥ २२७ ॥

---

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः ।
अनावृष्टिश्च कल्पान्ते जायते शतवार्षिकी ॥ १
उत्तिष्ठन्ति तदा रौद्रा दिवि सप्त दिवाकराः ।
ते तु पीत्वा जलं सर्व्वं शोषयन्ति जगत्त्रयम् ॥ २
भूर्भुवः स्वर्महर्लोकसंस्था यान्ति जनं जनाः ।
रुद्रो भूत्वा त्वसौ विष्णुः पातालानि दहत्यधः ॥ ३
विष्णुर्दहेत् त्रिलोकञ्च मुखान्मेघान् सृजत्यलम् ।
वर्षन्ते च वर्षशतं नानावर्णा महाघनाः ॥ ४
विश्वावास्यजः शतं वाति वर्षाणां वायुरूर्ज्जितः ।
विष्णुरेकार्णवे पीत्वा सर्व्वं ब्रह्मस्वरूपधृक्॥ ५
शेतेऽनन्तासने विष्णुर्नष्टे स्थावरजङ्गमे ।
सुप्त्वा वर्षसहस्रं स जगद्भूयोऽसृजद्धरिः ॥ ६
अथ प्राकृतिकं वच्मि प्रलयं शृणु शौनक ।
पूर्णे संवत्सरशते संहृत्य सकलं जगत् ॥ ७
ब्रह्माणं न्यस्य देहे हि युक्तो योगेन वै हरिः ।
ये गता ब्रह्मणः स्थानं तेऽपि यान्ति परं पदम् ॥ ८
अनावृष्ट्यर्कसम्पन्ना आसन् मेघास्तथा द्विज ।
शतं वर्षाणि वर्षद्भिर्मेघै रण्डं प्रपूर्य्यते ॥ ९
अन्तर्गतेन तोयेन भिन्नमण्डं जगत्पतेः ।
पूर्णे ब्रह्मायुषि गते भिद्यन्तेऽम्भसि लीयते ॥ १०
एवं सा जगदाधारा तोये चोर्व्वी प्रलीयते ।
आपस्तेजसि लीयन्ते तेजो वायौ प्रलीयते ॥ ११
वायुः खे खञ्च भूतादौ भूतादिर्विशते महान् ।
महान् प्रपद्यतेऽव्यक्तं प्रकृतिः पुरुषे परे ॥ १२
शतवर्षं हरिः शेते सृजतेऽथ दिनागमे ।
अव्यक्तादिक्रमेणैव व्यक्तीभूतं चराचरम् ॥ १३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नैमि-
त्तिकप्रलयकथनं नामाष्टाविंशत्यधिक-
द्विशततमोऽध्यायः ॥ २२८ ॥

---

## एकोनत्रिंशदधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

आध्यात्मिकादितापांस्त्रीन् ज्ञात्वा संसारचक्रवित् ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥ १
संसारचक्रं वक्ष्येऽहमादावुत्क्रान्तिकालतः ।
यद्विज्ञानाच्च पुरुषो लीनः स्यात् परमात्मनि ॥ २
ऊर्द्ध्वं वायौ तनूस्त्यक्त्वा देहमन्यत् प्रपद्यते ।
नीयते द्वादशाहेन यमस्य यमपूरुषैः ॥ ३
तत्र यद्बान्धवास्तोयं प्रयच्छन्ति तिलैः सह ।
यच्च पिण्डं प्रयच्छन्ति यमलोके तदश्नुते ॥ ४
गतश्च नरकं पापात् स्वर्गं याति स्वपुण्यतः ।
पापकृद्‌याति नरकं पुण्यकृद्‌याति वै दिवम् ॥ ५
स्वर्गाच्च नरकात् त्यक्तः स्त्रीणां गर्भे भवत्यपि ।
नाभिभूतञ्च तस्यैव याति वीजद्वयं हि तत् ॥ ६
कललं बुद्बुदत्वञ्च ततः शोणितमेव च ।
पेश्या पलसमोऽण्डः स्यादङ्कुरस्तत उच्यते ॥ ७
उपाङ्गान्यङ्गुली-नेत्र-नासास्य-श्रवणानि च ।
प्ररोहं याति चाङ्गेभ्यस्तत्परन्तु नखादिकम् ॥ ८
त्वचो रोमाणि जायन्ते केशाश्चैव ततः परम् ।

(क) भृत्यं भर्त्तार एव चेति क्वचित् पाठः ।

नरस्याधोमुखः स्थित्वा द्वग्रमे च स जायते ॥ ९
ततस्तु वैष्णवी माया वृणोत्यत्यन्तमोहिनी ।
बालत्वन्तु कुमारत्वं यौवनं वृद्धतामपि ॥ १०
ततश्च मरणं तत्तद्धर्म्ममाप्नोति मानवः ।
एवं संसारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत् ॥ ११
नरकात् प्रतिमुक्तास्तु पापयोनिषु जायते ।
पतितात् प्रतिगृह्याथ अधोयोनिं व्रजेद्बुध ॥ १२
नरकात् प्रतिमुक्तास्तु कृमिर्भवति याचकः ।
उपाध्यायव्यलीकन्तु कृत्वा श्वा भवति द्विजः ॥ १३
तज्जायां मनसा वाञ्छंस्तद्द्रव्यं वाप्यसंशयम् ।
गर्द्दभो जायते जन्तुर्मित्रस्यैवापमानकृत् ॥ १४
पितरौ पीड़यित्वा तु कच्छपत्वञ्च जायते ।
भर्त्तुः पिण्डमुपाश्नस्तो हित्वाऽन्यानि निषेवयेत् ।
सोऽपि मोहसमापन्नो जायते वानरो मृतः ॥ १५
न्यासोपहर्त्ता नरकाद्विमुक्तो जायते कृमिः ॥ १६
असूयकश्च नरकान्मुक्तो भवति राक्षसः ।
विश्वासहर्त्ता च नरो मीनयोनौ प्रजायते ॥ १७
यवधान्यानि संहृत्य जायते मूषको मृतः ।
परदाराभिमर्षात् तु वृको घोरोऽभिजायते ॥ १८
भ्रातृभार्य्याप्रसङ्गत्वे कोकिलो जायते नरः ।
गुर्व्वादिभार्य्यागमनाच्छूकरो जायते नरः ॥ १९
यज्ञ-दान-विवाहानां विघ्नकर्त्ता भवेत् कृमिः ।
देवता-पितृ-विप्राणामदत्त्वा यः समश्नुते ।
प्रमुक्तो नरकाद्दापि वायसः स प्रजायते ॥ २०
ज्येष्ठभ्रातृपमानाच्च क्रौञ्चयोनौ प्रजायते ॥ २१
शूद्रस्तु ब्राह्मणीं गत्वा क्रिमियोनौ प्रजायते ।
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत् ॥ २२
कृतघ्नः क्रिमिकः कीटः पतङ्गो वृश्चिकस्तथा ।
अशस्त्रं पुरुषं हत्वा नरः सञ्जायते खरः ॥ २३
क्रिमिः स्त्रीवधकर्त्ता च बालहन्ता च जायते ।
भोजनं चोरयित्वा तु मक्षिका जायते नरः ॥ २४
हृत्वान्नञ्चैव मार्ज्जारस्तिलहृच्चैव मूषिकः ।
घृतं हृत्वा च नकुलः काको मद्गुरमामिषम् ॥ २५
मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः ।
अपो हृत्वा तु पापात्मा वायसः सम्प्रजायते ॥ २६
हृते कांस्ये च हारीतः कपोतो वा प्रजायते ।
हृत्वा तु काञ्चनं भाण्डं क्रिमियोनौ प्रजायते ॥ २७
कार्पासिके हृते क्रौञ्चो वह्निहर्त्ता बकस्तथा ।
मयूरो वर्णकं हृत्वा शाकं पत्रञ्च जायते ॥ २८
जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः ।
छुच्छुन्दरिः शुभान् गन्धान् वंशं हृत्वा शशो भवेत् ॥ २९
षण्ढः कलापहरणे काष्ठहृत् काष्ठकीटकः ।
पुष्पं हृत्वा दरिद्रस्तु पङ्गुर्यानकहृन्नरः ॥ ३०
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः ।
गृहहृन्नरकान् गत्वा रौरवादीन् सुदारुणान् ॥ ३१
तृण-गुल्म-लता-वल्ली-त्वक्सारतरुतां व्रजेत् ।
एष एव क्रमो दृष्टो गोसुवर्णादिहारिणाम् ॥ ३२
विद्यापहारी मूकश्च गत्वा च नरकान् बहून् ।
असमिद्धे हुते चाग्नौ मन्दाग्निः सम्प्रजायते ॥ ३३
परनिन्दा कृतघ्नत्वं परमर्म्मावघातनम् ।
नैष्ठुर्य्यं निर्घृणत्वञ्च परदारोपसेवनम् ॥ ३४
परस्वहरणाशौचं देवतानाञ्च कुत्सनम् ।
निकृत्या वञ्चनं नृणां कार्पण्यञ्च नृणां बुधः ।
उपलक्षणादि जानीयान्मुक्तानां नरकादनु ॥ ३५
दया भूतेषु संवादः परलोके प्रतिक्रिया ।
सत्यं हितार्थता चोक्तिर्वेदप्रामाण्यदर्शनम् ॥ ३६
गुरुदेवर्षिसिद्धर्षिसेवनं साधुसङ्गमः ।
सत्क्रियाभ्यसनं मैत्री स्वर्गिणां लक्षणं विदुः ।
अष्टाङ्गयोगविज्ञानात् प्राप्नोत्यात्यन्तिकं फलम् ॥ ३७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पाप-परिणामकथनं नामैकोनत्रिंशदधिक-द्विशततमोऽध्यायः ॥ २२९ ॥

---

## त्रिंशदधिकद्विशततमोऽध्यायः ।

सूत उवाच ।

वक्ष्ये साङ्गं महायोगं भुक्तिमुक्तिकरं परम् ।
सर्व्वपापप्रशमनं भक्त्यानुपठितं शृणु ॥ १
ममेति मूलं दुःखस्य न ममेति निवर्त्तते ।
दत्तात्रेयो ह्यलर्काय इममाह महामतिः ॥ २
अहमित्यङ्कुरोत्पन्नो ममेतिस्कन्धवान् महान् ।
गृहक्षेत्रोपशाखश्च पुत्रदाराभिपल्लवः ॥ ३

धनधान्यमहापत्रोऽनेककालार्हवर्द्धितः ।
पुण्यापुण्यसुपुष्पश्च सुखदुःखमहाफलः ।
विधिवत् सुखशान्त्यर्थं जातोऽज्ञानमहातरुः ॥ ४
संसाराध्वपरिश्रान्ता येऽत्र च्छायां समाश्रिताः ।
शान्तिज्ञानसुखासीनास्तेषामात्यन्तिकं कुतः ॥ ५
छित्त्वा विद्याकुठारेण ते गता लयमीश्वरे ।
प्राप्य ब्रह्मरसं पीतं नीरजस्कमकण्टकम् ॥ ६
प्राप्नुवन्ति पराः प्राज्ञाः सुखनिर्वृतिमेव च ।
मूर्त्तेन्द्रियमयं मूलं न त्वं राजा न चाप्यहम् ॥ ७
न तन्मात्रादिकं वाचा नैवान्तःकरणं तथा ।
कं वा पश्यसि राजेन्द्र प्रधानमिदमावयोः ॥ ८
अतः परेऽस्मि क्षेत्रज्ञः संजातोऽयं गुणात्मकः ।
एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनोर्नृप ॥ ९
ज्ञानपूर्व्ववियोगोऽसौ ज्ञाने नष्टे च योगिनः ।
सा मुक्तिर्ब्रह्मणा चैक्यमनैक्यं पुत्र ते गुणैः ॥ १०
तद्गृहं यत्र वसति तद्भोज्यं येन जीवति ।
यन्मुक्तये तदेवोक्तं ज्ञानमज्ञानमन्यथा ॥ ११
भवभोगेन पुण्यानामपुण्यानाञ्च पार्थिव ।
कर्त्तव्यानाञ्च नित्यानां क्षयन्त्वकरणात् तथा ॥ १२
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्या-परिग्रहौ ।
यमाः पञ्चाथ नियमाः शौचं द्विविधमीरितम् ॥ १३
सन्तोषस्तपसा शान्तिर्वासुदेवार्च्चनं दमः ।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥ १४
प्रत्येकं त्रिविधः सोऽपि पूर-कुम्भक-रेचकैः ।
लघुर्यो दशमात्रस्तु द्विगुणः स तु मध्यमः ॥ १५
त्रिगुणाभिस्तु मात्राभिरुत्तमः स उदाहृतः ।
जपध्यानयुतो गर्भो विपरीतस्त्वगर्भकः ॥ १६
प्रथमे जनयेत् स्वप्नं मध्यमेन च वेपथुः ।
विपाकं हि तृतीयो न जयेद्दोषाननुक्रमात् ॥ १७
आसनस्थन्तु युञ्जीत कृत्वा च प्रणवं हृदि ।
पार्ष्णिभ्यां लिङ्गवृषणौ स्पृशन्नेकाग्रमानसः ॥ १८
रजसा तमसो वृत्तिं सत्त्वेन रजसां तथा ।
निरुध्य निश्चलो वृत्तिं स्थितो युञ्जीत योगवित्॥१९
इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन् मन एव च ।
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ॥ २०
प्राणायामा दशाष्टौ च धारणा सा विधीयते ।
द्वे धारणे स्मृतो योगो योगिभिस्तत्त्वदर्शिभिः ॥ २१
प्राङ्नाड्यां हृदये चात्र तृतीया च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रे भ्रूमध्यमूर्द्धसु ॥ २२
किञ्चित् तस्मात् परस्मिंश्च धारणा दशधा स्मृताः ।
दशैता धारणाः प्राप्य प्राप्नोत्यक्षररूपताम् ॥ २३
यथाग्निरग्नौ संक्षिप्तस्तथात्मा परमात्मनि ।
ब्रह्मरूपं महापुण्यमोमित्येकाक्षरं जपेत् ॥ २४
अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ।
इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितम् ॥ २५
अहं ब्रह्म परं ज्योतिः स्थूलदेहविवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिर्जरामरणवर्ज्जितम् ॥ २६
अहं ब्रह्म परं ज्योतिः पृथिव्या मलवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिर्वाय्वाकाशविवर्ज्जितम् ॥ २७
अहं ब्रह्म परं ज्योतिः सूक्ष्मदेहविवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिः स्थानास्थानविवर्ज्जितम् ॥२८
अहं ब्रह्म परं ज्योतिर्गन्धमात्रविवर्ज्जितम् ।
अहं ब्रह्म परं ज्योती रूपमात्रविवर्ज्जितम् ॥ २९
अहं ब्रह्म परं ज्योतिः शब्दतन्मात्रवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिर्वाक्पाण्यादिविवर्ज्जितम् ॥ ३०
अहं ब्रह्म परं ज्योतिः श्रोत्रत्वक्परिवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिर्जिह्वा-घ्राणविवर्ज्जितम् ॥ ३१
अहं ब्रह्म परं ज्योतिः प्राणापानविवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिर्व्यानोदानविवर्ज्जितम् ॥ ३२
अहं ब्रह्म परं ज्योतिरज्ञानपरिवर्ज्जितम् ।
अहं ब्रह्म परं ज्योतिः स्वीस्वयं परमं पदम् ॥ ३३
देहेन्द्रिय-मनो-बुद्धि-प्राणाहङ्कारवर्ज्जितम् ।
नित्यशुद्धबुद्धियुक्तमहमानन्दमद्वयम् ।
अहं ब्रह्म परं ज्योतिर्ज्ञानरूपो विमुक्तये ॥ ३४

सूत उवाच ।

इत्यष्टाङ्गो मया योग उक्तः शौनक मुक्तिदः ।
नित्यनैमित्तिकं प्राप्य लयं प्राकृतबन्धनाः ॥ ३५
उत्पद्यन्ते हि संसारे नैकं प्राप्य परात्मनि ।
विमुच्यते विमुक्तश्च ज्ञानादज्ञानमोहितः ॥ ३६
ततो न म्रियते दुःखी न रोगी न च बन्धवान् ।
न पापैर्युज्यते योगी नरके न विपच्यते ॥ ३७
गर्भवासे महादुःखी नास्यान्नारायणोऽव्ययः ।

भक्त्या त्वनन्यया लभ्यो भगवान् भक्तिमुक्तिदः ॥३८
ध्यानेन पूजया जप्यैः सम्यक् स्तोत्रैर्यतव्रतैः।
यज्ञैर्दानैश्चित्तशुद्धिस्तया ज्ञानञ्च लभ्यते ॥ ३९
प्रणवादिकमन्त्रैश्च जप्यैर्मुक्तिं गता द्विजाः।
ध्रुव आराध्य भक्त्या च विष्णुं प्राप्तः परं पदम् ॥ ४०
प्रचेतसश्च स्रष्टारः कण्डुश्चारण्यभक्तिदः।
पुरुषोत्तममीशेशं मुक्तिं प्रापात्मनिर्म्मलः ॥ ४१
उद्धवोऽपि परं स्थानं नारदाद्याः परं पदम्।
इन्द्रोऽपि परमं स्थानं गन्धर्व्वाप्सरसो वराः ॥ ४२
प्राप्ता देवाश्च देवत्वं मुनित्वं मुनयो गताः।
गन्धर्व्वत्वञ्च गन्धर्व्वा राजत्वञ्च नृपादयः।
स्वर्गं स्वर्गपरः प्राप्तास्तमाराध्य जनार्द्दनम् ॥ ४३

इति श्रीगारुड़े पूर्व्वखण्डेऽष्टाङ्गयोगकथनं नाम त्रिंशदधिकद्विशततमोऽध्यायः॥२३०॥

---

## एकत्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

विष्णुभक्तिं प्रवक्ष्यामि यया सर्व्वमवाप्यते।
यथा भक्त्या हरिस्तुष्येत् तथा नान्येन केनचित् ॥ १
महतः श्रेयसो मूलं प्रणवः पुण्यसन्ततेः।
जीवितस्य फलं स्वादु नियतिस्मरणं हरेः ॥ २
भज इत्येष वै धातुः सेवायां परिकीर्त्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिसाधनभूयसी ॥ ३
ते भक्ता लोकनाथस्य नामकर्म्मादिकीर्त्तने।
मुञ्चन्त्यश्रूणि संहर्षाद्ये प्रहृष्टतनूरुहाः ॥ ४
जगद्धातुर्महेशस्य दिव्याद्याचरणाव्ययाः।
इह नित्यक्रियाः कुर्य्युः स्निग्धा ये वैष्णवास्तु ते ॥५
ब्रह्माचरं न शृण्वन् वै तथा भगवतेरितम्।
प्रणामपूर्व्वकं भक्त्या यो वदेद्वैष्णवो हि सः ॥ ६
तद्भक्तजनवात्सल्यं पूजायाञ्चानुमोदनम्।
तत्कथाश्रवणे प्रीतिः स्वर-नेत्राङ्गविक्रिया ॥ ७
येन सर्व्वात्मनो विष्णौ भक्त्या भावो निवेशितः।
विप्रेभ्योऽीश्वरदृष्टिश्च महाभागवतो हि सः ॥ ८
विष्णोश्च कारणं नित्यं तदन्नं दम्भवर्ज्जितम्।
स्वयमभ्यर्चनञ्चैव यो विष्णुञ्चोपजीवति।
भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छोऽपि वर्त्तते ॥९
स विप्रेन्द्रो मुनिः श्रीमान् स याति परमां गतिम्।
तस्मै देयं यतो ग्राह्यं स च पूज्यो यथा हरिः ॥१०
स्मृतः सम्भाषितोऽप्यापि पूजितो वा द्विजोत्तम।
पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया ॥ ११
प्रणताय प्रपन्नाय तवास्मीति च यो वदेत्।
अभयं सर्व्वभूतेभ्यो दद्यादेतद्व्रतं हरेः ॥ १२
मन्त्रयाजिसहस्रेभ्यः सर्व्ववेदान्तपारगः।
सर्व्ववेदान्तवित्कोट्या विष्णुभक्तो विशिष्यते ॥ १३
ऐकान्तिनश्च पुरुषा गच्छन्ति परमं पदम्।
एकान्तेनासमो विष्णुर्यस्मादेषां परायणः।
तस्मादैकान्तिनः प्रोक्तास्तद्भागवतचेतसः ॥ १४
प्रियाणामपि सर्व्वेषां देवदेवस्य सुप्रियः।
आपत्स्वपि सदा यस्य भक्तिरव्यभिचारिणी ॥ १५
या प्रीतिरविवेकानां विषयेष्वनपायिनी।
विष्णुं संस्मरतः सा मे हृदयान्नोपसर्पतु ॥ १६
अन्तर्गतोऽपि वेदानां सर्व्वशास्त्रार्थवेद्यपि।
यो न सर्व्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् ॥१७
नाधीतवेदशास्त्रोऽपि न कृतोऽध्वरसम्भवः।
यो भक्तिं वहते विष्णौ तेन सर्व्वं कृतं भवेत् ॥ १८
यज्वानः क्रतुमुख्यानां वेदानां पारगा अपि।
न तां यान्ति गतिं भक्ता यां यान्ति मुनिसत्तम ॥१९
यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽप्यनाश्रमी।
पुनाति सकलान् लोकान् सहस्रांशुरिवोदितः ॥२०
ये नृशंसा दुरात्मानः पापाचाररतास्तथा।
तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥ २१
दृढ़ा जनार्द्दने भक्तिर्यदैवाव्यभिचारिणी।
तदा कियत् स्वर्गसुखं सैव निर्व्वाणहेतुकी ॥ २२
भ्राम्यतां तत्र संसारे नराणां कर्म्मदुर्गमे।
हस्तावलम्बनो ह्येको भक्तितुष्टो जनार्द्दनः ॥ २३
न शृणोति गुणान् दिव्यान् देवदेवस्य चक्रिणः।
स नरो बधिरो ज्ञेयो सर्व्वधर्म्मवहिष्कृतः ॥ २४
नाम्नि संकीर्त्तिते विष्णोर्यस्य पुंसो न जायते।
शरीरं पुलकोद्भासि तद्भवेत् कुणपोपमम् ॥ २५
यस्मिन् स्मृते द्विजश्रेष्ठ मुक्तिरप्यचिराद्भवेत्।
विष्णौ निविष्टमनसां किं पुनर्द्विजनन्वयः ॥ २६

स्वपुरुषमभिवीच्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ २७
अपि चेत् सुदुराचारो भजते तमनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ २८
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं स गच्छति ।
विप्रेन्द्र प्रतिजानीहि विष्णुभक्तो न नश्यति ॥ २९
धर्म्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा हरौ ॥३०
दैवी ह्येषा गुणमयी हरेर्माया दुरत्यया ।
तमेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ३१
किं यज्ञाराधने पुंसां सिध्यते हरिमेधसः ।
भक्त्यैवाराध्यते विष्णुर्नान्यत् तत्रोपकारकम् ॥ ३२
न दानैर्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ।
तोषमेति महात्मासौ यथा भक्त्या जनार्द्दनः ॥ ३३
संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
कदाचित् केशवे भक्तिस्तद्भक्तैर्वा समागमः ॥ ३४
पत्रेषु पुष्पेषु फलेषु तोये-
ष्वकष्टलभ्येषु सदैव सत्सु ।
भक्त्यैकलभ्ये पुरुषे पुराणे
मुक्त्यै कथं न क्रियते प्रयत्नः ॥ ३५
आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवो मत्कुले जातः स नः सन्तारयिष्यति ॥ ३६
अज्ञानिनः सुरवरं समधिक्षिपन्तो
यं पापिनोऽपि शिशुपालसुयोधनाद्याः ।
मुक्तिं गताः स्मरणमात्रविधूतपापाः
कः संशयः परमभक्तिमतां जनानाम् ॥ ३७
शरणं तं प्रपन्ना ये ध्यानयोगविवर्ज्जिताः ।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥ ३८
भवोद्भवक्लेशशताहतस्तथा
परिभ्रमन्निन्द्रियरन्ध्रकैः पथैः ।
नियम्यतां माधव मे मनोहय-
स्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥ ३९
विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमानेषु तन्न जानन्ति मोहिताः ॥ ४०
वसति हृदि सनातने च तस्मिन्
भवति पुमान् जगतोऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनोऽन्तः
कथयति चारुतयैव शालपोतः ॥ ४१

इति श्रीगारुड़े पूर्व्वखण्डे भगवद्भक्तिकथनं नामैक-
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

---

## द्वात्रिंशदधिकद्विशततमोऽध्यायः ।

### सूत उवाच ।

मुक्तिहेतुमनाद्यन्तमजमव्ययमक्षयम् ।
यो नमेत् सर्व्वलोकस्य नमस्यो जायते नरः ॥ १
विष्णुमानन्दमद्वैतं विज्ञानं सर्व्वगं प्रभुम् ।
प्रणमामि सदा भक्त्या चेतसा हृदयालयम् ॥ २
योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् ।
तं सर्व्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् ॥ ३
शक्तौ नापि नमस्कारः प्रयुक्तश्चक्रपाणये ।
संसारदलवर्गाणामुद्वेजनकरो हि सः ॥ ४
कृष्णे स्फुरज्जलधरोदरचारुकृष्णे
लोकाधिकारिपुरुषे परमप्रमेये ।
एकोऽपि चारुगुणमात्रकृतप्रणामः
सद्यः श्वपाकमपि साधयितुं समर्थः ॥ ५
प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्च्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥ ६
दुर्गसंसारकान्ताराकूपारानभिधावताम् ।
एकः कृष्णे नमस्कारो मुक्त्या तांस्तारयिष्यति ॥ ७
आसीनो वा शयानो वा तिष्ठन् वा यत्र तत्र वा ।
नमो नारायणायेति मन्त्रैकशरणो भवेत् ॥ ८
नारायणेति शब्दोऽस्ति वागस्ति वशवर्त्तिनी ।
तथापि नरके मूढ़ाः पतन्तीति किमद्भुतम् ॥ ९
चतुर्म्मुखो वा यदि कोटिवक्त्रो
भवेन्नरः कोऽपि विशुद्धचेताः ।
स वै गुणानामयुतैकदेशं
वदेन्न वा देववरस्य विष्णोः ॥ १०
व्यासाद्या मुनयः सर्व्वे स्तुवन्तो मधुसूदनम् ।
मतिक्षयान्निवर्त्तन्ते न गोविन्दगुणक्षयात् ॥ ११

अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगो यथा।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ १२

स्वप्नेऽपि नाम स्मृतोऽपि पुंसः
क्षयं करोत्यक्षयपापराशिम्।
प्रत्यक्षतः किं पुनरत्र पुंसा
प्रकीर्त्तिते नाम्नि जनार्द्दनस्य ॥ १३

नमः कृष्णाच्युतानन्त वासुदेवेत्युदीरितम्।
यैर्भावभावितैर्विप्र न ते यमपुरं ययुः ॥ १४
क्षयो भवेद्यथा वह्नेस्तमसो भास्करोदये।
तथैव कलुषौघस्य नामसङ्कीर्त्तनाद्धरेः ॥ १५
क्व नाकपृष्ठगमनं पुनरायाति न क्षयम् ॥ १६
गच्छतां दूरमध्वानं कृष्णमूर्च्छितचेतसाम्।
पाथेयं पुण्डरीकाक्षनामसङ्कीर्त्तनं हरेः ॥ १७
संसारसर्पसन्दष्ट-विषचेष्टैकभेषजम्।
कृष्णेति वैष्णवं शान्तं जप्त्वा मुक्तो भवेन्नरः ॥ १८
ध्यायन् कृते जपन् मन्त्रैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संस्मृत्य केशवम् ॥ १९
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम्।
संसारसागरं तीर्त्वा स गच्छेद्वैष्णवं पदम् ॥ २०

विज्ञातदुष्कृतिसहस्रसमावृतोऽपि
श्रेयः परन्तु परिशुद्धिमभीप्समानः।
स्वप्नान्तरे न हि पुनश्च भवं स पश्ये-
न्नारायणस्तुतिकथापरमो मनुष्यः ॥ २१

इति श्रीगारुड़े पूर्व्वखण्डे नारायणनमस्कारो नाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥२३२॥

---

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

असारभूते संसारे सारमेकं विनिर्द्दिशेत्।
अशेषाशेषलोकस्य सारमाराधनं हरेः ॥ १
दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा।
अर्च्चितं स्याज्जगदिदं तेन सर्व्वं चराचरम् ॥ २
मातृवत् परिरक्षन्तं सृष्टिसंहारकारकम्।
यो न पूजयते विष्णुं तं विद्याद्ब्रह्मघातकम् ॥ ३
यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
तं यो न ध्यायते विष्णुं स विष्ठायां कृमिर्भवेत् ॥ ४
नरके पच्यमानस्तु यमेन परिभाषितः।
किं त्वया नार्च्चितो देवः केशवः क्लेशनाशनः ॥ ५
उदकेनाप्यभावेन द्रव्याणामर्च्चितः प्रभुः।
यो ददाति स्वकं लोकं स त्वया किं न चार्च्चितः ॥ ६
न तत् करोति सा माता न पिता नापि बान्धवः।
यत् करोति हृषीकेशः सन्तुष्टः श्रद्धयान्वितः ॥ ७
वर्णाश्रमाचारवता पुरुषेण परः पुमान्।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ ८
न दानैर्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः।
तोषमेति महात्मासौ यथा भक्त्या जनार्द्दनः ॥ ९
सम्पदैश्वर्य्यमाहात्म्यैः सन्तत्या न न कर्म्मणा।
विमुक्तैश्चैकता लभ्या मूलमाराधनं हरेः ॥ १०
प्रणामैस्तुष्यते विष्णुर्देत्तद्दे परमं धनम्।
अन्यथा वा विशेषेण कस्तमर्च्चितुमर्हति ॥ ११

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे पूजास्तुतिकथनं नाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

---

## चतुस्त्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

आलोक्य सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ १
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ २
षष्टिस्तीर्थसहस्राणि षष्टिस्तीर्थशतानि च।
नारायणप्रणामस्य कलां नार्हन्ति षोड़शीम् ॥ ३
प्रायश्चित्तान्यशेषाणि तपःकर्म्मादिकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ ४
कृते पापेऽनुतापश्च यस्य पुंसः प्रजायते।
प्रायश्चित्तन्तु तस्यैकं हरेः संस्मरणं परम् ॥ ५
मुहूर्त्तमपि यो ध्यायेन्नारायणमतन्द्रितः।
सोऽपि तद्गतिमाप्नोति किं पुनस्तत्परायणः ॥ ६
जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः।

या काचिन्मनसो वृत्तिः सा भवत्यच्युताश्रया ॥ ७
उत्तिष्ठन् निपतन् विष्णुं प्रलपन् विविशंस्तथा।
भुञ्जन् स्वपंश्च जाग्रच्च गोविन्दं माधवं स्मरेत् ॥ ८
स्वे स्वे कर्म्मण्यभिरतः कुर्य्याच्चित्तं जनार्द्दने।
एषा शास्त्रानुसारोक्तिः किमन्यैर्बहुभाषितैः ॥ ९
ध्यानमेव परो धर्म्मो ध्यानमेव परं तपः।
ध्यानमेव परं शौचं तस्माद्ध्यानपरो भवेत् ॥ १०
नास्ति विष्णोः परं ध्येयं तपो नानशनात् परम्।
तस्मात् प्रधानमत्रोक्तं वासुदेवस्य चिन्तनम् ॥ ११
यद्दुर्लभं परं प्राप्यं मनसो यन्न गोचरम्।
तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः ॥ १२
प्रमादात् कुर्व्वतां पुंसां प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ १३
ध्यानेन सदृशं नास्ति शोधनं पापकर्म्मणाम्।
आगामिदेहहेतूनां दाहको योगपावकः ॥ १४
निनिष्पन्नसमाधिस्तु मुक्तिमत्रैव जन्मनि।
प्राप्नोति योगी योगाग्निदग्धकर्म्मा च योऽचिरात् ॥ १५
यथाग्निरुद्यतशिखः कक्षं दहति सानिलः।
तथा चित्तस्थितो विष्णुर्योगिनां सर्व्वकिल्बिषम् ॥ १६
यथाग्नियोगात् कनकममलं सम्प्रजायते।
संश्लिष्टं वासुदेवेन मनुष्याणां तथा मनः ॥ १७
गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु।
यत् पापं विलयं याति स्मृते नश्यति तद्धरौ ॥ १८
प्राणायामसहस्रैस्तु यत् पापं नश्यति ध्रुवम्।
क्षणमात्रेण तत् पापं हरेर्ध्यानात् प्रणश्यति ॥ १९
एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते ध्यानवर्ज्जिते।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥ २०
कलिप्रभावो दुष्टोक्तिः पाषण्डानां तथोक्तयः।
न क्रामेन्मानसं तस्य यस्य चेतसि केशवः ॥ २१
सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः।
लग्नं तदेव विख्यातं यत्र प्रसमर्य्यते हरिः ॥ २२
सा हानिस्तन्महाच्छिद्रं सा चार्थजड़मूकता।
यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिन्त्यते ॥ २३
कलौ कृतयुगस्तस्य कलिस्तस्य कृते युगे।
हृदये यस्य गोविन्दो यस्य चेतसि नाच्युतः ॥ २४
यस्याग्रतस्तथा पृष्ठे गच्छतस्तिष्ठतोऽपि वा।
गोविन्दे नियतं चेतः कृतकृत्यः सदैव सः ॥ २५
वासुदेवे मनो यस्य जपहोमार्च्चनादिषु।
तस्यान्तरायो विप्रेन्द्र देवेन्द्रत्वादिकं फलम् ॥ २६
अत्यल्पज्य च गार्हस्थ्यं स तप्त्वा च महत् तपः।
छिनत्ति वैष्णवीं मायां केशवार्पितमानसः ॥ २७
क्षमां कुर्व्वन्ति क्रुद्धेषु दयां मूर्खेषु मानवाः।
मुदञ्च धर्म्मशीलेषु गोविन्दे हृदयस्थिते ॥ २८
ध्यायेन्नारायणं देवं स्नानदानादिकर्म्मसु।
प्रायश्चित्तेषु सर्व्वेषु दुष्कृतेषु विशेषतः ॥ २९
लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः।
येषामिन्दीवरश्यामो हृदयस्थो जनार्द्दनः ॥ ३०
कीटपक्षिगणानाञ्च हरौ संन्यस्तचेतसाम्।
ऊर्द्ध्वामेव गतिं मन्ये किं पुनर्ज्ञानिनां नृणाम् ॥ ३१
वासुदेवतरुच्छाया नातिशीता न घर्म्मदा।
नरकद्वारशमनी सा किमर्थं न सेव्यते ॥ ३२
न च दुर्व्वाससः शापो राज्यञ्चापि शचीपतेः।
हन्तुं समर्थौ विप्रेन्द्र हृत्कृते मधुसूदने ॥ ३३
वदतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म्म कुर्व्वतः।
नापयाति यदा चिन्ता सिद्धां मन्येत धारणाम् ॥ ३४

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ३५

किमत्र बहुनोक्तेन युष्माकमधुना हरिम्।
स्मरताहर्निशं विष्णुमशेषदुरितापहम् ॥ ३६
न हि ध्यानेन सदृशं पवित्रमिह विद्यते।
श्वपचान्नानि भुञ्जानोऽन पापेनैव लिप्यते ॥ ३७
सदा चित्तं समासक्तं जन्तोर्विषयगोचरे।
यदि नारायणेऽप्येवं को न मुच्येत बन्धनात् ॥ ३८
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ३९
तत्रानया धारणया योगिनो यान्ति ये लयम्।
संसारकर्म्मणोऽप्येते यान्ति निर्व्वीजतां द्विजाः ॥ ४०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे
ध्यान-स्तुतिर्नाम चतुस्त्रिंशदधिक-
द्विशततमोऽध्यायः ॥ २३४ ॥

## पञ्चत्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

विष्णुभक्तिर्यस्य चित्ते कं वा जीवो नमेत् सदा।
स तारयति चात्मानं तथैव दुरितार्णवात् ॥ १
तज्ज्ञानं यत्र गोविन्दः सा कथा यत्र केशवः।
तत् कर्म्म यत् तदर्थाय किमन्यैर्बहुभाषितः ॥ २
सा जिह्वा या हरिं स्तौति तच्चित्तं यत् तदर्पितम्
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ ३
प्रणाममीशस्य शिरःफलं विदु-
स्तदर्च्चनं पाणिफलं दिवौकसः।
मनःफलं तद्गुणकर्म्मचिन्तनं
वचस्तु गोविन्दगुणस्तवः फलम् ॥ ४
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्म्मणः।
केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति ॥ ५
यत् किञ्चित् कुरुते कर्म्म पुरुषः साध्वसाधु वा।
सर्व्वं नारायणे न्यस्य कुर्व्वन्नपि न लिप्यते ॥ ६
तृणादिचतुरास्यान्तं भूतग्रामं चतुर्व्विधम्।
चराचरं जगत् सर्व्वं प्रसुप्तं मायया तव ॥ ७
यस्मिन् न्यस्तमतिर्न याति नरकं
स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र न वेशितात्ममनसो
ब्राह्मोऽपि लोकोऽल्पकः।
मुक्तिं चेतसि संस्थितो जड़धियां
पुंसां ददात्यव्ययः
किं चित्रं दुरितं प्रयाति विलयं
तत्राच्युते कीर्त्तिते ॥ ८
महता पुण्यपुञ्जेन येन क्रीतोऽखिलं भुवम्।
तस्य विष्णोः प्रसादेन इह कश्चित् प्रबुध्यति ॥ ९
अग्निकार्य्यं जपं स्नानं विष्णोर्ध्यानञ्च पूजनम्।
गन्तुं दुःखोदधेः पारं कुर्य्युर्येऽत्र तरन्ति ते ॥ १०
राष्ट्रस्य शरणं राजा पितरौ बालकस्य च।
धर्म्मश्च सर्व्वमर्त्यानां सर्व्वस्य शरणं हरिः ॥ ११
ये नमन्ति जगद्योनिं वासुदेवं सनातनम्।
न तेभ्यो विद्यते तीर्थमधिकं मुनिसत्तम ॥ १२
अनर्वरत्नपूजाञ्च कुर्य्यात् स्वाध्यायमेव च।
तमेवोद्दिश्य गोविन्दं ध्यानं नित्यमतन्द्रितः ॥ १३
शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा।
द्विजजातिसमं मन्ये न याति नरकं नरः ॥ १४
आदरेण सदा स्तौति धनवन्तं धनेच्छया।
तथा विश्वस्य कर्त्तारं को न मुच्येत बन्धनात् ॥ १५
यथा जातबलो वह्निर्दहत्यार्द्रमपीन्धनम्।
तथाविधः स्मृतो विष्णुर्योगिनां सर्व्वकिल्बिषम् ॥ १६
आदीप्तं पर्व्वतं यद्वन्नाश्रयन्ति मृगादयः।
तद्वत् पापानि सर्व्वाणि योगाभ्यासरतं नरम् ॥ १७
यस्य यावांश्च विश्वासस्तस्य सिद्धिस्तु तावती।
एतावानेव कृष्णस्य प्रभावः परिमीयते ॥ १८
विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन्।
शिशुपालो गतस्तत्त्वं किं पुनस्तत्परायणः ॥ १९
अयं देवो मुनिर्वन्द्य एष ब्रह्मा वृहस्पतिः।
इत्याख्या जायते तावद्यावन्नार्च्चयते हरिम् ॥ २०

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे विष्णु-
माहात्म्यकथनं नाम पञ्चत्रिंशदधिक-
द्विशततमोऽध्यायः ॥ २३५ ॥

---

## षट्त्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

नारसिंहस्तुतिं वक्ष्ये शिवोक्तां शौनकाधुना।
पूर्व्वं मातृगणाः सर्व्वे शङ्करं वाक्यमब्रुवन् ॥ १
भगवन् भक्षयिष्यामः सदेवासुरमानुषम्।
त्वत्प्रसादाज्जगत् सर्व्वं तदनुज्ञातुमर्हसि ॥ २
शङ्कर उवाच।
भवतीभिः प्रजाः सर्व्वा रक्षणीया न संशयः।
तस्माद्घोरतरप्रायं मनः शीघ्रं निवर्त्त्यताम् ॥ ३
सूत उवाच।
इत्येवं शङ्करेणोक्तमनादृत्य तु तद्वचः।
भक्षयामासुरव्यग्रास्त्रैलोक्यं सचराचरम् ॥ ४
त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै।
नृसिंहरूपिणं देवं प्रदध्यौ भगवान् शिवः ॥ ५
अनादिनिधनं देवं सर्व्वभूतभवोद्भवम्।
विद्युज्जिह्वं महादंष्ट्रं स्फुरत्केशरसङ्कटम्।

कल्पान्तमारुतक्षुब्ध-सप्तार्णवमहास्वनम्॥ ६
कल्पान्ततीक्ष्णनखरचारुणा दारिताननम्।
मेरुशैलप्रतीकाशमुद्यार्कसमीक्षणम्॥ ७
हिमाद्रिशिखराकारं चारुदंष्ट्रोज्ज्वलाननम्।
सुत्रूवितातिरोषाग्नि-ज्वालाकेशरमालिनम्॥ ८
रत्नाङ्गदं सुमुकुटं हेमकेशरभूषितम्।
श्रोणिसूत्रेण महता काञ्चनेन विराजितम्॥ ९
नीलोत्पलदलश्यामं रत्ननूपुरभूषितम्।
तेजसाक्रान्तसकल-ब्रह्माण्डोदरमण्डपम्॥ १०
आवर्त्तसदृशाकारैः संयुतं देहरोमभिः।
सर्व्वपुष्पविचित्राञ्च धारयंश्च महास्रजम्॥ ११
स ध्यातमात्रो भगवान् प्रददौ तस्य दर्शनम्।
यादृशेनैव रूपेण ध्यातो रुद्रैस्तु भक्तितः॥ १२
तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः।
प्रणिपत्य तु देवेशं तदा तुष्टाव शङ्करः॥ १३

शङ्कर उवाच।

नमस्तेऽस्तु जगन्नाथ नरसिंहवपुर्द्धर।
दैत्येश्वरान्त्रसम्पूर्ण-नखशुक्तिविराजित॥ १४
नमः सकलसंलग्न-हेमपिङ्गलविग्रह।
नमोऽस्तु पद्मनाभाय शोभनाय जगद्गुरो॥ १५
कल्पान्ताम्भोदनिर्घोष सूर्य्यकोटिसमप्रभ।
सहस्रयमसन्त्रास सहस्रेन्द्रपराक्रम॥ १६
सहस्रधनदस्फीत सहस्रवरुणात्मक।
सहस्रचन्द्रप्रतिम सहस्रग्रहविक्रम॥ १७
सहस्ररुद्रतेजस्क सहस्रब्रह्मसंस्तुत।
सहस्ररुद्रसंजप्त सहस्राक्षनिरीक्षण॥ १८
सहस्रजन्ममथन सहस्रबन्धमोचन।
सहस्रवायुवेगोग्र सहस्राक्ष कृपाकर॥ १९

सूत उवाच।

स्तुत्वैवं देवदेवेशं नृसिंहवपुषं हरिम्।
विज्ञापयामास पुनर्विनयावनतः शिवः॥ २०

शङ्कर उवाच।

अन्धकस्य विनाशाय याः सृष्टा मातरो मया।
अनादृत्य तु मद्वाक्यं भक्षयन्त्यद्भुताः प्रजाः॥ २१
सृष्ट्वा ताश्च न शक्तोऽहं संहर्त्तुमपराजित।
पूर्व्वं कृत्वा कथं तासां विनाशमभिरोचये॥ २२

सूत उवाच।

एवमुक्तः स रुद्रेण रौद्रान् मातृगणान् विभुः।
संहृत्य जगतः शर्म्म कृत्वा चान्तरधीयत॥ २३
नारसिंहमिदं स्तोत्रं यः पठेन्नियतेन्द्रियः।
मनोरथप्रदस्तस्य रुद्रस्येव न संशयः॥ २४

ध्यायेन्नृसिंहं तरुणार्कनेत्रं
सिताम्बुजातं ज्वलिताग्निवक्त्रम्।
अनादिमध्यान्तमजं पुराणं
परावरेशं जगतां निधानम्॥ २५
जपेदिदं सन्ततदुःखजालं
जहाति नीहारमिवांशुमाली।
समातृवर्गस्य हरोऽतिमूर्त्ति-
र्यदा यदा तिष्ठति तत्समीपे॥ २६
देवेश्वरस्यापि नृसिंहमूर्त्तेः
पूजां विधातुं त्रिपुरान्तकारी।
प्रसाद्य तं देववरं स लब्ध्वा
अव्याज्जगन्मातृगणेभ्य एव॥ २७

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे नरसिंहस्तवकथनं नाम षट्त्रिंशदधिकद्विशततमोऽध्या[य]ः॥ २३६॥

---

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

ज्ञानामृतं प्रवक्ष्यामि स्तोत्रं यत् तु हरोऽब्रवीत्।
पृष्टः श्रीनारदेनैव नारदाय तथा शृणु॥ १

नारद उवाच।

यः संसारे सदा द्वन्द्वैः कामक्रोधैः शुभाशुभैः।
शब्दादिविषयैर्बद्धः पीड्यमानः स दुर्म्मतिः॥ २
कथं विमुच्यते जन्तुर्मृत्युसंसारसागरात्।
भगवोऽच्छ्रोतुमिच्छामि त्वत्तो हि त्रिपुरान्तक॥ ३
तस्य तद्वचनं श्रुत्वा नारदस्य त्रिलोचनः।
उवाच तमृषिं शम्भुः प्रसन्नवदनो हरः॥ ४

महेश्वर उवाच।

ज्ञानामृतं परं गुह्यं रहस्यमृषिसत्तम।
वक्ष्यामि शृणु दुःखघ्नं भवबन्धभयापहम्॥ ५

तृणादि-चतुरास्यान्तं भूतग्रामं चतुर्व्विधम्।
चराचरं जगत् सर्व्वं प्रसुप्तं यस्य मायया॥ ६
तस्य विष्णोः प्रसादेन यदि कश्चित् प्रबुध्यति।
स निस्तरति संसारं देवानामपि दुस्तरम्॥ ७
भोगैश्वर्य्यमदोन्मत्तस्तत्त्वज्ञानपराङ्मुखः।
संसारमोहपङ्के वै जीवो गौरिव मज्जति॥ ८
पुत्रदारकुटम्बेषु सक्ताः सीदन्ति जन्तवः।
सर्व्वे एकार्णवे मग्ना जीर्णा वनगजा इव॥ ९
यस्त्वात्मानं निबध्नाति दुर्म्मतिः कोषकारवत्।
तस्य मुक्तिं न पश्यामि जन्मकोटिशतैरपि॥ १०
तस्मान्नारद सर्व्वेशं देवानां देवमव्ययम्।
आराधयेत् सदा सम्यग्ध्यायेद्विष्णुं समाहितः॥११
यस्तु विश्वमनाद्यन्तमजमात्मनि संस्थितम्।
सर्व्वज्ञमचलं विष्णुं सदा ध्यायन् विमुच्यते॥ १२
क्रतुं मर्त्यपरं ज्ञेयं व्यक्ताव्यक्तं सनातनम्।
निष्कलं नोरुजं विष्णुं सदा ध्यायन् विमुच्यते॥१३
सुगुह्यं शङ्करं नित्यं निर्गुणं तमसः परम्।
सर्व्वदृक्शाश्वतं विष्णुं सदा ध्यायन् विमुच्यते॥१४
अशरीरं विधातारं सर्व्वज्ञानमनोरतिम्।
अचलं सर्व्वगं विष्णुं सदा ध्यायन् विमुच्यते॥ १५
निर्व्विकल्पं निराभासं निष्प्रपञ्चं निरामयम्।
वासुदेवं गुरुं विष्णुं सदा ध्यायन् विमुच्यते॥ १६
अतीन्द्रियमनिर्द्देश्यमचिन्त्यमपराजितम्।
तं विज्ञानमजं विष्णुं सदा ध्यायन् विमुच्यते॥ १७
निर्म्ममं निरहङ्कारं निर्द्वन्द्वं नियतेन्द्रियम्।
निर्म्मुक्तोपाधिकं विष्णुं सदा ध्यायन् विमुच्यते॥१८
जन्म-मृत्यु-जरातीतं निर्व्विकारं सनातनम्।
निर्व्वीजमभयं विष्णुं सदा ध्यायन् विमुच्यते॥ १९
सर्व्वभावविनिर्म्मुक्तमप्रमेयमलक्षणम्।
निर्व्वीजमनघं विष्णुं सदा ध्यायन् विमुच्यते॥ २०
अमृतं परमानन्दं सर्व्वपापविवर्ज्जितम्।
अप्रतर्क्यं महाविष्णुं सदा ध्यायन् विमुच्यते॥ २१
शुभाशुभविनिर्म्मुक्तमूर्म्मिषट्कविवर्ज्जितम्।
तं वेद्यममलं विष्णुं सदा ध्यायन् विमुच्यते॥ २२
स्वरूपं सत्यसङ्कल्पं शुद्धमासनतत्परम्।
एकाग्रमनसा विष्णुं सदा ध्यायन् विमुच्यते॥ २३
वागतीतं त्रिकालज्ञं विश्वेशं लोकसाक्षिणम्।
सर्व्वस्मादुत्तमं विष्णुं सदा ध्यायन् विमुच्यते॥ २४
अवितर्क्यमविज्ञेयमचरादिमसंहतम्।
एकं निरन्तरं पुंसां सदा ध्यायन् विमुच्यते॥ २५
विश्वाख्यं विश्वगोप्तारं सुहृदं सर्व्वकामदम्।
स्थानत्रयातिगं विष्णुं सदा ध्यायन् विमुच्यते॥ २६
सर्व्वदुःखक्षयकरं सर्व्वशान्तिकरं हरिम्।
सर्व्वपापहरं विष्णुं सदा ध्यायन् विमुच्यते॥ २७
ब्रह्मादिदेवगन्धर्व्वैर्मुनिभिः सिद्धचारणैः।
योगिभिः सेवितं विष्णुं सदा ध्यायन् विमुच्यते॥२८
संसारबन्धनान्मुक्तिमिच्छन् कामांश्च पुष्कलान्।
स्तुत्वैवं वरदं विष्णुं सदा ध्यायन् विमुच्यते।
संसारबन्धनात् सोऽपि मुक्तिमिच्छन् समाहितः॥२९
विष्णौ प्रतिष्ठितं विश्वं विष्णुर्व्विश्वे प्रतिष्ठितः।
विश्वेश्वरमजं विष्णुं सदा ध्यायन् विमुच्यते॥३०

सूत उवाच।

नारदेन पुरा पृष्ट एवं स वृषभध्वजः।
यत् तेन तस्मै व्याख्यातं तन्मया कथितं तव॥३१
तमेव सततं ध्यायन् निर्व्ययं ब्रह्म निष्कलम्।
अवाप्स्यसि ध्रुवं तात शाश्वतं पदमव्ययम्॥ ३२
अश्वमेधसहस्राणि वाजपेयशतानि च।
क्षणमेकाग्रचित्तस्य कलां नार्हन्ति षोडशीम्॥३३
श्रुत्वा सुरऋषिर्विष्णोः प्राधान्यमीदमिश्वरात्।
स विष्णुं सम्यगाराध्य सिद्धेः पदमवाप्तवान्॥३४
यः पठेच्छृणुयाद्वापि नित्यमेव स्तवोत्तमम्।
कोटिजन्मकृतं पापमपि तस्य प्रणश्यति॥ ३५
विष्णोः स्तवमिदं दिव्यं महादेवेन कीर्त्तितम्।
प्रयत्नाद्यः पठेन्नित्यममृतत्वं स गच्छति॥ ३६

इति श्रीगारुड़े पूर्व्वखण्डे ज्ञानामृतकथने सप्तत्रिंशदधिकद्विशततमोऽध्यायः॥ २३७॥

---

## अष्टत्रिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

स्तोत्रं तत् सम्प्रवक्ष्यामि मार्कण्डेयेन भाषितम्।
नारायणं सहस्राक्षं पद्मनाभं पुरातनम्।

प्रपन्नोऽस्मि हृषीकेशं किं मे मृत्युः करिष्यति ॥ १
गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम्।
श्रीमवच्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ २
वासुदेवं जगन्नाथं भानुमन्तमतीन्द्रियम्।
दामोदरं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ३
शङ्खचक्रधरं देवं व्यक्तरूपिणमव्ययम्।
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ४
वराहं वामनं विष्णुं नारसिंहं जनार्दनम्।
माधवञ्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ५
पुरुषं पुष्करं पुण्यं क्षेत्रबीजं जगत्पतिम्।
लोकनाथं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ६
सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम्।
महायोगं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ७
भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम्।
विश्वरूपं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥ ८
इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनः।
अपयातस्ततो मृत्युर्विष्णुदूतैः प्रपीड़ितः ॥ ९
इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता।
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् ॥ १०
मृत्यष्टकमिदं पुण्यं मृत्युप्रशमनं शुभम्।
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥ ११
इदं यः पठते भक्त्या (क) त्रिकालं नियतं शुचिः।
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ॥ १२

हृत्पद्ममध्ये पुरुषं पुराणं
नारायणं शाश्वतमादिदेवम् (ख)।
विचिन्त्य सूर्यादतिराजमानं
मृत्युं स योगी जितवांस्तथैव ॥ १३

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे मृत्यष्टकस्तोत्रकथनं नामाष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

(क) स्तोत्रमिति पाठान्तरम्।
(ख) अप्रमेयमिति पाठान्तरम्।

## एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः।

सूत उवाच।

वक्ष्येऽहमच्युतस्तोत्रं शृणु शौनक सर्व्वदम्।
ब्रह्मा पृष्टो नारदाय यथोवाच तथापरम् ॥ १

नारद उवाच।

यथाक्षयोऽव्ययो विष्णुः स्तोतव्यो वरदो मया।
प्रत्यहञ्चार्च्चनाकाले तथा त्वं वक्तुमर्हसि ॥ २
ते धन्यास्ते सुजन्मानस्ते हि सर्व्वसुखप्रदाः।
सफलं जीवितं तेषां ये स्तुवन्ति सदाच्युतम् ॥ ३

ब्रह्मोवाच।

मुने स्तोत्रं प्रवक्ष्यामि वासुदेवस्य मुक्तिदम्।
शृणु येन स्तुतः सम्यक् पूजाकाले प्रसीदति ॥ ४
ओं भगवते वासुदेवाय नमः सर्व्वापहारिणे।
नमो विशुद्धदेहाय नमो ज्ञानस्वरूपिणे ॥ ५
नमः सर्व्वसुरेशाय नमः श्रीवत्सधारिणे।
नमश्चर्म्मासिहस्ताय नमः पङ्कजमालिने ॥ ६
नमो विश्वप्रतिष्ठाय नमः पीताम्बराय च।
नमो नृसिंहरूपाय वैकुण्ठाय नमो नमः ॥ ७
नमः पङ्कजनाभाय नमः क्षीरोदशायिने।
नमः सहस्रशीर्षाय नमो नागाङ्गशायिने ॥ ८
नमः परशुहस्ताय नमः क्षत्रान्तकारिणे।
नमः सत्यप्रतिज्ञाय पूजिताय नमो नमः ॥ ९
नमस्त्रैलोक्यनाथाय नमश्चक्रधराय च।
नमः शिवाय सूक्ष्माय पुराणाय नमो नमः ॥ १०
नमो वामनरूपाय बलिराज्यापहारिणे।
नमो यज्ञवराहाय गोविन्दाय नमो नमः ॥ ११
नमस्ते परमानन्द नमस्ते परमाक्षर।
नमस्ते ज्ञानसद्भाव नमस्ते ज्ञानदायक।
नमस्ते परमाद्वैत नमस्ते पुरुषोत्तम ॥ १२
नमस्ते विश्वकृद्देव नमस्ते विश्वभावन।
नमस्तेऽस्तु विश्वनाथ नमस्ते विश्वकारण ॥ १३
नमस्ते मधुदैत्यघ्न नमस्ते रावणान्तक।
नमस्ते कंस-केशिघ्न नमस्ते कैटभार्द्दन ॥ १४
नमस्ते शतपत्राक्ष नमस्ते गरुड़ध्वज।
नमस्ते कालनेमिघ्न नमस्ते गरुड़ासन ॥ १५

नमस्ते देवकीपुत्र नमस्ते वृष्णिनन्दन।
नमस्ते रुक्मिणीकान्त नमस्तेऽदितिनन्दन।
नमस्ते गोकुलावास नमस्ते गोकुलप्रिय ॥ १६
जय गोपवपुः कृष्ण जय गोपीजनप्रिय।
जय गोवर्द्धनाधार जय गोकुलवर्द्धन ॥ १७
जय बाणशरीरघ्न जय चाणूरनाशन।
जय वृष्णिकुलोद्योत जय कालीयमर्द्दन ॥ १८
जय सत्य जगत्साक्षिन् जय सर्व्वार्थसाधक।
जय वेदान्तविद्वेद्य जय सर्व्वद माधव ॥ १९
जय सर्व्वाश्रयाव्यक्त जय सर्व्वगताव्यय।
जय सूक्ष्मचिदानन्द जय चित्तनिरञ्जन ॥ २०
जयस्तेऽस्तु निरालम्ब जय शान्त सनातन।
जय नाथ जगत्पूज्य जय विष्णो नमोऽस्तु ते ॥ २१
त्वं गुरुस्त्वं हरे शिष्यस्त्वं दीक्षामन्त्रमण्डलम्।
त्वं न्यासमुद्रासमयस्त्वञ्च पुष्पादिसाधनम् ॥ २२
त्वमाधारस्त्वमनन्तस्त्वं कूर्म्मस्त्वं धराम्बुजम्।
धर्म्मज्ञानादयस्त्वं हि वेदिमण्डलशक्तयः ॥ २३
त्वं प्रभो छलभृद्रामस्त्वं पुनः शम्बरान्तकः।
त्वं ब्रह्मर्षिश्च देवस्त्वं विष्णुः सत्यपराक्रमः ॥ २४
त्वं नृसिंहः परानन्दो वराहस्त्वं धराधरः।
त्वं सुपर्णस्तथा चक्रस्त्वं गदा शङ्ख एव च ॥ २५
त्वं श्रीस्त्वञ्च प्रभो पुष्टिस्त्वं माला देव शाश्वती।
श्रीवत्सः कौस्तुभस्त्वं हि शार्ङ्गं त्वञ्च तथेषुधी ॥ २६
त्वं खड्गचर्म्मणा सार्द्धं त्वं दिक्पालास्तथा प्रभो।
त्वं वेधास्त्वं विधाता च त्वं यमस्त्वं हुताशनः ॥ २७
त्वं धनेशस्त्वमीशानस्त्वमिन्द्रस्त्वमपां पतिः।
त्वं रक्षोऽधिपतिः साध्यस्त्वं वायुस्त्वं निशाकरः ॥ २८
आदित्या वसवो रुद्राश्चाश्विनौ मरुद्गणाः।
त्वं दैत्या दानवा नागास्त्वं यक्षा राक्षसाः खगाः ॥ २९
गन्धर्व्वाप्सरसः सिद्धाः पितरस्त्वं सहामराः।
भूतानि विषयस्त्वं हि त्वमव्यक्तेन्द्रियाणि च ॥ ३०
मनो बुद्धिरहङ्कारः क्षेत्रज्ञस्त्वं हृदीश्वरः।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः समित् कुशः ॥ ३१
त्वं वेदी त्वं हरे दीक्षा त्वं यूपस्त्वं हुताशनः।
त्वं पत्नी त्वं पुरोडाशस्त्वं शाला त्वं स्रुचः स्रुवः ॥ ३२
ग्रावाणश्च समस्तं हि सदस्यस्त्वं सदक्षिणाः।
त्वं शूर्पादिस्त्वञ्च ब्रह्मा मुषलोलूखले ध्रुवम् ॥ ३३
त्वं होता यजमानस्त्वं त्वं धान्यः पशुयाजकः।
त्वमध्वर्य्युस्त्वमुद्गाता त्वं यज्ञः पुरुषोत्तमः ॥ ३४
दिक्-पाताल-मही-व्योम द्यौः सनक्षत्रतारका।
देवतिर्य्यङ्मनुष्येषु जगदेतच्चराचरम् ॥ ३५
यत् किञ्चिद्दृश्यते देव ब्रह्माण्डमखिलं जगत्।
तव रूपमिदं सर्व्वं दृष्ट्यर्थं सम्प्रकाशितम् ॥ ३६
नाथ यत् ते परं रूपं देवैरपि दुरासदम्।
कस्तज्जानाति विमलं योगिगम्यमतीन्द्रियम् ॥ ३७
अव्ययं पुरुषं नित्यमव्यक्तमजमव्ययम्।
प्रलयोत्पत्तिरहितं सर्व्वव्यापिनमीश्वरम् ॥ ३८
सर्व्वज्ञं निर्गुणं शुद्धमानन्दमजरं परम्।
बोधरूपं ध्रुवं शान्तं पूर्णमद्वैतमक्षरम् ॥ ३९
अवतारेषु या मूर्त्तिर्विदूरे देव दृश्यते।
परं भावमजानन्तस्त्वां भजन्ति दिवौकसः ॥ ४०
कथं त्वामीदृशं सूक्ष्मं शक्नोमि पुरुषोत्तम।
आराधयितुमीशान मनोगम्यमगोचरम् ॥ ४१
इह यन्मण्डले नाथ पूज्यते विधिवद्द्रुमैः।
पुष्पधूपादिभिर्यत्तत् तव सर्व्वा विभूतयः।
सङ्कर्षणादिभेदेन तव यत् पूजिता मया ॥ ४२
यत् कृतं जपहोमादि असाध्यं पुरुषोत्तम।
क्षन्तुमर्हसि तत् सर्व्वं यत् कृतं न कृतं मया ॥ ४३
न शक्नोमि विभो सम्यक् तव पूजां यथोदिताम्।
विनिष्पादयितुं भक्त्या अतस्त्वां क्षमयाम्यहम् ॥ ४४
दिवारात्रौ च सन्ध्यायां सर्व्वावस्थासु चेष्टतः।
अचला तु हरे भक्तिस्तवाङ्घ्रियुगले मम ॥ ४५
शरीरे न तथा प्रीतिर्न च धर्म्मादिकेषु च।
यथा त्वयि जगन्नाथ प्रीतिरात्यन्तिकी मम ॥ ४६
किं तेन न कृतं कर्म्म स्वर्गमोक्षादिसाधनम्।
यस्य विष्णौ दृढ़ा भक्तिः सर्व्वकामफलप्रदे ॥ ४७
पूजां कर्त्तुं तथा स्तोत्रं कः शक्नोति तवाच्युत।
स्तुतन्तु पूजितं मेऽद्य तत् क्षमस्व नमोऽस्तु ते ॥ ४८
इति चक्रधरस्तोत्रं मया सम्यगुदाहृतम्।
स्तुहि विष्णुं मुने भक्त्या यदीच्छसि परं पदम् ॥ ४९
स्तोत्रेणानेन यः स्तौति पूजाकाले जगद्गुरुम्।
अचिराल्लभते मोक्षं छित्त्वा संसारबन्धनम् ॥ ५०

कन्योऽपि यो जपेद्भक्त्या त्रिसन्ध्यं नियतः शुचिः ।
इदं स्तोत्रं मुने सोऽपि सर्व्वकाममवाप्नुयात् ॥ ५१
पुत्रार्थी लभते पुत्रान् बद्धो मुच्येत बन्धनात् ।
रोगाद्विमुच्यते रोगी निर्द्धनो लभते धनम् ॥ ५२
विद्यार्थी लभते विद्यां यशः कीर्त्तिञ्च विन्दति ।
जातिस्मरत्वं मेधावी यद्यदिच्छति चेतसा ॥ ५३
स धन्यः सर्व्ववित् प्राज्ञः स साधुः सर्व्वकर्म्मकृत् ।
स सत्यवाक् शुचिर्दाता यः स्तौति पुरुषोत्तमम् ॥५४
अस्वाध्या हि ते सर्व्वे सर्व्वधर्म्मविवर्ज्जिताः ।
येषां प्रवर्त्तनं नास्ति हरिमुद्दिश्य सत्क्रियाः ॥ ५५
नाशौचं विद्यते तस्य मनो वाक् च दुरात्मनः ।
यस्य सर्व्वार्थदे विष्णौ भक्तिर्नाव्यभिचारिणी ॥५६
आराध्य विधिवद्देवं हरिं सर्व्वसुखप्रदम् ।
प्राप्नोति पुरुषः सम्यग्यद्यत् प्रार्थयते फलम् ॥ ५७

असुर-विबुधसिद्धैर्ज्ञायते यस्य नान्तः ।
सकलमुनिभिरार्य्यश्चिन्त्यते यो हि सिद्धः ।
निखिलहृदि निविष्टं वेत्ति यः सर्व्वसाक्षी ।
तमजममृतमीशं वासुदेवं नतोऽस्मि ॥ ५८
निखिलभुवननाथं शाश्वतं सुप्रसन्नं
अतिविमलविशुद्धं निर्गुणं भावपुष्पैः ।
सुखमुदितसमस्तं पूजयाम्यात्मभावं
विशतु हृदयपद्मे सर्व्वसाक्षी चिदात्मा ॥ ५९

एवं मयोक्तं परमप्रभाव-
माद्यन्तहीनस्य परस्य विष्णोः ।
तस्माद्विचिन्त्यः परमेश्वरोऽसौ
विमुक्तिकामेन नरेण सम्यक् ॥ ६०
बोधस्वरूपं पुरुषं पुराण-
मादित्यवर्णं विमलं विशुद्धम् ।
सञ्चिन्त्य विष्णुं परमद्वितीयं
कस्तत्र योगी न लयं प्रयाति ॥ ६१
इमं स्तवं यः सततं मनुष्यः
पठेच्च तद्वत् प्रयतः प्रशान्तः ।
स धौतपाप्मा विततप्रभावः
प्रयाति लोकं विततं मुरारेः ॥ ६२
यः प्रार्थयत्यर्थमशेषसौख्यं
धर्म्मञ्च कामञ्च तथैव मोक्षम् ।
स सर्व्वमुत्सृज्य परं पुराणं
प्रयाति विष्णुं शरणं वरेण्यम् ॥ ६३
विभुं प्रभुं विश्वधरं विशुद्ध-
मशेषसंसारविनाशहेतुम् ।
यो वासुदेवं विमलं प्रपन्नः
स मोक्षमाप्नोति विमुक्तसङ्गः ॥ ६४

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे श्रीवासुदेवस्तोत्रकथनं नामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ १३९ ॥

---

## चत्वारिंशदधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

वेदान्त-साङ्ख्यसिद्धान्त-ब्रह्मज्ञानं वदाम्यहम् ।
अहं ब्रह्म परं ज्योतिर्विष्णुरित्येव चिन्तयन् ॥ १
सूर्य्येन्दुव्योम्नि वह्नौ च ज्योतिरेकं त्रिधा स्थितम् ।
यथा सर्पिः शरीरस्थं गवां न कुरुते बलम् ।
निर्गतं कर्म्मसंयुक्तं दत्तं तासां महाबलम् ॥ २
तथा विष्णुः शरीरस्थो न करोति हितं नृणाम् ।
विनाराधनया देवः सर्व्वगः परमेश्वरः ॥ ३
आरुरुक्षुमतीनान्तु कर्म्मज्ञानमुदाहृतम् ।
आरूढयोगवृक्षाणां ज्ञानं त्यागः परं मतम् ॥ ४
ज्ञातुमिच्छति शब्दादीन् रागद्वेषोऽथ जायते ।
लोभमोहौ क्रोध एतैर्युक्तः पापं नरश्चरेत् ॥ ५
हस्तावुपस्थमुदरं वाक् चतुर्थी चतुष्टयम् ।
एतत् सुसंयतं यस्य स विप्रः कथ्यते बुधः ॥ ६
परवित्तं न गृह्णाति न हिंसां कुरुते तथा ।
नाक्षक्रीड़ारतो यस्तु हस्तौ तस्य सुसंयतौ ॥ ७
परस्त्रीवर्ज्जनरतस्तस्योपस्थं सुसंयतम् ।
अलोलुपमितं भुङ्क्ते जठरं तस्य संयतम् ॥ ८
सत्यं हितं मितं ब्रूते यः सदा तस्य वाग्यता ।
यस्य संयतान्येतानि तस्य किं तपसाध्वरैः ॥ ९
ऐक्यं यद्बुद्धि-मनसोरिन्द्रियाणाञ्च सर्व्वदा ।
विश्वेश्वरे परे देवे ध्यानमेतत् प्रकीर्त्तितम् ॥ १०
भ्रुवोर्मध्ये स्थितां बुद्धिं विषयेषु युनक्ति यः ।
इन्द्रियाणामुपरमे मनसि ह्यव्यवस्थिते ॥ ११

स्वप्नान् पश्यत्यसौ जीवो बाह्यानभ्यन्तरानथ ।
जीवो जाग्रदवस्थायामेवमाहुर्विपश्चितः ॥ १२
हृदिस्थितः स तमसा मोहितो न स्मरत्यपि ।
यदा तस्य कुतो वेति सुषुप्तिरिति कथ्यते ॥ १३
जाग्रतो यस्य तन्द्री नान मोहो न भ्रमस्तथा ।
उत्पद्यते न जानाति शब्दार्थविषयान् वशी ॥ १४
इन्द्रियाणि समाहृत्य विषयेभ्यो मनस्तथा ।
बुद्ध्याहङ्कारमपि च प्रकृत्या बुद्धिमेव च ॥ १५
स्वयञ्च प्रकृतिञ्चापि चिच्छक्त्या केवले स्थितः ।
पश्यत्यात्मनि चात्मानमात्मना स्वप्रकाशकम् ॥ १६
चिद्रूपममृतं शुद्धं निष्क्रियं व्यापकं शिवम् ।
तुरीयायामवस्थायामास्थितोऽसौ न संशयः ॥ १७
शब्दादयो गुणाः पञ्च सत्याद्यास्तु गुणास्त्रयः ।
पुर्य्यष्टकस्य पद्मस्य पत्राण्यष्टौ च तानि हि ॥ १८
साम्यावस्था गुणान्तता प्रकृतिस्तत्र कर्णिका ।
कर्णिकायां स्थितो देवो देहे चिद्रूप एव हि ॥ १९
पुर्य्यष्टकं परित्यज्य प्रकृतिञ्च गुणात्मिकाम् ।
यदा याति तदा जीवो याति मुक्तिं न संशयः ॥ २०
प्राणायामो जपश्चैव प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरित्येते षड्योगस्य प्रसाधकाः ॥ २१
प्रापच्चयो देवतानां प्रीतिरिन्द्रियसंयमः ।
जपध्यानयुतो गर्भो विपरीतस्त्वगर्भकः ॥ २२
षट्त्रिंशन्मात्रकः श्रेष्ठस्तुर्व्विंशतिमात्रकः ।
मध्यो द्वादशमात्रन्तु ओङ्कारं सततं जपेत् ॥ २३
वाचके प्रणवे जप्ते वाच्यं ब्रह्म प्रसीदति ॥ २४
ओं नमो विष्णवे ।
षड्क्षरश्च जप्तव्यो गायत्री द्वादशाक्षरा ॥ २५
सर्व्वेषामिन्द्रियाणान्तु प्रवृत्तिर्विषयेषु च ।
निवृत्तिर्मनसा तस्यां प्रत्याहारः प्रकीर्त्तितः ॥ २६
इन्द्रियाणीन्द्रियार्थेभ्यः समाहृत्य स्थितो हि सः ।
मनसा सह बुद्ध्या च प्रत्याहारेषु संस्थितः ॥ २७
प्राणायामैर्द्वादशभिर्यावत्कालः कृतो भवेत् ।
सतावत्कालपर्य्यन्तं मनो ब्रह्मणि धारयेत् ।
तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः ॥ २८
ध्यायन्न चलते यस्य मनोऽभिध्यायतो भृशम् ।
आप्याबाधकृतं कालं यावत् सा धारणा स्मृता ॥ २९

ध्येये सतां मनो यस्य ध्येयमेवानुपश्यति ।
नान्यं पदार्थं जानाति ध्यानमेतत् प्रकीर्त्तितम् ॥ ३०
ध्येये मनो निश्चलतां याति ध्येयं विचिन्तयत् ।
यत् तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः ॥ ३१
ध्येयमेव हि सर्व्वत्र ध्याता तन्मयतां गतः ।
पश्यति द्वैतरहितं समाधिः सोऽभिधीयते ॥ ३२
मनः सङ्कल्परहितमिन्द्रियार्थान् न चिन्तयत् ।
यस्य ब्रह्मणि संलीनं समाधिस्थः स उच्यते ॥ ३३
ध्यायतः परमात्मानमात्मस्थं यस्य योगिनः ।
मनस्तन्मयतां याति समाधिस्थः स कीर्त्तितः ॥ ३४
चित्तस्य स्थिरता भ्रान्तिर्दौर्म्मनस्यं प्रमत्तता ।
योगिनां कथिता दोषा योगविघ्नप्रवर्त्तकाः ॥ ३५
स्थित्यर्थं मनसः सर्व्वं स्थूलरूपं विचिन्तयेत् ।
तद्गतं निश्चलीभूतं सूक्ष्मस्थं स्थिरतां व्रजेत् ॥ ३६
न विना परमात्मानं किञ्चिज्जगति विद्यते ।
विश्वरूपं तमेवेह इति ज्ञात्वा न मुह्यति ॥ ३७
ओङ्कारं परमं ब्रह्म ध्यायेदब्जस्थितं विभुम् ।
द्वैत-द्वैतत्वरहितं जपेन्मन्त्रादयान्वितम् ॥ ३८
हृदि सञ्चिन्तयेत् पूर्व्वं प्रधानं तस्य चोपरि ।
तमो रजस्तथा सत्त्वं तृतीयं मण्डलं क्रमात् ॥ ३९
कृष्ण-रक्त-सितं तस्मिन् पुरुषं जीवसंज्ञितम् ।
तस्योपरि गुणैश्वर्य्यमष्टपत्रं सरोरुहम् ॥ ४०
ज्ञानन्तु कर्णिका तत्र विज्ञानं केशरं स्मृतम् ।
वैराग्यं नालं तत्कन्दो वैष्णवो धर्म्म उत्तमः ॥ ४१
कर्णिकायां स्थितं तत्र जीववन्निश्चलं ततः ।
ध्यायेदुरसि संयुक्तमोङ्कारं मुक्तिसाधकम् ॥ ४२
ध्यायन् यदि त्यजेत् प्राणान् याति ब्रह्मसन्निधि
हरिं संस्थाप्य देहाब्जे ध्यायन् योगी च मुक्तिभाक्
आत्मानमात्मना केचित् पश्यन्ति ध्यानचक्षुषः ।
सांख्यबुद्ध्या तथैवान्ये योगेनानेन योगिनः ॥ ४४
ब्रह्मप्रकाशकं ज्ञानं भवबन्धविभेदनम् ।
तत्रैकचित्तता योगी मुक्तिदो नात्र संशयः ॥ ४५
जितेन्द्रियात्मकरणो ज्ञानदग्धो हि यो भवेत् ।
स मुक्तः कथ्यते योगी परमात्मन्यवस्थितः ॥ ४६
आसनस्थानविषया न योगस्य प्रसाधकाः ।
विलम्बजनकाः सर्व्वे विस्तराः परिकीर्त्तिताः ॥ ४७

शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ।
योगाभ्यासं प्रकुर्व्वन्तः पश्यन्त्यात्मानमात्मना ॥ ४८
सर्व्वभूतेषु कारुण्यं विद्वेषं विषमेषु च ।
क्षुत्पिपासोदरादिश्च कुर्व्वन् योगी विमुच्यते ॥ ४९
इन्द्रियैरिन्द्रियार्थांस्तु न जानाति नरो यदा ।
काष्ठवद्ब्रह्मसंलीनो योगी मुक्तस्तदा भवेत् ॥ ५०
सर्व्ववर्णाः स्त्रियः सर्व्वाः कृत्वा पापानि भस्मसात् ।
ध्यानाग्निना च मेधावी लभन्ते परमां गतिम् ॥ ५१
मन्थनाद्दृश्यते ह्यग्निस्तद्वद्ध्यानेन वै हरिः ।
ब्रह्मात्मनोर्यदेकत्वं स योगश्चोत्तमोत्तमः ॥ ५२
वाह्यरूपैर्न मुक्तिस्तु चान्तःस्थैः स्याद्दमादिभिः ।
सांख्यज्ञानेन योगेन वेदान्तश्रवणेन च ॥ ५३
प्रत्यक्तात्मनो या हि सा मुक्तिरभिधीयते ।
अनात्मन्यात्मरूपत्वमसतः सत्स्वरूपता ॥ ५४

इति श्रीगारुडे महापुराणे पूर्व्वखण्डे ब्रह्म-
विज्ञानकथनं नाम चत्वारिंशदधिक-
द्विशततमोऽध्यायः ॥ २४० ॥

---

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच ।

आत्मज्ञानं प्रवक्ष्यामि शृणु नारद तत्त्वतः ।
अद्वैतं सांख्यमित्याहुर्योगस्तत्रैकचित्तता ॥ १
अद्वैतयोगसम्पन्नास्ते मुच्यन्तेऽतिबन्धनात् ।
अतीतारब्धमागामि कर्म्म नश्यति बोधतः ॥ २
सद्विचारकुठारेण च्छिन्नसंसारपादपः ।
ज्ञानवैराग्यतीर्थेन लभते वैष्णवं पदम् ॥ ३
जाग्रत्स्वप्नप्रसुप्तञ्च मायात्रिपथमुच्यते ।
अत्रैवान्तर्गतं सर्व्वं शाश्वतेनाद्वये पदे ॥ ४
नाम-रूप-क्रियाहीनं सर्व्वं तत् परमं पदम् ।
जगत् कृत्वेश्वरोऽनन्तं स्वयमत्र प्रविष्टवान् ॥ ५
वेदाहमेतं पुरुषं चिद्रूपं तमसः परम् ।
सोऽहमस्मीति मोहाय नान्यः पन्था विमुक्तये ॥ ६
श्रवणं मननं ध्यानं ज्ञानानाञ्चैव साधनम् ।
यज्ञ-दान-तपस्तीर्थ-वेदैर्मुक्तिर्न लभ्यते ॥ ७
त्यागेन केनचिद्ध्यान-पूजाकर्म्मादिभिर्न च ।
द्विविधं वेदवचनं कुरु कर्म्म त्यजेति च ॥ ८
यज्ञादयो विमुक्तानां निष्कामाणां विमुक्तये ।
अन्तःकरणशुद्ध्यर्थमूचुरेवात्र केचन ॥ ९
एकेन जन्मना ज्ञानान्मुक्तिर्न द्वैतभाविनाम् ।
योगभ्रष्टाः कुयोगाश्च विप्रा योगिकुलोद्भवाः ॥ १०
कर्म्मणा बध्यते जन्तुर्ज्ञानान्मुक्तो भवाद्भवेत् ।
आत्मज्ञानमाश्रयेद्वै अज्ञानं यदतोऽन्यथा ॥ ११
यदा सर्व्वे विमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
तदामृतत्वमाप्नोति जीवन्नेव न संशयः ॥ १२
व्यापकत्वात् कथं याति को याति क्व स याति च ।
अनन्तत्वान्न देशोऽस्ति अमूर्त्तत्वाद्गतिः कुतः ॥ १३
अद्वयत्वान्न कोऽप्यस्ति बोधत्वाज्जड़ता कुतः ।
एकोद्दिष्टं यदन्यस्य मतिरागतिसंस्थितिः ॥ १४
कथमाकाशकल्पस्य गतिराकाशसंस्थितिः ।
जाग्रत्स्वप्नप्रसुप्तञ्च मायया परिकल्पितम् ॥ १५

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे आत्म-
ज्ञानकथनं नामैकचत्वारिंशदधिक-
द्विशततमोऽध्यायः ॥ २४१ ॥

---

## द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ।

श्रीभगवानुवाच ।

गीतासारं प्रवक्ष्यामि अर्ज्जुनायोदितं पुरा ।
अष्टाङ्गयोगयुक्तात्मा सर्व्ववेदान्तपारगः ॥ १
आत्मलाभः परो नान्य आत्म देहादिवर्ज्जितः ।
रूपादि-मान-देहान्तःकरणत्वादिलोचनम् ॥ २
विज्ञानरहितः प्राणः सुषुप्तोऽहं प्रतीयते ।
नाहमात्मा च दुःखादि संसारादिसमन्वयात् ॥ ३
विधूम इव दीप्तार्च्चिरादीप्त इव दीप्तिमान् ।
वैद्युतोऽग्निरिवाकाशे हृत्सङ्गे आत्मनात्मनि ॥ ४
श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना ।
सर्व्वज्ञः सर्व्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ५
यदा प्रकाशते ह्यात्मा पटे दीपो ज्वलन्निव ।
ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मणः ॥ ६
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ।
इन्द्रियाणीन्द्रियार्थांश्च महाभूतानिपञ्चकम् ॥ ७

मनो बुद्धिरहङ्कारमव्यक्तं पुरुषं तथा।
प्रसंख्याय पराव्याप्तौ विमुक्तो बन्धनैर्भवेत् ॥ ८
इन्द्रियग्राममखिलं मनस्यभिनिवेश्य च।
मनश्चैवाप्यहङ्कारे प्रतिष्ठाप्य च पाण्डव ॥ ९
अहङ्कारं तथा बुद्धौ बुद्धिञ्च प्रकृतावपि।
प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत्।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते ॥ १०
नवद्वारमिदं गेहं तिसृणां पञ्चसाक्षिकम्।
क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स वरः कविः ॥ ११
अश्वमेधसहस्राणि वाजपेयशतानि च।
ज्ञानयज्ञस्य सर्व्वाणि कलां नार्हन्ति षोड़शीम् ॥१२

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे द्विचत्वा-
रिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

---

## त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः।

श्रीभगवानुवाच।

यमश्च नियमः पार्थ आसनं प्राणसंयमः।
प्रत्याहारस्तथा ध्यानं धारणार्ज्जुन सप्तमी ॥ १
समाधिरिति (क) चाष्टाङ्गो योग उक्तो विमुक्तये।
कर्म्मणा मनसा वाचा सर्व्वभूतेषु सर्व्वदा ॥ २
हिंसाविरामको धर्म्मो ह्यहिंसा परमं सुखम्।
विधिना या भवेद्धिंसा सा त्वहिंसा प्रकीर्त्तिता ॥ ३
सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः ॥ ४
यच्च द्रव्यापहरणं चौर्य्याद्वाथ बलेन वा।
स्तेयं तस्यानाचरणमस्तेयं धर्म्मसाधनम् ॥ ५
कर्म्मणा मनसा वाचा सर्व्वावस्थासु सर्व्वदा।
सर्व्वत्र मैथुनत्यागं ब्रह्मचर्य्यं प्रचक्षते ॥ ६
द्रव्याणामप्यनादानमापत्स्वपि तथेच्छया।
अपरिग्रहमित्याहुस्तं प्रयत्नेन वर्ज्जयेत् ॥ ७
द्विधा शौचं मृज्जलाभ्यां वाह्यं भावादथान्तरम्।
यदृच्छालाभतस्तुष्टिः सन्तोषः सुखलक्षणम् ॥ ८
मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः।
शरीरशोषणं वापि कृच्छ्रचान्द्रायणादिभिः ॥ ९
वेदान्तशतरुद्रीय-प्रणवादिजपं बुधाः।
सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥ १०
स्तुतिस्मरणपूजादिवाङ्मनःकायकर्म्मभिः।
अनिश्चला हरौ भक्तिरेतदीश्वरचिन्तनम् ॥ ११
आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनं तथा।
प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ॥ १२
इन्द्रियाणां विचरतां विषयेषु स्वसत्स्विव।
नियमः प्रोच्यते सद्भिः प्रत्याहारस्तु पाण्डव ॥ १३
मूर्त्तामूर्त्तब्रह्मरूप-चिन्तनं ध्यानमुच्यते।
योगारम्भे मूर्त्तहरिममूर्त्तमपि चिन्तयेत् ॥ १४
अग्निमण्डलमध्यस्थो वासुदेवश्चतुर्भुजः।
शङ्ख-चक्र-गदा-पद्मयुक्तः कौस्तुभसंयुतः ॥ १५
वनमाली कौस्तुभेन युतोऽहं ब्रह्मसंज्ञकः।
धारणेत्युच्यते चेयं धार्य्यते यन्मनोलये ॥ १६
अहं ब्रह्मेत्यवस्थानं समाधिरभिधीयते।
अहं ब्रह्मास्मि वाक्याच्च ज्ञानान्मोक्षो भवेन्नृणाम् ॥ १७
अद्वयानन्दचैतन्यं लक्षयित्वा स्थितस्य च।
ब्रह्माहमस्म्यहं ब्रह्म अहंब्रह्मपदार्थयोः ॥ १८

इति श्रीगारुड़े महापुराणे पूर्व्वखण्डे त्रिचत्वा-
रिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

---

(क) यमानियमसष्टाङ्ग इति च पाठः।

समाप्तमिदं पूर्व्वखण्डम्।

# गरुड़पुराणम् ।

## उत्तरखण्डम् ।

( प्रेतखण्डम् । )

### प्रथमोऽध्यायः ।

ओँ नमो भगवते वासुदेवाय ।

धर्मदृढ़बद्धमूलो वेदस्कन्धः पुराणशाखाढ्यः ।
क्रतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति ॥ १

नैमिषे निमिषक्षेत्रे शौनकाद्या मुनीश्वराः ।
कर्म्मणामन्तरे सूतं स्वासीनमिदमब्रुवन् ॥ २
सूत जानासि सकलं वस्तु व्यासप्रसादतः ।
तेन नः सन्दिहानानां सन्देहं छेत्तुमर्हसि ॥ ३
यथा तृणजलौकेति न्यायमाश्रित्य केचन ।
देहिनोऽन्यतनुप्राप्तिं केचित्त्वेव वदन्ति हि ॥ ४
केचित् पुनर्यातनानां यामीनामुपभोगतः ।
पश्चाद्देहान्तरप्राप्तिं वदन्ति किमु तत्र सत् ॥ ५

सूत उवाच ।

साधु पृष्टं महाभागाः शृणुध्वं भवतां पुनः ।
सन्देहो नोपपद्येत लोकार्थं किल पृच्छताम् ॥ ६
तदहं कृष्ण-गरुड़संवादद्वारया द्विजाः ।
अपाकरिष्ये सन्देहं भवतां भावितात्मनाम् ॥ ७
नमः कृष्णाय मुनये य एनं समुपाश्रिताः ।
अञ्जस्तरन्ति संसार-सागरं कुनदीमिव ॥ ८
एकदा वैनतेयस्य लोकानां लोकनस्पृहा ।
बभूव सोऽथ बभ्राम तेषु नाम हरेर्गृणन् ॥ ९
स पातालं भुवं स्वर्गं भ्रान्त्वाऽलब्धप्रमाश्रयः ।
लोकदुःखिनातिदुःखी पुनर्वैकुण्ठमागमत् ॥ १०
न रजो न तमश्चैव सत्त्वं ताभ्याञ्च मिश्रितम् ।
यत्र प्रवर्त्तते नैव सत्त्वमेव प्रवर्त्तते ॥ ११
न यत्र माया नाशश्च न च रागादयो मलाः ॥ १२
श्यामावदाताः सुरुचः शतपत्रविलोचनाः ।
सुरासुरार्च्चिता यत्र गणा विष्णोः सुपेशसः ॥ १३
पिशङ्गवस्त्राभरणा मणियुङ्निष्कभूषिताः ।
चतुर्भुजाः कुण्डलिनो मौलिनो मालिनस्तथा ॥ १४
भ्राजिष्णुभिर्विमानानां पङ्क्तिभिर्ये महात्मनाम् ।
द्योतन्ते द्योतमानानां प्रमदानाञ्च पङ्क्तिभिः ॥ १५
श्रीर्यत्र नानाविभवैर्हरेः पादौ मुदार्च्चति ।
हरिं गायति दोलस्था गीयमानालिभिः स्वयम् ॥ १६
ददर्श तत्र श्रीहरिं श्रीपतिं सात्त्वतां पतिम् ।
जगत्पतिं यज्ञपतिं पार्षदैः परिषेवितम् ॥ १७
सुनन्द-नन्दप्रबलार्हणमुख्यैर्निरन्तरम् ।
भृत्यप्रसादसुमुखमायतारुणलोचनम् ॥ १८
किरीटिनं कुण्डलिनं श्रिया वक्षसि लक्षितम् ।
पीतांशुकं चतुर्बाहुं प्रसन्नहसितानननम् ॥ १९

अथ हंसासनस्थमेताभिः शक्तिभिरावृतम्।
प्रधानपुरुषाभ्याञ्च महता चाहमा तथा॥ २०
एकादशैरिन्द्रियैश्च पञ्चभूतैस्तथैव च। (क)
स्वरूपे रममाणं तमीश्वरं विनतासुतः॥ २१
तद्दर्शनाह्लादयुतश्चान्तो ह्यष्टतनुस्ततः।
लोचनाभ्यामश्रु मुञ्चन् प्रेममग्नो ननाम ह॥ २२
तमागतं नतं स्वीयवाहनं विष्णुरब्रवीत्।
भूमिः का लङ्घिता पक्षिंस्त्वयेयं समनेहसम्॥ २३
गरुड़ उवाच।
भवत्प्रसादाद्देवेश त्रैलोक्यं सचराचरम्।
मया विलोकितं सर्व्वमुत्तमाधममध्यमम्॥ २४
भूर्लोकात् सत्यपर्य्यन्तं पुरं याम्यं विना प्रभो।
भूर्लोकः सर्व्वलोकानां प्रचुरः सर्व्वजन्तुषु॥ २५
मानुष्यं सर्व्वभूतानां भुक्तिमुक्त्यालयं शुभम्।
अतः सुकृतिनां लोको न भूतो न भविष्यति॥ २६
गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गस्य फलार्ज्जनाय
भवन्ति भूयः पुरुषाः सुरत्वात्॥ २७
मानुषत्वं लभेत् कस्मान्मृत्युं प्राप्नोति तत् कथम्।
म्रियते कः सुरश्रेष्ठ देहमाश्रित्य कुत्रचित्॥ २८
क्व यान्ति इन्द्रियाण्यस्य अस्पृश्यः स कथं भवेत्।
क्व कर्माणि कृतानीह कथं भुङ्क्ते प्रसर्पति॥ २९
भूम्यां प्रक्षिप्यते कस्मात् पञ्चरत्नं मुखे कथम्।
अधस्ताच्चाखिता दर्भाः पादौ याम्यां व्यवस्थितौ॥ ३०
किमर्थं पुत्त्र-पौत्त्राश्च तस्य तिष्ठन्ति चाग्रतः।
किमर्थं दीयते दानं गोदानमपि केशव॥ ३१
वसुमित्राण्यमित्राश्च क्षमापयति तत् कथम्।
तिललोहं हिरण्यञ्च कार्पासं लवणं तथा॥ ३२
सप्तधान्यं क्षितिर्गावो दीयन्ते केन हेतुना।
कथं हि म्रियते जन्तुर्मृतो वै कुत्र गच्छति॥ ३३
अतिवाहशरीरञ्च कथं विश्रमते तदा।
शवं स्कन्धे वहेत् पुत्त्रो अग्निदाता च पौत्त्रकः॥ ३४
आज्येनाभ्यञ्जनं कस्मादेकाहुतिक्रिया कुतः।
वसुन्धरा किमर्थञ्च कुतः स्त्रीशब्दकीर्त्तनम्॥ ३५
यमसूक्तं किमर्थञ्च उदीच्यां दिशमाहरेत्।
पानीयमेकवस्त्रेण सूर्य्यबिम्बनिरीक्षणम्।
यवसर्षपदूर्व्वास्तु पाषाणो निम्बपत्रकम्॥ ३६
वस्त्रं नरश्च नारी च विदध्यादधरोत्तम्।
अन्नाद्यं गृहमागत्य न भोक्तव्यं जनैः सह।
नवकांश्चैव पिण्डांश्च किमर्थं ददते सुताः॥ ३७
किमर्थं चत्वरे दुग्धं पात्रे पक्वे च मृण्मये।
काष्ठत्रयं गणाबद्धं कृत्वा रात्रौ चतुष्पथे॥ ३८
निशायां दीयते दीपो यावदब्दं दिने दिने।
दाहोदकं किमर्थञ्च किमर्थञ्च जनैः सह॥ ३९
भगवन्नातिवाहश्च नव पिण्डाः प्रदापयेत्।
कथं देयं पितृभ्यश्च वाहस्यावाहनं कथम्॥ ४०
दह्येच्चेत् म्रियते देव कस्मात् पिण्डं प्रदापयेत्।
किं तत् प्रदीयते तस्य पिण्डदानाद्यनन्तरम्॥ ४१
अस्थिसञ्चयनञ्चैव घटस्फोटं तथैव च।
द्वितीयेऽह्नि कुतः स्नानं चतुर्थे सान्निके द्विजे॥ ४२
दशमे किं मलस्नानं कार्य्यं सर्व्वजनैः सह।
कस्मात् तैलोद्वर्त्तनञ्च स्कन्धवाहश्च नयेत्॥ ४३
तैलोद्वर्त्तनकञ्चापि दद्युः स्थूलजलाशये।
दशमेऽहनि यत् पिण्डं तद्दद्यादामिषेण तु॥ ४४
पिण्डञ्चैकादशे कस्माद्वृषोत्सर्गस्य पूर्व्वकम्।
भाजनोपानहौ छत्रं वासांसि लकुलीयकम्।
त्रयोदशेऽह्नि देयं स्याद्यदा दानं किमर्थकम्॥ ४५
श्राद्धानि षोड़शैतानि अब्दं यावत् कुतो घटः।
अन्नाद्येनोदकेनैव षष्ठ्याधिकशतत्रयम्॥ ४६
दिने दिने च दातव्यं घटान्नं प्रेतदृप्तये।
प्राप्ते काले म्रियते वा अनित्या मानवाः प्रभो॥ ४७
छिद्रन्तु नैव पश्यामि कुतो जीवः स निर्गतः।
कुतो गच्छन्ति भूतानि पृथिव्यापो मनस्तथा॥ ४८
तेजो वदस्व मे नाथ वायुराकाशमेव च।
कुतः पञ्चेन्द्रियाणीह पञ्च बुद्धीन्द्रियाणि च॥ ४९
वायवश्चैव पञ्चैते कथं गच्छन्ति चात्ययम्।
लोभ-मोहादयः पञ्च शरीरे चैव तस्कराः॥ ५०
तृष्णा कामो ह्यहङ्कारः कुतो यान्ति जनार्द्दन।
पुण्यं वा यथवा पुण्यं यत्किञ्चित् सुकृतं तथा॥ ५१

(क) अतः परं क्वचित् पुस्तके—"नैसर्गिके रथेश्च वाजिभिर्भर्तादिभिस्तथा" इति पद्यार्द्धमधिकं दृश्यते।

नष्टे दृष्टे कुतो यान्ति दानानि विविधानि च ॥५२
सपिण्डनं किमर्थञ्च पूर्णे संवत्सरेऽपि वा।
प्रेतस्य मेलनं कैषां किं विधिं तत्र कारयेत्।
मूर्च्छनात् पतनाद्वापि विपत्तिर्यदि जायते ॥ ५३
ये दग्धा ये लदग्धाश्च पतिता ये नरा भुवि।
यानि चान्यानि भूतानि तेषामन्ते भवेच्च किम् ॥ ५४
पापिनो ये दुराचारा ये चान्ये गतबुद्धयः।
आत्मघाती ब्रह्महा च स्तेयी विश्वासघातकाः ॥५५
कपिलायाः पिबेच्छूद्रो यः पठेदिदमक्षरम्।
धारयेद्ब्रह्मसूत्रं वा का गतिस्तस्य माधव ॥ ५६
शूद्रस्य ब्राह्मणीभार्य्या संगृहीता यदा भवेत्।
तस्य पापस्य भीतोऽहं तन्मे वद जगत्प्रभो ॥ ५७
अन्यच्च शृणु विश्वात्मन् मया कौतुकिना रयात्।
लोकान् लोकयता लोके जगादे विश्वमण्डलम्॥५८
तत्रजनि जनान् दृष्ट्वा दुःखिष्वेव निमज्जतः।
जननि स्वान्ते मे पीड़ा तत्पीड़ातो गरीयसी ॥ ५९
विदिवे दितिजातिभ्यो भूमौ मृत्युरुगादिभिः।
इष्टवस्तुवियोगैश्च पाताले मामकं भयम् ॥ ६०
एवं न निर्भयं स्थानमन्यदीश भवत्पदात्।
अशेषं स्वप्नमायावत् कालेन कवलीकृतम् ॥ ६१
तत्रापि भारते वर्षे बहुदुःखस्य भाजनम्।
जना दृष्टा मया राग-द्वेष-मोहादिविप्लुताः ॥ ६२
केचिदन्धाः केकराक्षाः खलद्वाचस्तु पङ्गवः।
छिन्नाः काणाश्च बधिरा मूकाः कुष्ठाश्च रोमशाः॥६३
नानारोगपरीताश्च खपुष्पाश्चाभिमानिनः।
तेषां दोषस्य वैचित्र्यं मर्त्योर्गोचरतामपि ॥ ६४
दृष्ट्वा प्रष्टुमनाः प्राप्तः को मृत्युस्त्विता कथम्।
मृतिर्यस्य विधानेन मरणादप्यनन्तरम् ॥ ६५
विधिनाद्दक्रिया यस्य न स दुर्गतिमाप्नुयात्।
ऋषिभ्यस्तु मया पूर्व्वमिति सामान्यतः श्रुतम् ॥६६
ज्ञानाय तद्विशेषस्य पृच्छामीदमिति प्रभो।
म्रियमाणस्य किं कृत्यं किं दानं वासवानुज ॥ ६७
दाहमृत्योरन्तराले को विधिर्दहनस्य च।
सद्यो विलम्बतो वा किं देहमन्यं प्रपद्यते ॥ ६८
संयमन्यां कम्पमानमावर्षं का मृतिक्रिया।
प्रायश्चित्तं दुर्मृतेः किं पञ्चकादिमृतस्य च ॥ ६९

प्रसादं कुरु मे मोहं छेतुमर्हस्यशेषतः।
सर्व्वमेतन्मया पृष्टं ब्रूहि लोकहिताय वै ॥ ७०

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे प्रश्नप्रपञ्चो
नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

### श्रीकृष्ण उवाच।

साधु पृष्टं त्वया भद्र मानुषाणां हिताय वै।
शृणुष्वावहितो भूत्वा सर्व्वमेवौर्द्ध्वदेहिकम् ॥ १
सम्यग्विभेदरहितं श्रुतिस्मृतिसमुद्धृतम्।
यन्न दृष्टं सुरैः सेन्द्रैर्योगिभिर्योगचिन्तकैः ॥ २
गुह्याद्गुह्यतरं तच्च नाख्यातं कस्यचित् क्वचित्।
भक्तस्त्वञ्च महाभाग वैनतेय ब्रवीमि ते ॥ ३
अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च।
येन केनाप्युपायेन कार्य्यं जन्म सुतस्य हि ॥ ४
तारयेन्नरकात् पुत्रो यदि मोक्षो न विद्यते।
स्कन्धः पुत्रेण कर्त्तव्यो वह्निदाता च पौत्रकः ॥ ५
तिलदर्भैश्च भूम्यां वै कुटी ऋतुमती भवेत्।
पञ्च रत्नानि वक्त्रे तु येन जीवः प्ररोहति ॥ ६
यदा पुष्पं प्रनष्टं हि क्व तदा गर्भधारणम्।
आदराच्च ततो भूमौ येन गर्भं प्रधार्य्यते ॥ ७
लेप्या तु गोमयैर्भूमिस्तिलान् दर्भान् विनिक्षिपेत्।
तस्यामेवातुरो मुक्तः सर्व्वं दहति किल्बिषम् ॥ ८
दर्भतूली नयेत् स्वर्गं नातुरस्य न संशयः।
दर्भांस्तत्र क्षिपेद्वाथ तूलीगन्धुकमध्यतः ॥ ९
सर्व्वत्र वसुधा पूता यत्र लेपो न विद्यते।
यत्र लेपः स्थितस्तत्र पुनर्लेपेन शुध्यति ॥ १०
यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्म्मिणः।
अलेपं ह्यातुरं मुक्तं विशन्त्येते वियोनयः ॥ ११
नित्यहोमस्तथा श्राद्धं पादशौचं द्विजे तथा।
मण्डलेन विना भूम्यामातुरो मुच्यते न हि ॥ १२
ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशस्तथैव च।
मण्डले चोपतिष्ठन्ति तस्मात् कुर्व्वीत मण्डलम् ॥१३
अन्यथा म्रियते बालो वृद्धस्तार्क्ष्य युवाऽथवा।

योन्यन्तरं न गच्छेत् स क्रीड़ते वायुना सह ॥ १४
मिश्रितं लोहितामिश्रं तदेवं जन्म जायते।
तस्यैव वायुभूतस्य न श्राद्धं नोदकक्रिया ॥ १५
मम स्वेदसमुद्भूतास्तिलास्ताश्च पवित्रकाः।
असुरा दानवा दैत्या विद्रवन्ति तिलैस्तथा ॥ १६
तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसम्भवाः।
ते मे दहन्तु पापानि शरीरेण कृतानि वै ॥ १७
एक एव तिलो दत्तो हेमद्रोणतिलैः समः।
तर्पणे दानहोमेषु दत्तो भवति चाक्षयः ॥ १८
दर्भा रोमसमुद्भूतास्तिलाः स्वेदेषु नान्यथा।
देवता दानवास्तृप्ताः श्राद्धेन पितरस्तथा।
प्रयोगविधिना ब्रह्मा विश्वञ्चाप्युपजीवनात् ॥ १९
अपसव्यादितो ब्रह्मा पितरो देवदेवताः।
तेन ते पितरस्तृप्ता अपसव्ये कृते सति ॥ २०
दर्भमूले स्थितो ब्रह्मा मध्ये देवो जनार्द्दनः।
दर्भाग्रे शङ्करं विद्यात् त्रयो देवा कुशे स्मृताः ॥२१
विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर।
नैते निर्म्माल्यतां यान्ति क्रियमाणाः पुनः पुनः ॥२२
तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग।
पञ्च प्रवहणान्येव भवाब्धौ मज्जतां नृणाम् ॥ २३
विष्णुरेकादशी गीता तुलसी विप्र-धेनवः।
असारे दुर्गसंसारे षट्पदी मुक्तिदायिनी ॥ २४
तिलाः पवित्रमतुलं दर्भाश्चापि तुलस्यथ।
निवारयन्ति चैतानि दुर्गतिं यान्तमातुरम् ॥ २५
हस्ताभ्यामुद्धरेद्दर्भांस्तोयेन प्रोक्षयेद्भुवि।
मृत्युकाले क्षिपेद्दर्भान् करयोरातुरस्य च ॥ २६
दर्भैस्तु क्षिप्यते योऽसौ दर्भैस्तु परिवेष्टितः।
विष्णुलोकं स वै याति मन्त्रहीनोऽपि मानवः ॥ २७
तूलीं कृत्वा कृतौ पादौ संस्थितौ धरपृष्ठतः।
प्रायश्चित्तं विशुद्धात्मा संसारे सारसागरे ॥ २८
गोमयेनोपलिप्येत् तु दर्भास्तरणसंस्थिते।
येन दत्तेन दानेन सर्व्वं पापं व्यपोहति ॥ २९
लवणं तद्रसं दिव्यं सर्व्वकामप्रदं नृणाम्।
यस्मादन्नरसाः सर्व्वे नोत्कटा लवणं विना ॥ ३०
पितॄणाञ्च प्रियं भव्यं तस्मात् स्वर्गप्रदं भवेत्।
विष्णुदेहसमुद्भूतो यतोऽयं लवणो रसः ॥ ३१

एतत् सलवणं दानं तेन शंसन्ति योगिनः।
ब्राह्मण-क्षत्रिय-विशां स्त्रीणां शूद्रजनस्य च ॥ ३२
आतुरस्य यदा प्राणा न यान्ति वसुधातले।
लवणन्तु तदा देयं द्वारस्योद्घाटनं दिवः ॥ ३३
अन्यच्च शृणु पक्षीन्द्र मृत्यो रूपं प्रयत्नतः।
यस्य कालेन नो यायाद्वियोगः प्राण-देहयोः।
प्राणिनश्च स्वसमये मृत्युरत्यन्तविस्मृतिः ॥ ३४
यथा वायुर्जलधरान् विकर्षति यतस्ततः।
तद्वज्जलदवत् ताभ्य कालस्यैव वशानुगाः ॥ ३५
सात्त्विका राजसाश्चैव तामसा ये च केचन।
भावाः कालात्मकाः सर्व्वे प्रवर्त्तन्ते हि जन्तुषु ॥ ३६
आदित्यश्चन्द्रमाः शम्भुरापो वायुः शतक्रतुः।
अग्निः खं पृथिवी मित्र ओषध्यो वसवस्तथा ॥ ३७
सरितः सागराश्चैव भावाभावौ च सर्पहन्।
सर्व्वे कालेन सृज्यन्ते संक्षिप्यन्ते यथा पुनः ॥ ३८
कालेन संक्रियन्ते च नूनं मृत्यावुपस्थिते ॥ ३९
दैवयोगात् तदा व्याधिः कश्चिदुत्पद्यते खग।
वैकल्यमिन्द्रियाणाञ्च बलौजोरंहसां भवेत् ॥ ४०
युगपद्वृश्चिककोटी-शूकदंशो भवेद्‌यदि।
तदानुमीयते तेन पीड़ा मृत्युभवा खग ॥ ४१
ततः क्षणेन चैतन्ये विकले जड़तां गते।
प्रचाल्यन्ते ततः प्राणाः याम्यैर्निकटवर्त्तिभिः ॥ ४२
बीभत्सन्तु तदा रूपं प्राणैः कण्ठगतैर्भवेत्।
फेनमुद्गिरते सोऽथ मुखं लालाकुलं भवेत् ॥ ४३
अङ्गुष्ठमात्रपुरुषो हाहा कुर्व्वंस्ततस्तनोः।
तदैव नीयते दूतैर्याम्यैर्वीक्षन् स्वकं गृहम् ॥ ४४
भूय एव ब्रुवे तात मृत्युकालदशामिमाम्।
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ॥ ४५
भिनत्ति मर्म्मस्थानानि दीप्यमानो निरिन्धनः।
उदानो नाम पवनस्ततश्चोर्द्ध्वं प्रवर्त्तते ॥ ४६
भक्तानामभुक्ताणामधोगतिनिरोधकृत्।
येनानृतानि चोक्तानि प्रीतिभेदः कृतो न च ॥ ४७
आस्तिकः श्रद्दधानश्च स सुखं मृत्युमृच्छति।
यो न कामान्न संरम्भान्न द्वेषाद्धर्म्ममुत्सृजेत् ॥ ४८
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति।
मोहज्ञानप्रदातारः प्राप्नुवन्ति महत् तमः ॥ ४९

कूटसाक्षी मृषावादी ये च विश्वासघातकाः ।
ते मौर्हं मृत्युमृच्छन्ति तथा ये वेदनिन्दकाः ॥ ५०

विभीषकाः पूतिगन्धा यष्टि-मुद्गरपाणयः ।
आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तदा ॥ ५१

प्राप्ते लौहकृपथे घोरे जायते तस्य वेपथुः ।
क्रन्दत्यविरतं सोऽपि पितृ-मातृ-सुतानपि ॥ ५२

तस्य वागस्फुटा यत्ने नैकवर्णा विभासते ।
दृष्टिर्वै भ्राम्यते त्रासाच्छ्वासाच्छुष्यति चाननम् ॥ ५३

स ततो वेदनाविष्टस्तच्छरीरं विमुञ्चति ।
असह्यं कुत्सनीयञ्च तत्क्षणादेव जायते ॥ ५४

उक्तं मृत्योः स्वरूपन्तु प्रसङ्गादन्यदप्यथ ।
वैचित्र्यस्योत्तरं प्रश्नद्वितीयस्य वदामि ते ॥ ५५

कर्म्मणां प्राक्तनानान्तु तदसत्त्वेन भेदतः ।
भवेद्भोगस्य वैचित्र्यं भ्राम्यतां प्राणिनामिह ॥ ५६

देवत्वमसुरत्वञ्च यक्षत्वादिसुखप्रदम् ।
मानुषत्वं पशुत्वञ्च पक्षित्वाद्यतिदुःखदम् ॥ ५७

कर्म्मणां तारतम्येन भवतीह खगेश्वर ।
अत्र ते कीर्त्तयिष्यामि विपाकं कर्म्मणामहम् ॥ ५८

वैचित्र्यस्य स्फुटत्वाय यैर्जीवः संसरत्ययम् ।
महापातकजान् घोरान् नरकान् प्राप्य दारुणान् ॥ ५९

कर्म्मक्षयात् प्रजायन्ते महापातकिनः क्षितौ ।
जायन्ते लक्षणैर्यैस्तु तानि मे शृणु सत्तम ॥ ६०

मृगाश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ।
कृमि-कीट-पतङ्गत्वं स्वर्णहारी समाप्नुयात् ॥ ६१

तृण-गुल्म-लतात्वञ्च क्रमशो गुरुतल्पगः ।
ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ॥ ६२

हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः ।
यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते ॥ ६३

संवत्सरेण पतति पतितेन सहाचरन् ।
संलाप-स्पर्श-निश्वास-सहयानाशनासनात् ।
याजनाध्यापनाद्यौनात् पापं संक्रमते नृणाम् ॥ ६४

गत्वा दारान् परेषाञ्च ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्ज्जने देशे जायते ब्रह्मराक्षसः ॥ ६५

हीनजातौ प्रजायेत रत्नानामपहारकः ।
पत्रञ्च शाखिनो हृत्वा गन्धांश्छुच्छुन्दरी पुमान् ॥ ६६

मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः ।
निर्म्मन्त्रभोजनात् काको गृध्रो हृत्वा ह्युपस्करम् ॥ ६७

मधुदंशः फलं गृध्रो गां गोधाग्निं वकस्तथा ।
स्याच्छ्वेतकुष्ठी स्त्रीवस्त्रं ह्यरुची रसहारकः ॥ ६८

कांस्यहारी तु हंसः स्यात् पररूस्य च हारकः ।
अपस्मारी गुरोर्हन्ता क्रूरकृद्वामनो भवेत् ॥ ६९

धर्म्मपत्नीं त्यजन् शब्दवेधी प्राणी भवेत् क्षितौ ।
देवविप्रस्वापहारी पाण्डुरः परमांसभुक् ॥ ७०

भक्ष्याभक्ष्यो गण्डमाली महारोगः प्रजायते ।
न्यासापहारी काणः स्यात्स्त्रीजीवःखञ्जकोभवेत् ७१

कौमारदारत्यागी च दुर्भगोऽथैकमिष्टभुक् ।
वातगुल्मी विप्रयोषिद्गामी वा जम्बुको भवेत् ॥ ७२

शय्याहर्त्ता श्वपाकः पतङ्गो वस्त्रहारकः ।
मात्सर्य्यादपि जात्यन्धो कपाली दीपहारकः ॥ ७३

कौशिको मित्रहन्ता च क्षयी पित्रादिनिन्दकः ।
खलदाङ्नृतवादी च कूटसाक्षी जलोदरी ॥ ७४

मशकः सोऽथ छिन्नोष्ठो विवाहे विघ्नकृद्भवेत् ।
स्याद्वाथ वृषलः सोऽथ चत्वरे च विमूत्रकृत् ॥ ७५

मूत्रकृच्छ्री दूषकस्तु कन्यायाः क्लीवतामियात् ।
द्वीपी स्याद्वेदविक्रेता वराहोऽयाज्ययाजकः ॥ ७६

यतस्ततोऽश्नन् मार्ज्जारो खद्योतो वनदाहकः ।
कृमिः पर्य्युषिताद: स्यान्मत्सरी भ्रमरो भवेत् ॥ ७७

अग्न्युत्सादी तु कुष्ठी स्याददत्तादानतो वृषः ।
सर्पो गोहारकोऽन्नस्य हारकः स्यादजीर्णवान् ॥ ७८

जलहारी तु मत्स्यः स्यात् क्षीरहारी वलाकिका ।
अन्नं पर्य्युषितं विप्रे प्रददन् कुब्जतां व्रजेत् ॥ ७९

फलानि हरते यस्तु सन्ततिर्म्रियते खग ।
अदत्त्वा भक्ष्यमश्नाति ह्यनपत्यो भवेन्नरः ॥ ८०

प्रव्रज्यागमनाद्राजन् भवेन्मरुपिशाचकः ।
चातको जलहर्त्ता स्याज्जन्मान्धः पुस्तकं हरन् ॥ ८१

प्रतिश्रुत्य द्विजेभ्योऽर्थमददन् जम्बुकोऽभवेत् ।
परिवादाद्द्विजातीनां लभते काच्छपीं तनुम् ॥ ८२

दुर्भगः फलविक्रेता वृकश्च वृषलीपतिः ।
मार्ज्जारोऽग्निं पदा स्पृष्ट्वा रोगवान् परमांसभुक् ॥ ८३

जलप्रस्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ ८४

हरेः कथां न शृण्वन्ति ये न साधु जनस्तवम् ।
तान् नरान् कर्णमूलोऽयं व्याप्नुयान्नेतरान्जनान् ८५

परस्याननसंस्थं यो ग्रासं हरति मन्दधीः ॥
देवोपकरणान्येनं गण्डमालिनमीहते ॥ ८६
दम्भेनाचरते धर्म्मं गजचर्म्मा भवेत् तु सः ।
शिरोऽर्त्तिप्रमुखा रोगा यान्तिविश्वासघातकम्॥८७
लिङ्गपीड़ी शिवस्वञ्च शिवनिर्म्माल्यमेव च ।
स्त्रियोऽप्येवञ्च कल्पेन हृत्वा दोषमवाप्नुयुः ॥ ८८
एतेषामेव जन्तूनां भार्य्यात्वमुपजायते ।
भोगान्ते नरकस्यैतत् सर्व्वमित्यवधारय ॥ ८९
अदर्श्यं खगमेतत् तु मयोक्तं ते समासतः ।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ ९०

एवं विचित्रैर्निजकर्म्मभिर्नृणां
सुखस्य दुःखस्य च जन्मनामपि ।
वैचित्र्यमुक्तं शुभकर्म्मतोऽशुभं
तथाशुभाच्चाशुभमीरयन्ति ॥ ९१

एतत् ते सर्व्वमाख्यातं यत् पृष्टोऽहमिह त्वया ॥ ९२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़संवादे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

सूत उवाच ।

एवमुक्तस्तु हितः पक्षी स्वरूपं निरयस्य तु ।
पप्रच्छ नरकाण्येवं श्रुत्वा चोत्कुलिताकुलः ॥ १

गरुड़ उवाच ।

नरकाणां स्वरूपं मे वद येषु विकर्म्मिणः ।
पात्यन्ते दुःखभूयिष्ठास्तेषां भेदांश्च कीर्त्तय ॥ २

श्रीभगवानुवाच ।

नरकाणां सहस्राणि वर्त्तन्ते ह्यरुणानुज ।
शक्यं विस्तरतो नैव वक्तुं प्राधान्यतो ब्रुवे ॥ ३
रौरवं नाम नरकं मुख्यं तद्वै निबोध मे ।
रौरवे कुटसाक्षी तु याति यश्चानृतो नरः ॥ ४
योजनानां सहस्रे द्वे रौरवो हि प्रमाणतः ।
जानुमात्रप्रमाणन्तु तत्र गर्त्तं सुदुस्तरम् ।
तत्राङ्गारचयौघेन कृतं तद्धरणीसमम् ॥ ५
तत्राग्निना सुतीव्रेण तापिताङ्गारभूमिणा ।
तन्मध्ये पापकर्म्माणं विमुञ्चन्ति यमानुगाः ॥ ६
स दह्यमानस्तीव्रेण वह्निना परिधावति ।
पदे पदे च पादोऽस्य जायते शीर्य्यते पुनः ॥ ७
अहोरात्रेणोद्धरणं पादन्यासं स गच्छति ।
एवं सहस्रं विस्तीर्णं योजनानां विमुच्यते ॥ ८
ततोऽन्यत् पापशुद्ध्यर्थं तादृङ्निरयमृच्छति ।
रौरवस्ते समाख्यातः प्रथमो नरको मया ॥ ९
महारौरवसंज्ञन्तु शृणुष्व नरकं खग ।
योजनानां सहस्राणि सत् तु पञ्च समन्ततः ॥ १०
तत्र ताम्रमयी भूमिरधस्तस्या हुताशनः ।
तया तपन्त्या सा सर्व्वा प्रोद्यद्विद्युत्समप्रभा ।
विभाव्यते महारौद्रा पापिनां दर्शनादिषु ॥ ११
तस्यां बद्धकराश्याञ्च पद्भ्याञ्चैव यमानुगैः ।
मुच्यते पापकृन्मध्ये लुण्ठमानः स गच्छति ॥ १२
काकैर्बकैर्वृकोलूकैर्मशकैर्वृश्चिकैस्तथा ।
भक्ष्यमाणैस्तथारौद्रैर्गतो मार्गे विकृष्यते ॥ १३
दह्यमानो गतमति भ्रान्तस्तातेति चाकुलम् ।
वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ॥ १४
एवं तस्मान्नरैर्मोक्षस्त्वतिक्रान्तैरवाप्यते ।
वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ॥ १५
तस्मान्यस्तु ततो नाम सोऽतिशीतः स्वभावतः ।
महारौरववद्दीर्घस्तथान्धतमसावृतः ॥ १६
शीतार्त्तास्तस्य बध्यन्ति नरास्तमसि दारुणे ।
परस्परं समासाद्य परिरभ्याश्रयन्ति ते ॥ १७
दन्तास्तेषाञ्च भज्यन्ते शीतार्त्तिपरिकम्पिताः ।
क्षुत्तृषातिबलाः पक्षिन्नथ तत्राप्युपद्रवाः ॥ १८
हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः ॥ १९
मज्जासृगस्थिगलितमश्नन्ति च क्षुधान्विताः ।
आलेह्यमाना भ्राम्यन्ते परस्परसमागमे ॥ २०
एवं तत्रापि सुमहान् क्लेशस्तमसि मानवैः ।
प्राप्यते शकुनश्रेष्ठ योऽवद्धः कृतसञ्चयः ॥ २१
निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः ।
तत्र कुलालचक्राणि भ्राम्यन्त्यविरतं खग ॥ २२
तेष्वारोप्य निकृष्यन्ते कालसूत्रेण मानवाः ।
यमानुगाङ्गुलिस्थेन आपादतलमस्तकम् ॥ २३
न चैषां जीवितभ्रंशो जायते पक्षिसत्तम ।
छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति हि ॥ २४

एवं वर्षसहस्राणि भ्राम्यन्ते पापकर्म्मिणः।
तावद्यावदशेषञ्च तत्पापं संचयं गतम्॥ २५
अप्रतिष्ठञ्च नरकं शृणुष्व गदतो मम।
तत्रस्थनारकैर्दुःखमसह्यमनुभूयते॥ २६
तत्रैव तत्र चक्राणि घटीयन्त्राणि चान्यतः।
दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणाम्॥ २७
चक्रेष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः।
यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा॥ २८
घटीयन्त्रेषु बद्धांन्ये बद्धास्तोयघटी यथा।
भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः॥ २९
अन्त्रैर्मुखविनिष्क्रान्तैर्नेत्रै रन्त्रावलम्बिभिः।
दुःखानि प्राप्नुवन्तीह यान्यसह्यानि जन्तुभिः॥ ३०
असिपत्रवनं नाम नरकं शृणु चापरम्।
योजनानां सहस्रं यो ज्वलत्यग्न्यास्तृतावनिः॥ ३१
सप्ततीव्रकरैश्चण्डैर्यत्र तीव्रे सुदारुणे।
प्रतपन्ति सदा तत्र प्राणिनो नरकौकसः॥ ३२
तन्मध्ये चरणं शीतं स्निग्धपत्रं विभाव्यते।
पत्राणि यत्र खड्गानां फलानि पक्षिसत्तम॥ ३३
श्वानश्च तत्र सुबलाश्चरन्त्यामिषभोजनाः।
महावक्त्रा महादंष्ट्रा व्याघ्रा इव महाबलाः॥ ३४
ततश्च वनमालोक्य शिशिरच्छायमग्रतः।
प्रयान्ति प्राणिनस्तत्र क्षुत्तापपरिपीड़िताः॥ ३५
हा मातर्भ्रातस्तातेति क्रन्दमानाः सुदुःखिताः।
दह्यमानाङ्घ्रियुगला धरणिस्थेन वह्निना॥ ३६
तेषां गतानां तत्राशीद्वयत्र याति समीरणः।
प्रवाति तेन पात्यन्ते तेषां खड्गास्तथोपरि॥ ३७
छिन्नाः पतन्ति ते भूमौ ज्वलत्पावकसञ्चये।
लेलिह्यमाने चान्यत्र तप्ताशेषमहीतले॥ ३८
सारमेयाश्च ते शीघ्रं शातयन्ति शरीरतः।
तेषां खण्डान्यनेकानि रुदतामतिभीषणे॥ ३९
असिपत्रवनं तात मयैतत् परिकीर्त्तितम्।
अतः परं भीमतरं तप्तकुम्भं निबोध मे॥ ४०
समन्ततस्तप्तकुम्भा वह्निज्वालसमन्विताः।
ज्वलदग्निचयास्तप्त-तैलायश्चूर्णपूरिताः॥ ४१
एषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता ह्यधोमुखाः।
क्वाथ्यन्ते विस्फुटद्गात्रा गलन्मज्जा जलान्विताः॥ ४२
स्फुटत्कपालनेत्रास्थि-च्छिद्यमाना विभीषणैः।
गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः॥ ४३
पुनश्चिमिचिमायन्ते तैलेनैक्यं व्रजन्ति च।
द्रवीभूतैः शिरोगात्रैः स्नायुमांसत्वगस्थिभिः॥ ४४
ततो याम्यैर्नरैराशु दर्व्वया घट्टनघट्टिताः।
कृतावर्त्ते महातैले क्वाथ्यन्ते पापकर्म्मिणः।
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया खग॥ ४५
आदिमो रौरवः प्रोक्तो महारौरवकोऽपरः।
अतिशीतस्तृतीयस्तु चतुर्थो हि निकृन्तनः॥ ४६
अप्रतिष्ठः पञ्चमः स्यादसिपत्रवनोऽपरः।
सप्तमस्तप्तकुम्भस्तु सप्तैते नरका मताः॥ ४७
अन्यान्यपि च श्रूयन्ते नरकाणि नराधमाः।
कर्म्मणां तारतम्येन तेषु तेषु पतन्ति हि॥ ४८
तथा हि नरको रोधः शूकरस्ताल एव च।
तप्तकुम्भो महाज्वालः शबलोऽथ विमोहनः॥ ४९
क्रिमी च क्रिमिभक्षश्च लालाभक्षो विशञ्जनः।
अधःशिरा पूयवहो रुधिरान्धश्च विड्भुजः॥ ५०
तथा वैतरणी मूत्रमसिपत्रवनं तथा।
अग्निज्वालो महाघोरः सन्दंशो वाय्यभोजनः॥ ५१
तमश्च कालसूत्रश्च लोहश्चाप्यभिदस्तथा।
अप्रतिष्ठोऽप्यवीचिश्च नरका एवमादयः॥ ५२
तामसा नरकाः सर्व्वे यमस्य विषये स्थिताः।
येषु दुष्कृतकर्म्माणः पतन्ति हि पृथक् पृथक्॥ ५३
भूमेरधस्तात् ते सर्व्वे रौरवाद्याः प्रकीर्त्तिताः॥५४
रोधे गोघ्नो भ्रूणहा च अग्निदाता नरः पतेत्।
शूकरे ब्रह्महा मज्जेत् सुरापः स्वर्णतस्करः॥ ५५
ताले पतेत् क्षत्रिहन्ता हत्वा वैश्यञ्च दुर्गतिः।
ब्रह्महत्याञ्च यः कुर्य्याद्यश्च स्याद्गुरुतल्पगः॥ ५६
तप्तकुम्भी स्वसागामी तथा राजभटश्च यः।
तप्तलोहेश्च विक्रेता तथा बन्धनरक्षिता॥ ५७
साध्वीविक्रयकर्त्ता च यस्तु भक्तं परित्यजेत्।
महाज्वाली दुहितरं स्नुषां गच्छति यस्तु वै॥ ५८
वेदो विक्रीयते येन वेदं दूषयते तु यः।
गुरुञ्चैवावमन्यन्ते वाक्शरैस्ताड़यन्ति च॥ ५९
अगम्यागामी च नरो नरकं शबलं व्रजेत्।
विमोहे पतते शूरे मर्य्यादां यो भिनत्ति वै॥ ६०

दुरिष्टं कुरुते यस्तु कृमिभक्षं प्रपद्यते।
देवब्राह्मणविद्वेष्टा लालाभक्षे पतत्यपि॥ ६१
कुण्डकर्त्ता कुलालश्च न्यासहर्त्ता चिकित्सकः।
आरामेष्वग्निदाता च एते यान्ति विसञ्जने॥ ६२
असत्प्रतिग्रही यस्तु तथैवायाज्ययाजकः।
नक्षत्रैर्जीवते यस्तु नरो गच्छेदधोमुखम्॥ ६३
क्षीरं सुराञ्च मांसञ्च लाक्षां गन्धं रसं तिलान्।
एवमादीनि विक्रीणन् घोरे पूयवहे पतेत्॥ ६४
यः कुक्कुटान् निबध्नाति मार्जारान् शूकरांश्च तान्।
पक्षिणश्च मृगांश्छागान् सोऽप्येवं नरकं व्रजेत्॥ ६५
आजाविको माहिषिकस्तथा चक्री ध्वजी च यः।
रङ्गोपजीविको विप्रः शाकुनिर्ग्रामयाजकः॥ ६६
अगारदाही गरदः कुण्डाशी सोमविक्रयी।
सुरापो मांसभक्षी च तथा च पशुघातकः॥ ६७
रुधिरान्धे पतन्त्येते एवमाहुर्मनीषिणः।
उपविष्टमेकपङ्क्त्या विषं सम्भोजयन्ति ये॥ ६८
पतन्ति निरये घोरे विड्भुजे नात्र संशयः।
मधुग्राही वैतरणीमाक्रोशी मूत्रसंज्ञके॥ ६९
असिपत्रं वनेऽशौची क्रोधनश्च पतेदपि।
अग्निज्वालामृगव्याधो भोज्यते यत्र वायसैः॥ ७०
इज्यायां व्रतलोपाच्च सन्दंशे नरके पतेत्।
स्कन्दते यदि वा स्वप्ने यतिनो ब्रह्मचारिणः॥ ७१
पुत्त्रैरध्यापिता ये च पुत्त्रैराज्ञापिताश्च ये।
ते सर्व्वे नरकं यान्ति निरयं चाप्यभोजनम्(क)॥ ७२
वर्णाश्रमविरुद्धानि क्रोधहर्षसमन्विताः।
कर्म्माणि ये तु कुर्व्वन्ति सर्व्वे निरयवासिनः॥ ७३
उपरिष्टात् स्थितो घोर उष्णात्मा रौरवो महान्।
सुदारुणः सुशीतात्मा तस्याधस्तामसः स्मृतः॥ ७४
एवमादिक्रमेणैव सर्व्वेऽधोऽधः परिस्थिताः।
दुःखोत्कर्षश्च सर्व्वेषु कर्म्मस्वपि निमित्ततः॥ ७५
सुखोत्कर्षश्च सर्व्वत्र धर्म्मस्येह निमित्ततः।
पश्यन्ति नरकान् देवा ह्यधोवक्त्रान् सुदारुणान्॥ ७६
नरकाश्चापि ते देवान् सर्व्वान् पश्यन्ति ऊर्द्ध्वगान्।
एतान्यन्योन्यशतशो नरकाणि वियन्नते॥ ७७
दिने दिने तु नरके पच्यते दह्यतेऽन्यतः।
शीर्य्यते भिद्यतेऽन्यत्र चूर्य्यते क्लिद्यतेन्यतः॥ ७८
क्वथ्यते दीप्यतेऽन्यत्र तथा वातहतोऽन्यतः।
एकं दिनं वर्षशतप्रमाणं नरके भवेत्॥ ७९
ततः सर्व्वेषु निस्तीर्णः पापी तिर्य्यक्त्वमश्नुते।
कृमि-कीट-पतङ्गेषु स्थावरैकशफेषु च॥ ८०
गत्वा वनगजाद्येषु गोष्वश्वेषु तथैव च।
खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा॥ ८१
एते चैकशफाः षट् च शृणु पञ्चनखान्यतः।
अन्यासु बहुपापासु दुःखदासु च योनिषु॥ ८२
मानुष्यं प्राप्यते कुब्जो कुत्सितो वामनोऽपि वा।
चण्डाल-पुक्कसाद्यासु नरयोनिषु जायते॥ ८३
मुहुर्गर्भे वसन्त्येव म्रियन्ते च मुहुर्मुहुः।
अवशिष्टेन पापेन पुण्येन च समन्वितः॥ ८४
ततश्चारोहिणीं योनिं शूद्र-वैश्य-नृपादिकम्।
विप्र-देवेन्द्रताञ्चापि कदाचिदवरोहति॥ ८५
एवन्तु पापकर्म्माणो निरयेषु पतन्त्यधः।
यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु॥ ८६
ते यमेन विनिर्द्दिष्टां योनिं पुण्यगतिं नराः।
प्रगीतगन्धर्व्वगणा नृत्योत्सवसमाकुलाः॥ ८७
हारनूपुरमाधुर्य्यैः शोभितान्यमलानि तु।
प्रयान्त्याशु विमानानि दिव्यं गन्धस्रगुज्ज्वलाः॥ ८८
तस्माच्च प्रच्युता राज्ञामन्येषाञ्च महात्मनाम्।
जायन्ते नीरुजां गेहे सद्वृत्तपरिपालकाः॥ ८९
भोगान् सम्प्राप्नुवन्त्युग्रान् ततो यान्त्यूर्द्ध्वमन्यथा।
अवरोहिणीं सम्प्राप्य पूर्व्ववद्यान्ति मानवाः॥ ९०
जातस्य मृत्युलोके वै प्राणिनो मरणं ध्रुवम्।
पापिष्ठानामधोमार्गो जीवो निष्क्रमते ध्रुवम्॥ ९१
पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च।
तेजस्तेजसि लीयेत समीरे च समीरणः।
आकाशे च तथाकाशं सर्व्वव्यापि निशाकरे॥ ९२
तत्र कामस्तथा क्रोधः काये पञ्चेन्द्रियाणि च।
एते तार्क्ष्य समाख्याता देहे तिष्ठन्ति तस्कराः॥ ९३
कामः क्रोधो ह्यहङ्कारो मनस्तत्रैव नायकः।
संहारश्चैव कालोऽसौ पुण्यपापेन संयुतः॥ ९४
पञ्चेन्द्रियसमायुक्तः सकलैर्विबुधैः सह।
प्रविशेत् स नवे देहे गृहे दग्धे गृही यथा॥ ९५

(क) तुच्छभोजनमिति च पाठः।

शरीरे ये समासीनाः सर्व्वे च सप्त धातवः ।
षाट्कौशिको ह्ययं कायः सर्व्वे वाताश्च देहिनाम् ॥ ९६
मूत्रं पुरीषं तद्वयोगाद्ध्ये चान्ये व्याधयस्तथा ॥ ९७
पित्तं श्लेष्मा त्वथा मज्जा मांसं वै मेद एव च ।
अस्थि शुक्रं तथा स्नायुर्देहेन सह दह्यति ॥ ९८
एष ते कथितस्तार्क्ष्य विनाशः सर्व्वदेहिनाम् ।
कथयामि पुनस्तेषां शरीरञ्च यथा भवेत् ॥ ९९
एकस्तम्भं स्नायुबद्धं स्थूणात्रयविभूषणम् ।
इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम् ॥ १००
विषयैश्च समाक्रान्तं काम-क्रोधसमाकुलम् ।
राग-द्वेष-समाकीर्णं तृष्णा-दुर्गमतस्करम् ॥ १०१
लोभजालपरिच्छिन्नं मोहवस्त्रेण वेष्टितम् ।
सुबद्धं मायया चैतल्लोभेनाधिष्ठितं पुरम् ॥ १०२
एतद्गुणसमाकीर्णं शरीरं सर्व्वदेहिनाम् ।
आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः॥१०३
एवमेव समाख्यातं शरीरं ते चतुर्विधम् ॥ १०४
चतुरशीतिलक्षाणि निम्मिता योनयः पुरा ।
स्वेदजा उद्भिजाश्चैव अण्डजाश्च जरायुजाः ॥१०५
एतत् ते सर्व्वमाख्यातं निरयस्य प्रपञ्चतः ।
कथयामि क्रमप्राप्तं प्रष्टुं वा वर्त्तते स्पृहा ॥ १०६

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे नरकवर्णनं
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

सूत उवाच ।

एवमुक्ताच्युतः पक्षी स्वर्गाच्च नरकादपि ।
नृणां गर्भगतिं श्रुत्वापृच्छद्गर्भविधिं विभुम् ॥ १

गरुड़ उवाच ।

कथमुत्पद्यते जन्तुर्भूतग्रामे चतुर्विधे ।
त्वचा रक्तं तथा मांसं मेदो मज्जास्थि जीवितम् ॥२
पादौ पाणी तथा गुह्यं जिह्वा केशा नखाः शिरः ।
सन्धिमार्गाच्च बहवो रेखा नैकविधास्तथा ॥ ३
कामः क्रोधो भयं लज्जा मानो हर्षः सुखासुखम् ।
त्रिविधं छिद्रितञ्चापि नानाजालेन वेष्टितम् ॥ ४
इन्द्रजालमहं मन्ये संसारे सारसागरे ।
कर्त्ता कोऽत्र महाबाहो संसारे दुःखसङ्कुले ॥ ५

श्रीकृष्ण उवाच ।

साधु पृष्टं त्वया लोके सदयं जीवकारणम् ।
वैनतेय शृणुष्व त्वमेकाग्रकृतमानसः ॥ ६
ऋतुकाले तु नारीणां त्यजेद्दिनचतुष्टयम् ।
यतस्तस्मिन् ब्रह्महत्या पुरा वृत्रसमुत्थिता ॥ ७
सप्ताहात् पितृदेवानां भवेद्योग्या व्रतार्च्चने ।
सप्ताहमध्ये यो गर्भस्तत्सम्भूतिर्मलिम्लुचा ॥ ८
पूर्व्वसप्तकमुत्सृज्य तासु युग्मासु संविशेत् ।
षोड़शर्त्तुनिशाः स्त्रीणां सामान्यात् समुदाहृताः ॥९
शुक्र-शोणितयोर्योगात् पिण्डोत्पत्तिः प्रजायते ।
वर्द्धते जठरे जन्तुस्तारापतिरिवाम्बरे ॥ १०
रक्ताधिके पुरन्ध्री स्यात् पुमान् शुक्राधिके भवेत् ।
शुक्रशोणितयोः साम्ये गर्भे षण्डत्वमाप्नुयात् ॥ ११
अहोरात्रेण कललं बुद्बुदः पञ्चभिर्दिनैः ।
चतुर्द्दशैर्भवेन्मांसं मिश्रं धातुसमन्वितम् ॥ १२
घनमांसञ्च विंशाहे गर्भस्थं वर्द्धते क्रमात् ।
पञ्चविंशतिपूर्णाहे बलं पुष्टिः प्रजायते ॥ १३
तार्क्ष्य मासे तु सम्पूर्णे पञ्च तत्त्वानि धारयेत् ।
मासद्वये तु सञ्जाते त्वचा मेदश्च जायते ॥ १४
मज्जास्थीनि त्रिभिर्मासैः केशाङ्गुल्यश्चतुर्थके ।
कर्णौ च नासिका वक्षो वक्त्रं मासे च पञ्चमे ॥ १५
कण्ठरन्ध्रोदरं पुष्टि-पायुगुह्यञ्च सप्तमे ।
अङ्ग-प्रत्यङ्गसम्पूर्णे गर्भे जीवश्च सप्तमे ॥ १६
अष्टमे चलते जीवो धात्रीगर्भे पुनः पुनः ।
नवमे मासि सम्प्राप्ते गर्भस्यास्य स्थितिः स्वयम् ॥१७
मज्जास्थिशुक्रमांसानि रोम रक्तं बलं तथा ।
षाट्कौशिकमिदं पिण्डं तस्यान्ते पाञ्चभौतिकम् १८
नवमे दशमे वापि जायते पाञ्चभौतिकम् ।
क्षितिर्वारि हविर्भोक्ता पवनाकाशमेव च ॥ १९
एभिर्भूतैः पिण्डितस्तु निबद्धः स्नायुबन्धनः ।
त्वचास्थि नाड़्यो रोम मांसञ्चैवात्र पञ्चमम् ॥२०
एते पञ्च गुणाः प्रोक्ता मया भूमेः खगेश्वर ।
तथा पञ्च गुणा अद्भ्यस्तथा तच्छृणु काश्यप ॥ २१
लाला मूत्रं तथा शुक्रं मज्जा रक्तञ्च पञ्चमम् ।

अपां पञ्च गुणाः प्रोक्ता ज्ञातव्यास्ते प्रयत्नतः ॥ २२
क्षुधा तृषा तथा निद्रा अलस्यं कान्तिरेव च।
तेजः पञ्चगुणं प्रोक्तं तार्क्ष्य सर्व्वत्र योगिभिः ॥ २३
राग-द्वेषौ तथा मज्जा भय-मोहौ तथैव च।
इत्येतत् कथितं तार्क्ष्य वायुजं गुणपञ्चकम् ॥ २४
धावनं चालनञ्चैव आकुञ्चनप्रसारणम्।
निरोधः पञ्चमः प्रोक्तो वायोः पञ्च गुणाः स्मृताः॥२५
घोषश्चिन्ता च गाम्भीर्य्यं श्रवणं सत्त्वसंक्रमः।
आकाशस्य गुणाः पञ्च ज्ञातव्यास्तार्क्ष्य यत्नतः ॥२६
प्राणापानौ समानश्च उदानो व्यान एव च।
नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ॥ २७
आहारो भुक्तमात्रस्तु वायुना क्रियते द्विधा।
सम्प्रविश्य गुदे सम्यक् पृथगन्नं पृथग्जलम् ॥ २८
रोमकोव्यस्तथा तिस्रोऽप्यर्द्धकोटिसमन्विताः।
विंशतिस्तु नखाः केशाः सप्तविंशतिकोटयः ॥ २९
मांसं पलसहस्रकं सामान्ये देहसंस्थितम्।
रक्तं पलशतं तार्क्ष्य बद्धमेवं पुरातनैः ॥ ३०
पलानि दश मेदश्च त्वचा चैव तु तत्समा।
अस्थ्नां हि द्व्यधिकं प्रोक्तं षष्ठ्यधिकशतत्रयम् ॥ ३१
एवं संजायते तार्क्ष्य मर्त्त्ये जन्तुः स्वकर्म्मभिः।
उत्पन्ना ये हि संसारे म्रियन्ते ते न संशयः ॥ ३२
आयुः कर्म्म च वित्तञ्च विद्या निधनमेव च।
पञ्चतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ३३
कर्म्मणा जायते जन्तुः कर्म्मणैव हि लीयते।
सुख-दुःख-भयं क्षेमं कर्म्मणैव हि प्राप्यते ॥ ३४
अधोमुखमूर्द्ध्वपादं गर्भाद्वायुः प्रकर्षति।
तले तु जानुपार्श्वाभ्यां करयोर्न्यस्य वर्द्धते ॥ ३५
अङ्गुष्ठौ चोपरिन्यस्तौ जान्वोरथ कराङ्गुली।
जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिका ॥ ३६
एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः।
काठिन्यमस्थीन्यायान्ति भुक्तपीतेन जीवति ॥ ३७
नाड़ी वाप्यायनी नाम नाभ्यां तस्य निबध्यते।
स्त्रीणां तथान्त्रशुषिरे स निबद्धः प्रजायते ॥ ३८
क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे तथा।
तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति च ॥ ३९
स्मृत्यस्तत्र प्रयान्त्यस्य बह्व्यः संसारभूतयः।

ततो निर्व्वेदमायाति पीड़मान इतस्ततः ॥ ४०
पुनर्नैवं करिष्यामि मुक्तमात्र इहोदरात्।
तथा तथा पतिष्यामि गर्भं नाप्नोम्यहं यथा ॥ ४१
इति सञ्चिन्तयन् जीवो स्मृत्वा जन्मशतानि वै।
यानि पूर्व्वानुभूतानि दैवभूतात्मजानि वै ॥ ४२
ततः कालक्रमाज्जन्तुः परिवर्त्तत्यधोमुखः।
नवमे दशमे वापि मासि संजायते ततः ॥ ४३
निष्क्रम्यमाणो वातेन प्राजापत्येन पीड्यते।
निष्क्रम्यते च विलयन् तदा दुःखनिपीड़ितः ॥ ४४
निष्क्रामंश्चोदरान्मूर्च्छामसह्यां प्रतिपद्यते।
प्राप्नोति चेतनाञ्चासौ वायुस्पर्शसुखान्वितः ॥ ४५
ततस्तं वैष्णवी माया समास्कन्दति मोहिनी।
तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुते ॥ ४६
भ्रष्टज्ञानं बालभावे ततो जन्तुः प्रपद्यते।
ततः कौमारकावस्था यौवनं वृद्धतामपि ॥ ४७
पुनश्च तद्वन्मरणं जन्म प्राप्नोति मानवः।
ततः संसारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत् ॥ ४८
कदाचित् स्वर्गमाप्नोति कदाचिन्निरयं नरः।
निरयञ्चैव स्वर्गञ्च स्वकर्म्मफलमश्नुते ॥ ४९
कदाचिद्भुक्तकर्म्मा च भुवः स्वल्पेन गच्छति।
स्वर्लोके नरके चैव भुक्तप्राये द्विजोत्तमाः ॥ ५०
नरकेषु महद्दुःखमेतद्यत्स्वर्गवासिनः।
दृश्यन्ते तात मोदन्ते पात्यमानैस्तु नारकैः ॥ ५१
स्वर्गेऽपि दुःखमतुलं यदारोहणकालतः।
प्रभृत्यहं पतिष्यामीत्येतन्मनसि वर्त्तते ॥ ५२
नारकांश्चैव सम्प्रेक्ष्य महद्दुःखमवाप्यते।
एवं गतिमहं गन्तेत्यहर्निशमनिर्वृतः ॥ ५३
गर्भवासे महद्दुःखं जायमानस्य योनिजम्।
जातस्य बालभावेऽपि वृद्धत्वे दुःखमेव च ॥ ५४
कामेर्ष्याक्रोधसम्बन्धं यौवनेऽपि च दुःसहम्।
दुःस्वप्नो या वृद्धता च मरणे दुःखमुत्कटम् ॥ ५५
कृष्यमाणश्च याम्यैः स नरकेऽपि च यात्यधः।
पुनश्च गर्भाज्जन्म स्यान्मरणं दुष्कर तथा ॥ ५६
एवं संसारचक्रेऽस्मिन् जन्तवो घटियन्त्रवत्।
भ्राम्यन्ते प्राक्तनैर्बन्धैर्बद्धा विध्यन्ति चासकृत् ॥ ५७
नास्ति पक्षिन् सुखं किञ्चित् क्षेत्रे दुःखशताकुले।

विनतासुत मोचाय यतितव्यं ततो नरः ॥ ५८
एतत् ते सर्व्वमाख्यातं यथा गर्भस्य संस्थितिः ।
कथयामि क्रमप्रश्नं प्रष्टुं वा वर्त्तते स्पृहा ॥ ५९

गरुड़ उवाच ।

मध्ये कृतमहाप्रश्नद्वयस्याप्तं मयोत्तरम् ।
तृतीयस्यापि प्रश्नस्य उत्तरञ्च विधीयताम् ॥ ६०

श्रीकृष्ण उवाच ।

म्रियमाणस्य किं कृत्यमिति त्वं पृष्टवानसि ।
शृणु तत्रोत्तरं वत्स कथयामि समासतः ॥ ६१
आसन्नमरणं ज्ञात्वा पुरुषं स्नापयेत् ततः ।
गोमूत्र-गोमय-मृत्तीर्थोदक-कुशोदकैः ॥ ६२
वाससी परिधाप्याथ धौते तु शुचिनी शुभे ।
दर्भाण्यादौ समास्तीर्य्य दक्षिणाग्रान् विकीर्य्य च ।
तिलान् गोमयलिप्तायां भूमौ तत्र निवेशयेत् ॥ ६३
प्रागुदक्शिरसं वापि मुखे स्वर्णं विनिक्षिपेत् ॥ ६४
शालग्रामशिला तत्र तुलसी च खगेश्वर ।
विधेया सन्निधौ सर्पिर्दीपस्य ज्वलनं पुनः ॥ ६५
नमो भगवते वासुदेवायेति जपस्तथा ।
आदौ तु प्रणवं कृत्वा पूजादाने ततः स्मृते ॥ ६६
समभ्यर्च्च हृषीकेशं पुष्पधूपादिभिस्ततः ।
प्रणिपातैः स्तवैः पुण्यैर्ध्यानयोगैर्न्न पूजयेत् ॥ ६७
दत्त्वा दानञ्च विप्रेभ्यो दीनानाथेभ्य एव च ।
पुत्त्रे मित्रे कलत्रे च क्षेत्र-धान्य-धनादिषु ॥ ६८
निवर्त्तयेन्ममत्वञ्च विष्णोः पादौ हृदि स्मरन् ।
उच्चैः पुरुषसूक्तञ्च यदि श्रेष्ठापदस्तथा ॥ ६९
पुत्त्राद्याः प्रपठेयुस्ते म्रियमाणे निजे जने ।
एतत् ते सर्व्वमाख्यातं कृत्यं मृत्यावुपस्थिते ॥ ७०
फलमप्यस्य कृत्यस्य समासात् ते वदाम्यहम् ।
स्नानेन शुचिताप्राप्तिरपावित्र्यच्युतिस्ततः ॥ ७१
ततो विष्णोः स्मृतिस्तस्याज्ञाभिः सर्व्वफलप्रदा ।
दर्भतूलो नयेत् स्वर्गमातुरन्तु न संशयः ॥ ७२
तिलैर्द्दर्भैश्च निक्षिप्तैः स्नानं क्रतुमयं भवेत् ।
ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशस्तथैव च ॥ ७३
मण्डले चोपतिष्ठन्ति तस्मात् कुर्व्वीत मण्डलम् ।
प्रागुदग्वा कृतेनेह शिरसा लोकमुत्तमम् ॥ ७४
व्रजते यदि पापस्याल्पत्वं पुंसो भवेत् खग ।
पञ्चरत्नं मुखे मुक्ते जीवे ज्ञानं प्ररोहति ॥ ७५
तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ।
पञ्च प्रवहणान्येव भवाब्धौ मज्जतां नृणाम् ॥ ७६
विष्णुरेकादशी-गीता-तुलसी-विप्र-धेनवः ।
असारे दुर्गसंसारे षट्पदी भक्तिदायिनी ॥ ७७
नमो भगवते वासुदेवायेति जपन् नरः ।
ओङ्कारपूर्व्वात् सायुज्यं प्राप्नुयान्नात्र संशयः ॥ ७८
पूजयापि च मल्लोक-प्राप्तिर्दानाद्दिवं व्रजेत् ।
बन्धाभावो ममत्वे तु ज्ञानं पुरुषसूक्ततः ॥ ७९
यस्य यस्याधिकत्वन्तु साधनेष्वेषु काश्यप ।
तत्तत्फलस्याप्याधिक्यं भवतीत्यवधारय ॥ ८०
दातव्यानि यथाशक्त्या प्रीतोऽसौ प्रीणितो भवेत्॥८१
एतत् ते सर्व्वमाख्यातं स्नानादिषु फलं मया ।
दानस्यापि विधिं वच्मि मृत्युसम्बन्धिनः खग ॥ ८२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे गर्भवसतिवर्णनं
नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

श्रीकृष्ण उवाच ।

ज्ञानतोऽज्ञानतो वापि यन्नरैः कलुषं कृतम् ।
तस्य पापस्य शुद्ध्यर्थं विधेया निष्कृतिर्नरैः ॥ १
भस्मादिस्नानदशकमादौ कुर्य्याद्विचक्षणः ।
यथाशक्ति षड़ब्दादि प्रत्याम्नायाचरेदपि ॥ २
तदर्द्धं वा तदर्द्धं वा तदर्द्धार्द्धमथापि वा ।
यथाशक्त्या ततः कुर्य्याद्दश दानानि वै शृणु ॥ ३
गो-भू-तिल-हिरण्याज्य-वासो-धान्य-गुड़ास्तथा ।
रजतं लवणञ्चैव दानानि दश वै विदुः ॥ ४
प्रायश्चित्तस्यागता ये तानि दद्यान्नरो दश ।
ततो यमद्वारपथे पूय-शोणितसङ्कुले ॥ ५
नदीं वैतरणीं तर्त्तुं दद्याद्वैतरणीञ्च गाम् ।
कृष्णस्तनी सुकृष्णाङ्गी सा वै वैतरणी स्मृता ॥ ६
तिला लौहं हिरण्यञ्च कार्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ ७
एतान्यष्टौ महादानान्युत्तमाय द्विजातये ।

आतुरेण तु देयानि पदरूपाणि मे शृणु ॥ ८
छत्त्रोपानह-वस्त्राणि मुद्रिका च कमण्डलुः।
आसनं भाजनं भोज्यं पदञ्चाष्टविधं स्मृतम् ॥ ९
तिलपात्रं सर्पिःपात्रं शय्या सोपस्करा तथा।
एतत् सर्व्वं प्रदातव्यं यदिष्टञ्चात्मनोऽपि तत् ॥ १०
अश्वो रथश्च महिषी व्यञ्जनं वस्त्रमेव च।
ब्राह्मणेभ्यः प्रदातव्यं ब्रह्मपूर्व्वमपि स्वयम् ॥ ११
दानान्यन्यान्यपि खग तर्पयेत् स्वीयशक्तितः।
प्रायश्चित्तं कृतं येन दश दानान्यपि क्षितौ ॥ १२
दानं गोवैतरण्याश्च दानान्यष्टौ तथापि वा।
तिलपात्रं सर्पिःपात्रं शय्यादानं तथव च।
पददानञ्च विधिवन्नासौ निरयगर्भगः ॥ १३
स्वातन्त्र्येणापि लवण-दानमिच्छन्ति सूरयः।
विष्णुदेहसमुत्पन्नो यतोऽयं लवणो रसः ॥ १४
आतुरस्य यदा प्राणा न यान्ति वसुधातले।
लवणञ्च तदा देयं द्वारञ्चोद्घाटनं दिवः ॥ १५
यानि कानि च दानानि स्वयं दत्तानि मानवैः।
तानि तानि च सर्व्वाणि उपतिष्ठन्ति चाग्रतः ॥ १६
प्रायश्चित्तं कृतं येन साङ्गं खग स वै पुमान्।
पापानि भस्मसात् कृत्वा स्वर्गलोके महीयते। १७
अमृतन्तु गवां क्षीरं यतः पतगसत्तम।
तस्माद्ददाति यो धेनुममृतत्वं स गच्छति ॥ १८
दानान्यष्टौ तु दत्त्वा वै गन्धर्व्वनिलये वसन्।
आलयस्तत्र रौद्रे हि दह्यते येन मानवः ॥ १९
छत्रदानेन सुच्छाया जायते पथि तुष्टिदा।
असिपत्रं वनं घोरमतिक्रामति वै सुखम् ॥ २०
अश्वारूढश्च व्रजते ददते यद्युपानहौ।
भाजनासनदानेन सुखं मार्गे भुनक्ति वै ॥ २१
प्रदेशे निर्ज्जले दाता सुखी स्याद्दै कमण्डलोः ॥ २२
यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः।
न पीड़यन्ति दाक्षिण्याद्वस्त्राभरणदानतः ॥ २३
तिलपात्रन्तु विप्राय दत्तं पत्ररथ ध्रुवम्।
नाशयेत् त्रिविधं पापं वाङ्मनःकाय्यसम्भवम् ॥ २४
घृतपात्रप्रदानेन रुद्रलोके वसेन्नरः ॥ २५
सर्व्वोपस्करसंयुक्तां शय्यां दत्त्वा द्विजातये।
नानाप्सरोभिराकीर्णं विमानमधिरोहति ॥ २६

षष्टिवर्षसहस्राणि क्रीड़िला शक्रमन्दिरे।
इन्द्रलोकात् परिभ्रष्ट इह लोके नृपो भवेत् ॥ २७
सर्व्वोपस्करणोपेतं युवानं दोषवर्ज्जितम्।
योऽश्वं ददाति विप्राय स्वर्गलोके च तिष्ठति ॥ २८
यावन्ति रोमाणि हये भवन्ति हि खगेश्वर।
तावतो राजितान् लोकानाप्नुवन्ति हि पुष्कलान् ॥ २९
चतुर्भिस्तुरगैर्युक्तं सर्व्वोपकरणैर्युतम्।
रथं द्विजातये दत्त्वा राजसूयफलं लभेत् ॥ ३०
दुग्धाधिकाञ्च महिषीं नवमेघवर्णां
सन्तुष्टतर्णकवतीं जघनाभिरामाम्।
दत्त्वा सुवर्णतिलकां द्विजपुङ्गवाय
लोकोदयं स जयतीति किमत्र चित्रम् ॥ ३१
तालवृन्तस्य दानेन वायुना वीज्यते पथि।
कान्तियुक् सुभगः श्रीमान् भवत्यम्बरदानतः ॥ ३२
रसान्नोपस्करयुतं गृहं विप्राय योऽर्पयेत्।
न क्षीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥ ३३
भवत्यत्र खगश्रेष्ठ फलगौरवलाघवम्।
श्रद्धाश्रद्धाविभेदेन दानगौरव-लाघवात् ॥ ३४
ततो येनाम्बुदानानि कृतान्यत्र रसास्तथा।
तदा खग तथाह्लादमापदि प्रतिपद्यते ॥ ३५
अन्नानि येन दत्तानि श्रद्धापूतेन चेतसा।
सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेन वै तदा ॥ ३६
आसन्ने मरणे कुर्य्यात् सन्न्यासं चेद्विधानतः।
आवर्त्तेत पुनर्नासौ ब्रह्मभूयाय कल्पते ॥ ३७
आसन्नमरणो मर्त्यश्चेत् तीर्थं प्रति नीयते।
तीर्थप्राप्तौ भवेन्मुक्तिर्म्रियते यदि मार्गगः।
पदे पदे क्रतुसमं भवेत् तस्य न संशयः ॥ ३८
गृह्णीयाच्चेदनशनं व्रतं विधिवदागते।
मृत्यौ न सोऽपि संसारे भूयः पर्य्यटति द्विज ॥ ३९
किं दानमिति तुर्य्यस्य प्रश्नस्योत्तरितं मया।
दाहमृत्योरन्तरे किमिति प्रश्नोत्तरं शृणु ॥ ४०
गतप्राणं ततो ज्ञात्वा स्नात्वा पुत्रादिरात्मजम्।
शवं जलेन शुद्धेन क्षालयेदविचारयन् ॥ ४१
परिधाप्याहते वस्त्रे चन्दनैः प्रोक्षयेत् तनुम्।
ततो मृतस्य स्थाने वै एकोद्दिष्टं समाचरेत् ॥ ४२
प्रयोगपूर्व्वं दाहस्य योग्यतादियंतो भवेत्।

आसनं प्रोक्षणञ्च स्यान्न स्यादेतच्चतुष्टयम् ॥ ४३
आवाहनार्च्चने नैव पात्रालम्भावगाहने ।
भवेद्दानान्न सङ्कल्पः पिण्डदानं सदा भवेत् ॥ ४४
पदार्थपञ्चकं न स्याद्रेखा प्रत्यवनेजनम् ।
दद्यादक्षय्यमुदकं न स्यादेतत्त्रयं पुनः ।
स्वधावाचनमाशीश्च तिलकञ्च खगोत्तम ॥ ४५
षट् दद्यात् समाषान्नं दद्याल्लोहस्य दक्षिणाम् ।
पिण्डस्य चालनं प्रोक्तं सैव प्रोक्तमिदं त्रिकम् ॥ ४६
प्रच्छादन-विसर्गौ च स्वस्तिवाचनकं तथा ।
एषु षट्सु विधिः प्रोक्तः श्राद्धेषु मलिनेषु ते ॥ ४७
षड़ेव मरणस्थाने द्वारि चत्वारिके तथा ।
विश्रामे काष्ठचयने तथा सञ्चयने खग ॥ ४८
मृतिस्थाने शवो नाम भूमिस्तुष्यति देवता ।
पान्थो द्वारि भवेत् तेन प्रीता स्याद्वास्तुदेवता ॥४९
चत्वरे खेचरस्तेन तुष्येद्भूतादिदेवता ।
विश्रामे भूतसंज्ञोऽयं तुष्टास्तेन दिशो दश ।
चितायां साधक इति सञ्ज्ञितो प्रेत उच्यते ॥ ५०
तिल-दर्भ-घृतैर्धांसि गृहीत्वा तु सुतादयः ।
गाथां यमस्य सूक्तं वाप्यधीयाना व्रजन्ति हि ॥ ५१
अहरहर्नीयमानो गामश्वं पुरुषं वृषम् ।
वैवस्वतो न तृप्येत सुरया इव दुर्म्मतिः ॥ ५२
इमां गाथामुपेतेति सूक्तं वा पथि संपठेत् ॥ ५३
दक्षिणस्यां दिश्यरण्यं व्रजेयुः सर्व्वबान्धवाः ।
पथि श्राद्धद्वयं कुर्य्यात् पूर्व्वोक्तविधिना खग ॥ ५४
ततः शनैर्भूतले वै दक्षिणाशिरसं शवम् ।
स्थापयित्वा चिताभूमौ पूर्व्वोक्तं श्राद्धमाचरेत् ॥ ५५
तृणकाष्ठतिलाज्यादि स्वयं निन्युः सुतादयः ।
शूद्रानीतैः कृतं कर्म्म सर्व्वं भवति निष्फलम् ॥ ५६
प्राचीनावीतिना भाव्यं दक्षिणाभिमुखेन च ।
वेदी तत्र प्रकर्त्तव्या यथाशास्त्रमथाण्डज ॥ ५७
प्रेतवस्त्रं द्विधा कृत्वार्द्धेन तं छादयेत् ततः ।
अर्द्धं श्मशानवासार्थं भूमावेव विनिक्षिपेत् ॥ ५८
ततः पूर्व्वोक्तविधिना पिण्डं प्रेतकरे न्यसेत् ।
आज्येनाभ्यञ्जनं कार्य्यं सर्व्वाङ्गेषु शवस्य च ॥ ५९
दाह-मृत्योरन्तराले विधिर्दाहस्य तं शृणु ।
पूर्व्वोक्तैः पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ।
अन्यथा चोपघाताय राक्षसाद्या भवन्ति हि ॥ ६०
संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य वेदिकाम् ।
अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः ॥ ६१
पुष्पाक्षतैश्च सम्पूज्य देवं क्रव्यादसंज्ञकम् ।
श्रौतेन तु विधानेन आहिताग्निं दहेद्बुधः ।
चण्डालाग्निं चिताग्निञ्च पतिताग्निं परित्यजेत् ॥ ६२
त्वं भूतकृज्जगद्योनिस्त्वं लोकपरिपालकः ।
उपसंहर तस्मात् त्वमेनं स्वर्गं नयामृतम् ॥ ६३
इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ।
अर्द्धदग्धे तथा देहे दद्यादाज्याहुतिं ततः ॥ ६४
अस्मात् त्वमधिजातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा तु नामतः ॥६५
एवमाज्याहुतिं दत्त्वा तिलमिश्रां समन्त्रकम् ।
रोदितव्यं ततो गाढ़मेवं तस्य सुखं भवेत् ॥ ६६
दाहस्यानन्तरं तत्र कृत्वा सञ्चयनक्रियाम् ।
प्रेतपिण्डं प्रदद्याच्च दाहार्त्तिशमनं खग ॥ ६७
ततः प्रदक्षिणं कृत्वा चितां प्रस्थानवेक्षकाः ।
कनिष्ठपूर्व्वाः स्नानार्थं गच्छेयुः सूक्तजापकाः ॥ ६८
ततो जलसमीपे तु गत्वा प्रक्षाल्य चांशुकम् ।
परिधेयं पुनस्तच्च सूक्तुस्तं पुरुषं प्रति ॥ ६९
उदकन्तु करिष्यामः सचेलं पुरुषो वदेत् ।
कुरुध्वमित्येव वदेच्छतवर्षावरे मृते ॥ ७०
पुत्राद्या वृद्धपूर्व्वास्ते एकवस्त्राः शिखां विना ।
प्राचीनावीतिनः सर्व्वे विशेयुर्मौनिनो जलम् ॥७१
अप नः शोशुचदघमनेन पितृदिङ्मुखः ।
जलावघट्टनञ्चैव न कुर्य्युः स्नानकारकाः ॥ ७२
ततस्तटे समागत्य शिखां बद्ध्वा ऋजून् कुशान् ।
दक्षिणाग्रहस्तयोस्तु कृत्वाथ सतिलं जलम् ॥ ७३
आदायाञ्जलिना याम्यां दुःखी पैतृकतीर्थतः ।
एकवारं त्रिवारं वा दशवारमथापि वा ॥ ७४
भूमावश्मनि वा सर्व्वे क्षिपेयुर्वाग्यताः खग ।
तृप्यन्तु तृप्यतां वापि तर्पयाम्युपतिष्ठताम् ।
प्रेतैतदमुकगोत्रेत्युक्तोष्वेकं समुच्चरेत् ॥ ७५
जलाञ्जलौ कृते पश्चाद्विधेयं दन्तधावनम् ।
त्यजन्ति गोत्रिणः सर्व्वे दिनानि नव काश्यप ॥ ७६
तत उत्तीर्य्योदकाद्वै वस्त्राणि परिधाय च ।

स्नानवस्त्रं सकृत् पीड्य विशेयुः शुचिभूतले ॥ ७७
अश्रुपातं न कुर्व्वीत दत्त्वा दाहजलाञ्जलिम्।
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः॥७८
ततस्तेषूपविष्टेषु पुराणज्ञः सुकृत् स्वकः।
शोकापनोदं कुर्व्वीत संसारानित्यतां ब्रुवन् ॥ ७९
मानुष्ये कदलीस्तम्भे असारे सारमार्गणम्।
करोति यः स संमूढ़ो जलबुद्बुदसन्निभे ॥ ८०
पञ्चधासम्भृतः कायो यदि पञ्चत्वमागतः।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ ८१
गन्त्री वसुमती नाशमुदधिर्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥ ८२
एवं संश्रावयेत् तत्र मृदुशाद्वलसंस्थितान्।
तेऽपि संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ॥ ८३
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः।
आचम्य वह्निसलिलं गोमयं गौरसर्षपान् ॥ ८४
दूर्व्वाप्रवालं वृषभमन्यदप्यथ मङ्गलम्।
प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥ ८५
श्रौतेन तु विधानेन आहिताग्निं दहेद्बुधः।
ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः ॥ ८६
योषित् पतिव्रता या स्याद्भर्त्तारं यानुगच्छति।
प्रयोगपूर्व्वं भर्त्तारं नमस्कृत्यारुहेच्चितिम् ॥ ८७
चितिभ्रष्टा तु या मोहात् सा प्राजापत्यमाचरेत्॥८८
तिस्रः कोट्यर्द्धकोटी च यानि लोमानि मानुषे।
तावत्कालं वसेत् स्वर्गे भर्त्तारं यानुगच्छति ॥ ८९
व्यालग्राही यथा व्यालं विलादुद्धरते बलात्।
तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ॥ ९०
तत्र सा भर्तृपरमा स्तूयमानाप्सरोगणैः।
क्रीड़ते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥ ९१
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत् पतिः।
पुनात्यविधवा नारी तमादाय मृता तु या ॥ ९२
मृते भर्त्तरि या नारी समारोहेद्धुताशनम्।
सारुन्धतीसमाचारा स्वर्गलोके महीयते ॥ ९३
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्।
तावन्न मुच्यते सा हि स्त्रीशरीरात् कथञ्चन ॥ ९४
मातृकं पैतृकञ्चैव यत्र चैव प्रदीयते।
कुलत्रयं पुनात्येषा भर्त्तारं यानुगच्छति ॥ ९५
आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥९६
पृथक् चितां समारुह्य न प्रिया गन्तुमर्हति।
क्षत्रियाद्याः सवर्णाश्च आरोहेयुरपीह ताः ॥ ९७
चाण्डालीमवधिं कृत्वा ब्राह्मणीतः समो विधिः।
अगर्भिणीनां सर्व्वासामबालतोक्मनामपि ॥ ९८
दहनस्य विधिः प्रोक्तः सामान्येन मया खग।
विशेषमपि तस्यापि कश्चिद्दै श्रोतुमिच्छति ॥ ९९

गरुड़ उवाच।

प्रोषिते तु मृते स्वामिन्यस्थिनाशमुपेयुषि।
कथं दाहः प्रकर्त्तव्यस्तन्मे वद जगत्पते ॥ १००

श्रीकृष्ण उवाच।

अस्थीनि चेन्न लभ्यन्ते प्रोषितस्य नरस्य च।
तेषाञ्च हि गतिस्थानं विधानं कथयाम्यहम्।
शृणु तार्क्ष्य परं गोप्यं पत्युर्दुर्म्मरणेषु यत्॥ १०१
लङ्घनैर्य्ये मृता जीवा दंष्ट्रिभिश्चाभिघातिताः।
कण्ठग्रहे विलग्नानां चीणानां तुण्डघातिनाम्॥१०२
विषाग्नि-वृष-विप्रेभ्यो विसूच्या चात्मघातकाः।
पतनोद्बन्धनजलैर्मृतानां शृणु संस्थितिम् ॥ १०३
सर्प-व्याघ्र-शृङ्गिभिश्च उपसर्गोपलोदकैः।
ब्राह्मणैः श्वापदैश्चैव पतनैर्वृक्षवैद्युतैः ॥ १०४
नखैर्लोहैर्गिरेः पातैर्भित्तिपातैर्भृगोस्तथा।
खट्टायामन्तरीक्षे च चौर-चाण्डालतस्तथा ॥ १०५
उदक्या-शुनकी-शूद्र-रजकादि-विभूषिकाः।
जर्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्तु ये मृताः॥१०६
शस्त्रघातैर्मृता ये चास्पृश्यस्पृष्टास्तथैव च।
तत् तु दुर्म्मरणं ज्ञेयं यच्च जातं विधिं विना ॥१०७
तेन पापेन नरकान् भुक्त्वा प्रेतत्वभागिनः।
न तेषां कारयेद्दाहं सूतकं नोदकक्रियाम् ॥ १०८
न विधानं मृताद्यञ्च न कुर्य्यादौर्द्ध्वदेहिकम्।
न पिण्डदानं कर्त्तव्यं प्रमादाच्चेत् करोति हि ॥१०९
नोपतिष्ठति तत् सर्व्वमन्तरीक्षे विनश्यति।
अतस्तस्य सुतैः पौत्रैः सपिण्डैः शुभमिच्छुभिः॥११०
नारायणबलिः कार्य्यो लोकगर्हाभिया खग।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥ १११

इति नारायणबलावौर्द्ध्वदेहिकयोग्यता ।
तस्य शुद्धिकरं कर्म्म तद्भवेन्न तदन्यथा ॥ ११२
नारायणबलिं सम्यक् तीर्थे सर्व्वं प्रकल्पयेत् ।
कृष्णाग्रे कारयेद्विप्रैर्येन पूतो भवेन्नरः ॥ ११३
पूर्व्वन्तु तर्पणं कार्य्यं विप्रैः पौराणवैदिकैः ।
सर्व्वौषध्यक्षतैर्मिश्रैर्विष्णुमुद्दिश्य तर्पयेत् ॥ ११४
कार्य्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि ।
दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन् ॥ ११५
अनादिनिधनो देवः शङ्ख-चक्र-गदाधरः ।
अक्षयः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव ॥ ११६
तर्पणस्यावसाने स्याद्वीतरागो विमत्सरः ।
जितेन्द्रियमना भूत्वा शुचिमान् धर्म्मतत्परः ॥ ११७
भक्त्या तत्र प्रकुर्व्वीत श्राद्धान्येकादशैव तु ।
सर्व्वकर्म्मविधानेन एकैकाग्रे समाहितः ॥ ११८
तोय-व्रीहि-यवान् दद्याद्गोधूमांश्च प्रियङ्गवः ।
हविष्यान्नं शुभं मुद्रां छत्त्रोष्णीषे च दापयेत् ॥ ११९
दापयेत् सर्व्वशस्यानि क्षीरं क्षौद्रसमन्वितम् ।
वस्त्रोपानहसंयुक्तं दद्यादष्टविधं पदम् ॥ १२०
दापयेत् सर्व्वपापेभ्यो न कुर्य्यात् पङ्क्तिवञ्चनम् ।
भूमौ स्थितेषु पिण्डेषु गन्धपुष्पाक्षतान्वितम् ॥ १२१
दातव्यं सर्व्वविप्रेभ्यो वेदशास्त्रविधानतः ।
शङ्खखड्गेऽथवा ताम्रे तर्पणञ्च पृथक् पृथक् ॥ १२२
ध्यान-धारणसंयुक्तो जानुभ्यामवनीं गतः ।
ऋचा वै दापयेद्दर्भमर्षोद्दिष्टं पृथक् पृथक् ॥ १२३
ब्रह्मा विष्णुश्च रुद्रश्च यमः प्रेतश्च पञ्चमः ।
पृथक् कुम्भे ततः स्थाप्याः पञ्चरत्नसमन्विताः ॥ १२४
वस्त्रयज्ञोपवीतानि पृथङ्मुद्रा पणानि च ।
पञ्च श्राद्धानि कुर्व्वीत देवतानां यथाविधि ॥ १२५
जलधारां ततः कुर्य्यात् पिण्डे पिण्डे पृथक् पृथक् ।
शङ्खे वा ताम्रपात्रे वा अलाभे मृण्मयेऽपि वा ॥ १२६
तिलोदकं समादाय सर्व्वौषधिसमन्वितम् ।
ताम्रपात्रं तिलैः पूर्णं सहिरण्यं सदक्षिणम् ॥ १२७
दद्याद्ब्राह्मणमुख्याय पददानं तथैव च ।
यमोद्देशे तिलान् लौहं ततो दद्याच्च दक्षिणाम् ॥ १२८
एवं विष्णुबलिं दत्त्वा यथाशक्त्या विधानतः ।
समुद्धरति तत् क्षिप्रं नात्र कार्य्या विचारणा ॥ १२९

नागदंशाद्मृतौ यस्तु विशेषस्तत्र मे शृणु ।
सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ॥ १३०
विप्राय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयात् ।
एवं सर्पबलिं दत्त्वा सर्पदोषाद्विमुच्यते ॥ १३१
पश्चात् पुत्तलकं कार्य्यं सर्व्वौषधिसमन्वितम् ।
पलाशस्य च वृन्तानां विभागं शृणु काश्यप ॥ १३२
कृष्णाजिनं समास्तीर्य्य कुशैश्च पुरुषाकृतिम् ।
शतत्रयषष्टियुक्ता-वृन्तैः प्रोक्तोऽस्थिसञ्चयः ॥ १३३
विन्यस्य तानि वृन्तानि अङ्गेष्वेषु पृथक् पृथक् ।
चत्वारिंशच्छिरोभागे ग्रीवायां दश विन्यसेत् ॥ १३४
विंशत्युरःस्थले दद्याद्विंशतिर्जठरे तथा ।
बाहुद्वये शतं दद्यात् कटिदेशे च विंशतिम् ॥ १३५
ऊरुद्वये शतञ्चापि त्रिंशज्जङ्घाद्वये न्यसेत् ।
दद्याच्चतुष्टयं शिश्ने षड् दद्याद्वृषणद्वये ॥ १३६
दश पादाङ्गुलीभागे एवमस्थीनि विन्यसेत् ।
नारिकेलं शिरःस्थाने तुम्बं दद्याच्च तालुके ॥ १३७
पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम् ।
अन्त्रेषु नालिकं दद्याद्बालुकां घ्राणमेव च ॥ १३८
वसायां मृत्तिकां दद्याद्धरितालमनःशिलाः ।
पारदं रेतसः स्थाने पुरीषे पित्तलं तथा ॥ १३९
मनःशिला तथा गात्रे तिलपङ्कन्तु सन्धिषु ।
यवपिष्टं तथा मांसे मधु शोणितमेव च ॥ १४०
केशेषु च जटाजूटं त्वचायाञ्च मृगत्वचम् ।
कर्णयोस्तालपत्रञ्च स्तनयोश्चैव गुञ्जिका ॥ १४१
नासायां शतपत्रञ्च कमलं नाभिमण्डले ।
वृन्ताकं वृषणद्वन्द्वे लिङ्गे स्याद्गृञ्जनं शुभम् ॥ १४२
घृतं नाभ्यां प्रदेयं स्यात् कौपीने च त्रपुः स्मृतम् ।
मौक्तिकं स्तनयोर्मूर्ध्नि कुङ्कुमेन विलेपनम् ॥ १४३
कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ।
परिधानं पट्टसूत्रं हृदये दायकं न्यसेत् ॥ १४४
ऋद्धिवृद्धी भुजौ द्वौ च चक्षुर्भ्याञ्च कपर्द्दकम् ।
दन्तेषु दाडिमीवीजान्यङ्गुलीषु च चम्पकम्(क) १४५
सिन्दूरं नेत्रकोणे च ताम्बूलाद्युपहारकम् ।
सर्व्वौषधियुतं प्रेतं कृत्वा पूजां यथोदिताम् ॥ १४६
साग्निके चापि विधिना यज्ञपात्रं न्यसेत् क्रमात् ।

(क) उत्तमेति बहुपुस्तकीयः पाठः ।

श्रियः पुनन्तु मे शिर इमं मे वरुणेन च।
प्रेतस्य पावनं कृत्वा शालग्रामशिलोदकैः॥ १४७
विष्णुतुष्ट्यै च दातव्या सुशीला गौः पयस्विनी।
तिला लौहं हिरण्यञ्च कार्पासं लवणं तथा॥ १४८
सप्तधान्यं क्षितिर्गावि एकैकं पावनं स्मृतम्॥ १४९
तिलपात्रं ततो दद्यात् पददानं तथैव च।
कर्त्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मनः॥ १५०
प्रेतमोक्षं ततः कुर्य्याद्धृदि विष्णुं प्रकल्प्य च।
एवं पुत्तलकं कृत्वा दाहयेद्विधिपूर्व्वकम्॥ १५१
तच्छुद्ध्यै तु संस्कर्त्ता पुत्त्रादिर्निष्कृतिं चरेत्।
त्रीन् कृच्छ्रान् षड्द्वादश च तथा पञ्चदशापि च॥१५२
प्रायश्चित्तनिमित्तानुसारेण विप्रवत् स्मृतः।
अशक्तौ गोहिरण्यादि प्रत्याम्नायं चरेदपि॥ १५३
आत्मनोऽनधिकारित्वे शुद्धिमेवं चरेद्बुधः॥ १५४
अशुद्धेन तु यद्दत्तमशुद्धिश्चाशुद्धिमेव च।
नोपतिष्ठति तत् सर्व्वमन्तरीक्षे विनश्यति॥ १५५
शुद्धिं सम्पाद्य कर्त्तव्यं दहनाद्यौर्द्ध्वदैहिकम्॥ ५६
अकृत्वा निष्कृतिं यस्तु कुरुते दहनादिकम्।
मतिपूर्व्वममत्या च क्रमात् तन्निष्कृतिं शृणु॥ ५७
कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथाम्।
रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुध्यति॥ १५८
एषामन्यतमं प्रेतं यो वहेत दहेत वा।
कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत्॥ १५९
निमित्ते लघुनि स्वल्पं महन्महति कल्पयेत्॥ ६०
गरुड़ उवाच।
कृच्छ्रस्य तप्तकृच्छ्रस्य कृच्छ्रसान्तपनस्य च।
लक्षणं ब्रूहि मे स्वामिन् त्रयाणामपि सुव्रत॥ १६१
श्रीकृष्ण उवाच।
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
उपवासस्त्र्यहञ्चैव एष कृच्छ्र उदाहृतः॥ १६२
तप्तक्षीर-घृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः॥ १६३
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन्॥ १६४
मया तेऽयं समाख्यातो दुर्मृतस्य विधिः खग।
तदा मृतं विजानीयाद्दीपनिर्व्वाणमागतः॥ १६५
अग्निदाहं ततः कुर्य्यात् सूतकञ्च दिनत्रयम्।
दशाहं गर्त्तपिण्डञ्च कर्त्तव्यं प्रेतपूर्व्वकम्॥ १६६
एवं विधिं ततः कुर्य्यात् ततः प्रेतश्च मुक्तिभाक्॥१६७
मतिभ्रान्त्या प्रतिकृतेः कृते दाहे स वै यदि।
आयाति तेन कर्त्तव्यं मज्जनं घृतकुण्डके॥ १६८
जातकर्म्मादिसंस्काराः कर्त्तव्याः पुनरेव तु।
ऊढ़ामेव स्वकां भार्य्यामुद्वहेद्विधिवत् पुमान्॥ १६९
वर्षे पञ्चदशे पश्चिन् द्वादशे वा गते सति।
अज्ञातस्य प्रोषितस्य कृत्वा प्रतिकृतिं दहेत्॥१७०
रजस्वला-सूतिकयोर्विशेषं मरणे शृणु।
सूतिकायां मृतायान्तु एवं कुर्व्वन्ति याज्ञिकाः॥१७१
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च।
पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेत् ततः॥१७२
शतशूर्पोदकेनादौ स्नापयित्वा यथाविधि।
तेनैव स्नापयित्वा तु दाहं कुर्य्यात् खगेश्वर॥१७३
पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम्।
वस्त्रान्तराकृतिं कृत्वा दाहयेद्विधिपूर्व्वकम्॥ १७४
मृतस्य पञ्चके दाह-विधिं वच्मि शृणुष्व मे।
आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम्॥ १७५
रेवत्यन्तं सदा दूष्यमशुभं सर्व्वदा भवेत्।
दाहस्तत्र न कर्त्तव्यो विषादः सर्व्वजन्तुषु॥ १७६
न जलं दीयते तेषु अशुभं सर्व्वदा भवेत्।
पञ्चकानन्तरं सर्व्वं कार्य्यं कर्त्तव्यमन्यथा॥ १७७
पुत्त्राणां गोत्रिणां तस्य सन्तापोऽप्युपजायते।
गृहे हानिर्भवत्येव ऋक्षेष्वेषु मृतस्य च॥ १७८
अथवा ऋक्षमध्ये च दाहस्तु विधिपूर्व्वकः।
क्रियते मानुषाणान्तु स वा आकृतिकारणात्॥१७९
विप्रैर्विधिरतः कार्य्यो मन्त्रैस्तु विधिपूर्व्वकम्।
शवस्यावसमीपे तु क्षेप्तव्या पुत्तलास्ततः॥ १८०
दर्भकृताश्च चत्वार ऋक्षमन्त्राभिमन्त्रिताः।
ततो दाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सह॥ १८१
सूतकान्ते तदा पुत्त्रैः कार्य्यं शान्तिकपौष्टिकम्।
पञ्चकेषु मृतो योऽसौ न गतिं लभते नरः॥ १८२
तिलान् गाञ्च सुवर्णञ्च तदुद्देशे घृतं ददेत्।
विप्राणां दापयेद्दानं सर्व्वविघ्नविनाशनम्॥ १८३
भोजनोपानहौ छत्त्रं हेममुद्रा च वाससी।

हविषा हीयते विप्रे पातकस्य प्रमोचनम् ॥ १८४
मया तेऽयं समाख्यातो विधिः पञ्चकरः स्थितः।
धर्म्मिण्यां यथायानं यथावर्षमृतक्रिया ॥ १८५

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे दहनविधि-
र्नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

श्रीकृष्ण उवाच।

एवं दग्ध्वा नरं प्रेतं स्नात्वा कृत्वा तिलोदकम्।
अग्रतः स्त्रीजनो गच्छेद्व्रजेयुः पृष्ठतो नराः ॥ १
प्राशयेन्निम्बपत्राणि सदन्तो नामपूर्व्वकम्।
आचमनं विधातव्यं पाषाणोपरि संस्थितैः ॥ २
ते प्रविश्य गृहं सर्व्वे सुताद्याश्च सपिण्डकाः।
भवेयुर्दशरात्रं वै यत आशौचनं खग ॥ ३
क्रीतलब्धाशनाः सर्व्वे स्वपेयुस्ते पृथक् पृथक्।
अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ॥ ४
अमांसभोजनाश्चाधः शयीरन् ब्रह्मचारिणः।
परस्परं न संस्पृष्टा दानाध्ययनवर्ज्जिताः ॥ ५
मलिनाधोमुखा दीनाः सर्व्वभोगविवर्ज्जिताः।
अङ्गसंवाहनं केशमार्ज्जनं वर्ज्जयन्ति ते ॥ ६
मृण्मये पत्रजे वापि भुञ्जीरंस्ते च भाजने।
उपवासन्तु ते कुर्य्युरेकाहमथवा त्र्यहम् ॥ ७

गरुड़ उवाच।

आशौचिन इति प्रोक्तमाशौचस्य च किं प्रभो।
लक्षणं किं कियत्कालं भाव्यं वा तद्युतैर्नरैः ॥ ८

श्रीकृष्ण उवाच।

अपनोदन्त्विदं कालादिभिराशु निशिष्कृत्।
पिण्डाध्ययनदानादैः पुंगतोऽतिशयो हि तत् ॥ ९
दशाहं शावमाशौचं सपिण्डेषु विधीयते।
जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम् ॥ १०
जन्मन्येकोदकानान्तु त्रिरात्राच्छुद्धिरिष्यते।
शावस्य शेषाच्छुध्यन्ति त्र्यहादुदकदायिनः ॥ ११
आ दन्तजननात् सद्य आ चौलान्नैशिकी स्मृता।
त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥ १२
आशौचं ते समाख्यातं संक्षेपात् प्रकृतं शृणु।
जलं त्रिदिवमाकाशे स्थाप्यं चौरञ्च मृण्मये ॥ १३
अत्र स्नाहि पिबात्रेति मन्त्रेणानेन काश्यप।
काष्ठत्रये गुणैर्बद्धे प्रीत्यै रात्रौ चतुष्पथे ॥ १४
प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा।
अस्थिसञ्चयनं कार्य्यं दिने तद्गोत्रजैः सह ॥ १५
तदूर्द्ध्वमङ्गसंस्पर्शः सपिण्डानां विधीयते।
योग्याः सर्व्वक्रियाणाञ्च समानसलिलास्तथा ॥ १६
प्रेतपिण्डं बहिर्दद्याद्दर्भमात्रविवर्ज्जितम्।
प्रागुदीच्यां चरुं कृत्वा स्नात्वा प्रयतमानसः ॥ १७
भूमावसंस्कृतानाञ्च संस्कृतानां कुशेषु च।
नवभिर्दिवसैः पिण्डान् नव दद्यात् समाहितः ॥ १८
दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत्।
असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्॥१९
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्।
शालिना शक्तुभिर्वापि शाकैर्वाप्यथ निर्व्वपेत् ॥ २०
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्।
यावदाशौचमेकैकस्याञ्जलेर्दानमुच्यते ॥ २१
यदा यस्मिन् दिने दानं तस्मिन् तद्दिनसङ्ख्यया।
दशाहेऽञ्जलयः पश्चिन् पञ्चपञ्चाशदन्तिमे ॥ २२
द्विवृद्ध्या वा भवेत् पश्चिन्नञ्जलीनां शतं पुनः।
यदा हि त्र्यहमाशौचं तदा वाञ्जलयो दश ॥ २३
त्रयोऽञ्जलय एवन्तु प्रथमेऽहनि वै तदा।
चत्वारस्तु द्वितीयेऽह्नि तृतीये स्युस्त्रयस्तथा ॥ २४
यदा शताञ्जलिं पश्चिन्नाद्ये त्रिंशत् तदाहनि।
चत्वारिंशद्द्वितीयेऽह्नि त्रिंशदह्नि तृतीयके ॥ २५
एवं जलस्याञ्जलयो विभाज्याः पक्षयोर्द्वयोः।
सर्व्वेषु पितृकार्य्येषु पुत्रो मुख्योऽधिकारवान् ॥ २६
पिण्डप्रसेकस्तुशौचं पुष्प-धूपादिकं तथा।
दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिश्चरेत्।
तत्र त्याज्यानि वासांसि केश-श्मश्रु-नखानि च ॥२७
विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनं तथा।
वैश्यः प्रतोदं रश्मीन् वा शूद्रो यष्टिं कृतक्रियः ॥ २८
मृतादल्पवयोभिश्च सपिण्डैः परिवापनम् ॥ २९
कार्य्यन्तु षोड़शी षड्भिः पिण्डैर्दशभिरेव च।
प्रथमा मलिना श्वेतैराद्दशाहं मृतेर्भवेत् ॥ ३०

दिनानि दश यान् पिण्डान् कुर्व्वन्त्यत्र सुतादयः ।
प्रत्यह ते विभज्यन्ते चतुर्भागैः खगोत्तम ॥ ३१
भागद्वयेन देहः स्यात् तृतीयेन यमानुगाः ।
तृप्यन्ति हि चतुर्थेन स्वयमप्युपजीवति ॥ ३२
अहोरात्रैस्तु नवभिर्द्देहो निष्पत्तिमाप्नुयात् ।
शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते तथा ॥ ३३
द्वितीयेन तु कर्णाक्षि-नासिकास्तु समासतः ।
गलांसभुजवक्षांसि तृतीयेन तथा क्रमात् ॥ ३४
चतुर्थेन च पिण्डेन नाभिलिङ्गगुदानि च ।
जानुजङ्घे तथा पादौ पञ्चमेन तु सर्व्वदा ॥ ३५
सर्व्वमर्म्माणि षष्ठेन सप्तमेन तु नाड़यः ।
दन्तलोमान्यष्टमेन वीर्य्यन्तु नवमेन च ॥ ३६
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः ।
मध्यमां षोड़शीं वच्मि वैनतेय शृणुष्व मे ॥ ३७
विश्वादि-विष्णुपर्य्यन्तान्येकादश तथा खग ।
श्राद्धानि पञ्च देवानामित्येषा मध्यषोड़शी ॥ ३८
निमित्तं दुर्म्मतिं कृत्वा यदि नारायणो बलिः ।
एकादशाहे कर्त्तव्यो वृषोत्सर्गोऽपि तत्र वै ॥ ३९
एकादशाहे प्रेतस्य यस्योत्सृज्येत नो वृषः ।
प्रेतत्वं सुस्थितं तस्य दत्तैः श्राद्धशतैरपि ॥ ४०
अकृत्वा यद्वृषोत्सर्गं कृतं वै पिण्डपातनम् ।
निष्फलं सकलं विद्यात् प्रमीताय न तद्भवेत् ॥ ४१
वृषोत्सर्गादृते नान्यत् किञ्चिदस्ति महीतले ।
पुत्रः पत्न्यथ दौहित्रः पिता वा दुहिताथ वा ।
मृतादनन्तरं तस्य ध्रुवं कार्य्यो वृषोत्सवः ॥ ४२
चतुर्वत्सतरीयुक्तो यस्योत्सृज्येत वा वृषः ।
अलङ्कृतो विधानेन प्रेतत्वं तस्य नो भवेत् ॥ ४३
एकादशेऽह्नि सम्प्राप्ते वृषाभावो भवेद्यदि ।
दर्भैः पिष्टैस्तु सम्पाद्य तं वृषं मोचयेद्बुधः ॥ ४४
वृषोत्सर्जनवेलायां वृषाभावः कथञ्चन ।
मृत्तिकाभिस्तु दर्भैर्वा वृषं कृत्वा विमोचयेत् ॥ ४५
यदिष्टं जीवतस्तस्य दद्यादेकादशेऽहनि ।
मृतमुद्दिश्य दातव्यं शय्याधेन्वादिकं तथा ॥ ४६
विप्रान् बहून् भोजयीत प्रेतस्य क्षुद्विशान्तये ।
तृतीयां षोड़शीं वच्मि वैनतेय शृणुष्व ताम् ॥ ४७
द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव तृतीया षोड़शी मता ॥ ४८
द्वादशाहे त्रिपक्षे च षण्मासे मासिकेऽब्दिके ।
तृतीयां षोड़शीमेनां वदन्ति मतभेदतः ॥ ४९
यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोड़श ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ ५०
एकादशे द्वादशे वा दिन आद्यं प्रकीर्त्तितम् ।
मासादौ प्रतिमासञ्च शुद्धं मृततिथौ खग ॥ ५१
एकेनाह्ना त्रिभिर्वापि हीनेषु विनतासुत ।
मासषण्मासवर्गेषु त्रिपक्षेषु भवन्ति हि ॥ ५२
श्राद्धान्यथ स्यात् सापिण्ड्यं पूर्णे वर्षे तदन्तिके ।
त्रिपक्षेऽप्युदरे वापि द्वादशाहेऽथवा नृणाम् ॥ ५३
आनन्त्यात् कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहे प्रशस्यते ॥ ५४
सपिण्डीकरणेष्वेवं विधिं पक्षीन्द्र मे शृणु ।
एकोद्दिष्टविधानेन कार्य्यं तदपि काश्यप ॥ ५५
तिलगन्धोदकैर्युक्तं कुर्य्यात् पात्रचतुष्टयम् ।
पात्रं प्रेतस्य तत्रैकं पैत्र्यं पात्रत्रयं तथा ॥ ५६
सेचयेत् पितृपात्रेषु प्रेतपात्रं खग त्रिषु ।
चतुरो निर्व्वपेत् पिण्डान् पूर्व्वं तेषु समापयेत् ॥ ५७
ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते ॥ ५८
ततः पितृत्वमापन्ने तस्मिन् प्रेते खगेश्वर ।
श्राद्धधर्म्मैरशेषैस्तु तत्पूर्व्वानर्च्चयेत् पितॄन् ॥ ५९
एकचित्यारोहणे च एकाह्नि मरणे तथा ।
सापिण्ड्यन्तु स्त्रिया नास्ति कृते भर्त्तुः स्त्रियाभवेत् ॥ ६०
पाकैक्यमथ कालैक्यं कर्त्रैक्यञ्च भवेत् खग ।
श्राद्धादौ सहदाहे च पतिपत्न्योर्न संशयः ॥ ६१
भर्त्तुर्मृततिथेरन्य-तिथौ चितिमथारुहेत् ।
तां मृताहनि सम्प्राप्ते पृथक्पिण्डेन योजयेत् ॥ ६२
प्रत्यब्दञ्च नवश्राद्धं युगपत् तु समापयेत् ॥ ६३
यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं भवेत् ।
मासिकञ्चोदकुम्भञ्च देयं तस्यापि वत्सरम् ॥ ६४
नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोड़श ।
एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि ॥ ६५
पितामहीभिः सापिण्ड्यं तथा मातामहैः सह ।
भर्त्तुं भर्त्त्रापि सापिण्ड्यं स्त्रिया विषयभेदतः ॥ ६६
नवश्राद्धस्य ते कालं वच्चामि शृणु काश्यप ।

मरणाह्नि मृतिस्थाने श्राद्धं पक्षिन् प्रकल्पयेत् ॥ ६७
द्वितीयञ्च ततो मार्गे विश्रामो यत्र कारितः ।
ततः सञ्चयनस्थाने तृतीयं श्राद्धमुच्यते ॥ ६८
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नव श्राद्धानि वै खग ॥ ६९
श्राद्धानि नव चैतानि तृतीया षोड़शी स्मृता ।
एकोद्दिष्टविधानेन कार्य्याणि मनुजैस्तथा ॥ ७०
प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव नवश्राद्धं प्रकीर्त्तितम् ॥ ७१
उच्यन्ते षड़िमानीह नव स्युरपि योगतः ।
उक्तानि ते मया तानि ऋषीणां मतभेदतः ॥ ७२
वृद्धिः पक्षो ममाभीष्टो योगः कैश्चिद्विहेष्यते ।
आद्ये द्वितीये दातव्यस्तस्यैवैकं पवित्रकम् ॥ ७३
प्रेताय पिण्डो दातव्यो भुक्तवत्सु द्विजातिषु ।
प्रश्नस्त्वाभिरम्येति यजमानद्विजन्मनाम् ॥ ७४
अक्षय्यममुकस्येति वक्तव्यं विरतौ तथा ।
एकोद्दिष्टं निबोध मे द्रव्यमावत्सरं स्मृतम् ॥ ७५
सपिण्डीकरणादूर्द्ध्वं यानि श्राद्धानि षोड़श ।
एकोद्दिष्टविधानेन चरेद्वा पार्व्वणाद्दते ॥ ७६
प्रत्यब्दं यो यथा कुर्य्यात् तथा कुर्य्यात् स तान्यपि
एकादशे द्वादशेऽह्नि प्रेतो भुङ्क्ते दिनद्वयम् ॥ ७७
योषितः पुरुषस्यापि पिण्डं प्रेतेऽतिनिर्व्वपेत् ।
सापिण्ड्ये तु कृते तस्य प्रेतशब्दो निवर्त्तते ।
दीपदानं प्रकर्त्तव्यमावर्षत्तु खद्वाहद्विः ॥ ७८
अन्नं दीपो जलं वस्त्रमन्यद्वा दीयते च यत् ।
दत्तमिदं प्रेतशब्देन सपिण्डीकरणावधि ॥ ७९
अब्दकृत्यं मयोक्तं ते समासाद्विनतासुत ।
वैवस्वतगृहे यानं यथा तत् तु निबोध मे ॥ ८०
त्रयोदशेऽह्नि श्रवणा कर्म्मणानन्तरन्तु सः ।
गृहीताहिवत् तार्क्ष्य गृहीतो यमकिङ्करैः ॥ ८१
तस्मिन् मार्गे व्रजत्येको गृहीत इव मर्कटः ।
वाय्वग्रसारि तद्रूपं देहमन्यत् प्रपद्यते ॥ ८२
तत्पिण्डजं पातनार्थं ममता पितृसम्भवम् ।
तत्प्रमाणवयोऽवस्था-संस्थानां प्राग्भवो यथा ॥ ८३
षड़शीतिसहस्राणि योजनानां प्रमाणतः ।
अध्वान्तरालिको ज्ञेयो यम-मानुषलोकयोः ॥ ८४

साधिकार्द्धक्रोशयुत-योजनानि शतद्वयम् ।
चत्वारिंशत् तथा सप्त प्रत्यहं याति तत्र सः ॥ ८५
अष्टचत्वारिंशता च त्रिंशता दिवसैरिति ।
वैवस्वतपुरं याति कृष्यमाणो यमानुगैः ॥ ८६
एवं क्रमेण यातव्ये मार्गे पापरतैस्तु यत् ।
जायते सप्रपञ्चं तच्छृणु लमरुणानुज ॥ ८७
त्रयोदशदिने दूत्तः पाशैर्बद्धातिदारुणैः ।
यमस्याङ्कुशहस्तो वै भ्रुकुटीकुटिलाननः ॥ ८८
दण्डप्रहारसम्भ्रान्तः कृष्यते दक्षिणां दिशम् ।
कुश-कण्टक-वल्मीक-शङ्कु-पाषाणकर्कशे ॥ ८९
तथा प्रदीप्तज्वलने क्वचिच्छ्वभ्रशतोत्कटे ।
प्रदीप्तादित्यतप्ते च दह्यमानः स दंशुकैः ॥ ९०
कृष्यते यमदूतैश्च शिवावन्नादभीषणैः ॥ ९१
प्रयाति दारुणे मार्गे पापकर्म्मा यमालये ।
कलेवरे दह्यमाने महान्तं चयमृच्छति ॥ ९२
भक्ष्यमाणे तथैवाङ्गे भिद्यमाने च दारुणम् ।
छिद्यमाने चिरतरं जन्तुर्दुःखमवाप्नुते ॥ ९३
स्वेन कर्म्मविपाकेन देहान्तरगतोऽपि सन् ।
पुराणि षोड़शामुष्मिन् मार्गे तानि च मे शृणु ॥९४

यान्यं सौरिपुरं नगेन्द्रभवनं
गन्धर्व्वशैलागमौ
क्रौञ्चं क्रूरपुरं विचित्रभवनं
बह्वापदं दुःखदम् ।
नानाक्रन्दपुरं सुतप्तभवनं
रौद्रं पयोवर्षणं
शीताढ्यं बहुभीतिषोड़शपुरा-
ण्येतान्यदृष्टानि ते (क) ॥ ९५

तत्र याम्यपुरं गच्छन् पुत्र पुत्रेति च ब्रुवन् ।
हा हेति क्रन्दते नित्यं स्वकृतं दुष्कृतं स्मरन् ॥ ९६
अष्टादशदिने तार्क्ष्य तत् पुरं प्राप्नुयादसौ ।
पुष्पभद्रा नदी यत्र न्यग्रोधः प्रियदर्शनः ॥ ९७
विश्रामेच्छां करोत्यत्र कारयन्ति न ते भटाः ।

---

(क) क्वचित् पुस्तके नगेन्द्रभवनमित्यत्र रवेन्द्रभवनमिति विचित्रभवनमित्यत्र वरेन्द्रभवनमिति पाठः। दाक्षिणात्यास्तु सौम्यं सौरिपुरमित्युपक्रम्य शीताढ्यं बहुभीतिदं धर्म्मभवनं याम्यं पुरञ्चाष्टम इति पठन्ति ।

क्षितौ दत्तं सुतैस्तस्य स्नेहाद्वा कृपया तथा ॥ ९८
मासिकं पिण्डमश्नाति ततः सौरिपुरं व्रजेत्।
व्रजन्नेवं प्रलपते मुहुराहतिपीड़ितः ॥ ९९
जलाशयो नैव कृतो मया तदा
मनुष्यतृप्त्यै पशुपक्षितृप्तये।
गोतृप्तिहेतोर्न च गोचरः कृतः
शरीर हे निस्तर यत् त्वया कृतम् (क) ॥ १००
तत्र नाम्ना तु राजासौ जङ्गमः कामरूपधृक्।
भयात् तद्दर्शनाज्जाताद्भुङ्क्ते पिण्डं स शङ्कितः ॥ १०१
त्रिपक्षे जलसंयुक्तं क्षितौ दत्तं ततो व्रजेत्।
व्रजन्नेवं प्रलपते खड्गाघातप्रपीड़ितः ॥ १०२
न नित्यदानं न गवाह्निकं कृतं
पुस्तं न दत्तं न हि वेद-शास्त्रयोः।
पुराणदृष्टो न हि सेवितोऽध्वा
शरीर हे निस्तर यत् त्वया कृतम् ॥ १०३
नगेन्द्रनगरं गत्वा भुक्त्वा चान्नं तथाविधम्।
मासि द्वितीये यद्दत्तं बान्धवैस्तु ततो व्रजेत् ॥ १०४
व्रजन्नेवं प्रलपते कृपाण-त्सरुताड़ितः।
पराधीनमभूत् सर्व्वं मम मूर्खशिरोमणेः ॥ १०५
महता पुण्ययोगेन मानुष्यं लब्धवानहम्।
तृतीये मासि सम्प्राप्ते गन्धर्व्वनगरे शुभम् ॥ १०६
तृतीयमासिकं पिण्डं तत्र भुक्त्वा व्रजत्यसौ।
व्रजन्नेवं विलपते तदाग्रेणाहतः पथि ॥ १०७
मया न दत्तं न हुतं हुताशने
तपो न तप्तं हिमशैलगह्वरे।
न सेवितं गाङ्गमहो महाजलं
शरीर हे निस्तर यत् त्वया कृतम् ॥ १०८
तुर्य्ये शैलागमं मासि प्राप्नुयात् तत्र वर्षणम्।
तस्योपरि भवेत् पक्षिन् पाषाणानां निरन्तरम्॥१०९
चतुर्थमासिकं श्राद्धं भुक्त्वा तत्र प्रसर्पति।
स पतन्नेव विलपन् पाषाणाद्दुयाति पीड़ितः ॥ ११०
न ज्ञानमार्गो न च योगमार्गो
न कर्म्ममार्गो न च भक्तिमार्गः।
न साधुसङ्गात् किमपि श्रुतं मया
शरीर हे निस्तर यत् त्वया कृतम् ॥ १११

ततः क्रूरपुरं मासि पञ्चमे याति काश्यप।
भुवि दत्तं पिण्डजलं भुक्त्वा क्रूरपुरं व्रजेत् ॥ ११२
व्रजन्नेवं विलपते पट्टिशैः पाटितः पथि।
हा मातर्हा पितर्भ्रातः सुता हा हा मम स्त्रियः॥११३
युष्माभिर्नोपदिष्टोऽहमवस्थां प्राप्त ईदृशीम्।
एवं लालप्यमानं तं यमदूता वदन्ति हि ॥ ११४
क्व माता क्व पिता मूढ़ क्व जाया क्व सुतः सुहृत्।
स्वकर्म्मोपार्ज्जितं भुङ्क्ष्व मूर्ख यातश्चिरं पथि ॥ ११५
जानासि शम्बलमलं बलमध्वगानां
नोऽशम्बलः प्रयतते परलोकगत्यै।
गन्तव्यमस्ति तव निश्चितमेव तेन
मार्गेण येन न भवेत् क्रयविक्रयोऽपि ॥ ११६
जनषाण्मासिके क्रौञ्चे भुक्त्वा पिण्डन्तु सोदकम्।
घटीमात्रन्तु विश्रम्य विचित्रनगरं व्रजेत् ॥ ११७
व्रजन्नेवं विलपते शूलाग्रेण विदारितः ॥ ११८
कुत्र यामि न हि गामि जीवितं
हा मृतस्य मरणं पुनर्न वै।
इत्यमेव विलपन् प्रयात्यसौ
यातनार्द्दितविग्रहः पथि ॥ ११९
विचित्रनगरे तत्र विचित्रो नाम पार्थिवः।
तत्र षाण्मासपिण्डेन तृप्तः सन् व्रजते पुरः ॥ १२०
व्रजन्नेवं विलपते प्रासाग्रेण प्रपीड़ितः ॥ १२१
माता भ्राता पिता पुत्रः कोऽपि मे वर्त्तते न वा।
यो मामुद्धरते पापं पतन्तं दुःखसागरे ॥ १२२
व्रजतस्तत्र मार्गे तु तत्र वैतरणी शुभा।
शतयोजनविस्तीर्णा पूय-शोणितसङ्कुला ॥ १२३
आयाति तत्र दृश्यन्ते नाविका धीवरादयः।
ते वदन्ति प्रदत्ता गौर्यदि वैतरणी त्वया।
नावमेनां समारोह सुखेनोत्तर वै नदीम् ॥ १२४
तत्र येन प्रदत्ता गौः स सुखेनैव तां तरेत् ॥ १२५
अदायी तत्र गृह्येत करग्राहन्तु नाविकैः।
उग्रैः काकैर्वकोलूकैस्तीक्ष्णतुण्डैर्वितुद्यते ॥ १२६
मनुजानां हितं दानमन्ते वैतरणी खग।
दत्ता पापं दहेत् सर्व्वं मम लोकन्तु सा नयेत्॥१२७
सप्तमे मासि सम्प्राप्ते पुरे बह्वापदे मृतः।
व्रजते सोदकं भुक्त्वा पिण्डं वै सप्तमासिकम् ॥ १२८

(क) दे हिन् कांचदिति पाठान्तरमेवं सर्व्वत्र।

[illegible]वं विलपति परिघाहति पीड़ितः।
दत्तं न हुतं तप्तं न स्नातं न कृतं हितम् ॥ १२९
[illegible] चरितं कर्म मूढात्मन् भुङ्क्ष्व तादृशम् ॥ १३०
[illegible] दुःखदे तु पुरे भुक्त्वाथ सोदकम्।
[illegible] प्रयात्यसौ ताञ्च नानाक्रन्दपुरे ततः ॥ १३१
[illegible] च प्रवदति मुषलाघातपीड़ितः।
[illegible] जाया चटुलैश्चाटु-पटुभिर्वचनैर्मम।
[illegible] भल्लभल्लीभिर्मुषलैश्च क्व मारणम् ॥ १३२
[illegible] मासि दत्तं वै नानाक्रन्दपुरे ततः।
[illegible] करुणं नानाक्रन्दान् करोत्यपि ॥ १३३
[illegible] मासि दत्तं वै सुतप्तनगरं ततः।
[illegible] विलपति हलाहतिहतः पथि ॥ १३४
[illegible] सुतुपेशलकरैः पादसंवाहनं मम।
[illegible] दूतवज्रप्रतिम-करैर्मेत्यदकर्षणम् ॥ १३५
[illegible] मासि पिण्डादि तत्र भुक्त्वा प्रसर्पति।
[illegible] चैकादशे पूर्णे पुरं रौद्रं स गच्छति ॥ १३६
[illegible] विलपते यथा पृष्ठे प्रपीड़ितः।
[illegible] सतूलीशयने परिवर्त्तः चणे चणे।
[illegible] दृढत्तभ्रष्टयष्टि-कष्टं पृष्ठे क्व वा पुनः ॥ १३७
[illegible] दत्तञ्च पिण्डादि भुक्त्वा तत्र ततो व्रजेत्।
[illegible] वर्षगमित्येतन्नामकं पुरमण्डज ॥ १३८
[illegible] विलपते कुठारे मूर्ध्नि ताड़ितः।
[illegible] भृत्यकोमलकरैर्गन्धतैलावसेचनम्।
[illegible] कीनाशानुगैः क्रोधात् कुठारैः शिरसि व्यथा१३९
[illegible] नाब्दिकञ्च यच्छ्राद्धं तत्र भुङ्क्ते सुदुःखितः।
[illegible] सम्पूर्णे तु ततो वर्षे शीताढ्यं नगरं व्रजेत् ॥ १४०
गच्छन्नेवं छुरिकया छिन्नजिह्वस्तु रोदिति।
प्रियालापैः क्व च रसमधुरस्य वर्णनम्।
[illegible] तत्त्रमात्रेऽसिपत्रादि-जिह्वाच्छेदः क्व चैव हि ॥१४१
वार्षिकं पिण्डदानादि भुक्त्वा तत्र प्रसर्पति।
बहुभीतिकरं तत्तत् पिण्डजं देहमास्थितः ॥ १४२
प्रकाशयति पाप्मानमात्मानञ्च विनिन्दति।
योषिद्दृश्येवमेतस्मिन् मार्गे वै परिदेवति ॥ १४३
ततो याम्यं नातिदूरे नगरं स हि गच्छति।
चत्वारिंशद्युयोजनानि चतुर्युक्ताभिविस्तृतम् ॥ १४४
त्रयोदश प्रतीहाराः श्रवणा नाम तत्र वै।

श्रवणाकर्मैतस्तुष्यन्त्यन्यथा क्रोधमाप्नुयुः ॥ १४५
ततस्तत्राशु रक्ताचं भिन्नाञ्जनचयोपमम्।
मृत्युकालान्तिकादीनां मध्ये पश्यति वै यमम् ॥ १४६
दंष्ट्राकरालवदनं भृकुटीदारुणाकृतिम्।
विरूपैर्भीषणैर्वक्रैर्वृतं व्याधिशतैः प्रभुम्।
दण्डासक्तमहाबाहुं पाशहस्तं सुभैरवम् ॥ १४७
तन्निर्दिष्टां ततो जन्तुर्गतिं याति शुभाशुभाम्।
पापी पापां गतिं याति यथा ते कथितं पुरा ॥ १४८
छत्त्रोपानहदातारो ये च वेश्मप्रदायकाः।
ये तु पुण्यकृतस्तत्र ते पश्यन्ति यमं तदा।
सौम्याकृतिं कुण्डलिनं मौलिमन्तं धृतश्रियम् ॥ १४९
एकादशे द्वादशे हि षण्मासे आब्दिके तथा।
विप्रान् बहून् भोजयेत तत्र यच्छति दृक्षा ॥ १५०
जीवन् पुत्त्रकलत्रादिप्रविष्टमतिरेव खग।
यो न साधयति स्वार्थमेवं पश्चाद्विखिद्यते ॥ १५१
एतत् ते सर्वमाख्यातं संयमन्या यथा गतिः।
प्रोक्तमावर्षकृत्यं ते किमन्यच्छ्रोतुमिच्छसि ॥ १५२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे सारो-
द्धारे श्रीकृष्ण-गरुड़संवादे वर्षकृत्य-यम-
मार्गयातना नाम षष्ठोऽध्यायः ॥६॥

---

## सप्तमोऽध्यायः।

गरुड़ उवाच।

अपि साधनयुक्तस्य तीर्थदानरतस्य च।
अकृते तु वृषोत्सर्गे परलोकगतिर्न हि ॥ १
तस्मात् कृष्ण वृषोत्सर्गः कर्त्तव्य इति मे श्रुतम्।
किं फलं वृषयज्ञस्य पुरा केन कृतो हरे ॥ २
अनड्वान् कीदृशः प्रोक्तः कस्मिन् काले विशेषतः।
को विधिस्तस्य निर्दिष्टः सर्वं मे कृपया वद ॥ ३

श्रीकृष्ण उवाच।

इतिहासं महापुण्यं प्रवक्ष्यामि खगेश्वर।
ब्रह्मपुत्त्रेण यत् प्रोक्तं राजानं वीरवाहनम् ॥ ४
विराधनगरे राजा वीरवाहनविश्रुतः।
धर्मात्मा सत्यसन्धश्च वदान्यो विप्रतुष्टिकृत् ॥ ५
स कदाचिदहं वीरो महात्मा दैटकं गतः।

किञ्चित् प्रष्टुमनास्तार्क्ष्य वशिष्ठस्याश्रमं ययौ ॥ ६
नमस्कृत्य मुनिं तत्र कृतासनपरिग्रहः।
प्रश्रयावनतो राजा पप्रच्छ ऋषिसंसदि ॥ ७

राजोवाच।

मुने मया कृतो धर्म्मो यथाशक्ति प्रयत्नतः।
यमस्य शासनं श्रुत्वा बिभेमि नितरां हृदि ॥ ८
यमञ्च यमदूतांश्च निरयान् घोरदर्शनान्।
न पश्यामि महाभाग तथा वद दयानिधे ॥ ९

वशिष्ठ उवाच।

धर्म्मा बहुविधा राजन् वर्ण्यन्ते शास्त्रकोविदैः।
सूक्ष्मज्ञान विजानन्ति कर्म्ममार्गविमोहिताः ॥ १०
दानं तीर्थं तपो यज्ञाः सन्न्यासं पैत्रिको महः।
धर्म्मेषु गच्छमानेषु वृषोत्सर्गो विशेषितः ॥ ११
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १२
ब्रह्महत्यादिपापानि ज्ञानाज्ञानकृतानि च।
नीलोद्वाहेन शुध्येत समुद्रप्लवनेन वा ॥ १३
एकादशाहे राजेन्द्र यस्य नोत्सृज्यते वृषः।
प्रेतत्वं निश्चलं तस्य कृतैः श्राद्धैस्तु किं भवेत् ॥ १४
यथाकथञ्चित् कर्त्तव्यस्तीर्थे वा पत्तनेऽथवा।
वृषयज्ञैः प्रमुच्येत नान्यथा साधनैः खगः ॥ १५
वृषभं पञ्चकल्यानं युवानं कृष्णकम्बलम्।
गोयूथमध्ये नितरां विचरन्तं विधानतः ॥ १६
चतसृभिर्वत्सकाभिर्हायिन्याश्चैवैकया खग।
विवाह्य मङ्गलद्रव्यैर्भन्त्रवत् तं समुत्सृजेत् ॥ १७
इह रतीति षड्ऋग्भिर्होमं कुर्य्याद्विभावसोः।
कार्त्तिक्यां माधवैशाख्यां संक्रमे पातपर्व्वसु।
तीर्थे पित्र्येऽथयाहे च विशेषेण प्रशस्यते ॥ १८
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
पीतः खुर-विषाणेषु स नीलो वृष उच्यते ॥ १९
श्वेतवर्णो भवेद्विप्रो लोहितः चत्र उच्यते।
पीतवर्णो भवेद्वैश्यः शूद्रः कृष्णः स्मृतो बुधैः ॥ २०
यथावर्णं समुद्दिष्टो वर्णेषु ब्राह्मणादिषु।
अथवा रक्तवर्णस्तु सर्व्वेषामेव शस्यते ॥ २१
पिता पितामहश्चैव तथैव प्रपितामहः।
आशासते सुतं जातं वृषोत्सर्गं करिष्यति ॥ २२

धर्म्मस्त्वं वृषरूपेण जगदानन्ददायकः।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ २३
गङ्गायमुनाजलं पेयमन्तर्व्वेद्यां तृणं चर।
धर्म्मराजस्य पुरतो वाच्यं मे सुकृतं वृष ॥ २४
दक्षिणांशे त्रिशूलाङ्कं वामोरौ चक्रचिह्नितम्।
इति सम्प्रार्थ्य वृषभं गन्धपुष्पाक्षतादिभिः।
वृषं वत्सतरीयुक्तं पूजयित्वा समुत्सृजेत् ॥ २५
तस्माद्राजन् विधानेन वृषोत्सर्गं समाचर।
बहुसाधनयुक्तस्य नान्यथा सद्गतिस्तव ॥ २६
आसीत् त्रेतायुगे पूर्व्वं विदेहनगरे नृप।
ब्राह्मणो धर्म्मवत्सेति स्वकर्म्मनिरतः सुधीः ॥२७
विष्णुभक्तोऽतितेजस्वी यथालाभेन तुष्टिकृत्।
पितृपर्व्वणि सम्प्राप्ते कुशार्थी काननं ययौ ॥ २८
अटन्नितस्ततस्तत्र चिन्वन् कुशपलाशकम्।
सहसोपेत्य पुरुषाश्चत्वारश्चारुदर्शनाः।
विभ्रान्तमनसं गृह्य प्रत्यगुजग्मुर्विहायसा ॥ २९
बहुवृक्षसमाकीर्णं गिरिदुर्गं भयानकम्।
वनाद्वनान्तरं निन्युर्नदीनदसमाकुलम् ॥ ३०
स तत्र नगरं राजन् ददर्श बहुविस्तरम्।
गोपुरद्वाररचितं सौध-प्रासादमण्डितम् ॥ ३१
चलरापणपण्यादि-नरनारीसमाकुलम्।
तूर्य्यद्वन्द्वाभिनिर्घोष-वीणापटहनादितम् ॥ ३२
कांश्चित् क्षुधार्द्दितान् दीनान् मलिनान् विगतौजसः।
ततोऽतितुष्टान् मलिनान् वस्त्रखण्डसमावृतान् ॥ ३३
अग्रतो हृष्टपुष्टांश्च स्वर्णवस्त्रोपशोभितान्।
ततोऽपि सुरसङ्काशान् स दृष्ट्वा विस्मितोऽभवत् ॥ ३४
किं स्वप्न उत माया वै मदीयो मानसो भ्रमः।
सन्निहितानं द्विजं निन्युः पुरुषा राजसन्निधिम् ॥ ३५
स तत्र ददर्श विप्रः स्वर्णप्रासादमन्दिरे।
सिंहासनमहादिव्यं छत्रचामरवीजितम् ॥ ३६
तत्रोपविष्टं राजानं किरीटकनकोज्ज्वलम्।
महत्या च श्रिया युक्तं स्तूयमानं सुवन्दिभिः ॥ ३७
राजापि दृष्ट्वा तं विप्रं प्रत्युत्थाय कृताञ्जलिः।
पूजयामास विधिवन्मधुपर्कासनादिभिः ॥ ३८
सन्तुष्टमनसं देवमस्तौषीत् परया मुदा।
अद्य मे सफलं जन्म पावितञ्च कुलं प्रभो ॥ ३९

विष्णुभक्तस्य धर्म्मस्य यत् ते दृग्गोचरं गतः ।
तत्रा श्रुत्वा बहुविधमुवाचानुवसन् नृपः ॥ ४०
ततः समागतो देवः पुनस्तत्रैव नीयताम् ।
इति श्रुत्वा वचो राज्ञः पप्रच्छ द्विजपुङ्गवः ॥ ४१

ब्राह्मण उवाच ।

कोऽयं देशः कुतो लोका उत्तमा मध्यमाधमाः ।
केन पुण्येन तु भवान् पारमेष्ठ्यविभूषितः ॥ ४२
किमर्थमहमानीतः पुनस्तत्रैव नीयते ।
अपूर्व्वमिव पश्यामि सर्व्वं स्वप्नगतो यथा ॥ ४३

राजोवाच ।

स्वधर्म्मनिरतो यस्तु हरिभक्तिरतः सदा ।
विरक्त इन्द्रियार्थेभ्यः स मे पूज्यो न संशयः ॥ ४४
तीर्थयात्रापरो नित्यं वृषोत्सर्गविशेषवित् ।
सत्यदानपरो यस्तु स नमस्यो दिवौकसाम् ॥ ४५
दर्शनार्थमिहानीतः पूजार्हश्च परन्तपः ।
अनुगृहाण मां देव क्षमस्व मम साहसम् ॥ ४६
इत्युक्त्वा दर्शयामास मन्त्रिणं संज्ञया भुवः ।
वदिष्यति समग्रं ते स्वयं वक्तुं न साम्प्रतम् ॥ ४७
सामन्तः सर्व्वविद्ज्ञो ज्ञात्वा हार्द्दं नृपस्य च ॥ ४८

विपश्चिदुवाच ।

पूर्व्वजन्मनि वैश्योऽयं विश्वम्भर इति श्रुतः ।
विराधनगरे विप्र द्विज-देवविभूषिते ॥ ४९
वैश्यवृत्त्या सदा जीवन् कुटुम्बपरिपालकः ।
गवां शुश्रूषको नित्यं ब्राह्मणानाञ्च पूजकः ॥ ५०
पात्रदानपरो नित्यमातिथेयोऽग्निसेवकः ।
गार्हस्थ्यं विधिवच्चक्रे भार्य्यया सत्यमेधया ॥ ५१
आर्त्तेन लोकानजयच्छ्रौतेन तु हविर्भुजः ।
कदाचिद्बन्धुभिः साकं कृत्वा तीर्थानि भूरिशः ॥ ५२
यावदायाति सदनं दृष्टवान् लोमशं पथि ।
दण्डवत् प्रणिपत्याशु कृताञ्जलिपरं स्थितम् ॥ ५३
पप्रच्छ विनयोपेतं करुणावारिवारिधिः ॥ ५४

ऋषिरुवाच ।

कुत आगम्यते साधो ब्राह्मणैर्बन्धुभिर्युतः ।
दृष्ट्वा त्वां धर्म्मनिलयं प्रक्लिन्नं मानसं मम ॥ ५५

विश्वम्भर उवाच ।

शीर्य्यमाणं शरीरं हि ज्ञात्वा मृत्युं पुरःस्थितम् ।
भार्य्यया धर्म्मचारिण्या तीर्थयात्रां विनिर्गतः ॥ ५६
कृत्वा तीर्थानि विधिवद्विश्राण्य विपुलं वसु ।
यावद्व्रजाम्यहं वेश्म भवान् दृष्टिपथं गतः ॥ ५७

लोमश उवाच ।

तीर्थानि सन्ति भूरीणि वर्षेऽस्मिन् भारते शुभे ।
यत् त्वया ह्युपचीर्णानि तानि सर्व्वाणि मे वद ॥ ५८

वैश्य उवाच ।

गङ्गा च सूर्य्यतनया महापुण्या सरस्वती ।
दशाश्वमेधैरयजद्यत्र ब्रह्मा सुरेश्वरः ॥ ५९
तीर्थराजं ततः काशी महादेवो दयानिधिः ।
मृतानां यत्र जन्तूनां कर्णे जपति तारकम् ॥ ६०
पुलहस्याश्रमं पुण्यं फल्गुतीर्थञ्च गण्डकी ।
चक्रतीर्थं नैमिषञ्च शिवतीर्थमनन्तकम् ॥ ६१
गोप्रतारक-नागेशमयोध्या-बिन्दुसंज्ञितम् ।
यत्रास्ते मुक्तिदः साक्षाद्रामो राजीवलोचनः ॥ ६२
आग्नेयं वायु-कौबेरं कौमारं भूरुहां पुनः ।
शौकरं मथुरा यत्र नित्यं सन्निहितो हरिः ॥ ६३
पुष्करं सत्यतीर्थञ्च ज्वालातीर्थं दिनेश्वरम् ।
इन्द्रतीर्थं कुरुक्षेत्रं यत्र प्राची सरस्वती ॥ ६४
तापी पयोष्णी निर्विन्ध्या मलयः कृष्णवेणिका ।
गोदावरी दण्डकञ्च ताम्रचूडं सदोदकम् ॥ ६५
द्यावाभूमीश्वरं दृष्ट्वा श्रीशैलः पर्व्वतेश्वरः ।
असङ्ख्यलिङ्गतीर्थानि यत्र सन्ति सदा मुने ॥ ६६
वङ्कटाद्रौ महातेजाः श्रीरङ्गाख्यः स्वयं हरिः ।
वङ्कटी नाम तत्रैव देवी महिषमर्द्दिनी ॥ ६७
चन्द्रतीर्थं भद्रवटः कावेरी-कुटलाचलौ ।
अवटोदा ताम्रपर्णी त्रिकूटः कोल्लको गिरिः ॥ ६८
वाशिष्ठं ब्रह्मतीर्थञ्च ज्ञानतीर्थं महोदधिः ।
हृषीकेशं विराजञ्च विशालं नीलपर्व्वतम् ॥ ६९
भीमकूटः श्वेतगिरी रुद्रतीर्थमुमावनम् ।
अवाप गिरिजा देवी तपसा यत्र शङ्करम् ॥ ७०
वारुणं सूर्य्यतीर्थञ्च हंसतीर्थमहोदयम् ।
निमज्ज्य यत्र काकोला राजहंसत्वमाययुः ।
असुरो यत्र देवत्वमवाप स्नानमात्रतः ॥ ७१
विश्वरूपं वन्दितीर्थं रत्नेशः कुहकाचलः ।
नर-नारायणं दृष्ट्वा मुच्यते पापकोटिभिः ॥ ७२

सरस्वती-दृषद्वत्यौ नर्म्मदा शर्म्मदा नृणाम् ॥ ७३
नीलकण्ठं महाकालं पुण्यं चामरकण्टकम्।
चन्द्रभागा वेत्रवती वीरभद्रं गणेश्वरम् ॥ ७४
गोकर्णं विल्वतीर्थञ्च कर्म्मकुण्डं सतारकम्।
स्नानमात्रेण यत्राशु मुच्यते कर्म्मबन्धनात् ॥ ७५
अन्यान्यपि च तीर्थानि कृतानि कृपया तव।
उत्पद्यते शुभा बुद्धिः साधूनां यदनुग्रहः ॥ ७६
एकतः सर्व्वतीर्थानि करुणाः साधवोऽन्यतः।
अनुग्रहाय भूतानां चरन्ति चरितव्रताः ॥ ७७
त्वं गुरुः सर्व्ववर्णानां विद्यया वयसाधिकः।
अतः पृच्छाम्यहं किञ्चिदाधिभूतं चिरन्तनम् ॥ ७८
किं कुर्य्यां कं नु पृच्छेऽहं मनो मेऽतिचलं मुने।
निस्पृहं ब्रह्मविषये विषयेष्वति लालसम् ॥ ७९
अनागपि न सहते विरहं तिमिरं ब्रुवन्।
मोहितं विविधैर्भावैः कर्म्मणां चैवमुत्तमम् ॥ ८०
शान्तिं यथा समायाति सम्पन्नमिव भूसुर।
विवेकप्रवणं शुद्धं यथा स्यात् कृपया वद ॥ ८१

ऋषिरुवाच।

मनस्तु प्रबलं नित्यं सविकारं स्वभावतः।
वशं नयन्ति करिणं प्रमत्तमपि हस्तिपाः ॥ ८२
तथापि साधुसङ्गत्या साधनैरप्यतन्द्रितः।
तीव्रेण भक्तियोगेन विचारेण वशं नयेत् ॥ ८३
इतिहासं प्रवक्ष्यामि तव प्रत्ययकारकम्।
नारदोऽकथयन्मह्यं स्ववृत्तगतजन्मनः ॥ ८४

नारद उवाच।

कस्यचिद्द्विजमुख्यस्य दासीपुत्रः पुरा मुने।
शिक्षितो बालभावेऽपि पाठितो नितरामहम् ॥ ८५
तत्रापि सङ्गतिर्जाता महतां पुण्यकर्म्मणाम्।
प्रावृट्काले मम गृहे स्थितानां भाग्ययोगतः ॥ ८६
शुश्रूषणानुवृत्त्या च प्रश्रयेण दमेन च।
सन्तोषं परमं प्राप्य कृपया त्विदमब्रुवन् ॥ ८७
मनीषा निर्म्मला येन जाता मम शुभार्थिनो।
यया विष्णुमयं सर्व्वमात्मन्येव दिदृक्षिवान् ॥ ८८

मुनय ऊचुः।

शृणु वत्स प्रवक्ष्यामो हिताय तव बालक।
येन वै ध्रियमाणेन इहामुत्र सुखं भवेत् ॥ ८९

देवतिर्य्यङ्मनुष्याश्च संसारे विविधा जनाः।
निबद्धाः कर्म्मपाशैस्ते भुञ्जन् भोगान् पृथग्विधान् ॥ ९०
देवत्वं याति सत्त्वेन रजसा च मनुष्यताम्।
तिर्य्यक्त्वं तमसा जन्तुर्वासनानुगतोऽबुधः ॥ ९१
मातुर्लब्ध्वा पुनर्जन्म म्रियन्ते च पुनः पुनः।
एवं गत्वा ह्यसंख्याता योनीस्ते कर्म्मभूरपि ॥ ९२
मानुष्यं दुर्लभं लब्ध्वा कदाचिद्दैवयोगतः।
अनुग्रहेण महतां हरिं ज्ञात्वा विमुच्यते ॥ ९३
रागग्राहं मोहजलमपारं भवसागरम्।
न पश्यामि तितीर्षूणां श्रीरामस्मरणं विना ॥ ९४
नवनीतं यथा दध्नो ज्योतिः काष्ठादपि क्वचित्।
मन्थनैः साधनैरेवं परं ज्ञात्वा सुखी भवेत् ॥ ९५
आत्मा नित्योऽव्ययः सत्यः सर्व्वगः सर्व्वसम्महान्।
अप्रमेयः स्वयंज्योतिरग्राह्यो मनसापि यः ॥ ९६
सच्चिदानन्दरूपोऽसौ सर्व्वप्राणिहृदि स्थितः।
विनश्यत्स्वपि भावेषु न विनश्यति कर्हिचित् ॥ ९७
आकाशः सर्व्वभूतेषु स्थितस्तेजोजले तथा।
आत्मा सर्व्वत्र निर्लेपः पार्थिवेषु यथानिलः ॥ ९८
भक्तानुकम्पी भगवान् साधूनां रक्षणाय च।
आविर्भवति लोकेषु गुणी वाच्यैः प्रतीयते।
एवं विवेकवत्या यो बुद्ध्या संशीलयेद्धृदि ॥ ९९
भक्तियोगेन सन्तुष्ट आत्मानं दर्शयेदजः।
ततः कृतार्थो भवति सदा सर्व्वत्र निस्पृहः ॥ १००
अतोऽहङ्कारमुत्सृज्य सानुबन्धे कलेवरे।
चरेदसङ्गो लोकेषु स्वप्नप्रायेषु निर्म्ममः ॥ १०१
क्व स्वप्ने नियतं धैर्य्यमिन्द्रजाले क्व सत्यता।
क्व नित्यता शरन्मेघे क्व वा सत्यं कलेवरे ॥ १०२
अविद्याकर्म्मजनितं दृश्यमानं चराचरम्।
ज्ञात्वाचारवशी योगी ततः सिद्धिमवाप्स्यसि ॥ १०३
इत्युक्त्वा ते गताः सर्व्वे साधवो दीनवत्सलाः।
सोऽहं तदुक्तमार्गेण तथैवाचरमन्वहम् ॥ १०४
ततोऽचिरेणात्मनीदं दृष्टवानहमद्भुतम्।
ज्योतिर्म्मयं सदानन्दं शरच्छीतांशुनिर्म्मलम् ॥ १०५
निषिच्य सुखसन्दोहैर्मां क्षणाधिकसस्पृहम्।
अन्तर्हितं महत् तेजो यथा सौदामनी दिवि ॥ १०६
मन्या तदेव मनसि भावयन्नहमद्भुतम्।

काले कलेवरं त्यक्त्वा गतवान् हरिमव्ययम् ।
तस्येच्छया पुनर्ब्रह्मन् ब्रह्मणो मेऽभवज्जनिः ॥ १०७
तदनुग्रहाद्भगवतस्त्रिषु लोकेषु निस्पृहः ।
आपीडयन् मुहुर्वीणां गायमानश्चराम्यहम् ॥ १०८
इत्युक्त्वा मे स्वानुभवं ययौ याहच्छिको मुनिः ।
ममापि परमाश्चर्यं सन्तोषश्च महानभूत् ॥ १०९
अतस्ते साधुसङ्गत्या भक्त्या च परमात्मनः ।
विशुद्धं निर्म्मलं शान्तं मनो निर्वृतिमेष्यति ॥ ११०
अनेकजन्मजनितं पातकं साधुसङ्गमे ।
क्षिप्रं नश्यति धर्म्मज्ञ जलानां शरदो यथा ॥ १११

वैश्य उवाच ।

पीत्वा ते वाक्यपीयूषं स्वान्तं मे शान्तिमागमत् ।
सर्व्वतीर्थफलं मेऽद्य सञ्जातं तव दर्शनात् ॥ ११२
इति श्रुत्वा वचस्तस्य प्रोवाच ऋषिसत्तमः ।
हिताय तव राजेन्द्र त्रिवर्गफलमिच्छतः ॥ ११३

लोमश उवाच ।

यत् त्वया सुकृतं भूरि वृषोत्सर्गं विना कृतम् ।
मन्येऽकिञ्चित्करं सर्व्वं नीहारसलिलं यथा ॥ ११४
वृषोत्सर्गसमं किञ्चित् साधनं न महीतले ।
अनायासेन गच्छन्ति गतिं ते पुण्यकर्म्मणाम् ॥ ११५
वृषोत्सर्गः कृतो येन अश्वमेधस्य याजकः ।
उभौ समौ मया दृष्टौ दिव्यौ तौ ब्रह्मसन्निधौ ॥ ११६
अतस्त्वं पुष्करं गत्वा वृषोत्सर्गं विधाय च ।
ततो याहि गृहं साधो येन सर्व्वकृतं भवेत् ॥ ११७

विपश्चिदुवाच ।

ततः स पुनरावृत्य कार्त्तिक्यां पुष्करे वरे ।
वराहरूपी भगवान् यत्रास्ते यज्ञपूरकः ॥ ११८
चकार विधिवत् सर्व्वं यदुक्तमृषिसत्तमैः ।
कृतानि बहुतीर्थानि ततो लोमशसङ्गतिः ॥ ११९
ततोऽधिकतरं जातं पुण्यं नीलविवाहजम् ।
सम्भुक्त्वा विषयान् दिव्यान् विमानवरमाश्रितः ॥ १२०
तेन राजकुले जन्म वीरसेनस्य धर्म्मतः ।
वीरपञ्चाननाख्यातश्चतुर्वर्गैकसाधकः ॥ १२१
प्रकुर्व्वतो वृषोत्सर्गं तत्र ये परिचारकाः ।
दिव्यरूपाभवन् स्पृष्टा गोपुच्छोदकशीकरैः ॥ १२२
सुरूपाः पुष्टवपुषः पश्यन्तो दूरसंस्थिताः ।
ततो दूरतरा ये च दृश्यन्ते मलिना जनाः ॥ १२३
दुर्भगा मलिना रूक्षाः कृशा विगतवाससः ।
वृषयज्ञमपश्यन्तो ये चासूयां प्रकुर्व्वते ॥ १२४
सर्व्वं निवेदितं राजंश्चरितं पूर्व्वजन्मनः ।
धर्म्मात्र विचित्रमाख्यानं श्रुतं मे यत् पराशरात् ॥ १२५
अतस्त्वं स्वगृहं गच्छ कृपां कृत्वा ममोपरि ॥ १२६
श्रुत्वा विपश्चिद्वाक्यं स विस्मयं परमं गतः ।
गृहं जगाम विप्रोऽसौ प्रापितो राजसेवकैः ॥ १२७

वशिष्ठ उवाच ।

तस्माद्राजन् वृषोत्सर्गं वरिष्ठं सर्व्वकर्म्मणाम् ।
समाचर विधानेन यदि भीतो यमादपि ॥ १२८
वृषोत्सवसमं किञ्चित् साधनं न दिवः परम् ।
मया धर्म्मरहस्यं ते कथितं राजसत्तम ॥ १२९
पति-पुत्त्रवती नारी भर्त्तुरग्रे मृता यदि ।
वृषोत्सर्गं न कुर्व्वीत गां दद्याच्च पयस्विनीम् ॥ १३०

श्रीकृष्ण उवाच ।

श्रुत्वा वाक्यं वशिष्ठस्य राजा मधुपुरीं गतः ।
चकार विधिवत् सर्व्वं वृषोत्सर्गमहं खग ॥ १३१
गृहं गत्वा स आत्मानं कृतकृत्यममन्यत ।
कालेन निधनं प्राप्तो नीतो वैवस्वतानुगैः ॥ १३२
स कालनगरं हित्वा गतो दूरतरं पथि ।
आह देवपुरं कुत्र इति दूतानपृच्छत ॥ १३३
पापिनो यत्र पात्यन्ते याम्यैः पापविशुद्धये ।
यत्र देवः स धर्म्मात्मा धर्म्माधर्म्मविचेतनः ॥ १३४
गतं पापपुरं तत्र न द्रष्टव्यं भवादृशैः ।
अग्रे दृष्ट्वा धर्म्मराजमूचुस्ते परमादरात् ॥ १३५
दिव्यरूपस्तदा देवो देव-गन्धर्व्वसंयुतः ।
आत्मानं दर्शयामास तस्य राज्ञो महात्मनः ॥ १३६
प्रणम्य दण्डवद्राजा कृताञ्जलिपुटः स्थितः ।
तुष्टाव बहुधा देवं हर्षपूरितमानसः ॥ १३७
धर्म्मराजोऽपि राजानं प्रशस्येदमुवाच ह ।
नीयतां देवलोकाय यत्र भोगाः सुपुष्कलाः ॥ १३८
तद्वीरवाहनः श्रुत्वा पप्रच्छ समवर्त्तिनम् ।
न जाने केन पुण्येन स्वर्गं नयसि मां विभो ॥ १३९

धर्म्मराज उवाच ।

त्वया कृतानि पुण्यानि दानं यज्ञाः सविस्तराः ।

मथुरायां वृषोत्सर्गो वशिष्ठवचनात् किल ॥ १४०
धर्म्मः स्वल्पोऽपि नृपते यदि सम्यगुपासितः।
द्विज-देवप्रसादेन स याति बहुविस्तरम् ॥ १४१
इत्युक्त्वा यमुनाभ्राता क्षणादन्तर्द्धिमाययौ।
वीरवाहो दिवं गत्वा देवैः सह मुमोद ह ॥ १४२

श्रीकृष्ण उवाच।

मया ते कथितं पक्षिन् वृषयज्ञः सुविस्तरः।
प्राणिनां कर्म्मनिर्हारं श्रुत्वा पापैः प्रमुच्यते ॥ १४३

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
सारोद्धारे श्रीकृष्ण-गरुड़संवादे
सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः।

गरुड़ उवाच।

श्रुतं मे माहात्म्यानं वृषोत्सर्गफलं हरे।
पुनरन्यां कथां ब्रूहि यत्र ते महिमाद्भुतः ॥ १

श्रीकृष्ण उवाच।

अहं ते कथयाम्यद्य संवादं परमाद्भुतम्।
सन्तप्तकस्य च प्रेतैस्तद्रूपज्ञापनाय वै ॥ २
विप्रः सन्तप्तकः कश्चित् तपसा दग्धकिल्बिषः।
संसारासारतां ज्ञात्वारण्येष्वेव चचार ह ॥ ३
वखानसमुनिप्रोक्तैः प्रणिपातकृतेक्षणः ॥ ४
स कदाचित् तीर्थयात्रामुद्दिश्य ह्याटति द्विजः।
प्रत्याकृष्टेन्द्रियत्वाच्च वहिर्वृत्तिनिरोधकः।
संस्कारमात्रगमनो मार्गभ्रष्टो बभूव ह ॥ ५
चलन्नेवं स्नानकाले मध्याह्नेऽथाभिलाषुकः।
जलस्योन्मील्य नयने दिशः सर्व्वा न्यभालयत् ॥ ६
स ददर्श तदा गुल्मैर्वीरुद्भिश्च शतैश्चितम्।
लकुचारैः शाखिशाखाभिः सङ्कुलं गहनं वनम् ॥ ७
तत्र तालास्तमालाश्च पियालाः पनसास्तथा।
श्रीपर्णीशालशाखोटस्यन्दनास्तिन्दुकास्तथा ॥ ८
सर्ज्जार्ज्जुनाम्रातकाश्च श्लेष्मातक-विभीतकौ।
पिचुमर्द्देङ्गिनी च कर्कन्धूकर्णिकारकाः ॥ ९
एते चान्ये च बहवो वृक्षास्तेषु न दृश्यते।
पक्षिणामपि वै पन्था मनुष्यस्य कुतः पुनः ॥ १०

तस्मिन् वने महाघोरे सिंह-व्याघ्रसमाकुले।
तरक्षु-गवयैर्ऋक्षैर्महिषैश्च निषेविते ॥ ११
कुञ्जरैः शरभैर्नागैर्मर्कटैश्च तथा मृगैः।
श्वापदैश्च तथा चान्यैः पिशाचैः राक्षसैर्वृते ॥ १२
सन्तप्तको द्विजः किञ्चिद्भयसन्त्रस्तमानसः।
कान्दिशीकः समभवद्भयज्वविधो ययौ पुनः ॥ १३
झाङ्कारेषु च झिल्लीनां घूकानां घूत्कृतेष्वपि।
दत्तकर्णः कुनीलाङ्गश्चचाल पदपञ्चकम् ॥ १४
स तत्र वटवृक्षाग्रे स्नायुबद्धं शवं तथा।
ददर्श तद्भुजश्चैव पञ्च प्रेतान् सुदारुणान् ॥ १५
शिरास्थिचर्म्मशेषाङ्गान् पृष्ठलग्नोदरान् खग।
व्यक्तान् नासिकया नेत्रकूपपातभयादिव ॥ १६
सूचीक्रकचकव्रातघातपातितकीकशान्।
वसाक्तनवमस्तिष्कास्वादनित्यमहोत्सवान् ॥ १७
दन्तकोटिमहादंष्ट्रानस्थिग्रन्थग्रवघट्टितान्।
तान् दृष्ट्वा त्रस्तहृदयो गतिमाकुञ्च्य संस्थितः ॥ १८
ते विलोक्यागतं विप्रमटवीं जनवर्ज्जिताम्।
अहं पूर्व्वमहं पूर्व्वं यामीत्युक्त्वा प्रदुद्रुवुः ॥ १९
तेषु द्वौ द्वावगृह्णीतामस्य हस्तावथापरे।
द्वौ द्वौ पादावगृह्णीतां मूर्द्धानं पञ्चमोऽग्रहीत् ॥ २०
स्वजात्युचितवाक्येन स्फुटवर्णवता ब्रुवन्।
अहं जहाम्यहं भक्षामीति कर्षणतत्पराः ॥ २१
सहसैव सहैवामुं गृहीत्वा व्यगमन् वियत्।
कियत् स्थितं वटौ मांसं कियन्नेति न्यभालयन् ॥ २२
तेऽपश्यन्निजजङ्घायःपाटितान्त्रमिमं शवम्।
अवतीर्य्य ततो व्योम्नो गृहीत्वा चरणैः शवम् ॥ २३
स्वखण्डितशरीरन्तु पुनर्व्योमैव चक्रमुः।
स नीयमानमात्मानं विलोक्य वियति द्विजः ॥ २४
जगाम मनसा मां स शरणं भयविह्वलः।
नमश्चक्रे चक्रधरं चेतसा चिन्मयं समम् ॥ २५

वक्रां नक्रां चक्रपातेन दूरे
कृत्वा हृत्वा तस्य दुःखं मुकुन्दः।
मातङ्गं योऽमूमुचन्नक्रवक्त्रात्
पायं सोऽसौ कर्म्मणां मे लुनातु ॥ २६
सुदान् शुद्धान् भूपतीन् मागधेन-
भीमेनैनं घातयित्वा मुरारिः।

निर्व्वाणं यो भर्गयज्ञाय मुक्तान्
यज्ञो मेऽसौ कर्म्मपाशं लुनातु ॥ २७
मनसैवेह मामस्तौत् स्तूयमानोऽहमुत्थितः ।
आगच्छं सहसा तत्र यत्र प्रेतैः स नीयते ॥ २८
दृष्ट्वा तैर्नीयमानन्तु कौतुकं मेऽभवत् खग ।
पप्रच्छ न कियन्तं वै कालं तान् पृष्ठतोऽन्वगाम् ॥२९
मम सन्निधिमात्रेण द्विजातिं तच्च सर्पच्छन् ।
तत्कालं शिविकासुप्त-भूपालसुखमाविशत् ॥ ३०
मणिभद्रस्ततो मेरुं गच्छन् दृष्टो मया पथि ।
निकोच्याहि खपार्श्वं स नीतो वै यक्षराक्षसा ॥ ३१
तमवोचं महायक्ष त्वं हि प्रतिभटो भव ।
प्रेतान् नाशय तद्रूपः शवञ्च तद्गतं हर ॥ ३२
इत्युक्तः स महाघोरं कृत्वा रोषं सुदुःसहम् ।
जग्राह प्रेतरूपं तत्प्रेतानामपि दुःखदम् ॥ ३३
स विवृत्य स्वकौ बाहू सृक्किणी परिलेलिहन् ।
भेदयन्नुरुवातेन प्रेतांस्तान् सम्मुखो ययौ ॥ ३४
बाहुभ्यां द्वौ द्वौ च पद्भ्यां मूर्द्ध्नैकं स समाहनत् ।
प्रेतानाञ्चापि सहसा जघान दृढ़मुष्टिना ॥ ३५
ते विवर्णमुखाः सर्व्वे तं द्विजञ्च शवं तथा ।
एकैकं हस्तपादैश्च गृहीत्वा युद्धमारभत् ॥ ३६
ते नखैस्तलघातैश्च पादघातैस्तथैव च ।
दंष्ट्राघातैश्च सर्व्वे तमेकं प्रेतं व्यदारयन् ॥ ३७
तेषां प्रहारान् विफलान् प्रति कृत्वा च तानथ ।
जीवं न तु शवं तेषां जह्रे प्राणमिवान्तकः ॥ ३८
क्षणमात्रे शवे ते तु पारिपात्रे गिरौ द्विजम् ।
मुक्त्वाऽधावन् प्रमुदिता एकं प्रेतं सहासुराः ॥ ३९
स वायुगमनः प्रेतः प्राप्तस्तैः क्षणमात्रतः ।
अदृश्यतां ययौ तेऽथ हताशा विप्रमागमन् ॥ ४०
प्रारब्धमात्रे विप्रस्य पाटने तत्र पर्व्वते ।
मम स्थानस्य विप्रस्य महिम्नैव च तत्क्षणे ॥ ४१
सद्यः स्मृतिः समुत्पन्ना तेषां पूर्व्वस्य जन्मनः ।
विप्रं प्रदक्षिणीकृत्य द्विजर्षभमथाब्रुवन् ॥ ४२
अद्य न क्षन्तुमर्होऽसीत्युक्त्वा ते सुरदाम्भिकाः ।
गिरेरेव परावर्त्तं समुद्रस्येव भीषणम् ॥ ४३
तेषां तद्वचनं श्रुत्वाऽपृच्छत् के यूयमित्यथ ।
किं माया किमु वा स्वप्न उताहो चित्तविभ्रमः ॥ ४४

प्रेता ऊचुः ।

अवेहि तत्त्वमेवैतत् प्रेतास्तु कर्म्मजा वयम् ॥ ४५

ब्राह्मण उवाच ।

किंनामानः किमाचाराः कथञ्चेमां दशां गताः ।
अविनीताः कथं पूर्व्वं विनीताः साम्प्रतं कथम् ॥ ४६

प्रेता ऊचुः ।

शृणु विप्रेन्द्र वक्ष्यामः प्रश्नानामनुपूर्व्वशः ।
उत्तराणि महायोगिंस्त्वद्दर्शनगतांहसः ॥ ४७
अहं पर्य्युषितो नाम्ना एष सूचीमुखः स्मृतः ।
तृतीयः शीघ्रगस्तुर्य्यो रोधको लेखकः परः ॥ ४८

ब्राह्मण उवाच ।

प्रेतानां कर्म्मजातानां कुतो नाम निरर्थकम् ।
निरुक्तिमेषां नाम्नां वै प्रेता वदत मा चिरम् ॥ ४९

श्रीकृष्ण उवाच ।

एवमुक्तास्तु विप्रेण पृथगुत्तरमब्रुवन् ॥ ५०

पर्य्युषित उवाच ।

कदाचिच्छ्राद्धकाले वै मया विप्रो निमन्त्रितः ।
स च कृत्वा विलम्बेन वृद्धो मद्गृहमागतः ॥ ५१
अकृतश्राद्धकर्म्माहं तं पाकं भुक्तवान् क्षुधा ।
अदत्तामन्नमाकृष्य विप्रे पर्य्युषितं कियत् ॥ ५२
तस्मात् पापान्मृतः पापो योनिं वै कुत्सितां गतः ।
यतः पर्य्युषितं दत्तं ततः पर्य्युषितः स्मृतः ॥ ५३

सूचीमुख उवाच ।

कदाचिद्ब्राह्मणी काचित् तीर्थं भद्रवटं ययौ ।
पञ्चवर्षसुता वृद्धा पुत्त्रमात्रैवजीविता ॥ ५४
अहं क्षत्रियदायादस्तस्य रोधमकारणम् ।
वने तु विजने तत्र पापाध्वरगतिं गतः ॥ ५५
तस्याः सवस्त्रं पाथेयं तत्सूनोर्वसनानि च ।
गृहीतानि मया विप्र शिरस्यापीड्य मुष्टिना ॥ ५६
तृषार्त्तस्तत्क्षणं बालः पात्रसंस्थं जलं पिबन् ।
तावन्मात्रोदके दृष्टे मयाहृत्य वारितः ॥ ५७
मयाथ सकलं पीतं जलं पात्रात् तृषावता ।
बालोऽपि भयसन्त्रस्तः पिपासुर्व्यसुरापतत् ॥ ५८
पुत्त्रशोकान्मृता माता कूपे प्रास्य निजं वपुः ।
एतस्मात् पातकाद्विप्र प्रेतत्वं प्राप्तवानहम् ॥ ५९
सूच्यग्रप्रायविवरमुखः पर्व्वतदेहवान् ।

यद्यपि प्राप्नुयां भक्ष्यं भक्षितुन्तु न शक्यते ॥ ६०
मया क्षुधानलेनापि ज्वलतास्यनिकोचितम्।
अत आस्ये तु विवरं सूच्यग्रेण समं मम।
एतस्मात् कारणाद्विप्र नाम्ना सूचीमुखोऽस्म्यहम्॥६१

शीघ्रग उवाच।

पुराहं वैश्यजातीयः साकं सख्या च केनचित्।
वाणिज्यं कर्त्तुमगमं देशमन्यं महाधनः ॥ ६२
मित्रञ्च मे बहुधनं तस्य लोभो महांस्ततः।
जातोऽप्यदृष्टवैमुख्यान्मे नष्टं मूलमप्युत ॥ ६३
ततस्तस्मात् तु निष्क्रान्तावावां नावाथ निम्नगाम्।
मागर्गां तर्त्तुमारब्धौ लोहितायति भास्करे ॥ ६४
सखा स च मदुत्सङ्गे सुष्वापाध्वक्लमाकुलः।
अभूत् तदातिपापस्य क्रूरा मतिरतीव मे॥ ६५
तमुत्सङ्गगतं सूरे नष्टे पूरेऽक्षिपं तदा।
न घासं मद्दैता नावि लोकैस्तु ज्ञातमेव न ॥ ६६
तस्य तद्वस्तु तत् सर्व्वं मणिमादाय काञ्चनम्।
आदाय शीघ्रगस्तस्माद्देशात् स्वगृहमागतम् ॥ ६७
तत् सर्व्वं स्वगृहे मुक्त्वा तस्य पत्न्यै न्यवेदयम्।
दस्युभिर्मे हतो भ्राता धनमाच्छिद्य वै पथि।
प्रजावति प्रद्रुतोऽहं मा रोदीत्येवमब्रवम् ॥ ६८
सापि तत्कालं शोकार्त्ता ममत्वं गृहबन्धुषु।
त्यक्त्वा चातिप्रियान्प्राणान्जुहावाग्नौ यथाविधि॥६९
ततो निष्कण्टकं तद्धि वीक्ष्य हृष्टोऽद्य मे ह्यहम्।
अभुञ्जं गृहमागत्य यावज्जीवन्तु तद्धनम् ॥ ७०
मित्रं पूरे हि निक्षिप्य यदहं शीघ्रमागतः।
एतस्मात् कारणात् प्रेतः शीघ्रगोऽहन्तु नामतः ॥७१

रोधक उवाच।

अहन्तु शूद्रजातीयः पुराभवं मुनीश्वर।
राजप्रसादाप्तमहा-धनग्रामाधिकारवान् ॥ ७२
वृद्धौ मे पितरावास्तां लघुरेकः सहोदरः।
शीघ्रं स च मया भ्राता लुब्धेनैकः पृथक् कृतः ॥ ७३
आप्तवान् परमं दुःखं सोऽन्नवस्त्रविवर्ज्जितः।
अदत्तां पितरौ छन्नं किञ्चित् किञ्चित् तु तस्य च७४
तस्मै पितृभ्यां यद्दत्तमाप्तेभ्यस्तन्मया श्रुतम्।
तत् सर्व्वं तत्त्वतो ज्ञात्वा पित्रो रोधमकारयम् ॥७५
शून्यमन्दिर एकस्मिन् बद्धा तु निगड़ैर्दृढ़ैः।
ततस्तौ जहतुः प्राणान् दुःखितौ विषपानतः ॥ ७६
सोऽपि बालोऽपि बभ्राम पितृभ्यां रहितो द्विज।
पुरःपतनखर्व्वाटान् खेटानपि मृतः क्षुधा ॥ ७७
एतस्मात् पातकाद्विप्र मृतः प्रेतत्वमागतः।
रुद्धौ तु पितरौ यस्मान्नाम्नाहं रोधकस्ततः ॥ ७८

लेखक उवाच।

अहं विप्र पुराभूवमवन्त्यां द्विजसत्तमः।
भद्रस्य राज्ञो देवानां पूजनेऽधिकृतो ह्यहम् ॥ ७९
बहवस्तु प्रतिमास्तत्र बभूवुर्बहुनामिकाः।
हैमास्तदङ्गेषु बहु रत्नजातं बभूव ह ॥ ८०
तासां मे कुर्व्वतः पूजां पापा मतिरजायत।
अखिलं तीक्ष्णलोहेन तासामङ्गान्यहं ततः ॥ ८१
उल्लेखनञ्च रत्नानां नेत्रादिभ्यः कृतं मया।
तथाकृतान्यथाङ्गानि प्रतिमानां निरीक्ष्य च ॥ ८२
नेत्राणि च विरत्नानि नृपस्य क्रोधवाड़वः।
प्रतिजज्ञे नृपः पश्चादेष ब्राह्मणपुङ्गवः ॥ ८३
आभ्यो रत्नं सुवर्णञ्च हृतं येन भविष्यति।
ज्ञातश्च स हि मे वध्यो भविष्यति न संशयः ॥ ८४
अहं तत् सकलं ज्ञात्वा रात्रावसिधरो गृहम्।
राज्ञः प्रविश्य राजानं पशुमारममारयम् ॥ ८५
गृहीत्वाथ मणीन् स्वर्णं निशीथेऽहं गतोऽन्यतः।
व्याघ्रेण महतारण्ये नखटङ्कविटङ्कितः ॥ ८६
लेखनं प्रतिमाया यन्मया लोहेन कर्त्तितम्।
एतस्मात् पातकात् प्रेतो लेखको नामतोऽस्म्यहम्।
आसीन्नरकभोगान्ते नः प्रेतत्वमिदं द्विज ॥ ८७

ब्राह्मण उवाच।

आख्याता तादृशी संज्ञा यथैषा भवतां दशा।
वदन्त्वाचारमात्रं मे प्रेता आहारमप्युत ॥ ८८

प्रेता ऊचुः।

वेदमार्गानुसरणं लज्जा धर्म्मो दमः क्षमा।
धृतिर्ज्ञानं नैव यत्र वयं तत्र वसामहे ॥ ८९
तस्य पीड़ां वयं कुर्म्मो नवश्राद्धं न तर्पणम्।
यस्य गेहे तदङ्गात् तु मांसञ्च रुधिरं क्रमात्।
जहामश्च पिबामश्च उक्त आचार एष नः ॥ ९०
शृणु चाहारमस्माकं सर्व्वलोकविगर्हितम्।
दृष्टस्त्वया कियांश्चिद्वै ब्रूमो ज्ञातं त्वयानघ ॥ ९१

वमनं विड्दूषिका च श्लेष्मा मूत्राश्रुणी तथा।
एतच्चान्नञ्च पानञ्च मा पृच्छातः परं द्विज ॥ ९२
लज्जा नो जायते स्वामिन्नाहारं वदतां स्वकम्।
अज्ञानात्तामसा मन्दा कान्दिशीका वयं विभो ॥९३
अकस्माज्जन्मनां विप्र स्मृतिः प्राप्ता तु पौर्व्विकी।
विनीतमवनीतलं नैव जानीम नः प्रभो ॥ ९४

श्रीकृष्ण उवाच।

एवं वदत्सु प्रेतेषु तथा स्तुतवति द्विजे।
अदर्शयमहं रूपं तदा तार्क्ष्यदमेव वै ॥ ९५
स तु दृष्ट्वा द्विजश्रेष्ठो ह्यद्भुतं पुरुषं पुरः।
स्तोत्रैस्तुष्टाव पद्मीश दण्डवत् प्रणनाम माम् ॥ ९६
तेऽपि तेपुस्ततः प्रेता आश्चर्य्योत्फुल्लचक्षुषः।
प्रणयेन स्खलद्वाचः खग नोचुः किमच्युत ॥ ९७
रजसा घोरचित्तानां तमसा मूढचेतसाम्।
कृपया यः समुद्धारं कुरुषे ते नमोऽस्तु ते ॥ ९८

एवं द्विजातौ ब्रुवति प्रभूत-
प्रभैश्च लब्धामरधारियुक्तैः।
तदा मदिच्छाप्रभवैर्विमानैः
षड्भिः समन्तादुरुचे गिरिः सः ॥ ९९
दूत्यं विमानेन मदीयलोके
गतो द्विजस्तेऽप्यथ पञ्चभिस्तैः।
प्रेता ययुः स्वर्गमगण्यपुण्यं
सत्सङ्गसंसर्गवशात् सुपर्ण ॥ १००
प्रेताः प्रेतजनत्वमापुरतुलं
सन्तप्तको ब्राह्मणो
विश्वक्सेन इति प्रसिद्धविभवो
नाम्ना गणो मेऽभवत्।
एतत् ते सकलं मया निगदितं
यश्चैतदुत्कीर्त्तयेद्-
यश्चेदं शृणुयान्न सोऽपि पुरुषः
प्रेतत्वमाप्नोति हि ॥ १०१

इति श्रीगारुड़े महापुराणे श्रीकृष्ण-
गरुड़-संवादे प्रेतोपाख्यानं
नामाष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः।

गरुड़ उवाच।

स्वामिन् कस्याधिकारोऽत्र सर्व्व एवौर्द्ध्वदेहिके।
क्रियाः कतिविधाः प्रोक्ता वदैतत् सर्व्वमेव मे ॥ १

श्रीकृष्ण उवाच।

पुत्रः पौत्रः प्रपौत्रो वा तद्भ्राता भ्रातृसन्ततिः।
सपिण्डसन्ततिर्वापि क्रियार्हाः खगजातयः ॥ २
तेषामभावे सर्व्वेषां समानोदकसन्ततिः।
कुलद्वयेऽपि चोच्छन्ने स्त्रीभिः कार्य्याः क्रियाः खग॥३
इच्छयोच्छिन्नबन्धोश्च कारयेदवनीपतिः।
पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥४
प्रतिसंवत्सरं पक्षिन्नेकोद्दिष्टविधानतः।
श्राद्धं तत्र प्रकर्त्तव्यं फलं तस्य शृणुष्व मे ॥ ५
ब्रह्मेन्द्र-रुद्र-नासत्य-सूर्य्याग्नि-वसु-मारुतान्।
विश्वेदेवान् पितृगणान् वयांसि मनुजान् पशून् ॥६
सरीसृपान् मातृगणान् यच्चान्यद्भूतसंज्ञितम्।
श्राद्धं श्रद्धान्वितः कुर्व्वन् प्रीणयत्यखिलं जगत् ॥ ७
ते तृप्तास्तर्पयन्त्येनं पुत्र-दार-धनैस्तथा।
अधिकारः क्रियाभेदः समासात् ते निरूपितः ॥ ८

गरुड़ उवाच।

उक्तेष्वेकोऽपि चेन्न स्यादधिकारी सुरोत्तम।
कर्त्तव्यं किं तदा विष्णो पुरुषेण विजानता ॥ ९

श्रीकृष्ण उवाच।

अधिकारी यदा नास्ति यदि नास्ति च निश्चयः।
जीविते सति जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥ १०
कृतोपवासः सुस्नातः कृष्णासङ्गः समाहितः।
कर्त्तारमथ भोक्तारं विष्णुं सर्व्वश्वरं यजेत् ॥ ११
सदक्षिणाश्च सतिलास्तिस्रश्च जलधेनवः।
निवेदयेत् पितृभ्यश्च स्वधेति (क) सुसमाहितः ॥ १२
अग्नये कव्यवाहनाय स्वधा नम इति स्मरन्।
सोमाय त्वा पितृमते स्वधा नम इति स्मरन् ॥ १३
दक्षिणेन तु दद्याच्च तृतीयां दक्षिणायुताम्।
यमायाङ्गिरसे चाथ स्वधा नम इति स्मरन् ॥ १४
तयोर्मध्ये तु निक्षिप्य विप्रान् संमन्त्र्य भोजयेत्।

(क) पाठोऽयमशुद्धः।

प्रथमामुत्तरे न्यस्य द्वितीयां दक्षिणे न्यसेत् ॥ १५
मध्ये तृतीयां विन्यस्य पश्चादावाहनादिकम्।
आवाहनादिना पूर्वं विश्वेदेवान् प्रपूज्य च ॥ १६
वसुभ्यस्त्वामहं विप्र रुद्रेभ्यस्त्वामहं ततः।
सूर्य्यभ्यस्त्वामहं विप्र भोजयामीति तान् वदेत् ॥१७
आवाहनादिकं शेषं कुर्य्याच्च पितृशेषवत्।
सौम्यां धेनुं ततो दद्याद्वसूद्देशं द्विजाय तु ॥ १८
आग्नेयी चाथ रौद्रायां याम्यां सूर्य्यद्विजाय तु।
विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेदयेत् ॥ १९
स्वस्त्युदकं तथाचय्यं जलं दत्त्वाथ तान् द्विजान्।
विसर्ज्जयेत् स्मरन् विष्णुं देवमष्टाचरं विभुम् ॥ २०
ततः कामं कुलेशानीं शिवं (क) नारायणं स्मरेत्।
चतुर्द्दिश्यां ततो गच्छेद्‌यथाप्राप्तां सरिद्वराम् ॥ २१
शस्त्राणि लोहखण्डानि जितं त इति संजपन्।
दक्षिणाभिमुखो वह्निं ज्वालयेत् तत्र च स्वयम् ॥२२
पञ्चाशता कुशैर्ब्राह्मीं कृत्वा प्रतिकृतिं दहेत्।
कृत्वा श्मशानिकं होमं पूर्णाहुत्यन्तमेव हि ॥ २३
निरग्निमथवा भूमिं यमं रुद्रञ्च संस्मरेत्।
कृत्वा प्राधानिके स्थाने पश्चादावाहयेच्च तम् ॥ २४
अर्पयेच्चापरं वह्नौ मुद्गमिश्रं चरुं ततः।
तिलतण्डुलमिश्रञ्च द्वितीयं सपवित्रकम् ॥ २५
ओं पृथिव्यै नमस्तुभ्यं इति चैकं निवेदयेत्।
ओं यमाय नमश्चेति द्वितीयं तदनन्तरम् ॥ २६
ओं नमश्चाथ रुद्राय श्मशानपतये नमः।
ततो दीप्ते समिद्धेऽग्नौ भूमौ प्रकृतिदारुणे ॥ २७
सप्तभ्यो यमसंज्ञेभ्यो दद्यात् सप्त जलाञ्जलीन्।
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ॥ २८
वैवस्वताय कालाय सर्व्वप्राणहराय च।
स्वधाकार-नमस्कार-प्रणवैः सह सप्तधा ॥ २९
अमुकामुकगोत्रैतत् तुभ्यमस्तु तिलोदकम्।
प्रदद्याद्दश पिण्डांस्तु अर्घ-पुष्प-समन्वितान् ॥ ३०
धूपो दीपो बलिर्गन्धः सर्व्वेषामस्तु चाक्षयः।
दशपिण्डांस्तु तान्दत्त्वा विष्णोः सौम्यंसुखंस्मरेत्३१
कुर्य्याच्च मासिकं मासि सपिण्डीकरणं ततः।
आशौचान्ते ततः कुर्य्यादात्मनो वा परस्य तु ॥ ३२

(क) पाठोऽयमसमीचीनः

कुर्य्यादस्थिरतां ज्ञात्वा मत्त्यारोग्यधनायुषम्।
एतत् ते सर्व्वमाख्यातं जीवच्छ्राद्धं मया खग ॥ ३३

इति श्रीगारुड़े महापुराणे उत्तरखण्डे सारोद्धारे श्रीकृष्ण-गरुड़संवादे प्रकीर्णकाख्यानं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः।

गरुड़ उवाच।

उक्तमाद्यां क्रियां यावन्नृपोऽपीति त्वयानघ।
कस्यचित् केनचिद्राज्ञा किमाद्या सा कृता पुरा॥ १

श्रीकृष्ण उवाच।

सुपर्ण शृणु वक्ष्यामि यथा राज्ञा क्रिया कृता।
बभ्रुवाहनो नाम्ना वै वङ्गानामीश्वरेण वै ॥ २
आसीत् कृतयुगे राजा नाम्ना वै बभ्रुवाहनः।
पृथिव्याश्चतुरन्ताया गोप्ता पक्षीन्द्र धर्म्मतः ॥ ३
चतुर्भागां भुवं कृत्स्नां स भुङ्क्ते वसुधाधिपः।
न पापकृत् कश्चिदासीत् तस्मिन् राज्यं प्रशासति॥४
नासीच्चौरभयं ताक्ष्य न क्षुद्रभयमेव हि।
नासीद्व्याधिभयञ्चापि तस्मिन् जनपदेश्वरे ॥ ५
स्वधर्म्मे रेमिरे चासीत् तेजसा भास्करोपमः।
अक्षुब्धलोऽर्णवसमः सहिष्णुत्वे धरासमः ॥ ६
स कदाचिन्महाबाहुः प्रभूतबलवाहनः।
वनं जगाम गहनं हयानाञ्च शतैर्वृतः ॥ ७
सिंहनादैश्च योधानां शङ्खदुन्दुभिनिस्वनैः।
आसीत् किलकिलाशब्दस्तस्मिन् गच्छति पार्थिवे ८
तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः।
निर्ययौ परया प्रीत्या वनं मृगजिघांसया ॥ ९
स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनम्।
विल्वार्कखदिराकीर्णं कपित्थध्वजसंयुतम् ॥ १०
विषमैः पर्व्वतैश्चैव सर्व्वतश्च समन्वितम्।
निर्ज्जलं निर्म्मनुष्यञ्च बहुयोजनमायतम् ॥ ११
मृग-सिंहैर्महाघोरैरन्यैश्चापि वनेचरैः।
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ॥ १२
लीलया लोड़यामास सूदयन् विविधान् मृगान्।
लीलया लोड़यामास सूदयन् विविधान् मृगान्।
मृगस्य कस्यचित् कुक्षिं ततो विव्याध भूमिपः ॥ १३
मृगस्य कस्यचित् कुक्षिं ततो विव्याध भूमिपः ॥ १३

राजा मृगप्रसङ्गेन तमनु प्राविशद्वनम् ।
एक एव हृतबलः क्षुत्पिपासासमन्वितः ॥ १४
स वनस्यान्तमासाद्य महदारण्यमासदत् ।
तृषया परयाविष्टोऽन्विष्यञ्जलमितस्ततः ॥ १५
स दूरात् पूरचक्राह्वं हंस-सारसनादितम् ।
सूचितं सर आगत्य साश्व एव व्यगाहत ॥ १६
पद्मानाञ्च परागेण उत्पलानां रजेन च ।
सुगन्धममलं शीतं पीत्वाम्भो निर्जगाम ह ॥ १७
मार्गश्रमपरिश्रान्तस्तडागतटमण्डपम् ।
न्यग्रोधं वीक्ष्य तस्याशु जटास्वश्वं बबन्ध ह ॥ १८
स तत्रास्तरमास्तीर्य्य खेटकानुपधाय च ।
सुष्वाप वायुना तत्र सेव्यमानस्तदा क्षणम् ॥ १९
क्षणं सुप्ते नृपे तत्र प्रेतो वै प्रेतवाहनः ।
कश्चिदत्राजगामाथ युक्तः प्रेतशतेन च ॥ २०
अस्थि-चर्म्म-शिराशेषं शरीरं परिबिभ्रमन् ।
भक्ष्यपेयं मार्गमाणो न बध्नाति धृतिं क्वचित् ॥ २१
तमपूर्व्वं नृपो दृष्ट्वाऽकरोदश्वं शरासने ।
दृष्ट्वा सोऽपि चिरं भूपं तस्थौ स्थाणुरिवाग्रतः ॥ २२
तमवस्थितमालोक्य राजा गतकुतूहलः ।
पप्रच्छ तञ्च कोऽसीति कुतो वा विकृतिं गतः ॥ २३
प्रेत उवाच ।
प्रेतभावो मया त्यक्तो गतिं प्राप्तोऽस्म्यहं पराम् ।
त्वत्संयोगान्महाबाहो नास्ति धन्यतरो मया ॥ २४
बभ्रुवाहन उवाच ।
किमेतद्विपिने घोरे सर्व्वत्रातिभयानकम् ।
दोधूयमानं वातेन वात्यारूपेण कौणप ॥ २५
पतङ्गा मशकाः क्षुद्राः कबन्धाश्च शिरांसि च ।
मत्स्याः कूर्म्माः कृकलासा वृश्चिका भ्रमरादयः ॥२६
अधोमुखोर्द्ध्वपादास्ते क्रन्दमानाः सुदारुणम् ।
प्रवान्ति वायवो रूक्षा ज्वलन्तो विद्युदग्नयः ॥ २७
इतस्ततो भ्रमन्तीव वायुना तृणसन्ततिः ।
दृश्यन्ते विविधा जीवा नागाश्च शलभव्रजाः ॥ २८
श्रूयन्ते बहुधा रावा न दृश्यन्ते क्वचित् क्वचित् ।
दृष्ट्वेदं विकृतं सर्व्वं वेपते हृदयं मम ॥ २९
प्रेत उवाच ।
येषां नैवाग्निसंस्कारो न श्राद्धं नोदकक्रियाः ।
षट्पिण्डा दश गात्राणि सपिण्डीकरणं न हि ॥ ३०
विश्वासघातिनो ये च सुरापाः स्वर्णहारिणः ।
दुर्म्मरणे मृता ये च ये चासूयापरा जनाः ॥ ३१
प्रायश्चित्तविहीना ये अगम्यागमने रताः ।
कर्म्मभिर्भ्राम्यमाणास्ते प्राणिनः स्वकृतैरिह ॥ ३२
दुर्लभाहारपानीया दृश्यन्ते पीड़िता भृशम् ।
एतेषां कृपया राजन् त्वं कुरुष्वौर्द्ध्वदेहिकम् ॥ ३३
येषां न माता न पिता न पुत्रो न च बान्धवाः ।
तेषां राजा स्वयं कुर्य्यात् कर्म्माणि तु यतो नृप ॥३४
आत्मनश्च शुभं कर्म्म कर्त्तव्यं पारलौकिकम् ।
विमुक्तः सर्व्वदुःखेभ्यो येनाच्छो दुर्गतिं तरेत् ॥ ३५
भ्रातरः कस्य के पुत्राः स्त्रियोऽपि स्वार्थकोविदाः ।
न कार्य्यस्तेषु विश्रम्भः स्वकृतं भुज्यते यतः ॥ ३६
गृहेभ्योऽर्था निवर्त्तन्ते श्मशाने चैव बान्धवाः ।
शरीरं काष्ठमादत्ते पापं पुण्यं सह व्रजेत् ॥ ३७
तस्मादाशु त्वया सम्यगात्मनः श्रेय इच्छता ।
अस्थिरेण शरीरेण कर्त्तव्यञ्चौर्द्ध्वदेहिकम् ॥ ३८
राजोवाच ।
कृशरूप-करालाद्यस्त्वं प्रेत इव लक्ष्यसे ।
कथयस्व मम प्रीत्या प्रेतराज यथातथम् ॥ ३९
तथा पृष्टः स वै राज्ञा उवाच सकलं स्वकम् ॥ ४०
प्रेत उवाच ।
कथयामि नृपश्रेष्ठ सर्व्वमेवादितस्तव ।
प्रेतत्वे कारणं श्रुत्वा दयां कर्त्तुमिहार्हसि ॥ ४१
वैदिशं नाम नगरं सर्व्वसम्पत्सुखावहम् ।
नानाजनपदाकीर्णं नानारत्नसमाकुलम् ॥ ४२
नानापुष्पवनाकीर्णं नानापुण्यजनावृतम् ।
तत्राहं न्यवसं भूप देवार्च्चनरतः सदा ॥ ४३
वैश्यजातिः सुदेवोऽहं नाम्ना विदितमस्तु ते ।
हव्येन तर्पिता देवाः कव्येन पितरो मया ॥ ४४
विविधैर्दानयोगैश्च विप्राः सन्तर्पिता मया ।
आहारश्च विहारश्च मया वै सुनिवेशितः ॥ ४५
दीनानाथविशिष्टेभ्यो मया दत्तमनेकधा ।
तत् सर्व्वं निष्फलं जातं मम दैवादुपागतम् ॥ ४६
न मेऽस्ति सन्ततिस्तात न सुहृन्न च बान्धवाः ।
न च मित्रं हितस्तादृक् यः कुर्य्यादौर्द्ध्वदेहिकम् ।

प्रेतत्वं सुस्थिरं तेन मम जातं नृपोत्तम ॥ ४७
एकादशं त्रिपक्षञ्च षाण्मासिकमथाब्दिकम्।
प्रतिमास्यानि चान्यानि ह्येवं श्राद्धानि षोड़श ॥ ४८
यस्यैतानि न दीयन्ते प्रेतश्राद्धानि भूपते।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ ४९
एवं ज्ञात्वा महाराज प्रेतत्वादुद्धरस्व माम्।
वर्णानाञ्चैव सर्व्वेषां राजा बन्धुरिहोच्यते।
तन्मां तारय राजेन्द्र मणिरत्नं ददामि ते ॥ ५०
यथा मम शुभावाप्तिर्भवेन्नृपवरोत्तम।
तथा कार्य्यं महीपाल दयांकृत्वा ममोपरि ॥ ५१
सपिण्डैर्वा सगोत्रैर्वा निष्ठुरैर्न कृतो हि मे।
वृषोत्सर्गस्ततो दुष्टं प्रेतत्वं प्राप्तवानहम् ॥ ५२
क्षुत्तृषाविष्टदेहश्च भक्ष्यं पानं न चाप्नुयाम् ॥ ५३
अतो विकृतिरेषा वै कृमत्वादिरमांसकी।
क्षुत्तृड्जन्यं महादुःखमनुभवामि पुनः पुनः ॥ ५४
अकल्याणं हि प्रेतत्वं वृषोत्सर्गं विना कृतम्।
तस्माद्राजन् दयासिन्धो विनयामि तवाग्रतः ॥ ५५

राजोवाच।

वर्त्तते मत्कुले प्रेत इति ज्ञेयं कथं नरैः।
तन्ममाचक्ष्व हि प्रेत प्रेतत्वान्मुच्यते कथम् ॥ ५६

प्रेत उवाच।

लिङ्गेन पीड़या प्रेतोऽनुमातव्यो नरैः सदा।
वक्ष्यामि पीड़ास्ता राजन् या वै प्रेतकृता भुवि॥५७
ऋतुः स्यादफलः स्त्रीणां यदा वंशो न वर्द्धते।
म्रियते चाल्पवयसः सा पीड़ा प्रेतसम्भवा ॥ ५८
अकस्माद्वृत्तिहरणमप्रतिष्ठा जनेषु वै।
अकस्माद्गृहदाहः स्यात् सा पीड़ा प्रेतसम्भवा ॥५९
स्वगेहे कलहो नित्यं स्याच्च मिथ्याभिशंसनम्।
राजयक्ष्मातिसम्भूतिः सा पीड़ा प्रेतसम्भवा ॥ ६०
अपि स्वयं धनं मुक्तं प्रयत्नादनघे पथि।
नव लभ्येत नश्येत सा पीड़ा प्रेतसम्भवा ॥ ६१
सुवृष्टौ कृषिनाशः स्याद्वाणिज्यादतिभ्रंशं नः।
कलत्रं प्रतिकूलं स्यात् सा पीड़ा प्रेतसम्भवा ॥ ६२
एवन्तु पीड़या राजन् प्रेतज्ञानं भवेन्नृणाम्।
वृषोत्सर्गो यदि भवेत् प्रेतत्वान्मुच्यते तदा ॥ ६३
तस्मान्नृप त्वमप्येवं वृषोत्सर्गं कुरु प्रभो।
मामुद्दिश्य नृपेऽप्यत्राधिकारोऽस्त्यनुकम्पया ॥ ६४
राजपुत्रो हतः कश्चिन्मयैवाप्तस्ततो मया।
कुरुष्व त्वं गृहीत्वा मे तद्धनेन वृषोत्सवम् ॥ ६५
कार्त्तिक्यां पौर्णमास्यां वाऽप्ययुक्ष्येऽथवा नृप।
रेवतीयुक्तदिवसे कृपीष्ठा मे वृषोत्सवम् ॥ ६६
पुण्यान् विप्रान् समाहूय वह्निं स्थाप्य विधानतः।
मन्त्रैर्होमस्तया कार्य्यः षड्भिर्नृप विधानतः ॥ ६७
बहून् विप्रान् भोजयेथास्तद्रत्नाप्तधनेन वै।
एवं कृते महीपाल मम मुक्तिर्भविष्यति ॥ ६८

श्रीकृष्ण उवाच।

तथेति प्रतिजग्राह मणिं राजा ततः खग।
क्रियाधिकारस्तस्यैव यो धनग्राहको भवेत् ॥ ६९
कुर्व्वतोस्तु तयोर्वार्त्तामेवं प्रेत-महीक्षितोः।
झनत्कारैस्तु घण्टानां भेरीणां भाङ्कृतिस्तथा।
सूचिता राजसेना सा चतुरङ्गा समापतत् ॥ ७०
तस्यामागतमात्रायां प्रेतश्चादृश्यतां गतः।
तस्माद्वनाद्विनिःसृत्य राजापि पुरमागमत् ॥ ७१
स कार्त्तिक्यां पूर्णिमायां प्रेतमुद्दिश्य संव्यधात्।
वृषोत्सर्गं विधानेन तन्मण्याप्तधनेन च ॥ ७२

प्रेतोऽप्ययं सपदि लब्धसुवर्णदेहः
कर्म्मान्त आगत इति प्रणनाम भूपम्।
देव त्वदीयमहिमायमिति स्तुवन् स
यातोदिवं गरुड़ भूपतिना कृतघ्नः ॥ ७३

एतत् ते सर्व्वमाख्यातं यथा भूपतिनापि सः।
उद्धृतः प्रेतभावाद्वै किमन्यच्छ्रोतुमिच्छसि ॥ ७४

इति श्रीगारुड़े महापुराणे उत्तरखण्डे सारोद्धारे श्रीकृष्ण-गरुड़संवादे प्रेताख्यानं नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः।

गरुड़ उवाच।

सपिण्डीकरणे जाते गताब्दे च स्वकर्म्मभिः।
देवत्वं वा मनुष्यत्वं पक्षित्वमाप्नुयुर्नराः ॥ १
तेषां विभिन्नाहाराणां श्राद्धं वै त्वमिदं कथम्।
यदप्यन्यैर्द्विजैर्भुक्तं हूयते यदि वानले ॥ २

शुभाशुभात्मकैः प्रेतैस्तद्दत्तं भुज्यते कथम् ।
श्राद्धस्यावश्यकत्वन्तु अमावस्यादिषु श्रुतम् ॥ ३

श्रीभगवानुवाच ।

शृणु पक्षीन्द्र प्रेतानां यथा श्राद्धन्तु तृप्तिदम् ।
देवो यदपि जातोऽयं मनुष्यः कर्म्मयोगतः ॥ ४
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुयाति च ।
गान्धर्व्वे भोगरूपेण पशुत्वे च तृणं भवेत् ॥ ५
श्राद्धं हि वायुरूपेण नागत्वेऽप्यनुगच्छति ।
फलं भवति पक्षित्वे राक्षसेषु तथामिषम् ॥ ६
दानवत्वे तथा मांसं प्रेतत्वे रुधिरं तथा ।
मनुष्यत्वेऽन्नपानादि-बालाभोगरसो भवेत् ॥ ७

गरुड़ उवाच ।

कथं कव्यानि दत्तानि हव्यानि च जनैरिह ।
गच्छन्ति पितृलोकं वा प्रापकः कोऽत्र गद्यते ॥ ८
मृतानामपि जन्तूनां श्राद्धमाप्यायनं यतः ।
निर्व्वाणस्य प्रदीपस्य तैलं संवर्द्धयेच्छिखाम् ॥ ९
मृताश्च पुरुषाः स्वामिन् स्वकर्म्मजनितां गतिम् ।
गाहन्ति के कथं स्वस्य सुतस्य श्रेय आप्नुयुः ॥ १०

श्रीभगवानुवाच ।

श्रुतेः प्रत्यक्षतस्ताक्ष्र्य प्रामाण्यं बलवत्तरम् ।
श्रुत्या तु बोधितार्थस्य पीयूषत्वादिरूपता ॥ ११
नामगोत्रं पितृणां वै प्रापकं हव्य-कव्ययोः ।
श्राद्धस्य मन्त्रास्तद्वत् तु उपालभ्याश्च भक्तितः ॥ १२
अचेतनानि चैतानि प्रापयन्ति कथन्त्विति ।
सुपर्ण नावगन्तव्यं प्रापकं वच्मि तेऽपरम् ॥ १३
अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः ।
काले न्यायागतं पात्रे विधिना प्रतिपादितम् ॥ १४
अन्नं नयन्ति तत्रैते जन्तुर्यत्रावतिष्ठते ।
नाम गोत्रञ्च मन्त्रश्च दत्तमन्नं नयन्ति ते ॥ १५
अपि योनिशतं प्राप्तांस्तांस्तृप्तिरुपतिष्ठति ।
तेषां लोकान्तरस्थानां विविधैर्नामगोत्रकैः ॥ १६
अपसव्यं क्षितौ दर्भे दत्ताः पिण्डास्त्रयस्तु वै ।
यान्ति तान् तर्पयन्त्येवं प्रेतस्थानस्थितान् पितॄन् ॥ १७
अप्राप्तयातनास्थानं श्रेष्ठा ये भुवि पञ्चधा ।
नानारूपास्तु जाता ये तिर्य्यग्योन्यादिजातिषु ॥ १८
यदाहारा भवन्त्येते पितरो यत्र योनिषु ।
तासु तासु तदाहारः श्राद्धान्नमुपतिष्ठते ॥ १९
यथा गोषु प्रनष्टासु वत्सो विन्दति मातरम् ।
तथान्नं नयते विप्र जन्तुर्यत्रावतिष्ठते ॥ २०
पितरः श्राद्धभोक्तारो विश्वेदेवैः सदा सह ।
एते श्राद्धं सदा भुक्त्वा पितॄन् सन्तर्पयन्त्यतः ॥ २१
वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेषु तर्पिताः ॥ २२
आत्मानं गुर्व्विणी गर्भमपि प्रीणाति वै यथा ।
दोहदेन तथा देवा श्राद्धैः स्वांश्च पितॄन् नृणाम् ॥ २३
हृष्यन्ति पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवम् ॥ २४
ब्राह्मणैः सह चाश्नन्ति पितरो ह्यन्तरीक्षगाः ।
वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥ २५
निमन्त्रितास्तु ये विप्राः श्राद्धपूर्व्वदिने खग ।
प्रविश्य पितरस्तेषु भुक्त्वा यान्ति स्वमालयम् ॥ २६
श्राद्धकर्त्ता तु यद्येकः श्राद्धे विप्रो निमन्त्रितः ।
उदरस्थः पिता तस्य वामपार्श्वे पितामहः ॥ २७
प्रपितामहो दक्षिणतः पृष्ठतः पिण्डभक्षकः ।
श्राद्धकाले यमः प्रेतान् पितॄंश्चापि ः मालयात् ॥ २८
विसर्ज्जयति मानुष्ये निरयदेऽपि काश्यप ।
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वयंकृतम् ॥ २९
काङ्क्षन्ते पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात् तान् तत्र विधिना तर्पयेत् पायसेन तु ॥ ३०

गरुड़ उवाच ।

स्वामिन् केनापि ते दृष्टा आगताः पितरो द्विजे ।
लोकादमुष्मादागत्य भुञ्जते भुवि मानद ॥ ३१

श्रीभगवानुवाच ।

गरुत्मन् शृणु वक्ष्यामि यथा दृष्टास्तु सीतया ।
पितरो विप्र देहे वै श्वशुराद्यास्त्रयः क्वचित् ॥ ३२
गृहीत्वा पितुराज्ञां वै रामो वनमुपागमत् ।
ततः पुष्करयात्रार्थं रामोऽयात् सीतया सह ।
तीर्थेञ्चापि समागत्य श्राद्धं प्रारब्धवांस्तु सः ॥ ३३
फलं पक्वन्तु जानक्या सिद्धं रामे निवेदितम् ।
स्नात्वा प्रियोक्तवाक्यात् तु सुस्नातत्वमपालयत् ॥ ३४
नभोमध्यगते सूर्य्ये काले कुतप आगते ।
आयाता ऋषयः सर्व्वे ये रामेण निमन्त्रिताः ॥ ३५

तान् मुनीनागतान् दृष्ट्वा वैदेही जनकात्मजा।
रामाज्ञयान्नमादाय परिवेष्टुमुपागता॥ ३६
अपासर्पत् ततो दूरे विप्रमध्ये तु संस्थिता।
गुल्मैराच्छाद्य चात्मानं निगूढ़ं सा स्थिता तदा॥३७
एकान्ते तु तदा सीतां ज्ञात्वा राघवनन्दनः।
विमृश्य सुचिरं कालमियं किमिति सत्वरम्॥ ३८
अपसर्पगता साध्वी त्रपायाः कारणं न हि।
किं वा न भोजयेद्विप्रान् सीतामन्वेषयाम्यहम्॥ ३९
विमृशन्नेवमेवं स स्वयं विप्रानभोजयत्।
गतेषु द्विजमुख्येषु प्रियां रामोऽब्रवीदिदम्॥ ४०
कथं लतासु लीना त्वं मुनीन् दृष्ट्वा समागतान्।
तत् सर्व्वं मम तन्वङ्गि कारणं वद मा चिरम्॥ ४१
एवमुक्ता तदा भर्त्रा सीता साधोमुखी स्थिता।
मुञ्चन्ती चाश्रुसङ्घातं राघवं वाक्यमब्रवीत्॥ ४२

सीतोवाच।

शृणु त्वं नाथ यद्दृष्टमाश्चर्य्यमिह यादृशम्।
पिता तव मया दृष्टो ब्राह्मणाग्रेषु राघवः॥ ४३
सर्व्वाभरणसंयुक्तौ द्वौ चान्यौ च तथाविधौ।
दृष्ट्वा त्वपितरञ्चाहमपक्रान्ता तवान्तिकात्॥ ४४
वल्कलाजिनसंवीता कथं राज्ञः पुरः प्रभो।
भवामि रिपुवीरघ्न सत्यमेतदुदाहृतम्।
स्वहस्तेन कथं देयं राज्ञे वा भोजनं मया॥ ४५
दासानामपि ये दासा नोपभुञ्जन्ति कर्हिचित्।
तृणपात्रे (क) कथं तस्मै अन्नं दातुं वदस्व मे॥ ४६
याहं राज्ञा पुरा दृष्टा सर्व्वाभरणभूषिता।
सा स्वेदमलदिग्धाङ्गी कथं यास्यामि भूपतिम्॥ ४७
अपक्रष्टास्मि तेनाहं त्रपया रघुनन्दन॥ ४८

श्रीभगवानुवाच।

इति श्रुत्वा प्रियावाक्यं रामो विस्मितमानसः।
आश्चर्य्यमिति तज्ज्ञात्वा तदा स्वस्थानमागमत्॥४९
सीतया पितरौ दृष्टा यथा तत् ते निवेदितम्।
अपरः श्राद्धमहिमा किञ्चिच्छृणु समासतः॥ ५०
अमावस्यादिने प्राप्ते गृहद्वारे समाश्रिताः।
वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम्॥५१
यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः।

ततश्चास्तं गते सूर्य्ये निराशा दुःखसंयुताः॥ ५२
निःश्वसन्तश्चिरं यान्ति गर्हयन्तस्तु वंशजम्।
तस्माच्छ्राद्धं प्रयत्नेन अमायां कर्त्तुमर्हति॥ ५३
यदि श्राद्धं प्रकुर्व्वन्ति पुत्राद्यास्तस्य बान्धवाः।
उद्धृता ये गयाश्राद्धे ब्रह्मलोकेषु तैः सह॥ ५४
भुञ्जन्ते क्षुत्पिपासा वा न तेषां जायते क्वचित्।
तस्माच्छ्राद्धं प्रयत्नेन श्राद्धं कुर्य्याद्विचक्षणः॥ ५५
तस्माच्छ्राद्धं चरेद्भक्त्या शाकैरपि यथाविधि।
कुर्व्वीत समये श्राद्धं कुले कश्चिन्न सीदति॥ ५६
आयुः पुत्रान् यशः स्वर्गं कीर्त्तिं पुष्टिं बलं श्रियम्।
पशून् सौख्यं धनं धान्यं प्राप्नुयात् पितृपूजनात्॥५७
देवकार्य्यादपि सदा पितृकार्य्यं विशिष्यते।
देवताभ्यः पितॄणां हि पूर्व्वमप्यायनं शुभम्॥ ५८
ये यजन्ति पितॄन् देवान् ब्राह्मणांश्च हुताशनम्।
सर्व्वभूतान्तरात्मानं मामेव हि यजन्ति ते॥ ५९
स्मार्त्तेन विधिना श्राद्धं कृत्वा स्वविभवोचितम्।
ब्रह्मस्थावरपर्य्यन्तं जगत् प्रीणाति मानवः॥ ६०
अन्नप्रकिरणं यत् तु मनुष्यैः क्रियते भुवि।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः॥ ६१
यच्चाम्बु स्नानवस्त्रेभ्यो भूमौ पतति खेचर।
तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रतीयते॥ ६२
यानि गन्धाम्बूनि चैव पतन्ति धरणीतले।
तेन चाप्यायनं तेषां ये देवत्वमुपागताः॥ ६३
ये चापि स्वकुलाद्बाह्या क्रियायोग्या ह्यसंस्कृताः।
विपन्नास्ते तु विकिरसम्मार्ज्जनजलाशिनः॥ ६४
भुक्त्वा चाचमनं यच्च जलं यच्चाङ्घ्रि सेचितम्।
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै।
पिशाचत्वमनुप्राप्ताः कृमिकीटत्वमेव ये॥ ६५
उद्धृतेष्वन्नपिण्डेषु ये चान्नकाङ्क्षिणो भुवि।
तैरेवाप्यायनं तेषां ये मनुष्यत्वमागताः॥ ६६
एवं वै क्रियमाणानां तेषाञ्चैव द्विजन्मनाम्।
कश्चिज्जलान्नविक्षेपः शुचिरुच्छिष्ट एव वा॥ ६७
तेनान्नेन कुले तेषां ये वै जात्यन्तरं गताः।
भवत्याप्यायनं तेषां सम्यक् श्राद्धे कृते सति॥ ६८
अन्यायोपार्ज्जितैर्द्रव्यैर्यच्छ्राद्धं क्रियते नरैः।
तृप्यन्ति तेन चाण्डालाः पुक्कसाद्युपयोनिषु॥ ६९

(क) पाठोऽयं बहुष्वादर्शेष्वनुपलब्धत्वादप्रशस्तः।

एवं सम्प्राप्य ते पक्षिन् यद्दत्तमिह बान्धवैः।
श्राद्धं कुर्व्वद्भिरन्नाम्बुशाकैरपि हि जायते ॥ ७०
एतत् ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ७१
अथो देहान्तरप्राप्तिर्विलम्बेनावनीतले।
पृष्टवानसि तत् तेऽहं प्रवक्ष्यामि समासतः ॥ ७२
अथो विलम्बितस्त्वेवोभयाद्वापि कलेवरम्।
यतो हि मर्त्यः प्राप्नोति तद्विशेषञ्च मे शृणु ॥ ७३
अधूकज्योतिरिवाङ्गुष्ठमात्रः पुमांस्ततः।
देहमेष सद्य एव वायवीयं प्रपद्यते ॥ ७४
यथा तृणजलौका हि पश्चात् पादं तदोद्धरेत्।
स्थितिरग्रस्य पादस्य यदा जाता दृढ़ा भवेत् ॥ ७५
एवं देही पूर्व्वदेहं तद्वदुत्सृज्यते तथा।
भोगार्थमग्रे स्याद्देहो वायवीय उपस्थितः ॥ ७६
विषयग्राहकं यद्दिन्द्रियमाणस्य चेन्द्रियम्।
निर्व्यापारं तच्च देहे वायुनैव स गच्छति ॥ ७७
शरीरं यदवाप्नोति तच्चाप्युत्क्रामति स्वयम्।
सहैवेला स्वं विनिर्याति जीवो गर्भद्ववाश्रयात् (क) ७८
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
विमूढ़ा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ ७९
आतिवाहिक इत्येवं वायवीयं वदन्ति हि।
एवन्तु यातुधानानां तमेव च वदन्ति हि ॥ ८०
सुपर्ण ईदृशो देही नृणां भवति पिण्डजः।
पुत्रादिभिः कृतास्चेत् स्युः पिण्डा दश दशाहिकाः॥८१
पिण्डजेन तु देहेन वायुजस्यैकतां व्रजेत्।
पिण्डजो यदि नैव स्याद्वायुजोऽर्हति यातनाम् ॥८२
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिः पक्षीन्द्रेत्यवधारय ॥ ८३

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ ८४

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ८५
वायवीयां तनुं याति सद्य इत्युक्तमेव ते।
प्राप्तिर्विलम्बतो यस्य तं देहं खलु मे शृणु ॥ ८६
किञ्चिद्विलम्बतो देहं पिण्डजं स समाप्नुयात्।
अथो गतो याम्यलोकं स्वीयकर्म्मानुसारतः ॥ ८७
चित्रगुप्तस्य वाक्येन निरयाणि भुनक्ति सः।
यातनान्तमवाप्याथ पशुपक्ष्यादिकीं तनुम् ॥ ८८
यां गृह्णाति नरः सा स्यान्मोहेन ममतास्पदम्।
शुभाशुभं कर्म्मफलं भुक्त्वा मुच्येत मानवः ॥ ८९

गरुड़ उवाच।

तीर्त्वा दुःखभवाम्भोधिं भवन्तं कथमाप्नुयात्।
वज्रपातकयुक्तोऽपि तद्वदस्व दयानिधे ॥ ९०
भूयो दुःखस्य संसर्गो नरस्य न भवेद्यथा।
ब्रूहि शुश्रूषमाणस्य पृच्छतो मे रमापते ॥ ९१

श्रीकृष्ण उवाच।

स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ९२
कर्म्मनिक्षिप्तकालुष्यो वासुदेवानुचिन्तया।
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥ ९३
शब्दादीन् विषयांस्त्यक्त्वा राग-द्वेषौ व्युदस्य च।
विरक्तसेवी लब्धाशी यतवाक्कायमानसः ॥ ९४
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः।
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥ ९५
विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते।
अतः परं नृणां कृत्यं नास्ति कश्यपनन्दन ॥ ९६

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे एका-
दशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः:

गरुड़ उवाच।

तव प्रसादाद्वैकुण्ठ त्रैलोक्यं सचराचरम्।
मया विलोकितं सर्व्वं जगत् स्थावरजङ्गमम् ॥ १
भूर्लोकात् सत्यपर्य्यन्तं पुरं याम्यं विना विभो।
भूर्लोकः सर्व्वजन्तूनां प्रचुरः सर्व्वजन्तुषु ॥ २
मानुष्यं सर्व्वजन्तूनां भक्तिमुक्त्यालयं शुभम्।
सन्तः सुकृतिनो लोके प्रभवन्ति जना यदि ॥ ३

(क) पुरुषः कर्म्मणो वशादिति च पाठः। पाठद्वयमेव चक्रादर्शास्मतसमीचीनपुस्तकद्वयस्थ।

गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गस्य च हेतुभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥ ४
मानुषत्वं लभेत् कस्मान्मृत्युमाप्नोति तत् कथम्।
म्रियते कः सुरश्रेष्ठ देहमाश्रित्य कुत्रचित् ॥ ५
इन्द्रियाणि कुतो यान्ति ह्यस्पृश्यः स कथं भवेत्।
क्व कर्म्माणि कृतानीह कथं भुङ्क्ते प्रसर्पति ॥ ६
प्रसादं कुरु मे मोहं छेत्तुमर्हस्यशेषतः।
काश्यपोऽहं सुरश्रेष्ठ विनतागर्भसम्भवः ॥ ७
यमलोकं कथं यान्ति विष्णुलोकञ्च मानवाः ॥ ८

श्रीकृष्ण उवाच।

परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च।
अरण्ये निर्ज्जने देशे जायते ब्रह्मराक्षसः ॥ ९
हीनजातौ प्रजायेत रत्नानामपहारकः।
यो यं काममभिपतेत् स तल्लिङ्गोऽभिजायते ॥ १०
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ११
वाक् चक्षुर्नासिका कर्णौ गुदं सूत्रस्य सञ्चरः।
अण्डजादिकजन्तूनां छिद्राण्येतानि सर्व्वशः ॥ १२
नाभेर्मूर्द्धनि पर्य्यन्तमूर्द्ध्वच्छिद्राणि चाष्ट वै।
सन्तः सुकृतिनो मर्त्त्या ऊर्द्ध्वच्छिद्रेण यान्ति व ॥१३
मृताहे वार्षिकं यावद्यथोक्तविधिना खग।
कुर्य्यात् सर्व्वाणि कर्म्माणि निर्द्धनोऽपि हि मानवः॥१४
देहे यत्र वसेज्जन्तुस्तत्र भुङ्क्ते शुभाशुभम्।
मनोवाक्कायजान् दोषांस्तथा भुङ्क्ते खगेश्वर ॥१५
मृतः स सुखमाप्नोति मायापाशैर्न बध्यते।
पाशबद्धो नरो यस्तु विकर्म्मनिरतो भवेत् ॥ १६

इति श्रीगारुडे महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़-संवादे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः।

श्रीकृष्ण उवाच।

एवं ते कथितं तार्क्ष्य जीवितस्य विनिर्णयः।
मानुषाणां हितार्थाय प्रेतत्व-विनिवृत्तये ॥ १
चतुरशीतिलक्षाणि चतुर्भेदस्य जन्तवः।
अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जरायुजाः ॥ २
एकविंशतिलक्षाणि अण्डजाः परिकीर्त्तिताः।
स्वेदजाश्च तथा प्रोक्ता उद्भिज्जाश्च क्रमेण तु ॥ ३
जरायुजास्तथा प्रोक्ता मनुष्याद्यास्तथा परे।
सर्व्वेषामेव जन्तूनां मानुषत्वं हि दुर्लभम् ॥ ४
पञ्चेन्द्रियनिधानत्वं महापुण्यैरवाप्यते।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रस्तत्परजातयः ॥ ५
रजकश्चर्म्मकारश्च नटो वरुड़ एव च।
कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः ॥ ६
म्लेच्छतुम्बविभेदेन जातिभेदास्त्वनेकशः।
जन्तूनामेव सर्व्वेषां जातिभेदाः सहस्रशः।
एकपादादिरूपेण देशभेदास्त्वनेकशः ॥ ७
कृष्णसारो मृगो यत्र धर्म्मदेशः स उच्यते।
ब्रह्माद्या देवताः सर्व्वास्तत्र तिष्ठन्ति सर्व्वशः॥८
भूतानां प्राणिनः श्रेष्ठाः प्राणिनामतिजीविनः।
मतिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥९
मानुष्यं यः समासाद्य स्वर्गमोक्षैकसाधकम्।
तयोर्न साधयेदेकं तेनात्मा वञ्चितो ध्रुवम् ॥१०
इच्छति शती सहस्रं सहस्री लक्षमीहते कर्त्तुम्।
लक्षाधिपती राज्यं राजापि सकलां धरां लब्धुम्।
चक्रधरोऽपि सुरत्वं सुरभावे सकलसुरपतिर्भवितुम्।
सुरपतिरूर्द्ध्वगतित्वं तथापि न निवर्त्तते तृष्णा ॥ १२
पितृ-मातृमयो बाल्ये यौवने दयितामयः।
पुत्रपौत्रमयो ह्यन्ते मूढो नात्ममयः क्वचित् ॥ १३
लोहदारुमयैः पाशैः पुमान् बद्धो विमुच्यते।
पुत्रदारमयैः पाशैर्नैव बद्धो विमुच्यते ॥ १४
एकः करोति पापानि फलं भुङ्क्ते महाजनः।
भोक्तारो विप्रयुज्यन्ते कर्त्ता दोषेण लिप्यते ॥ १५
मृत्युं न जयते कोऽपि बालो वृद्धो युवापि वा।
सुखदुःखाधिको वापि पुनरायाति याति च।
सर्व्वेषां पश्यतामेव मृतः सर्व्वं परित्यजेत् ॥ १६
एकः प्रजायते जन्तुरेक एव प्रलीयते।
एकोऽपि भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ १७
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ।
बान्धवा विमुखा यान्ति धर्म्मस्तमनुगच्छति ॥ १८

र्या निवर्त्तन्ते श्मशानान्मित्रबान्धवाः।
ं वह्निना दग्धं पुण्यं पापं सह स्थितम्॥ १९
त्तमिति सूर्य्ये न दत्तं धनमर्थिनाम्।
े तस्य तद्वित्तं प्रातः कस्य भविष्यति॥ २०
ौति धनं तस्य को मे भर्त्ता भविष्यति।
ं द्विजमुख्यानां परोपकृतये तथा॥ २१
ु परिज्ञाय धर्म्मार्थे दीयते धनम्॥ २२
जायते धर्म्मः श्रद्धापूतेन चेतसा।
विरहितो धर्म्मो नेहामुत्र च तत्फलम्॥ २३
ाच्च जायते ह्यर्थो धर्म्मात् कामोऽपि जायते।
एवापवर्गाय तस्माद्धर्म्मं समाचरेत्॥ २४
ा साध्यते धर्म्मो बहुभिर्नार्थराशिभिः॥
द्धया हि मुनयः श्रद्धावन्तो दिवं गताः॥ २५
द्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
दित्युच्यते पक्षिन् प्रेत्य चेह न तत्फलम्॥ २६

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे त्रयो-
दशोऽध्यायः॥ १३॥

---

## चतुर्द्दशोऽध्यायः।

गरुड़ उवाच।

ृष्ण केन देवेश प्रेतत्वं नैव जायते।
व्यां सर्व्वजन्तूनां तद्ब्रूहि परमेश्वर॥ १

श्रीकृष्ण उवाच।

वक्ष्यामि संक्षेपात् क्षयाहादौर्ध्वदैहिकम्।
हस्तेनैव कर्त्तव्यं मोक्षकामैस्तु मानवैः॥ २
ेणामपि विशेषेण पञ्चवर्षाधिके शिशौ।
ोत्सर्गादिकं कर्म्म प्रेतत्वविनिवृत्तये।
ोत्सर्गादृते नान्यत् किञ्चिदस्ति महीतले॥ ३
ीवन् वापि मृतो वापि वृषोत्सर्गं करोति यः।
ेतत्वं न भवेत् तस्य विना दान-मख-व्रतैः॥ ४

गरुड़ उवाच।

स्मिन् काले वृषोत्सर्गं जीवन् वापि मृतोऽपि वा।
र्य्यात् सुरवरश्रेष्ठ ब्रूहि मे मधुसूदन॥ ५
किं फलन्तु भवेदन्ते कृतैः श्राद्धैस्तु षोडशैः॥ ६

श्रीकृष्ण उवाच।

न कृत्वा तु वृषोत्सर्गं कुरुते पिण्डपातनम्।
नोपतिष्ठति तत्रेह दातुः प्रेतस्य निष्फलम्॥ ७
एकादशाहे प्रेतस्य यस्य नोत्सृजते वृषः।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि॥ ८

गरुड़ उवाच।

सर्पादि प्राप्तमृत्यूनामग्निदाहादि न क्रिया।
जलेन शृङ्गिणा वापि शस्त्राद्यैर्म्रियते यदि॥ ९
अपमृत्युमृतानाञ्च कथं शुद्धिर्भवेत् प्रभो।
एतन्मे संशयं देव छेत्तुमर्हस्यशेषतः॥ १०

श्रीकृष्ण उवाच।

षण्मासैर्ब्राह्मणः शुध्येद्युद्धे सार्द्धं तु बाहुजः।
सार्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति॥ ११
दत्त्वा दानान्यशेषाणि सुतीर्थे म्रियते यदि।
ब्रह्मचारी शुचिर्भूत्वा न स यातीह दुर्गतिम्॥ १२
वृषोत्सर्गादिकं कृत्वा यतिधर्म्मं समाचरेत्।
यतित्वे मृत्युमाप्नोति स गच्छेद्ब्रह्म शाश्वतम्॥ १३
विकर्म्म कुरुते यस्तु शिष्टाचारविवर्ज्जितः।
वृषोत्सर्गादिकं कृत्वा न गच्छेद्यमशासनम्॥ १४
पुत्त्रो वा सोदरो वापि पौत्त्रो बन्धुजनस्तथा।
गोत्रिणश्चार्थभागी च मृते कुर्य्याद्वृषोत्सवम्॥ १५
पुत्त्राभावे तु पत्नी स्याद्दौहित्रो दुहितापि वा।
पुत्त्रेषु विद्यमानेषु नान्येन कारयेद्वृषम्॥ १६

गरुड़ उवाच।

पुत्त्रा यस्य न विद्यन्ते नरा नार्य्यः सुरेश्वर।
एतन्मे संशयं देव छेत्तुमर्हस्यशेषतः॥ १७

श्रीकृष्ण उवाच।

अपुत्त्रस्य गतिर्नास्ति स्वर्गे खग कथञ्चन।
तस्मात् (क) केनाप्युपायेन पुत्त्रस्य जननं चरेत्॥ १८
यानि कानि च दानानि स्वयं दत्तानि मानवैः।
तानि तानि च सर्व्वाणि भूप तिष्ठन्ति चाग्रतः॥ १९
व्यञ्जनानि विचित्राणि भक्ष्यभोज्यानि यानि च।
स्वहस्तेन प्रदत्तानि देहान्ते चाक्षयं फलम्॥ २०
गो-भू-हिरण्य-वासांसि भोजनानि पदानि च।
यत्र यत्र वा स जन्तुस्तत्र तत्रोपतिष्ठति॥ २१

---

(क) खगेत्यादिः पाठोऽशुद्धः।

यावत् स्वस्थं शरीरं हि तावद्धर्म्मं समाचरेत् ।
अस्वस्थो नष्टविज्ञाने(क) न किञ्चित् कर्त्तुमर्हति ॥ २२
जीवतोऽपि मृतस्येह न भूतश्चौर्द्ध्वदैहिकम् ।
वायुभूतः क्षुधाविष्टो भ्रमते च दिवानिशम् ॥ २३
कृमि-कीट-पतङ्गो वा जायते म्रियते पुनः ।
असद्गर्भे भवेत् सोऽपि जातं सद्यो विनश्यति ॥ २४

यावत् स्वस्थमिदं शरीरमरुजं
यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता
यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा
कार्य्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं
प्रत्युद्यमः कीदृशः ॥ २५

इति श्रीगारुडे महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़-संवादे चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

गरुड़ उवाच ।

आर्त्तेन म्रियमाणेन यत् फलं देव तद्वद ।
स्वस्थावस्थेन दत्तेन विधिहीनेन वा विभो ॥ १

श्रीकृष्ण उवाच ।

एका गौः स्वस्थचित्तस्य ह्यातुरस्य च गोशतम् ।
सहस्रं म्रियमाणस्य तस्य दत्तविवर्ज्जितम् ॥ २
मृतस्यैव पुनर्लक्षं विधिपूतञ्च तत्समम् ।
तीर्थपात्रसमायोगादेका गौर्लक्षपुण्यदा ॥ ३
पात्रे दत्ते खगश्रेष्ठ अहन्यहनि वर्द्धते ।
दत्ते दानमपापाय ज्ञानिना च प्रतिग्रहः ॥ ४
विष-शीतापहौ मन्त्र-वह्नी किं दोषभाजनम् ।
अपात्रे जातु गौर्दत्ता दातारं नरकं नयेत् ॥ ५
नूनं सम्पूर्णतां याति वृषोत्सर्गे कृते सति ।
ततः स्वयं प्रकुर्व्वीत चञ्चले जीविते सति ॥ ६
एवं ज्ञात्वा खगश्रेष्ठ वृषयज्ञं समाचरेत् ।
अकृत्वा म्रियते यस्तु अपुत्रो नैव मुक्तिभाक् ॥
अपुत्रोऽपि हि यः कुर्य्यात् सुखं याति महापथ
अग्निहोत्रादिभिर्यज्ञैर्दानैश्च विविधैरपि ।
न तां गतिमवाप्नोति वृषोत्सर्गेण या गतिः ॥
यज्ञानाञ्चैव सर्व्वेषां वृषयज्ञस्तथोत्तमः ।
तस्मात् सर्व्वप्रयत्नेन वृषयज्ञं समाचरेत् ॥ ९

गरुड़ उवाच ।

कथयस्व प्रसादेन त्वयाहञ्चौर्द्ध्वदैहिकम् ।
कस्मिन् मासे तिथौ कस्यां विधिना केन तद्वद
कृत्वा किं फलमाप्नोति एतन्मे वद साम्प्रतम् ।
त्वत्प्रसादेन गोविन्द मुक्तो भवति मानवः ॥ ११

श्रीकृष्ण उवाच ।

कार्त्तिकादिषु मासेषु याम्यायनगते रवौ ।
शुक्लपक्षे तथा पक्षिन् द्वादश्यादितिथौ शुभे ॥ १
शुभलग्ने मुहूर्त्ते वा शुचौ देशे समाहितः ।
ब्राह्मणन्तु समाहूय विधिज्ञं शुभलक्षणम् ।
जपहोमैस्तथा दानैः कुर्य्याद्देहस्य शोधनम् ॥ १
पुष्येऽभिजित्सुनक्षत्रे ग्रहान् देवान् समर्चयेत् ।
होमं कुर्य्याद्यथाशक्ति मन्त्रैश्च विविधैरपि ॥ १४
ग्रहाणां स्थापनं कुर्य्यात् पूर्व्वञ्चैव खगेश्वर ।
मातृणां पूजनं कार्य्यं वसोर्धाराञ्च पातयेत् ॥ १
विधिना प्रार्थयेत् सर्व्वान् पूर्त्तं होमन्तु कारयेत्
कृष्णं संस्थाप्य तत्रैव वैष्णवं श्राद्धमाचरेत् ॥ १६
वृषं सम्पूज्य तत्रैव वस्त्रालङ्कारभूषणैः ।
चतस्रो वत्सतर्य्यश्च पूर्व्वं समधिवासयेत् ॥ १७
प्रदक्षिणं ततः कुर्य्याद्धोमान्ते च विसर्ज्जनम् ।
इमं मन्त्रं समुच्चार्य्य उत्तराभिमुखः स्थितः ॥ १८
धर्म्म त्वं वृषरूपेण ब्रह्मणा निर्म्मितः पुरा ।
तवोत्सर्गप्रभावान्मामुद्धरस्व भवार्णवात् ॥ १९
अभिषिच्य शुभैर्मन्त्रैः पावनैर्विधिपूर्व्वकम् ।
तेन क्रीड़न्ति मन्त्रेण वृषोत्सर्गन्तु कारयेत् ॥ २०
अभिषिञ्चेत् ततो नीलं रुद्रकुम्भोदकेन तु ।
नाभिमूले समास्थाय तदम्बु मूर्द्धनि न्यसेत् ॥ २१
अन्नश्राद्धं ततः कुर्य्याद्दद्याद्दानं द्विजोत्तमे ।
उदके चैव गन्तव्यं जलं तत्र प्रदापयेत् ॥ २२
यद्दिष्टं जीवितस्यासीत् तच्च दद्यात् स्वशक्तितः ।

(क) पाठोऽयमसमीचीनः ।

दुस्तरे मार्गे मृतो याति न संशयः ॥ २३
...न पश्यन्ति सदा दानरता नराः ।
...तथा सप्त पञ्च वीणि क्रमेण तत् ॥ २४
...दि कुर्व्वीत श्रद्धाभक्तिसमन्वितः ।
...णि कुर्व्वीत सप्त पञ्च यथाक्रमम् ।
...भोजयेत् पश्चादिकां गाञ्च प्रदापयेत् ॥ २५
...मन्त्रो देवीति वेदोक्तविधिना ततः ।
...र्व्वत्सतरीभिः परिष्ठाय समाचरेत् ॥ २६
...दं प्रदातव्यं त्रिशूलं दक्षिणे तथा ।
...याइप्रस्यापि तं वृषञ्च विसर्ज्जयेत् ॥ २७
...इष्टविधानेन स्वाहाकारेण बुद्धिमान् ।
...कादशाहञ्च श्राद्धं सर्व्वप्रयत्नतः (क) ॥ २८
...शरणादर्व्वाक् कुर्य्याच्छ्राद्धानि षोड़श ।
...न् भोजयित्वा तु पददानानि दापयेत् ॥ २९
...तोपरि संस्थाप्य ताम्रपात्रे तथाच्युतम् ।
...च्छाद्य तत्रस्थमर्घं दद्यात् शुभैः फलैः ॥ ३०
...मयीं कृत्वा पट्टसूत्रेण वेष्टयेत् ।
...त्रे घृतं स्थाप्य वैतरण्या निमित्तकम् ॥ ३१
...रोहणं कुर्य्यात् पूजयेद्गरुड़ध्वजम् ।
...नानुसारेण तच्च दानमनन्तकम् ॥ ३२
...लोहं हिरण्यञ्च कार्पासं लवणं तथा ।
...यं क्षितिर्गावो ह्येकैकं पावनं स्मृतम् ॥ ३३
...वाणि कुर्व्वीत शय्यादानञ्च दापयेत् ।
...कुरुते तार्क्ष्य पुत्त्रवानप्यपुत्त्रवान् ॥ ३४
...ं समवाप्नोति यथा ते ब्रह्मचारिणः ॥ ३५
...नैमित्तिकं कुर्य्याद्‌यावज्जीवति मानवः ।
...वत् क्रियते धर्म्मस्तत्फलञ्चाक्षयं भवेत् ॥ ३६
...सावाव्रतादीनां श्राद्धं संवत्सरस्य हि ।
...नां गुरूणाञ्च मातापित्रोस्तथैव च ।
...यप्रयत्नेन प्रत्यहं वर्द्धते खग ॥ ३७
...पक्षे हि यः कश्चिद्भूरिदानं प्रयच्छति ।
...हं सदा तस्य चतुर्व्वक्त्रस्तथा हरः ॥ ३८
...न्ति परमाँल्लोकानिति सत्यं वचो मम ॥ ३९
...टो वृषभो यत्र पिबत्यापो जलाशये ।
...वालिखते वापि भूमिं नित्यं प्रहर्षितः ।

पितॄणामन्नपानञ्च प्रभूतमुपतिष्ठति ॥ ४०
पूर्णमास्याममायां वा तिलपात्राणि दापयेत् ।
संक्रान्तीनां सहस्राणि सूर्य्यपर्व्वशतानि च ।
दत्त्वा यत् फलमाप्नोति तद्वै नीलविसर्ज्जने ॥ ४१
वत्सतर्य्यः प्रदातव्या ब्राह्मणेभ्यः पदानि च ।
तिलपात्राणि देयानि शिवभक्तद्विजेषु च ॥ ४२
उमा-महेश्वरञ्चैव परिधाप्य प्रदापयेत् ।
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ ४३
ये न पश्यन्ति गोविन्दं न तेषां विद्यते भयम् ।
प्रेतलाभोक्षमिच्छन्तो ये करिष्यन्ति सत्क्रियाम् ।
यास्यन्ति ते परान् लोकानिन्ति सत्यं वचो मम ॥ ४४
एतत् ते सर्व्वमाख्यातं मया चैवौर्द्ध्वदेहिकम् ।
यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥ ४५
श्रुत्वा माहात्म्यमतुलं गरुड़ो हर्षमागतः ।
मानुषाणां हितार्थाय पुनः प्रपच्छ केशवम् ॥ ४६

इति श्रीगारुड़े महापुराणे उत्तर-
खण्डे श्रीकृष्ण-गरुड़-संवादे पञ्च-
दशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः ।

गरुड़ उवाच ।

भगवन् ब्रूहि मे सर्व्वं यमलोकस्य निर्णयम् ।
जन्तोः प्रमाणमारभ्य माहात्म्यं वर्ण्णविस्तरम् ॥ १

श्रीभगवानुवाच ।

शृणु तार्क्ष्य प्रवक्ष्यामि यममार्गस्य निर्णयम् ।
प्रयाणकानि सर्व्वाणि तथा श्राद्धानि (क) षोड़श ॥ २
षड़शीतिसहस्राणि योजनानां प्रमाणतः ।
यमलोकस्य चोर्द्ध्वं वै अन्तरा मानुषस्य च ॥ ३
सुकृतं दुष्कृतं वापि भुक्त्वा लोके यथार्ज्जितम् ।
कर्म्मयोगाद्‌यदा कश्चिद्व्याधिरुत्पद्यते खग ॥ ४
निमित्तेनैव सर्व्वेषां कृतकर्म्मानुसारतः ।
यस्य यो विहितो मृत्युः स तं ध्रुवमवाप्नुयात् ॥ ५
कर्म्मयोगाद्‌यदा देही मुञ्चत्यत्र निजं वपुः ।
तदा भूमिगतं कुर्य्याद्गोमयेनोपलिप्य च ॥ ६

(क) पाठोऽयमसमीचीनः ।

(क) पाठोऽयमशुद्धः ।

तिलान् दर्भान् विकीर्य्याथ मुखे स्वर्णं विनिक्षिपेत् ।
तुलसीसन्निधौ कृत्वा शालग्रामशिलां तथा ॥ ७
सेतुसामादिसूक्तैस्तु मरणं मुक्तिदायकम् ।
विकलेन्द्रियसङ्घाते चैतन्ये जड़तां गते ।
प्रचलन्ति ततः प्राणा याम्यैर्निकटवर्त्तिभिः ॥ ८
एकीभूतं जगत् पश्येद्देवी दृष्टिः प्रजायते ।
बीभत्सं दारुणं रूपं प्राणैश्च कण्ठसंस्मृतैः ।
फेनमुद्गिरते कोऽपि खण्डलालाकुलं भवेत् ॥ ९
दुरात्मानश्च ताड्यन्ते किङ्करैः पाशबन्धनैः ।
सुखं सुकृतिनस्तत्र नीयन्ते नाकनायकैः ॥ १०
दुःखेन पापिनो यान्ति यममार्गं च दुर्गमे ।
यमश्चतुर्भुजो भूत्वा शङ्ख-चक्र-गजादिभृत् ॥ ११
पुण्यकर्म्मरतान् सम्यक् शुभान् मित्रवदाचरेत् ।
आहूय पापिनः सर्व्वान् यमदण्डेन तर्ज्जयेत् ॥ १२
प्रलयाम्बुदनिर्घोषस्त्वञ्जनाद्रिसमप्रभः ।
महिषस्थो दुराराध्यो विद्युन्नेत्रसमद्युतिः ॥ १३
योजनत्रयविस्तारदेहो रौद्रोऽतिभीषणः ।
लोहदण्डधरो भीमपाशपाणिर्दुराकृतिः ।
वक्रनेत्रोऽतिभयदो दर्शनं याति पापिनाम् ॥ १४
अङ्गुष्ठमात्रः पुरुषो हाहा कुर्व्वन् कलेवरात् ।
तदैव नीयते भूतैर्याम्यैर्वीक्षन् स्वकं गृहम् ॥ १५
निर्व्विचेष्टं शरीरन्तु प्राणैर्मुक्तं जुगुप्सितम् ।
अस्पृश्यं जायते तूर्णं दुर्गन्धं सर्वनिन्दितम् ॥ १६
त्रिधावस्था हि देहस्य कृमिविड्भस्मसंज्ञिता ।
को गर्व्वः क्रियते तार्क्ष्य क्षणविध्वंसिभिर्नरैः ॥ १७
दानं वित्तादृता वाचः कीर्त्तिधर्म्मौ तथायुषः ।
परोपकरणं कायादसतः सारमुद्धृतम् ॥ १८
तस्यैवं नीयमानस्य दूताः सन्तर्ज्जयन्ति हि ।
दर्शयन्तो भयं तीव्रं नरकाय पुनः पुनः ॥ १९
शीघ्रं प्रचल दुष्टात्मन् गतोऽसि त्वं यमालये ।
कुम्भीपाकादिनरकान् त्वां नेष्यामश्च मा चिरम् ॥ २०
एवं वाचस्तदा शृण्वन् बन्धूनां रुदितं तथा ।
उच्चैर्हाहेति विलपन् नीयते यमकिङ्करैः ॥ २१
स्थाने श्राद्धं प्रकुर्व्वीत तथा चैकादशेऽहनि ।
मृतस्योत्क्रान्तिसमयात्षट्पिण्डान्क्रमशो ददेत् ॥ २२
मृतस्थाने तथा द्वारे चत्वरे तार्क्ष्य कारणात् ।

विश्रामे काष्ठचयने तथा सञ्चयने च षट् ॥ २३
शृणु तत्कारणं तार्क्ष्य षट् पिण्डान् परिकल्पते ।
मृतस्थाने शवो नाम तेन नाम्ना प्रदीयते ॥ २४
तेन दत्तेन तृप्यन्ति गृहे वास्त्वधिदेवताः ॥ २५
द्वारे तु पिण्डं देयञ्च पान्थमित्यभिधाय तु ।
तेन दत्तेन प्रीणन्ति द्वारस्था गृहदेवताः ॥ २६
चत्वरे खेचरो नाम तमुद्दिश्य प्रदापयेत् ।
न चोपघातं कुर्व्वन्ति भूताद्या देवयोनयः ॥ २
विश्रामे भूतसंज्ञोऽयं तेन तत्र प्रदापयेत् ।
पिशाचा राक्षसा यक्षा ये चान्ये दिशि वासिनः ।
तस्य होतव्यदेहस्य नैवायोग्यत्वकारकाः ॥ २८
चितापिण्डप्रभृतितः प्रेतत्वमुपजायते ।
चितायां साधकं नाम वदन्त्येके खगेश्वर ॥ २९
केचित् तं प्रेतमेवाहुर्यथा कल्पविदो बुधैः ।
तद्धादि तत्र तत्रापि प्रेतनाम्ना प्रदीयते ॥ ३०
इत्येवं पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ।
अन्यथा चोपघाताय पूर्व्वोक्तास्ते भवन्ति हि ॥
संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य वेदिकाम् ।
अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः ।
पुष्पाक्षतैश्च सम्पूज्य देवं क्रव्यादसंज्ञकम् ॥ ३२
त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः ।
उपसंहारकस्तस्मादेनं स्वर्गं मृतं नय ।
इति क्रव्यादमभ्यर्च्य एवं तस्य सुखं भवेत् ॥ ३३
अर्द्धदग्धे तथा देहे दद्यादाज्याहुतिं ततः ॥ ३
दग्धस्यानन्तरं तत्र कृत्वा सञ्चयनक्रिया ।
प्रेतपिण्डं प्रदद्याच्च दाहार्त्तिशमनं खग ॥ ३५
तावद्भूताः प्रतीक्षन्ते तं प्रेतं बान्धवार्थिनम् ।
दहनानन्तरं कार्य्यं पुत्रैः स्नानं सचेलकम् ॥ ३
तिलोदकं ततो दद्यान्नामगोत्रेण तिष्ठतु ।
केचिद्दुग्धेन सिञ्चन्ति चितास्थानं खगेश्वर ॥ ३
अश्रुपातं न कुर्व्वीत दद्यादस्मै जलाञ्जलीः ।
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ।
दुग्धञ्च मृण्मये पात्रे तोयं दद्याद्दिनत्रयम् ।
सूर्य्ये चास्तं गते तार्क्ष्य वलभ्यां चत्वरेऽपि वा ।
बद्धः संमूढहृदयो देहमिच्छन् कृतानुग ।

...मानं चत्वरं गेहं वीक्षन् याम्यः स नीयते ॥ ४०
...र्ते पिण्डा दशाहञ्च दातव्याश्च दिने दिने।
...जलाञ्जलीः प्रदातव्याः प्रेतमुद्दिश्य नित्यशः ॥ ४१
...मुद्दिश्य कर्त्तव्या यावत् पिण्डं दशाह्निकम्।
...शाने चान्यतीर्थे वा जलं पिण्डञ्च दापयेत् ॥ ४२
...तोदनामिषशक्तानां शाकमूलफलादिना।
...थमेऽहनियद्दोऽयात् तद्दद्यादुत्तरेऽहनि ॥ ४३
...दिनानि दश पिण्डांश्च कुर्व्वन्त्यत्र सुतादयः।
...ण्डं ते विभज्यन्ते चतुर्भागान् खगेश्वर ॥ ४४
...भागद्वयन्तु देहार्थं प्रीतिदं भूतपञ्चकम्।
...तीयं यमदूतानां चतुर्थञ्चोपजीव्यति ॥ ४५
...ह्वोरात्रैस्तु नवभिः प्रेतो निष्पत्तिमाप्नुयात्।
...त्तोनिष्पन्नदेहस्य दशमे बलवत् क्षुधा ॥ ४६
...न विधिनैव मन्त्रश्च न स्वधावाहनाशिषः।
...नाम गोत्रं समुच्चार्य्य यद्दत्तं तद्दशाह्निकम् ॥ ४७
...थमे देहे पुनर्देहमेवमुत्पद्यते खग।
...थमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते ॥ ४८
...ग्रीवा-स्कन्धौ द्वितीये च तृतीये हृदयं भवेत्।
...चतुर्थेन भवेत् पृष्ठो पञ्चमे नाभिरेव च ॥ ४९
...षट्सप्तमे कटि-गुह्यमूरू चाप्यष्टमे तथा।
...तालु-पादौ च नवमे दशमेऽह्नि क्षुधा भवेत् ॥ ५०
...देहं प्राप्तः क्षुधाविष्टो गृहद्वारे च तिष्ठति।
...दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ॥ ५१
...यतो देहे समुत्पन्ने प्रेतोऽतीव क्षुधान्वितः।
...प्रतस्त्वामिषवाञ्छेन क्षुधा तस्य न नश्यति ॥ ५२
...एकादश-द्वादशाहे प्रेतो भुङ्क्ते दिनद्वयम्।
...योषितः पुरुषस्यापि प्रेतशब्दं समुच्चरेत् ॥ ५३
...दीपमन्नं जलं वस्त्रं यत् किञ्चिद्वस्तु दीयते।
...प्रेतशब्देन तद्देयं मृतस्यानन्ददायकम् ॥ ५४
...त्रयोदशेऽह्नि स प्रेतो नीयते च महापथे।
...पिण्डजं देहमाश्रित्य दिवानक्तं बुभुक्षितः ॥ ५५
...शीतोष्ण-झञ्झ-क्रव्यादवह्निर्मार्गेस्तु पापिनाम्।
...क्षुधा तृष्णात्मिका चैव सर्व्वं सौम्यं कृतात्मनाम् ॥ ५६
...मार्गे चैतानि दुःखानि असिपत्रवनान्विते।
...क्षुत्पिपासार्द्दितो नित्यं प्रेतो मार्गे प्रयाति हि ॥ ५७
...अहन्यहनि वै प्रेतो योजनानां शतद्वयम्।

चत्वारिंशत् तथा सप्त अहोरात्रेण गच्छति ॥ ५८
गृहीतो यमपाशैश्च हाहेति रुदिते तु सः।
स्वगृहन्तु परित्यज्य याम्यं पुरमनुव्रजेत् ॥ ५९
क्रमेण याति स प्रेतः पुरं याम्यं शुभाशुभम्।
अतीत्य तानि तान्येव मार्गे पुरवराणि च ॥ ६०
याम्यं सौरिपुरं वरेन्द्रभवनं गन्धर्व्वसिद्धागमौ
क्रौञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुःखदम्।
नानाक्रन्दपुरं सुतप्तभवनं रौद्रं पयोवर्षणं
शीताढ्यं बहुधर्म्मभीतिभवनं याम्यं पुरञ्चाग्रतः॥६१
त्रयोदशेऽह्नि स प्रेतो गृहीतो यमकिङ्करैः।
तस्मिन् मार्गे व्रजत्येको गृहीत इव मर्कटः ॥ ६२
तथैव स व्रजन् मार्गे पुत्र पुत्र इति ब्रुवन्।
हाहेति क्रन्दते नित्यं कोटशन्तु मया कृतम् ॥ ६३
मानुष्यं लभ्यते कस्मादिति ब्रूते प्रसर्पति।
महता पुण्ययोगेन मानुष्यं जन्म लभ्यते ॥ ६४
न तत् प्राप्य प्रदत्तं हि याचकेभ्यः स्वकं धनम्।
पराधीनं तदभवदिति रौति सगद्गदः ॥ ६५
किङ्करैः पीड्यतेऽत्यर्थं स्मरते पूर्व्वदेहिकम् ॥ ६६

मया न दत्तं न हुतं हुताशने
तपो न तप्तं हिमशैलगह्वरे।
न सेवितं गाङ्गमहो महाजलं
देहिन् क्वचित् निस्तर यत् त्वया कृतम् ॥ ६७
न नित्यदानं न गवाह्निकं कृतं
न वेददानं न च शास्त्रपुस्तकम्।
पुराणबुद्ध्या न च सेवितोऽध्वा
देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ ६८
मया न भुक्तं पतिसङ्गसौख्यं
वह्निप्रवेशो न कृतो मृते सति।
तस्मिन् मृते तद्व्रतपालनं वा
देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ ६९
मासोपवासैर्न विशोषितं वपु-
श्चान्द्रायणैर्वा नियमैश्च संयतैः।
नारीशरीरं बहुदुःखभाजनं
लब्धं मया पूर्व्वकृतैर्विकर्म्मभिः ॥ ७०
उक्तानि वाच्यानि मया नराणा-
मतःशृणुष्वावहितोऽपि पक्षिन्।

स्त्रीणां शरीरं प्रतिलभ्य देहो
ब्रवीति कर्म्माणि कृतानि पूर्व्वम् (क) ॥ ७१

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़-संवादे षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः।

श्रीभगवानुवाच।

एवं विलपतस्तस्य प्रेतस्यैवं खगेश्वर।
क्रन्दमानस्य नितरां पीड़ितस्य च किङ्करैः ॥ १
सप्तदश दिनान्येको वायुमार्गं विकृष्यते।
अष्टादशे त्वहोरात्रे पूर्व्वं याम्यपुरं व्रजेत् ॥ २
तस्मिन् पुरवरे रम्ये प्रेतानाञ्च गणो महान्।
पुष्पभद्रा नदी तत्र न्यग्रोधः प्रियदर्शनः ॥ ३
पुरे स तत्र विश्रामं प्राप्यते यत्र किङ्करैः।
जायापुत्त्रादिकं सौख्यं स्मरते तत्र दुःखितः ॥ ४
रुदते करुणैर्वाक्यैस्तृषार्त्तः श्रमपीड़ितः।
स्वधनं स्वकलत्राणि गृहं पुत्त्राः सुखानि च ॥ ५
भृत्य-मित्राणि चान्यच्च सर्व्वं शोचति वै तदा।
क्षुधार्त्तस्य पुरे तस्मिन् किङ्करैस्तस्य चोच्यते ॥ ६

किङ्करा ऊचुः।

क्व धनं क्व सुता जाया क्व गृहं क्व त्वमीदृशः।
स्व कर्म्मोपार्ज्जितं भुङ्क्ष्व चिरं गच्छ महापथे ॥ ७
जानमासि शम्बलमलं बलमध्वगानां
नो शम्बलः प्रयतते परलोकगत्यै।
गन्तव्यमस्ति तव निश्चितमेव तेन
मार्गेण यत्र भवतः क्रयविक्रयौ न ॥ ८
यमगीताभवं वाक्यं पक्षिन्नेवं त्वया श्रुतम्।
एवमुक्तस्ततः सर्व्वैर्हन्यमानः समुद्गरैः ॥ ९
अत्र दत्तं सुतैः पात्रैः स्नेहाद्वा कृपयाथवा।
मासिकं पिण्डमश्नाति ततः सौरिपुरं व्रजेत् ॥ १०
तत्र नाम्ना तु राजा वै जङ्गमः कालरूपधृक्।
तं दृष्ट्वा भयभीतस्तु विश्रामे कुरुते मतिम् ॥ ११
उदकञ्चान्नसंयुक्तं भुङ्क्ते तस्मिन् पुरे गतः।
त्रैपादिके तु यद्दत्तं तत् पुरं स व्यतिक्रमेत् ॥ १२
नगेन्द्रनगरे रम्ये प्रेतो याति दिवानिशम्।
गच्छन् वनानि रौद्राणि दृष्ट्वा क्रन्दति तत्र सः ॥ १३
भीषणैः क्लिश्यमानस्तु रुदते च पुनः पुनः।
मासद्वयावसाने तु तत् पुरं सोऽतिगच्छति ॥ १४
भुक्त्वा चान्नं जलं पीत्वा यद्दत्तं बान्धवैरिह।
क्लिश्यमानस्ततः पाशैर्नीयते यमकिङ्करैः ॥ १५
तृतीये मासि सम्प्राप्ते गन्धर्व्वं नगरं शुभम्।
तृतीयं मासिकं भुक्त्वा तत्र गच्छत्यसौ पुरः ॥ १६
शैलागमं चतुर्थे स मासि प्राप्नोति वै पुरम्।
पाषाणास्तत्र वर्षन्ति प्रेतस्योपरि संस्थिताः ॥ १७
चतुर्थमासिके श्राद्धे भुक्ते तत्र सुखी भवेत्।
ततो याति पुरं प्रेतः क्रूरं मासि तु पञ्चमे ॥ १८
इह दत्तं सुतैर्भुङ्क्ते प्रेतो वै तत्पुरे स्थितः।
षष्ठे मासि ततः प्रेतो याति क्रौञ्चाभिधं पुरम् ॥ १९
तत्र दत्तेन पिण्डेन श्राद्धेनाप्यायितः पुरे।
मुहूर्त्तार्द्धन्तु विश्रम्य कम्पमानः सुदुःखितः ॥ २०
तत् पुरं स व्यतिक्रम्य तर्ज्जितो यमकिङ्करैः।
प्रयाति चित्रनगरं विचित्रो यत्र पार्थिवः ॥ २१
यमस्यैवानुजः सौरिर्यत्र राज्यं प्रशास्ति हि।
मासैस्तु पञ्चभिः सार्द्धैरूनषाण्मासिको भवेत् ॥ २२
ऊनषाण्मासिकं तत्र भुङ्क्ते याम्यसमाहृतः।
मार्गे पुनः पुनस्तस्य बुभुक्षा पीड़यत्यलम् ॥ २३
सन्तिष्ठते सुते कोऽपि मदीयः सुतबान्धवः।
सौख्यं यो मे जनयति पततः शोकसागरे ॥ २४
एवं विलपते मार्गे वार्य्यमाणस्तु किङ्करैः।
आयान्ति सम्मुखास्तत्र कैवर्त्तास्तु सहस्रशः ॥ २५
वयं ते तर्त्तुकामाय महावैतरणीं नदीम्।
शतयोजनविस्तीर्णां पूयशोणितसङ्कुलाम् ॥ २६
नानाझषसमाकीर्णां नानापक्षिगणैर्वृताम्।
वयं त्वां तारयिष्यामः सुखेनेति वदन्ति ते ॥ २७
येन तत्र प्रदत्ता गौस्तया नावा प्रसर्पति।
मनुजानां हितं दानमन्ते वैतरणी स्मृता ॥ २८
दत्ता पापं दहेत् सर्व्वं विष्णुलोकन्तु सा नयेत्।
न दत्ता चेत् खगश्रेष्ठ तां समेत्य स मज्जति ॥ २९
स्वस्थावस्थे शरीरेऽत्र वैतरण्या व्रतं चरेत्।

---

(क) विषयस्त्रीकादिपौनरुक्त्यमिदं बोद्धव्यबुद्धिवशिष्य-
त्वाय सूयासिखननन्यायेनेत्यदोषावहम्।

दैवा च विदुषी धेनुस्तां नदीं तर्त्तुमिच्छता ॥ ३०
ब्रवद्यमानस्तु निन्दत्यात्मानमात्मना।
पाथेयार्थं मया किञ्चिन्न प्रदत्तं द्विजातये ॥ ३१
न दत्तं न हुतं जप्तं न स्नातं न कृतं स्तुतम्।
यादृशं कर्म्म चरितं मूढ़ भुङ्क्ष्वेति तादृशम् ॥ ३२
हा दैव हृदि संमूढ़स्ताड़ितो भाषते भटैः।
वैतरण्याः परतटे भुङ्क्ते दत्तं घटादिकम् ॥ ३३
ऊनषाण्मासिकश्राद्धं भुक्त्वा गच्छति चाग्रतः।
षाण्मा तत्र विशेषेण भोजयीत द्विजान् शुभान् ॥ ३४
चत्वारिंशत् तथा सप्त योजनानि शतद्वयम्।
प्रयाति प्रत्यहं ताञ्च अहोरात्रेण कर्षितः ॥ ३५
सप्तमे मासि सम्प्राप्ते पुरं बह्वापदं व्रजेत्।
तत्र भुक्त्वा प्रदत्तं यच्छ्राद्धं सप्तममासिकम् ॥ ३६
अष्टमे मासि सम्प्राप्ते नानाक्रन्दपुरं व्रजेत्।
नानाक्रन्दगणान् दृष्ट्वा क्रन्दमानान् सुदारुणान्॥३७
स्वयञ्च शून्यहृदयः समाक्रन्दति दुःखितः।
तन्मासिकञ्च यच्छ्राद्धं भुक्त्वा तत्र सुखी भवेत् ॥ ३८
विहाय तत् पुरं प्रेती याति तस्य पुरं प्रति।
सुतप्तनगरं प्राप्य नवमे मासि सोऽश्नुते।
द्विजभोज्यपिण्डदानं कृतं श्राद्धं सुतेन यत् ॥ ३९
मासि वै दशमे प्राप्ते रौद्रस्थानं स गच्छति।
दशमे मासि यद्दत्तं तद्भुक्त्वा च प्रयाति सः ॥ ४०
दशैकमासिकं भुक्त्वा पयोवर्षणमृच्छति।
मेघास्तत्र प्रवर्षन्ति प्रेतानां दुःखदायकाः ॥ ४१
ततः प्रचलितोपेतो बहुधर्म्मं दृषार्द्दितः।
द्वादशे मासि यच्छ्राद्धं तत्र भुङ्क्ते सुदुःखितः ॥ ४२
किञ्चिन्न्यूने ततो वर्षे सार्द्धे चैकादशेऽथवा।
याति शीतपुरं तत्र शीतं यत्रातिदुःखदम् ॥ ४३
शीतार्त्तः क्षुधितः सोऽथ वीक्षते हि दिशो दश।
तिष्ठते बान्धवः कोऽपि यो मे दुःखं व्यपोहति ॥ ४४
किङ्कराश्तं वदन्त्येवं क्व ते पुण्यं हि तादृशम्।
श्रुत्वा तेषान्तु तद्वाक्यं हा दैव इति भाषते ॥ ४५
दैवं हि पूर्व्वसुकृतं तन्मया नैव सञ्चितम्।
एवं सञ्चिन्त्य बहुशो धैर्य्यमालम्बते पुनः ॥ ४६
चत्वारिंशद्धयोजनानि चतुर्युक्तानि वै ततः।
धर्म्मराजपुरं रम्यं गन्धर्व्वाप्सरसाकुलम् ॥ ४७

चतुरशीतिलक्षैश्च मूर्त्तामूर्त्तैरधिष्ठितम्।
त्रयोदश प्रतीहारा धर्म्मराजपुरे स्थिताः ॥ ४८
शुभाशुभन्तु यत् कर्म्म ते विचार्य्य पुनः पुनः।
श्रवणा ब्रह्मणः पुत्रा मनुष्याणाञ्च चेष्टितम्।
कथयन्ति तदा लोके पूजिताः पूजिताः स्वयम् ॥४९
नरैस्तुष्टैश्च पुष्टैश्च यत् प्रोक्तञ्च कृतञ्च यत्।
सर्व्वमावेदयन्ति स्म चित्रगुप्ते यमे च तत् ॥ ५०
दूराच्छ्रवणविज्ञानं दूराद्दर्शनगोचरम्।
एवंचेष्टास्तु ते ह्यष्टौ स्वर्भूपातालचारिणः ॥ ५१
तेषां पत्न्यस्तथैवोग्रा श्रवण्यः पृथगाह्वयाः।
एवं तेषां शक्तिरस्ति मर्त्त्ये मर्त्त्याधिकारिणः ॥ ५२
व्रतैर्दानैःस्तवैर्यश्च पूजयेदिह मानवः।
नीयन्ते तस्य ते सौम्याः सुखमृत्युप्रदायिनः ॥ ५३
इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़संवादे सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

श्रीभगवानुवाच।

अथ वक्ष्यामि संक्षेपाद्यममार्गस्य निष्कृतिम्।
वृषोत्सर्गस्य पुण्येन पितृलोकं स गच्छति ॥ १
एकादशाहपिण्डेन शुद्धदेहो भवेत् ततः।
उदकुम्भप्रदानेन किङ्करास्तृप्तिमाप्नुयुः ॥ २
शय्यादानाद्विमानस्थो याति स्वर्गेषु मानवः।
तदह्नि दीयते सर्व्वं द्वादशाहे विशेषतः ॥ ३
पदानि सर्व्ववस्तूनि वरिष्ठानि त्रयोदश।
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ॥ ४
तदाश्रितो महामार्ग वैनतेय स गच्छति।
एक एवास्ति सर्व्वत्र व्यवहारः खगाधिप ॥ ५
उत्तमाधममध्यानां तत्तदावर्ज्जनं भवेत्।
यावद्भाग्यं भवेद्यस्य तावन्मार्गोऽतिरिच्यते ॥ ६
स्वयं स्वस्तेन यद्दत्तं तत् तत्राधिकरोति तम्।
मृते यद्वान्धवैर्दत्तं तदाश्रित्य सुखी भवेत् ॥ ७

गरुड़ उवाच।

कस्मात् पदानि देयानि कतिधा च त्रयोदश।
दीयते कस्य देवेश तद्वदस्व यथातथम् ॥ ८

श्रीभगवानुवाच।

छत्त्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः।
आसनं भाजनञ्चैव पदं सप्तविधं स्मृतम्॥ ९
आतपस्तत्र यो रौद्रो दह्यते येन मानवः।
छत्त्रदानेन सुच्छाया जायते प्रेततुष्टिदा॥ १०
असिपत्त्रवनं घोरं सोऽतिक्रामति वै ध्रुवम्।
अश्वारूढ़ाश्च गच्छन्ति ददते य उपानहौ॥ ११
आसने स्वागते चैव दत्ते तस्य द्विजातये।
सुखेन भुञ्जते प्रेतः(क) पथि गच्छन् शनैः शनैः॥१२
बहुधर्म्मसमाकीर्णे निर्व्वर्त्तितेनोपवर्ज्जिते।
कमण्डलुप्रदानेन सुखी भवति निश्चितम्॥ १३
मृतोद्देशेन यो दद्यादुदपात्रन्तु ताम्रजम्।
प्रपादानसहस्रस्य तत् फलं सोऽश्नुते ध्रुवम्॥ १४
यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः।
न पीड़यन्ति दाक्षिण्याद्वस्त्राभरणदानतः॥ १५
सायुधा धावमानाश्च न मार्गे दृष्टिगोचरम्।
प्रयान्ति यमदूतास्ते मुद्रिकायाः प्रदानतः॥ १६
भाजनासनदानेन आमान्नभोजनेन च।
आज्य-यज्ञोपवीताभ्यां पदं सम्पूर्णतां व्रजेत्॥ १७
एवं मार्गे गच्छमानस्तृष्णार्त्तः श्रमपीड़ितः।
महिषीदुग्धदानाच्च सुखी भवति निश्चितम्॥ १८

गरुड़ उवाच।

मृतोद्देशेन यत् किञ्चिद्दीयते स्वगृहे विभो।
स गच्छति महामार्गे तद्दत्तं केन गृह्यते॥ १९

श्रीभगवानुवाच।

गृह्णाति वरुणो दानं मम हस्ते प्रयच्छति।
अहञ्च भास्करे देवे भास्करात् सोऽश्नुते सुखम्॥२०
विकर्म्मणः प्रभावेण वंशच्छेदे चिताविह।
सर्व्वे ते नरकं यान्ति यावत् पापस्य सञ्चयः॥ २१
कस्मिंश्चित् समये पूर्णे महिषासनसंस्थितः।
नरकान् वीक्ष्य धर्म्मात्मा नानाक्रन्दसमाकुलान्॥२२
चतुरशीतिलक्षाणां नरकाणां स ईश्वरः।
तेषां मध्ये श्रेष्ठतमा घोरे या एकविंशतिः॥ २३
तामिस्रं लोहशङ्कुश्च महारौरव-शाल्मली।
रौरवं कुड्मलं कालसूत्रकं पूतिमृत्तिका॥ २४
सङ्घातं लोहतोदञ्च सविषं सम्प्रतापनम्।
महानरककाकोलः सञ्जीवनमहापथः॥ २५
अवीचिरन्धतामिस्रः कुम्भीपाकस्तथैव च।
असिपत्त्रवनञ्चैव पतनश्चैकविंशतिः॥ २६
येषान्तु नरके घोरे बहून्यब्दानि गतानि वै।
सन्ततिर्नैव विद्येत दूतलं ते तु यान्ति हि॥ २७
यमेन प्रेषितास्ते वै मानुषस्य मृतस्य तु।
दिने दिने प्रगृह्णन्ति दत्तमन्नाद्यपानकम्॥ २८
प्रेतस्यैव विलुण्ठन्ति मध्ये मार्गे बुभुक्षिताः।
मासान्ते भोजनं पिण्डमेकं यच्छन्ति तत्र वै॥ २९
तृप्तिं प्रयान्ति ते सर्व्वे प्रत्यहञ्चैव वत्सरम्।
एवमाक्रान्तितैः पुण्यैः क्रमात् सौरिपुरं व्रजेत्॥ ३०
ततः संवत्सरस्यान्ते प्रत्यासन्ने यमालये।
बहुभीतिकरे प्रेतो हस्तमात्रं समुत्सृजेत्॥ ३१
द्विवर्षेदशभिर्जातं तं देहं दशपिण्डजम्।
जामदग्न्यस्येव रामं दृष्ट्वा तेजः प्रसर्पति॥ ३२
कर्म्मजं देहमाश्रित्य पूर्व्वदेहं समुत्सृजेत्।
अङ्गुष्ठमात्रो वायुश्च शमीपत्रं समारुहेत्॥ ३३
व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति।
यथा तृणजलौकेव देही कर्म्मानुगो वशः॥ ३४

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही॥ ३५

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे अष्टा-
दशोऽध्यायः॥ १८॥

---

## एकोनविंशोऽध्यायः।

श्रीभगवानुवाच।

वायुभूतः क्षुधाविष्टः कर्म्मजं देहमाश्रितः।
तं देहं स समासाद्य यमेन सह गच्छति॥ १
चित्रगुप्तपुरं तत्र योजनानान्तु विंशतिः।
कायस्थास्तत्र पश्यन्ति पापपुण्यानि सर्व्वशः॥ २
महादानेषु दत्तेषु गतस्तत्र सुखी भवेत्।

---

(क) भुङ्क्ते सुखेन तत् प्रेत इति पाठान्तरम्।

...नानां चतुर्व्विंशत् पुरं वैवस्वतं शुभम् ॥ ३
...हं लवणकार्पासं तिलपात्रञ्च येर्नरैः ।
...तेनैव लभ्यन्ति यमस्य पुरचारिणः ॥ ४
...त्वा च तत्र ते सर्व्वे प्रतिहारं वदन्ति हि ।
...ध्वजप्रतीहारस्तत्र तिष्ठति सर्व्वदा ॥ ५
...धान्यस्य दानेन प्रीतो धर्म्मध्वजो भवेत् ।
...गत्वा प्रतीहारो ब्रूते तस्य शुभाशुभम् ॥ ६
...राजस्य यद्रूपं सन्तः सुकृतिनो जनाः ।
...न्ति च दुरात्मानो यमरूपं सुभीषणम् ॥ ७
...दृष्ट्वा भयभीतस्तु हाहेति वदते जनः ।
...दानञ्च येर्मर्त्त्यैस्तेषां नास्ति भयं क्वचित् ॥ ८
...सुकृतिनं दृष्ट्वा स्थानाच्चलति सूर्य्यजः ।
...मे मण्डलं भित्त्वा ब्रह्मलोकं प्रयास्यति ॥ ९
...तेन सुलभो धर्म्मो यममार्गः सुखावहः ।
...मार्गो विशालोऽत्र न केनाप्यनुगम्यते ।
...पुण्यं विना वत्स न गच्छेद्धर्ममन्दिरम् ॥ १०
...न् मार्गे तु रौद्रे वै भीषणा यमकिङ्कराः ।
...हन्ति मासमासान्ते पादशेषन्तु यज्ञवित् ॥ ११
...दैहिकदानानि येन दत्तानि काश्यप ।
...कष्टेन ते यान्ति तस्माद्देयानि शक्तितः ॥ १२
...दत्त्वा पशुवद्यान्ति गृहीतो बन्धबन्धनैः ॥ १३
एवं कृतेन सम्पश्येत् स नरः कृतकर्म्मणा ।
...दिवीं पैतृकीं योनिं मानुषीं वाथ नारकीम् ॥१४
...र्म्मराजस्य वचनान्मुक्तिर्भवति वा ततः ।
...नुषत्वं ततः प्राप्य सपुत्रः पुत्रतां व्रजेत् ॥ १५
यथा यथा कृतं कर्म्म तां तां योनिं व्रजेन्नरः ।
...त् तथैव च भुञ्जानो विचरेत् सर्व्वलोकतः ॥ १६
...यथाश्वतं परिज्ञाय सर्व्वलोकोत्तरं सुखम् ।
यदा भवति मानुष्यं तदा धर्म्मं समाचरेत् ॥ १७
...मयी भस्म विष्ठा वा देहानां प्रकृतिः सदा ।
...न्धकूपे महारौद्रे दीपहस्तः पतेत् तु वै ॥ १८
महापुण्यप्रभावेण मानुष्यं जन्म लभ्यते ।
...तत् प्राप्य चरेद्धर्म्मं स गच्छेत् परमां गतिम् ॥१९
...विजानन् वृथा धर्म्मं दुःखमायाति याति च ॥२०

जातीशतेन लभते किल मानुषत्वं
तत्रापि दुर्लभतरं खग भो द्विजत्वम् ।
यस्तत्र पालयति लालयति व्रतानि
तस्यामृतं भवति हस्तगतं प्रसादात् ॥ २१

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे एकोन-
विंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ।

गरुड़ उवाच ।

ये केचित् प्रेतरूपेण कुत्र वासं लभन्ति ते ।
प्रेतलोकाद्विनिर्म्मुक्ताः कथं कुत्र व्रजन्ति च ॥ १
चतुर्युक्ताशीतिलक्षैर्नरकैः पर्य्युपासिताः ।
यमेन रक्षितास्तत्र भूतैश्चैव सहस्रशः ॥ २
विचरन्ति कथं लोके नरकाच्च विनिर्गताः ।
गरुड़ोदीरितं श्रुत्वा लक्ष्मीनाथोऽब्रवीदिदम् ॥ ३

श्रीकृष्ण उवाच ।

पक्षिराज शृणुष्व त्वं यत्र प्रेताश्चरन्ति वै ।
परार्थदारग्रहणाच्छलाद्द्रोहान्निशाचराः ॥ ४
तथैव सर्व्वपापिष्ठाः स्वात्मजान्वेषणे रताः ।
विचरन्त्यशरीरास्ते क्षुत्पिपासार्द्दिता भृशम् ॥ ५
वन्दीगृहविनिर्म्मुक्ता येभ्यो नश्यन्ति जन्तवः ।
ते व्यवस्यन्ति च प्रेता वधोपायञ्च वस्तुषु ॥ ६
पितृद्वाराणि रुन्धन्ति तन्मार्गोच्छेदकास्तथा ।
पितृभागान् विगृह्णन्ति पान्थेभ्यस्तस्करा इव ॥ ७
स्वं वेश्म पुनरागत्य मित्रस्थाने विशन्ति ते ।
तत्र स्थिता निरीक्षन्ते रोगशोकादिबन्धनाः ॥ ८
पीड़यन्ति ज्वरीभूय एकान्तरमिश्रिणा तु ।
तृतीयकज्वरो भूत्वा शीतवातादिपीड़नम् ॥ ९
अन्यांश्च विविधान् रोगान् शिरोऽर्त्तिञ्च विसूचिकाम् ।
चिन्तयन्ति सदा तेषामुच्छिष्टादिस्थलस्थिताः ॥१०
आत्मजानां छलालोका भूतसङ्घैश्च रक्षिताः ।
पिबन्ति ते च पानीयं भोजनोच्छिष्टयोजितम् ॥ ११
एवं प्रेताः प्रवर्त्तन्ते नानादोषैर्विकर्म्मिणः ॥ १२

गरुड़ उवाच ।

कथं कुर्व्वन्ति ते प्रेताः केन रूपेण कस्य किम् ।
ज्ञायते केन विधिना जल्पन्ति न वदन्ति वा ॥ १३

एतन्मे छिन्धि मनोमोहं मम चेदिच्छसि प्रियम्।
कलिकाले हृषीकेश प्रेतत्वं जायते बहु ॥ १४

श्रीविष्णुरुवाच।

स्वकुलं पीड़येत् प्रेतः परच्छिद्रेण पीड़येत्।
जीवन् स दृश्यते स्नेही मृतो दुष्टत्वमाप्नुयात् ॥ १५
रुद्रजापी धर्मरतो देवतातिथिपूजकः।
सत्यवाक् प्रियवादी च न प्रेतैः स च पीड्यते ॥ १६
सर्व्वक्रियापरिभ्रष्टो नास्तिको धर्मनिन्दकः।
असत्यवादनिरतो नरः प्रेतैः स पीड्यते।
कलौ प्रेतत्वमाप्नोति तार्क्ष्याशुद्धक्रियापरः ॥ १७
कृतादौ द्वापरान्ते च न प्रेतो नैव पीड़नम्।
बहूनामेकजातानामेकः सौख्यं समश्नुते ॥ १८
एको दुष्कृतकर्म्मा च एकः सन्ततिमान् जनः।
एकः सम्पीड्यते प्रेतैरेकः सुतधनान्वितः ॥ १९
एकस्य पुत्त्रनाशः स्यादेको दुहितृमान् भवेत्।
विरोधी बन्धुभिः सार्द्धं प्रेतदोषेण काश्यप ॥ २०
सन्ततिर्दृश्यते नैव समुत्पन्ना विनश्यति।
पशुद्रव्यविनाशश्च सा पीड़ा प्रेतसम्भवा ॥ २१
प्रकृतेः परिवर्त्तः स्याद्विद्वेषः सह बन्धुभिः।
अकस्माद्व्यसनप्राप्तिः सा पीड़ा प्रेतसम्भवा ॥ २२
नास्तिक्यं वृत्तिलोपश्च महालोभस्तथैव च।
स्याद्गृहे कलहो नित्यं सा पीड़ा प्रेतसम्भवा ॥ २३
पितृमातृनिहन्ता च देव-ब्राह्मणनिन्दकः।
हत्यादोषमवाप्नोति सा पीड़ा प्रेतसम्भवा ॥ २४
नित्यकर्मविनिर्मुक्तो जपहोमविवर्ज्जितः।
हर्त्ता च परद्रव्याणां सा पीड़ा प्रेतसम्भवा ॥ २५
सुवृष्टौ कृषिनाशश्च व्यवहारो विनश्यति।
लोके कलहकारी च सा पीड़ा प्रेतसम्भवा ॥ २६
मार्गे च गच्छमानस्य पीड़येद्वातमण्डली।
प्रेतपीड़ा तु सा ज्ञेया सत्यं सत्यं खगेश्वर ॥ २७
हीनजात्या च सम्बन्धो हीनकर्म करोति यः।
अधर्म्मे रमते नित्यं सा पीड़ा प्रेतसम्भवा ॥ २८
व्यसनैर्द्रव्यनाशः स्यादुपक्रान्तं विनश्यति।
चौराग्निराजभिर्हानिः सा पीड़ा प्रेतसम्भवा ॥ २९
महारोगोपपत्तिश्च बालकानाञ्च पीड़नम्।
आयासं पीड्यते यच्च सा पीड़ा प्रेतसम्भवा ॥ ३०
श्रुति-स्मृति-पुराणेषु धर्मशास्त्रसमुद्भवे।
अभावो जायते धर्म्मे सा पीड़ा प्रेतसम्भवा ॥ ३१
देव-तीर्थ-द्विजानान्तु निन्दा यत् कुरुते नरः।
प्रत्यक्षं वा परोक्षं वा सा पीड़ा प्रेतसम्भवा ॥ ३२
स्ववृत्तिहरणं यच्च स्वप्रतिष्ठाहतिस्तथा।
वंशच्छेदः प्रदृश्येत प्रेतदोषाद्धि नान्यथा ॥ ३३
स्त्रीणां गर्भविनाशः स्यान्न पुष्पं दृश्यते तथा।
बालानां मरणं यत्र सा पीड़ा प्रेतसम्भवा ॥ ३४
भावशुद्ध्या न कुरुते श्राद्धं संवत्सरादिकम्।
स्वयमेव न कुर्व्वीत सा पीड़ा प्रेतसम्भवा ॥ ३५
तीर्थे गत्वा परासक्तः स्वकृत्यञ्च परित्यजेत्।
धर्मकार्य्ये न सम्पत्तिः सा पीड़ा प्रेतसम्भवा ॥ ३६
दम्पत्योः कलहश्चैव भोजने कोपसंयुतः।
परद्रोहे मतिश्चैव सा पीड़ा प्रेतसम्भवा ॥ ३७
पुष्पं यत्र न दृश्येत न दृश्येत फलं तथा।
विरहो भार्य्यया यत्र सा पीड़ा प्रेतसम्भवा ॥ ३८
शैशवे जायते चिह्नं सदोच्चाटपरं नृणाम्।
स्वचित्ते निष्फलं तेजः सा पीड़ा प्रेतसम्भवा ॥ ३९
स्वगोत्रघातकश्चैव हन्ति शत्रुमिवात्मजम्।
न प्रीतिर्नापि सौख्यञ्च सा पीड़ा प्रेतसम्भवा ॥ ४०
पितृवाक्यं न कुरुते स्वपत्नीञ्च न सेवते।
सदा क्रूरमतिर्व्यग्रः सा पीड़ा प्रेतसम्भवा ॥ ४१
विकर्म्मा जायते प्रेतो ह्यविधिक्रियया तथा।
तत्कालदुष्टसंसर्गाद्वृषोत्सर्गाद्वृते तथा ॥ ४२
दुष्टमृत्युवशाद्वापि अदग्धवपुषस्तथा।
प्रेतत्वं जायते तार्क्ष्य पीड्यन्ते येन जन्तवः ॥ ४३
एवं ज्ञात्वा खगश्रेष्ठ प्रेतमुक्तिं समाचरेत्।
यो वै न मन्यते प्रेतान् मृतः प्रेतत्वमाप्नुयात् ॥ ४४
प्रेतदोषः कुले यस्य सुखं तस्य न विद्यते।
मतिः प्रीतो रतिर्बुद्धिर्लक्ष्मीः पञ्चविनाशनम् ॥ ४५
तृतीये पञ्चमे पुंसि वंशच्छेदो हि जायते।
दरिद्रो निर्धनश्चैव पापकर्म्मा भवे भवेत् ॥ ४६
ये केचित् प्रेतरूपा विकृतमुखदृशो
रौद्ररूपाः कराला
मन्यन्ते नैव गोत्रं सुत-दुहितृ-पितृन्
भ्रातृजायां वा वधं।

कृत्वा काम्यञ्च रूपं सुखगतिरहिता भाषमाणा यथेष्टं
हा कष्टं भीतुकामा विधिवशपतिताः संसरन्ति स्वपाकम् ॥ ४७

इति श्रीगारुड़े महापुराणे उत्तर-खण्डे श्रीकृष्ण-गरुड़-संवादे विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः।

गरुड़ उवाच।

...त्वया पूर्वैव पीड़ोक्ता प्रेतजा त्वया।
...षां कदा भवेन्मुक्तिः प्रेतत्वं न कथं भवेत् ॥ १
...तिले किं प्रमाणञ्च कति वर्षाणि संख्यया।
...रं प्रेतत्वमापन्नः स कथं मुक्तिमाप्नुयात् ॥ २

श्रीकृष्ण उवाच।

...क्तिं प्रयान्ति ते प्रेतास्तदहं कथयामि ते।
...देव मनुजोऽमर्त्या मम पीड़ा कृता त्वियम्।
...च्छार्थं हितमन्विच्छन् दैवज्ञे विनिवेदयेत् ॥ ३
...प्ने दृष्टः शुभो वृक्षः फलितश्चूतचम्पकः।
...विप्रो वा वृषभो देवो भ्रमते तीर्थगो यदि ॥ ४
...एवं दृष्टो यदा स्वप्ने मृतः कोऽपि स्वगोत्रजः ॥ ५
...स्वप्ने सत्यं परिज्ञाय दृष्टं प्रेतप्रभावतः।
...अद्भुतानि प्रदृश्यन्ते प्रेतदोषादिनिश्चितम् ॥ ६
...तीर्थस्थाने मतिर्यावच्चित्तं धर्मपरायणम्।
...धर्मोपायं प्रकुरुते प्रेतपीड़ा तदा व्रजेत् ॥ ७
तदा तत्र विनाशाय चित्तभङ्गं करोति सा।
...श्रेयांसि बहुविघ्नानि सम्भवन्ति पदे पदे ॥ ८
...श्रेयसि प्रवृत्तिञ्च प्रेरयन्ति पुनः पुनः।
उच्चाटनञ्च क्रूरत्वं सर्व्वं प्रेतकृतं खग ॥ ९
सर्व्वविघ्नानि सन्त्यज्य मुक्त्युपायं करोति यः।
तस्य कर्म्मफलं साधु प्रेतवृत्तिश्च शाश्वती ॥ १०
...भवेत् तेन मुक्तास्तु दत्तं श्रेयस्करं परम्।
...सर्वं तृप्यति भोः पक्षिन् यस्योद्देशेन दीयते।
...सत्यमिदं तार्क्ष्य यद्ददाति भुनक्ति सः ॥ ११
आत्मानं श्रेयसा युञ्ज्यात्प्रेतस्तृप्तिं चिरं व्रजेत्।
ते तृप्ताः शुभमिच्छन्ति निजबन्धुषु सर्व्वदा ॥ १२
अज्ञातयस्तु ये दुष्टाः पीड़यन्ति स्ववंशजान्।
निवारयन्ति तृप्तास्ते जायमानानुकम्पकाः ॥ १३
पश्चात् ते मुक्तिमायान्ति कालप्राप्तौ खगुत्तमः।
सदा बन्धुषु यच्छन्ति वृद्धिमृद्धिं खगाधिप ॥ १४
दर्शनाच्छ्रावणाद्वयस्तु चेष्टातः पीड़नात्ततिम्।
न प्रापयति मूढ़ात्मा प्रेतशापैः स लिप्यते ॥ १५
अपुत्त्रकोऽपशुश्चैव दरिद्रो व्याधितस्तथा।
वृत्तिहीनश्च हीनश्च भवेज्जन्मनि जन्मनि ॥ १६
एवं ब्रुवन्ति ते प्रेताः पुनर्याम्यं समाश्रिताः।
तत्रस्थानां भवेन्मुक्तिः स्वकाले कर्म्मसंचये ॥ १७

गरुड़ उवाच।

नाम गोत्रं न दृश्येत प्रतीतिर्नैव जायते।
केचिद्वदन्ति दैवज्ञाः पीड़ां प्रेतसमुद्भवाम् ॥ १८
न स्वप्नं चेष्टितं नैव दर्शनं न कदाचन।
किं कर्त्तव्यं सुरश्रेष्ठ तत्र मे ब्रूहि निश्चितम् ॥ १९

श्रीभगवानुवाच।

सत्यं वाप्यनृतं वापि वदन्ति क्षितिदेवताः।
तदा सञ्चिन्त्य हृदये सत्यमेतद्द्विजेरितम् ॥ २०
भावभक्तिं पुरस्कृत्य पितृभक्तिपरायणः।
कृत्वा कृष्णबलिञ्चैव पुरश्चरणपूर्व्वकम् ॥ २१
जप-होमैस्तथा दानैः प्रकुर्य्याद्देहशोधनम्।
कृतेन तेन विघ्नानि विनश्यन्ति खगेश्वर ॥ २२
भूत-प्रेत-पिशाचैर्वा स चेदन्यैः प्रपीड्यते।
पितुद्देशेन वै कुर्य्यान्नारायणबलिं तदा।
विमुक्तः सर्व्वपीड़ाभ्य इति सत्यं वचो मम ॥ २३
पितृपीड़ा भवेद्यत्र कृतोरन्यैर्न मुच्यते।
तस्मात् सर्व्वप्रयत्नेन मयि भक्तिपरो भवेत् ॥ २४
नवमे दशमे वर्षे पितुद्देशेन वै पुमान्।
गायत्त्रीमयुतं जप्त्वा दशांशेन च होमयेत् ॥ २५
कृत्वा कृष्णबलिं पूर्व्वं वृषोत्सर्गादिकाः क्रियाः।
सर्व्वोपद्रवहीनस्तु सर्व्वसौख्यमवाप्नुयात्।
उत्तमं लोकमाप्नोति ज्ञातिप्राधान्यमेव च ॥ २६
पितृमातृसमं लोके नास्त्यन्यद्दैवतं परम्।
तस्मात् सर्व्वप्रयत्नेन पूजयेत् पितरौ सदा ॥ २७
हितानामुपदेष्टा हि प्रत्यक्षदैवतं पिता।

अन्या या देवता लोके न देहप्रभवा हि सा ॥ २८

शरीरमेव जन्तूनां स्वर्गमोक्षैकसाधनम्।
ईदृशो दत्तो हि येनेवं कोऽन्यः पूज्यतमस्ततः ॥ २९

इति सञ्चिन्त्य हृदये पक्षिन् यद्यत् प्रयच्छति।
तत् सर्व्वमात्मना भुङ्क्ते दानं वेदविदो विदुः ॥ ३०

पुन्नामनरकाद्यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्त इह चापि परत्र च ॥ ३१

अपमृत्युमृतौ स्यातां पितरौ कस्यचित् खग।
वर्ष तीर्थ-विवाहादि-श्राद्धं संवत्सरं त्यजेत् ॥ ३२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गारुड़संवादे एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः।

गरुड़ उवाच।

सम्भवन्ति कथं प्रेताः केषां कीदृक् गतिर्भवेत्।
कीदृक् तेषां भवेद्रूपं भोजनं किं भवेत् प्रभो ॥ १

सुप्रीतास्तु कथं प्रेताः क्व तिष्ठन्ति सुरेश्वर।
प्रसन्नः कृपया देव प्रश्नमेतं वदस्व मे ॥ २

श्रीभगवानुवाच।

पापकर्म्मरता ये वै पूर्व्वकर्म्मवशानुगाः।
जायन्ते ते मृताः प्रेतास्तान् शृणुष्व वदाम्यहम् ॥ ३

वापी-कूप-तड़ागांश्च आरामं सुरमन्दिरम्।
प्रपासद्मसत्रच्च तथा भोजनशालिकाः ॥ ४

पितृ-पतामहं धर्म्मं विक्रीणाति स पापभाक्।
मृतः प्रेतत्वमाप्नोति यावदाभूतसंप्लवम् ॥ ५

गोचर-ग्रामसीमाश्च तड़ागारामगह्वरम्।
कर्षयन्ति च ये लोभात् प्रेतास्ते वै भवन्ति हि ॥६

चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युताग्नितः।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मिणाम् ॥ ७

उद्बन्धनमृता ये च विष्णुस्मरणवर्ज्जिताः।
सूतकान् यदि सम्प्राप्य प्रेतभावा इह क्षितौ ॥ ८

एवमादिभिरन्यैश्च कुमृत्युवशगाश्च ये।
ते सर्व्वे प्रेतयोनिस्था विचरन्ति मरुस्थले ॥ ९

मातरं भगिनीं भार्य्यां स्नुषां दुहितरं तथा।
अदृष्टदोषां त्यजति स प्रेतो जायते ध्रुवम् ॥ १०

भ्रातृध्रुग्ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः।
हेम-क्षौमहरस्तार्क्ष्य स वै प्रेतत्वमाप्नुयात् ॥ ११

न्यासापहर्त्ता मित्रध्रुक् परस्त्रीरतस्तथा।
विश्वासघाती क्रूरस्तु स प्रेतो जायते ध्रुवम् ॥ १२

कुलमार्गांश्च सन्त्यज्य परधर्म्मरतस्तथा।
विद्यावृत्तविहीनश्च स प्रेतो जायते ध्रुवम् ॥ १३

अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
युधिष्ठिरस्य संवादं भीष्मेण सह सुव्रत।
तदहं कथयिष्यामि यच्छ्रुत्वा सौख्यमाप्नुयात् ॥ १४

युधिष्ठिर उवाच।

केन कर्म्मविपाकेन प्रेतत्वमुपजायते।
केन वा मुच्यते कस्मात् तन्मे ब्रूहि पितामह।
यच्छ्रुत्वा न पुनर्मोहमेवं यास्यामि सुव्रत ॥ १५

भीष्म उवाच।

येनव जायते प्रेतो येनैव स विमुच्यते।
प्राप्नोति नरकं घोरं दुस्तरं देवतैरपि ॥ १६

सततं श्रवणाद्यस्य पुण्यश्रवणकीर्त्तन।
मानवा विप्रमुच्यन्ते आपन्नाः प्रेतयोनिषु ॥ १७

श्रूयते हि पुरा वत्स ब्राह्मणः संशितव्रतः।
नाम्ना सन्तप्तकः ख्यातस्तपोऽर्थी वनमाश्रितः ॥ १८

स्वाध्याययुक्तो होमेन यागयुक्तो दयान्वितः।
यजन् स सकलान् यज्ञान् युक्त्या कालञ्च विक्षिपन् ॥ १९

ब्रह्मचर्य्यसमायुक्तो युक्तस्तपसि मार्द्दवे।
परलोकभयोपेतः सत्य-शौचैश्च निर्म्मलः ॥ २०

युक्तोऽपि गुरुवाक्येण युक्तश्चातिथिपूजने।
आत्मयोगी सदोद्युक्तः सर्व्वद्वन्द्वविवर्ज्जितः ॥ २१

योगाभ्यासे सदा युक्तः संसारविजिगीषया।
एवंवृत्तः सदाचारी मोक्षकाङ्क्षी जितेन्द्रियः ॥ २२

बह्वन्यब्दानि विजने वने तस्य गतानि वै।
तस्य बुद्धिस्ततो जाता तीर्थानुगमनं प्रति।
कृतजाप्य-नमस्कारो अध्वानं प्रत्यपद्यत ॥ २३

एकस्मिन् दिवसे विप्रो मार्गभ्रष्टो महातपाः।
ददर्शाध्वनि गच्छन् स पञ्चप्रेतान् सुदारुणान् ॥ २४

अरण्ये निर्ज्जने देशे सङ्कटे वृक्षवर्ज्जिते।
पञ्च तान् विकृताकारान् दृष्ट्वा वै घोरदर्शनान्।

संत्रस्तहृदयोऽतिष्ठदुन्मील्य लोचने ॥ २५
अवलम्ब्य ततो धैर्य्यं त्रासमुत्सृज्य दूरतः ।
अपृच्छ मधुराभाषी के यूयं विकृताननाः ॥ २६
किन्त्वाशुभं कृतं कर्म्म येन प्राप्ताः स्थ वैकृतिम् ।
अहं वा चैकतः कर्म्म प्रस्थिताः कुत्र निश्चितम् ॥ २७

प्रेतराज उवाच ।

स्वैः स्वैस्तु कर्म्मभिः प्राप्तं प्रेतत्वं हि द्विज ध्रुवम् ।
परद्रोहरताः सर्व्वे पापमृत्युवशं गताः ॥ २८
क्षुत्पिपासार्द्दिता नित्यं प्रेतत्वं समुपागताः ।
हतवाक्या हतश्रीका हतसंज्ञा विचेतसः ॥ २९
न जानीमो दिशं तात विदिशश्चातिदुःखिताः ।
क्व नु गच्छामहे मूढाः पिशाचाः कर्म्मजा वयम् ॥ ३०
न माता न पितास्माकं प्रेतत्वं कर्म्मभिः स्वकैः ।
प्राप्ताः स्म सहसा जातं दुःखोद्वेगसमाकुलम् ॥ ३१
दर्शनेन च ते ब्रह्मन् मुदिताप्यायिता वयम् ।
मुहूर्त्तं तिष्ठ वक्ष्यामि वृत्तान्तं सर्व्वमादितः ॥ ३२
अहं पर्य्युषितो नाम एष सूचीमुखस्तथा ।
शीघ्रगो रोधकश्चैव पञ्चमो लेखकः स्मृतः ॥ ३३

ब्राह्मण उवाच ।

प्रेतानां कर्म्मजातानां कथं वै नामसम्भवः ।
किञ्चित् कारणमुद्दिश्य येन ब्रूयाः स्वनामकान् ॥ ३४

प्रेतराज उवाच ।

मया स्वादु सदा भुक्तं दत्तं पर्य्युषितं द्विजे ।
एतत् कारणमुद्दिश्य नाम पर्य्युषितं मम ॥ ३५
शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ।
एतत् कारणमुद्दिश्य शीघ्रगोऽयं द्विजोत्तम ॥ ३६
सूचिता बहवोऽनेन विप्रा अन्नादिकाङ्क्षया ।
एतत् कारणमुद्दिश्य एष सूचीमुखः स्मृतः ॥ ३७
एकाकी मिष्टमश्नाति पोष्यवर्गमृते सदा ।
ब्राह्मणानामभावेन रोधकस्तेन चोच्यते ॥ ३८
पुरायं मौनमास्थाय याचितो विलिखिद्भुवम् ।
तेन कर्म्मविपाकेन लेखको नाम चोच्यते ॥ ३९
प्रेतत्वं कर्म्मभावेण प्राप्ता नामानि च द्विजाः ।
मेषाननो लेखकोऽयं रोधकः पर्व्वताननः ॥ ४०
शीघ्रगः पशुवक्त्रश्च सूचकः सूचिवक्त्रवान् ।
दुःखिता नितरां स्वामिन् पश्य रूपविपर्य्ययम् ॥ ४१
कृत्वा मायामयं रूपं विचरामो महीतले ।
सर्व्वे च विकृताकारा लम्बोष्ठा विकृताङ्गकाः ॥ ४२
क्रूरदंष्ट्रिमुखा रौद्रा जाताः स्वेनैव कर्म्मणा ।
एतत् ते सर्व्वमाख्यातं प्रेतत्वे कारणं मया ॥ ४३
ज्ञानिनोऽपि वयं सर्व्वे जाताः स्म तव दर्शनात् ।
यदि ते श्रवणे श्रद्धा तत् पृच्छ कथयामि ते ॥ ४४

ब्राह्मण उवाच ।

ये जीवा भुवि जीवन्ति सर्व्वेऽप्याहारमूलकाः ।
युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः ॥ ४५

प्रेतराज उवाच ।

शृणु चाहारमस्माकं सर्व्वसत्त्वविगर्हितम् ।
यच्छ्रुत्वा गर्हसे ब्रह्मन् भूयो भूयश्च गर्हितम् ॥ ४६
श्लेष्म-मूत्र-पुरीषोत्थं शरीराणां मलैः सह ।
उच्छिष्टैश्चैव चान्यैश्च प्रेतानां भोजनं भवेत् ॥ ४७
गृहाणि चान्यशौचानि प्रकीर्णोपस्कराणि च ।
मलिनानि प्रसूतानि प्रेता भुञ्जन्ति तत्र वै ॥ ४८
नास्ति सत्यं गृहे यत्र न शौचं न च संयमः ।
पतितैर्द्दस्युभिः सङ्गः प्रेता भुञ्जन्ति तत्र वै ॥ ४९
बलिमन्त्रविहीनानि होमहीनानि यानि च ।
स्वाध्यायव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै ॥ ५०
न लज्जा न च मर्य्यादा यदात्र स्त्रीजितो गृही ।
गुरवो यत्र पूज्या न प्रेता भुञ्जन्ति तत्र वै ॥ ५१
यत्र लोभस्तथा क्रोधो निद्रा शोको भयं मदः ।
आलस्यं कलहो नित्यं प्रेता भुञ्जन्ति तत्र वै ॥ ५२
भर्त्तृहीना च या नारी परवीर्य्यं निषिञ्चते ।
वीजं मूत्रसमायुक्तं प्रेता भुञ्जन्ति तत् तु वै ॥ ५३
लज्जा प्रजा प्रते तात वदतो भोजनं स्वकम् ।
यत् स्त्रीरजो योनिगतं प्रेता भुञ्जन्ति तत् तु वै ॥ ५४
निपुणः प्रेतभावेन पृच्छामि त्वां दृढ़व्रत ।
यथा न भविता प्रेत तन्मे वद तपोधन ।
नित्यं मृत्युर्वरं जन्तोः प्रेतत्वं मा भवेत् क्वचित् ॥ ५५

ब्राह्मण उवाच ।

उपवासपरो नित्यं कृच्छ्रचान्द्रायणे रतः ।
व्रतैश्च विविधैः पूतो न प्रेतो जायते नरः ॥ ५६
एकादश्यां व्रतं कुर्व्वन् जागरेण समन्वितम् ।
अपरैः सुकृतैः पूतो न प्रेतो जायते नरः ॥ ५७

दृष्ट्वा वै वाश्वमेधादीन् दद्याद्दानानि यो नरः।
आरामोद्यानवाप्यादिः प्रपायाश्चैव कारकः॥ ५८
कुमारीं ब्राह्मणानान्तु विवाहयति शक्तितः।
विद्यादोऽभयदश्चैव न प्रेतो जायते नरः॥ ५९
शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः।
दुर्म्मृत्युना मृतो यश्च स प्रेतो जायते नरः॥ ६०
अयाज्ययाजकश्चैव याज्यानाञ्च विवर्ज्जकः।
कारुभिश्च रतो नित्यं स प्रेतो जायते नरः॥ ६१
कृत्वा मद्यपसम्पर्कं मद्यपस्त्रीनिषेवणम्।
अज्ञानाद्भक्षयन् मांसं स प्रेतो जायते नरः॥ ६२
ब्रह्मस्वं देवद्रव्यञ्च गुरुद्रव्यं तथैव च।
कन्यां ददाति वित्तेन स प्रेतो जायते नरः॥ ६३

भीष्म उवाच।

एवं ब्रुवति वै विप्रे आकाशे दुन्दुभिस्वनः।
अपतत् पुष्पवर्षञ्च देवैस्तत्र द्विजोपरि॥ ६४
पञ्च देवविमानानि प्रेतानामागतानि वै।
स्वर्गं गता विमानैस्ते दिव्यैः संपृच्छ्य तं मुनिम्॥ ६५
ज्ञानं विप्रस्य सम्भाषात् पुण्यं सङ्कीर्त्तनेन च।
नरः पापविनिर्म्मुक्तः परं पदमवाप्नुयात्॥ ६६

सूत उवाच।

इदमाख्यानकं श्रुत्वा कम्पितोऽश्वत्थपत्रवत्।
मानुषाणां हितार्थाय गरुड़ः पृष्टवान् पुनः॥ ६७

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
भीष्म-युधिष्ठिरसंवादे पञ्चप्रेतो-
पाख्यानं नाम द्वाविं-
शोऽध्यायः॥ २२॥

---

## त्रयोविंशोऽध्यायः।

गरुड़ उवाच।

किं किं कुर्व्वन्ति वै प्रेताः पिशाचत्वव्यवस्थिताः।
वदन्ति वा कदाचित् किं तद्वदस्व सुरेश्वर॥ १

श्रीभगवानुवाच।

तेषां स्वरूपं वक्ष्यामि चिह्नं स्वप्नं यथातथम्।
क्षुत्पिपासार्दितास्ते वै प्रविशेयुः स्ववेश्मनि॥ २
प्रतिष्ठा वायुदेहेषु शयानांस्तु स्ववंशजान्।
तत्र यच्छन्ति लिङ्गानि दर्शयन्ति खगेश्वर॥ ३
स्वपुत्त्र-स्वकलत्राणि स्वबन्धुस्तत्र गच्छति।
हयो गजो वृषो मूर्त्या दृश्यते विकृताननः॥ ४
शयनं विपरीतन्तु आत्मानञ्च विपर्य्ययम्।
उत्थितः पश्यते यस्तु तद्विन्द्यात् प्रेतनिर्म्मितम्॥ ५
स्वप्ने नरो हि निगड़ैर्बध्यते बहुधा यदि।
अन्नञ्च याचते स्वप्ने क्लेशेषः पूर्व्वजो मृतः॥ ६
स्वप्ने यो भुञ्जमानस्य गृहीत्वान्नं पलायते।
आत्मनस्तु परो वापि तृषार्त्तस्तु जलं पिबेत्॥ ७
वृषभारोहणं स्वप्ने वृषभैः सह गच्छति।
उत्प्लुत्य गगनं याति तीर्थं याति क्षुधातुरः॥ ८
स्ववाचां वदते यस्तु गो-वृष-द्विज-वाजिषु।
लिङ्गे गजे तथा देवे भूते प्रेते निशाचरे॥ ९
स्वप्नमध्ये तु पक्षीन्द्र प्रेतलिङ्गान्यनेकधा।
स्वकलत्रं स्वबन्धुं वा स्वसुतं स्वपतिं विभुम्।
विद्यमानं मृतं पश्येत् प्रेतदोषेण निश्चितम्॥ १०
याचते यः परं स्वप्ने क्षुत्तृड्भ्याञ्च परिप्लुतः।
तीर्थं गत्वा ददेत् पिण्डान् प्रेतदोषैर्न संशयः॥ ११
निर्गच्छेद्वा गृहाद्वापि स्वप्ने पुत्रस्तथा पशुः।
पिता भ्राता कलत्रञ्च प्रेतदोषैस्तु पश्यति॥ १२
चिह्नान्येतानि पक्षीन्द्र प्रायश्चित्तं निवेदयेत्।
कृत्वा स्नानं गृहे तीर्थे शिववृक्षे तर्पणं जलैः॥ १३
कृष्णधान्यानि पूजाञ्च प्रदद्याद्वेदपारगे।
होमं कुर्य्याद्यथाशक्ति सम्पूर्णं वाचयेत् सुधीः॥ १४
एतद्धि श्रद्धया यस्तु प्रेतलिङ्गनिदर्शनम्।
पठते शृणुते वापि प्रेतचिह्नं विनश्यति॥ १५

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे त्रयो-
विंशोऽध्यायः॥ २३॥

---

## चतुर्व्विंशोऽध्यायः।

गरुड़ उवाच।

यदुक्तं ब्रह्मणा पूर्व्वमनृतं तद्धि दृश्यते।
वेदैरुक्तन्तु यद्वाक्यं शतं जीवति मानुषः॥ १
जीवन्ति मानुषे लोके सर्व्वे वर्णा द्विजातयः।

...नाश्च न चिरं खण्डे भारतसंज्ञके ॥ २
...तत्र न दृश्येत कस्माद्देव समादिश।
...नाम्ना मृत्युमाप्नोति बालो वा स्थविरो युवा ॥ ३
...धनी निर्धनो वापि सुकुमारः सुरूपवान्।
...विद्वांश्च विद्वांश्च ब्राह्मणाद्यितरो जनः ॥ ४
...रतो योगशीलो महाज्ञानी च यो नरः।
...नरतः श्रीमान् श्रीमानतुलविक्रमः ॥ ५
...मेतद्दशेण जायते वसुधातले।
...मृत्युमवाप्नोति राजा वा श्रोत्रियोऽपि वा ॥६

श्रीभगवानुवाच।

...साधु महाप्राज्ञ यस्य भक्तोऽसि मे प्रियः।
...यतां वचनं गुह्यं नानादेशविनाशनम् ॥ ७
...विहितो मृत्युः शीघ्रमादाय गच्छति।
...प्रवक्ष्यामि पक्षीन्द्र काश्यपेय महाद्युते ॥ ८
...मानुषः शतजीवीति पुरा वेदेन भाषितम्।
...कर्म्मणः प्रभावेण शीघ्रञ्चापि विनश्यति ॥ ९
...वेदानभ्यसनेनैव कुलाचारं न सेवते।
...आलस्यात् कर्म्मणां त्यागो निषिद्धेऽप्यादरः सदा॥१०
यत्र तत्र गृहेऽश्नाति स्वतश्च परतस्तथा।
एतैरन्यैर्महादोषैर्जायते चायुषः क्षयः ॥ ११
अश्रद्दधानमशुचिं नास्तिकं त्यक्तमङ्गलम्।
परद्रोहानृतकरं ब्राह्मणं यतमन्दिरम् ॥ १२
अरक्षकं व्यसनिनं मूर्खं वेदवादवहिष्कृतम्।
प्रजापीड़नकर्त्तारं राजानं यमशासनम्।
प्रापयन्ति वशं मृत्योस्ततो याति च यातनाम् ॥ १३
स्वकर्म्माणि परित्यज्य मुख्यवृत्तानि यानि च।
परकर्म्मरतो नित्यं यमलोकं स गच्छति ॥ १४
शूद्रः करोति यत् किञ्चिद्विजशुश्रूषणं विना।
उत्तमाधममध्यं वा यमलोके स पच्यते ॥ १५
स्नानं दानं जपो होमो स्वाध्यायो देवतार्च्चनम्।
यस्मिन् दिने न सेव्यन्ते स वृथा दिवसो नृणाम्॥१६
अनित्यमध्रुवं देहमनाधारं रसोद्भवम्।
अन्नोदकमयो देहो गुणानन्वेतिचान्वहम् ॥ १७
यत् प्रातः संस्कृतं सायं नूनमन्नं विनश्यति।
तदीयरससम्पुष्टकाये का वत नित्यता ॥ १८
गतं ज्ञात्वा तु पक्षीन्द्र वपुरङ्गं स्वकर्म्मभिः।
नरः पापविनाशाय कुर्व्वीत परमौषधम् ॥ १९
देहः किमन्नदातुः स्विन्निषेक्तुर्म्मातुरब्रवीत्।
उभयोर्वापि बलिनो जलस्याग्नेः शुनोऽपि वा ॥ २०
कस्तत्र परमो यत्नः कृमिविड्भस्मसंज्ञके।
कर्त्तव्यः परमो यत्नः पातकस्य विनाशने ॥ २१
अनेकभवसम्भूतं पातकन्तु त्रिधाकृतम्।
यदा प्राप्नोति मानुष्यं तदा सर्व्वं तपत्यपि ॥ २२
सर्व्वजन्मानि संस्मृत्य विपादौव्रतचेतनः।
अवेच्य गर्भवासांश्च कर्म्मजा गतयस्तथा ॥ २३
मानुष्योदरवासी चेत् तदा भवति पातकी।
अण्डजादिषु भूतेषु यत्र यत्र प्रसर्पति ॥ २४
आधयो व्याधयस्तत्र जरारूपविपर्य्ययः।
गर्भवासादिनिर्म्मुक्तास्त्वज्ञानतिमिरात् ततः ॥ २५
न जानाति खगश्रेष्ठ बालभावं समाश्रितः।
यौवने तिमिरान्धश्च यः पश्यति स मुक्तिभाक् ॥ २६
विना मानुषदेहन्तु सुखं दुःखं न विन्दति।
प्राकृतैः कर्म्मपाशैस्तु मृत्युमाप्नोति मानवः ॥ २७
आधानात् पञ्च वर्षाणि स्वल्पपापैर्विपद्यते।
पञ्चवर्षाधिको भूत्वा महापापैर्विपद्यते ॥ २८
योनिं पूरयते यस्मान्मृतोऽप्यायाति याति च।
मृतो दानप्रभावेण जीवन् मर्त्त्यश्चिरं भुवि ॥ २९

सूत उवाच।

इति कृष्णवचः श्रुत्वा गरुड़ो वाक्यमब्रवीत् ॥ ३०
मृते बाले कथं कुर्य्यात् पिण्डदानादिकाः क्रियाः।
गर्भेषु च विपन्नानामाचूड़ाकरणाच्छिशोः।
कथं किं केन दातव्यं मृतान्ते को विधिः स्मृतः ॥३१
गरुड़ोक्तमिति श्रुत्वा विष्णुर्वाक्यमथाब्रवीत् ॥ ३२

श्रीविष्णुरुवाच।

यदि गर्भो विपद्येत स्रवते वापि योषितः।
यावन्मासस्थितो गर्भस्तावद्दिनमशौचकम्।
तस्य किञ्चिन्न कर्त्तव्यमात्मनः श्रेय इच्छता ॥ ३३
ततो जाते विपत्ते तु आ चूड़ाकरणाच्छिशोः।
दुग्धं भोज्यं यथायुक्ति बालानाञ्च प्रदीयते ॥ ३४
आ चूड़ात् पञ्चवर्षन्तु देहदाहो विधीयते।
दुग्धं तस्य प्रदेयं स्याद्बालानां भोजनं शुभम् ॥ ३५
पञ्चवर्षाधिके प्रेते स्वजातिविहितानि च।

कुर्य्यात् कर्म्माणि सर्व्वाणि चोदकुम्भादिपायसम्॥३६
दातव्यन्तु खगश्रेष्ठ ऋणसम्बन्धकस्तु सः ।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ ३७
कर्त्तव्यं पक्षिशार्दूल पुनर्देहचयाय वै ।
तस्य यद्रोचते देयमदत्त्वा निर्द्धने कुले ॥ ३८
स्वल्पायुर्निर्द्धनो भूत्वा रतिभक्तिविवर्ज्जितः ।
पुनर्जन्माप्नुयान्मर्त्त्यस्तस्माद्देयं मृते शिशोः ॥ ३९
पुराणे गीयते गाथा सर्व्वथा प्रतिभाति मे ।
मिष्टान्नं भोजनं देयं दानं शक्तिस्तु दुर्लभा ॥ ४०
भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ ४१
दानाद्भोगानवाप्नोति सौख्यं तीर्थस्य सेवनात् ।
सुभाषणान्मृतो यस्तु स विद्वान् धर्म्मवित्तमः ॥ ४२

अदत्तदानाच्च भवेद्दरिद्रो
दरिद्रभावाच्च करोति पापम् ।
पापप्रभावान्नरकं प्रयाति
पुनर्दरिद्रः पुनरेव पापी ॥ ४३

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे चतुर्व्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

श्रीविष्णुरुवाच ।

अतः परं प्रवक्ष्यामि पुरुष-स्त्रीविनिर्णयम् ।
जीवन् वापि मृतो वापि पञ्चवर्षाधिकोऽपि वा ॥ १
पूर्णे तु पञ्चमे वर्षे पुमांश्चैव प्रतिष्ठितः ।
सर्व्वेन्द्रियाणि जानाति रूपारूपविपर्य्यये ॥ २
पूर्व्वकर्म्मविपाकेन प्राणिनां बन्धनं भवेत् ।
विप्रादीनन्त्यजान् सर्व्वान् पापमाक्रामति ध्रुवम् ॥ ३
गर्भे नष्टे क्रिया नास्ति दुग्धं देयं मृते शिशोः ।
परञ्च पायसं क्षीरं दद्याद्बालविपत्तितः ॥ ४
एकादशाहं द्वादशाहं वृषञ्च वृषविधिना ।
महादानविहीनञ्च कुमारं कृत्यमादिशेत् ॥ ५
कुमाराणाञ्च बालानां भोजनं वस्त्रवेष्टनम् ।
बाले वा तरुणे वृद्धे घटो भवति वै मृते ॥ ६
भूमौ वा निक्षिपेद्बालं द्विमासेनद्विवार्षिके ।
ततः परं खगश्रेष्ठ देहदाहो विधीयते ॥ ७
शिशुर्वा दन्तजननाद्बालः स्याद्यावदाशिखम् ।
कथ्यते सर्व्वशास्त्रेषु कुमारो मौञ्जिबन्धनात् ॥ ८
शूद्रादीनां कथं कुर्य्यात् संशये मौञ्जिबन्धनात् ।
गर्भाच्च नवमं हित्वा शिशुरामासषोड़शम् ॥ ९
बालस्ताथ परेच्छेय आमासत्सप्तविंशतः ।
आ पञ्चवर्षात् कौमारः पौगण्डो नवहायनः ।
किशोरः षोड़शाब्दः स्यात् ततो यौवनमादिशेत्॥१०
मृतोऽपि पञ्चमे वर्षे अव्रतः सव्रतोपि वा ।
पूर्व्वोक्तमेव कर्त्तव्यमीहते दशपिण्डकम् ॥ ११
स्वल्पकर्म्मप्रसङ्गाच्च स्वल्पादिविषयबन्धनात् ।
स्वल्पाद्वपुषि वस्त्राच्च क्रियां स्वल्पामपीच्छति ॥१२
यावद्रूपवयोजन्तुर्यावद्विषयवेष्टितः ।
यावद्वयस्योपजीव्यं स्यात् तत् तद्देयमिहेच्छति॥१३
ब्रह्मबीजोद्भवाः पुत्रा देवर्षीणाञ्च वल्लभाः ।
यमेन यमदूतैश्च शास्यन्ते निश्चितं खग ॥ १४
बालो वृद्धो युवा वापि घटमिच्छन्ति देहिनः ।
सुखं दुःखं सदा वेत्ति देही च सर्व्वगस्त्विह ॥ १५
परित्यज्य तदात्मानं जीर्णां त्वचमिवोरगः ।
अङ्गुष्ठमात्रः पुरुषो वायुभूतः क्षुधान्वितः ॥ १६
तस्माद्देयानि दानानि मृते बाले सुनिश्चितम् ।
जन्मतः पञ्च वर्षाणि भुक्तादत्तमसंस्कृतम् ॥ १७
पञ्चवर्षाधिके बाले विपत्तिर्यदि जायते ।
वृषोत्सर्गादिकं कर्म्म सपिण्डीकरणं विना ॥ १८
अहन्यहनि सम्प्राप्ते कुर्य्याच्छ्राद्धानि षोड़श ।
पायसेन गुड़ेनापि पिण्डान् दद्याद्यथाक्रमम् ॥१९
उदकुम्भप्रदानञ्च पददानानि चैव हि ।
भोजनानि द्विजे दद्यान्महादानानि शक्तितः ।
दीपदानानि यत् किञ्चित् पञ्चवर्षाधिके सदा ॥ २०
कर्त्तव्यञ्च खगश्रेष्ठ व्रतार्व्वाक् प्रेतपद्धती ।
यदा न क्रियते सर्व्वं मुद्गलत्वं स गच्छति ॥ २१
व्रतार्व्वागेव देयन्तु ततः पितृगणस्य च ।
स्वाहाकारेण वै कुर्य्यादेकोद्दिष्टानि षोड़श ॥ २२
ऋजुदर्भैस्तिलैः सूक्तैः प्राचीनावीतिनिश्चितम् ।
अपसव्यञ्च कर्त्तव्यं कृते यान्ति परां गतिम् ॥ २३
पुनश्चिरायुषो भूत्वा जायन्ते सत्कुले ध्रुवम् ।

सर्व्वसौख्यप्रदाः पुत्त्राः पित्रोः प्रीतिविवर्द्धनाः ॥ २४
आकाशमेकं हि यथा चन्द्रादित्यौ यथैकतः।
घटादिषु पृथक् सर्व्वं पश्य रूपञ्च तत्समम्।
आत्मा तथैव सर्व्वेषु पुत्त्रेषु विचरेत् सदा ॥ २५
या यस्य प्रकृतिः पूर्व्वं शुक्र-शोणितसङ्गमे।
ता तेन भावयोगेन पुत्त्रास्तत्कर्म्मकारिणः ॥ २६
पितृरूपं समादाय कस्यचिज्जायते सुतः।
पितृतः कोऽपि रूपाढ्यो गुणाढ्यो दानतत्परः ॥ २७
सदृशः कोऽपि लोकेऽस्मिन् न भूतो न भविष्यति।
अन्धादन्धो न भवति मूकान्मूको न जायते ॥ २८
बधिराद्बधिरो नैव विद्यावान् विदुषो न हि।
अनुरूपा न दृश्यन्ते मदीयवचनं शृणु ॥ २९

गरुड़ उवाच।

औरस-क्षेत्रजाद्याश्च पुत्त्रा दशविधाः स्मृताः।
संगृहीतासुतो यस्तु दासीपुत्त्रश्च तेन किम् ॥ ३०
कां कां गतिमवाप्नोति जातो मृत्युवशं गतः ॥ ३१
अविद्धि दुहिता यस्य न दौहित्रो न वा सुतः।
श्राद्धं तस्य कथं कार्य्यं विधिना केन तद्भवेत् ॥ ३२

श्रीभगवानुवाच।

मुखं दृष्ट्वा तु पुत्त्रस्य मुच्यते पैतृकादृणात्।
पौत्त्रस्य दर्शनाज्जन्तुर्मुच्यते सर्व्वकिल्बिषात्।
लोकानन्त्यं दिवः प्राप्तिः पुत्त्र-पौत्त्र-प्रपौत्त्रकैः ॥ ३३
अन्यक्षेत्रोद्भवाद्या ये भुक्तिमात्रप्रदाः सुताः।
कुर्व्वीत पार्व्वणश्राद्धमौरसो विधिवत् सुतः ॥ ३४
कुर्व्वन्त्यन्ये सुताः श्राद्धमेकोद्दिष्टं न पार्व्वणम्।
श्राद्धं सांवत्सरं कुर्व्वन् जायते नरकाय वै।
सर्व्वदानानि देयानि अन्नदानादृते खग ॥ ३५
संगृहीतासुतः कुर्य्यादेकोद्दिष्टं न पार्व्वणम्।
प्रत्यब्दं पितृमातृभ्यां श्राद्धं दत्त्वा न लिप्यते ॥ ३६
एकोद्दिष्टं परित्यज्य पार्व्वणं कुरुते यदि।
आत्मानञ्च पितॄंश्चैव स नयेद्यममन्दिरम् ॥ ३७
संगृहीतास्तु ये केचिद्दासीपुत्त्रादयश्च ये।
तीर्थं कुर्य्युः पितृश्राद्धं दानं दद्युर्द्विजन्मने ॥ ३८
संगृहीतसुतो भूत्वा पाकं वा यः प्रयच्छति।
न प्रीणयति तच्छ्राद्धं पितामहसुखान् पितॄन् ॥ ३९
एवं ज्ञात्वा खगश्रेष्ठ हीनजातीन् सुतांस्त्यजेत्।
ब्राह्मण्यां ब्राह्मणाज्जातश्चाण्डालादधमः स्मृतः ॥ ४०
यस्तु प्रव्रजिताज्जातो ब्राह्मण्यां शूद्रतश्च यः।
द्वावेतौ विद्धि चाण्डालौ सगोत्राद्यस्तु जायते ॥ ४१
स्वजातिविहितान् पुत्त्रान् समुत्पाद्य खगेश्वर।
तैः सुवृत्तैः सुखं प्राप्य कुवृत्तैर्नरकं व्रजेत् ॥ ४२
हीनजातिसमुद्भूतैः सुवृत्तैः सुखमेधते ॥ ४३
कलिकलुषविमुक्तः पूजितः सिद्धसङ्घैः
रमरवदुसमानो वीज्यमानोऽप्सरोभिः।
पितृशतमपि बन्धून् पुत्त्र-पौत्त्र-प्रपौत्त्रा-
नपि नरकनिमग्नानुद्धरेदेक एव ॥ ४४

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः।

गरुड़ उवाच।

सत्यं ब्रूहि सुरश्रेष्ठ कृपां कृत्वा ममोपरि।
मृतानाञ्चैव जन्तूनां कदा कुर्य्यात् सपिण्डनम् ॥ १
सपिण्डने कुतो याति असपिण्डे कुतो गतिः।
केनैव सहपिण्डत्वं स्त्री पुमान् वक्तुमर्हसि ॥ २
स्त्री-पुमांसौ सहैकत्वं प्राप्नुतः कथमुत्तमम्।
जीवद्भर्त्तरि नारीणां सपिण्डीकरणं कुतः ॥ ३
भर्त्तृलोकं कथं यान्ति स्वर्गलोकं सुरेश्वर।
अन्वारोहे कथं श्राद्धं वृषोत्सर्गं कथं भवेत् ॥ ४
घटदानं कथं कार्य्यं सपिण्डीकरणे कृते।
कथयस्व प्रसादेन हिताय जगतां प्रभो ॥ ५

श्रीभगवानुवाच।

यथावत् कथयिष्यामि सपिण्डीकरणं खग।
वर्षं यावत् खगश्रेष्ठ यदाचरति मानवः ॥ ६
सपिण्डने ततो वृत्ते पितृलोकं स गच्छति।
तस्मात् पुत्त्रेण कर्त्तव्यं सपिण्डीकरणं पितुः ॥ ७
संवत्सरे तु सम्पूर्णे कुर्य्यात् पिण्डप्रवेशनम्।
पिण्डप्रवेशविधिना तस्य नित्यं मृताह्निकम् ॥ ८
निश्चितं पक्षिशार्दूल वर्षान्ते पिण्डमेलनम्।
सहपिण्डे कृते प्रेतस्ततो याति परां गतिम्।

तन्नाम सम्परित्यज्य ततः पितृगणो भवेत् ॥ ९
त्रिपक्षे वापि षण्मासे मेलयेत् प्रपितामहैः ।
कृत्वा वृद्धिविवाहादि-स्वगोत्रविहितानि च ॥ १०
विवाहं नैव कुर्व्वीत मृते च गृहमेधिनि ।
भिक्षुर्भिक्षां न गृह्णाति यावत् कुर्य्यात् सपिण्डनम् ॥ ११
स्वगोत्रेऽप्यशुचिस्तावद्यावत् पिण्डं न मेलयेत् ।
मेलनात् प्रेतशब्दस्तु निवर्त्तेत खगेश्वर ॥ १२
आनन्त्यात् कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥ १३
निरग्निकः साग्निको वा द्वादशाहे सपिण्डयेत् ॥ १४
द्वादशाहे त्रिपक्षे वा षण्मासे वत्सरेऽपि वा ।
सपिण्डीकरणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ १५
अपुत्रस्य न कर्त्तव्यमेकोद्दिष्टं कदाचन ।
सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ॥ १६
तत्र तत्र त्रयं कार्य्यमन्यथा पितृघातकः ।
त्रिभिः कुर्य्यादशक्तश्च पार्व्वणं मुनिनोदितम् ॥ १७
तद्दिने तद्दिने कुर्य्यात् पितामहमुखान्यतः ।
अज्ञानाद्दिनमासानां तस्मात् पार्व्वणमिष्यते ॥ १८
अनुत्पन्नशरीरस्य न दानं पितृभिः सह ।
एतैः षोड़शभिः श्राद्धैः प्रेतो मुक्तस्तु जायते ॥ १९
अपुत्रस्य सपिण्डत्वं नैव कुर्य्यात् स्त्रियाश्च वा ।
यावज्जीवं प्रकुरुते न कुर्य्यात् सहपिण्डताम् ॥ २०
ब्राह्मादिषु विवाहेषु या वधूरिह संस्कृता ।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥ २१
आसुरादिविवाहेषु या व्यूढ़ा कन्यका भवेत् ।
तस्यास्तु पितृगोत्रेण कुर्य्यात् पिण्डोदकक्रियाम् ॥ २२
पितुः पुत्रेण कर्त्तव्यं सपिण्डीकरणं सदा ।
पुत्राभावे तु पत्नी स्यात् पत्न्यभावे सहोदरः ॥ २३
भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सपिण्डनक्रियां कृत्वा कुर्य्यान्नान्दीमुखं ततः ॥ २४
ज्येष्ठस्यैव कनिष्ठेन भ्रातृपुत्रेण भार्य्यया ।
सपिण्डीकरणं कार्य्यं पुत्रहीने नरे खग ॥ २५
भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।
सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ २६
सर्व्वेषां पुत्रहीनानां पत्नी कुर्य्यात् सपिण्डनम् ।
ऋत्विजा कारयेद्वापि पुरोहितमथापि वा ॥ २७
कृतचूड़ोपनीतश्च पितुः श्राद्धं समाचरेत् ।
उच्चारयेत् स्वधाकारं न तु वेदाक्षराण्यसौ ॥ २८
भर्त्रादिभिस्त्रिभिः कार्य्यं सपिण्डीकरणं स्त्रियाः ।
पितृव्यभ्रातृपुत्रेण सोदरेण कनीयसा ॥ २९
अर्व्वाक् संवत्सरात् सन्धौ पूर्णे संवत्सरेऽपि वा ।
ये सपिण्डीकृताः प्रेतास्तेषां न स्यात् पृथक्क्रिया ३०
सपिण्डने कृते वत्स पृथक्त्वान्तु विगर्हितम् ।
यस्तु कुर्य्यात् पृथक्पिण्डं पितृहा सोऽभिजायते ३१
सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।
पृथक्पिण्डे कृते पश्चात् पुनः कुर्य्यात् सपिण्डनम् ॥ ३२
सपिण्डीकरणं कृत्वा एकोद्दिष्टं करोति यः ।
आत्मानञ्च तथा प्रेतं स नयेद्यमशासनम् ॥ ३३
वर्षं यावत् क्रिया कार्य्या नामगोत्रेण धीमता ।
घटादिभाजनं नित्यं पददानानि यानि च ।
सपिण्डीकरणे वृत्ते एकस्यैव तु दापयेत् ॥ ३४
अन्नं पानीयसहितं संख्यां कृत्वाब्दिकस्य च ।
दातव्यं ब्राह्मणे पक्षिन् जलपूर्णघटादिकम् ॥ ३५
पिण्डान्ते तस्य सकला वर्षवृत्तिः स्वशक्तितः ।
दिव्यदेहो विमानस्थः सुखं याति यमालयम् ॥ ३६
जीवमाने च पितरि न हि पुत्रे सपिण्डता ।
स्त्रीणां सपिण्डनं नास्ति तथा भर्त्तरि जीवति ॥ ३७
हुताशं या समारूढ़ा चतुर्थेऽह्नि पतिव्रता ।
तस्या भर्तृदिने कार्य्यं वृषोत्सर्गादिकञ्च यत् ॥ ३८
पुत्रिका पतिगोत्रा स्यादधस्तात् पुत्रजन्मनः ।
पुत्रोत्पत्तेः पुरस्तात् सा पितृगोत्रं व्रजेत् पुनः ॥ ३९
पति-पत्न्योः सदैकत्वं हुताशं याधिरोहति ।
पुत्रेणैव पृथक्श्राद्धं क्षयाहे तस्य वासरे ॥ ४०
अपुत्रौ वै मृतौ स्यातामेकचित्यां समेऽहनि ।
पृथक् श्राद्धानि कुर्व्वीत सपिण्डं पतिना सह ॥ ४१
पृथक् पृथक् च पिण्डेन दम्पती पतिना सह ।
न लिप्यते महादोषैरेतत् सत्यं वचो मम ॥ ४२
एकचित्यां समारूढ़ौ दम्पतीनिधनं गतौ ।
एकपाकं प्रकुर्व्वीत पिण्डान् दद्यात् पृथक् पृथक् ४३
एकादशे वृषोत्सर्गं प्रेतश्राद्धानि षोड़श ।
घटादिपददानानि महादानानि यानि च ।
वर्षं यावत् पृथक् कुर्य्यात् प्रेतस्तृप्तिं व्रजेच्चिरम् ॥ ४४

एकगोत्र मृतानान्तु स्त्रिया वा पुरुषस्य वा ।
स्थण्डिलञ्चैकतः कुर्य्याद्धोमं कुर्य्यात् पृथक् पृथक् ॥ ४५
एकादशेऽह्नि यच्छ्राद्धं पृथक् पिण्डाश्च भाजनम् ।
पाकैकेन पतिस्त्रीणामन्येषाञ्च विगर्हितम् ॥ ४६
एकेनैवतु पाकेन श्राद्धानि कुरुते बहु ।
एकन्तु विकिरं कुर्य्यात् पिण्डान् दद्याद्बहूनपि ।
तीर्थे चापरपक्षे वा चन्द्र-सूर्य्यग्रहेऽपि वा ॥ ४७
नारी भर्त्तारमासाद्य कुणपं दहते यदा ।
अग्निर्दहति गात्राणि आत्मानं नैव पीड़येत् ॥ ४८
दह्यते ध्मायमानानां धातूनां हि यथामलम् ।
तथा नारी दहेद्देहं हुताशे त्वमृतोपमे ॥ ४९
दिव्यादौ दिव्यदेहस्तु शुद्धो भवति पूरुषः ।
तप्ततैलेन लोहेन वह्निना नैव दह्यते ॥ ५०
तथा सा पतिसंयुक्ता दह्यते न कदाचन ।
अन्तरात्मा मृते तस्मिन् मृतोऽप्येकत्वमागतः ॥ ५१
भर्त्तृसङ्गं परित्यज्य यान्यत्र म्रियते यदि ।
भर्त्तृलोकं न सा याति यावदाभूतसंप्लवम् ॥ ५२
बह्वीसुतान् परित्यज्य मातरं पितरं तथा ।
मृतं पतिमनुव्रज्य सा चिरं सुखमेधते ॥ ५३
दिव्यवर्षप्रमाणेन तिस्रः कोट्योऽर्द्धकोटयः ।
तावत्कालं वसेत् स्वर्गे नक्षत्रैः सह सर्व्वदा ॥ ५४
तदन्ते चरते लोके कुले भवति भोगिनाम् ।
सा हि लब्धमहाप्रीतिर्भर्त्रा सह पतिव्रता ॥ ५५
एवं न कुरुते नारी धर्म्मोढ़ा पतिसङ्गमे ।
जन्मजन्मनि दुःखार्त्ता दुःशीलाऽप्रियवादिनी ॥ ५६
वल्गुनी गृहगोधा वा गोधा वा द्विमुखी भवेत् ।
स्वभर्त्तारं परित्यज्य परपुंस्यनुवर्त्तिनी ॥ ५७
तस्मात् सर्व्वप्रयत्नेन स्वपतिं स्त्री निषेवते ।
मनसा कर्म्मणा वाचा मृतं जीवन्तमेव वा ॥ ५८
जीवमाने मृते वापि किल्बिषं कुरुते तु या ।
सा च वैधव्यमाप्नोति जन्मजन्मनि दुर्भगा ॥ ५९
यद्देवेभ्यो यत् पितृभ्यः श्रद्धयैव प्रदीयते ।
तत् फलं भर्त्तृपूजातः कुर्य्याद्भर्त्तृर्च्चनं ततः ॥ ६०
एवं कृते खगश्रेष्ठ पितृलोके चिरं वसेत् ।
यावदादित्य-चन्द्रौ च तावद्देवसमा दिवि ॥ ६१
पुनश्चिरायुषो भूत्वा जायन्ते विपुले कुले ।
पतिव्रता यथा नारी भर्त्तृदुःखं न विन्दति ॥ ६२
सर्व्वमेतद्धि कथितं मया तव खगेश्वर ।
विशेषं कथयिष्यामि मृतस्यैव सुखप्रदं ॥ ६३
द्वादशाहे कृतं सर्व्वं वर्षं यावत् सपिण्डनम् ।
पुनः कुर्य्यात् सदा नित्यं घटान्नं प्रतिमासिकम् ॥ ६४
कृतस्य करणं नास्ति प्रेतकार्य्यादृते खग ।
यः करोति नरः कश्चित् कृतं पूर्व्वं विनश्यति ॥ ६५
मृतस्यैव पुनः कुर्य्यात् प्रेतोऽक्षय्यमवाप्नुयात् ।
प्रतिमासं घटा देया सोदना जलपूरिताः ॥ ६६
अर्व्वाक् च वृद्धेः करणाच्च तार्क्ष्य
सपिण्डनं यः कुरुते हि पुत्रः ।
तथापि मासं प्रतिपिण्डमेक-
मन्नञ्च कुम्भं सजलञ्च दद्यात् ॥ ६७

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे षड्-
विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ।

तार्क्ष्य उवाच ।

कथं प्रेता वसन्त्यत्र कीदृग्रूपा भवन्ति ते ।
महाप्रेताः पिशाचाश्च कैः कैः कर्म्मफलैर्विभो ।
सर्व्वेषामनुकम्पार्थं ब्रूहि मे मधुसूदन ॥ १
प्रेतत्वान्मुच्यते येन दानेन च शुभेन च ।
तन्मे कथय देवेश मम चेदिच्छसि प्रियम् ॥ २

श्रीकृष्ण उवाच ।

साधु पृष्टं त्वया तार्क्ष्य मानुषाणां हिताय वै ।
शृणुष्वावहितो भूत्वा वक्ष्यामि प्रेतलक्षणम् ॥ ३
गुह्याद्गुह्यतरं ह्येतन्नाख्येयं यस्य कस्यचित् ।
भक्तस्त्वं हि महाबाहो तेन ते कथयाम्यहम् ॥ ४
पुरा त्रेतायुगे तात राजासीद्बभ्रुवाहनः ।
महोदयपुरे रम्ये धर्म्मनिष्ठो महाबलः ॥ ५
यज्वा दानपतिः श्रीमान् ब्रह्मण्यः साधुसम्मतः ।
शीलाचारगुणोपेतो दयादाक्षिण्यसंयुतः ॥ ६
प्रजाः पालयते नित्यं पुत्रानिव महाबलः ।
क्षत्रधर्म्मरतो नित्यं स दण्ड्यान् दण्डयन् नृपः ॥ ७

स कदाचिन्महाबाहुःससैन्यो मृगयां गतः (क)।
वनं विवेश गहनं नानावृक्षसमन्वितम् ॥ ८
शार्दूलशतसंजुष्टं नानापक्षिनिनादितम्।
वनमध्ये तदा राजा मृगं दूरादपश्यत ॥ ९
तेन विद्धो मृगोऽतीव वाणेन सुदृढ़ेन च।
बाणमादाय तं तस्य स वनेऽदर्शनं ययौ ॥ १०
कक्षे तच्छोणितस्रावात् स राजानुजगाम तम्।
ततो मृगप्रसङ्गेन वनमन्यद्विवेश सः ॥ ११
क्षुत्क्षामोत्कण्ठनृपतिः श्रमसन्तापमूर्च्छितः।
जलस्थानं समासाद्य साश्व एवावगाहत ॥ १२
पीत्वा तदुदकं शीतं पद्मगन्धाधिवासितम्।
तत उत्तीर्य्य सलिलाद्विमलाद्वभ्रुवाहनः ॥ १३
न्यग्रोधवृक्षमासाद्य शीतच्छायं मनोहरम्।
महाविटपिनं हृद्यं पक्षिसङ्घातनादितम् ॥ १४
वनस्य तस्य सर्व्वस्य केतुभूतमिवोच्छ्रितम्।
तं महातरुमासाद्य निषसाद महीपतिः ॥ १५
अथ प्रेतं ददर्शासौ क्षुत्तृषाव्याकुलेन्द्रियम्।
उत्कचं मलिनं कुब्जं निर्म्मांसंभीमदर्शनम् ॥ १६
तं दृष्ट्वा विकृतं घोरं विस्मितो बभ्रुवाहनः।
प्रेतोऽपि दृष्ट्वा तां घोरामटवीमागतं नृपम् ॥ १७
तदा हृष्टमना भूत्वा तस्यान्तिकमुपागतः।
अब्रवीत् स तदा तार्क्ष्य प्रेतराजो नृपं वचः ॥ १८
प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि परमां गतिम्।
त्वत्संयोगान्महाबाहो नास्ति धन्यतरो मम ॥ १९

नृपतिरुवाच।

कृष्णवर्णकरालास्यस्त्वं प्रेत इव लक्ष्यसे।
कथयस्व मम प्रीत्या यथायच्चासि तत्त्वतः ॥ २०
तथा पृष्टः स वै राज्ञा प्रोवाच सकलं स्वकम् ॥ २१

प्रेत उवाच।

कथयामि नृपश्रेष्ठ सर्व्वमेवादितस्तव।
प्रेतत्वे कारणं श्रुत्वा दयां कर्त्तुं ममार्हसि ॥ २२
वैदिशं नाम नगरं सर्व्वसम्पत्समन्वितम्।
नानाजनपदाकीर्णं नानारत्नसमाकुलम्।
नानापुण्यसमायुक्तं नानावृक्षसमाकुलम् ॥ २३
तत्राहं न्यवसं भूयो देवार्च्चनरतः सदा।
वैश्यो जात्या सुदेवोऽहं नाम्ना विदितमस्तु ते ॥ २४
हव्येन तर्पिता देवाः कव्येन पितरस्तथा।
विविधैर्दानयोगैश्च विप्राः सन्तर्पिता मया ॥ २५
आवाहाश्च विवाहाश्च मया वै सुनिवेशिताः।
दीनानाथविशिष्टेभ्यो मया दत्तमनेकधा (क) ॥२६
तत् सर्व्वं विफलं तात मम दैवादुपागतम्।
यथा मे निष्फलं जातं सुकृतं तद्वदामि ते ॥ २७
न मेऽस्ति सन्ततिस्तात न सुहृन्न च बान्धवः।
न च मित्रं हि मे तादृग्यः कुर्य्यादौर्द्ध्वदैहिकम्॥२८
प्रेतत्वं सुस्थिरं तेन मम जातं नृपोत्तम ॥ २९
एकादशं त्रिपक्षञ्च षाण्मासिकमथाब्दिकम्।
प्रतिमास्यानि चान्यानि एवं श्राद्धानि षोड़श ॥ ३०
यस्यैतानि न दीयन्ते प्रेतश्राद्धानि भूपते।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ ३१
एवं ज्ञात्वा महाराज प्रेतत्वादुद्धरस्व माम्।
वर्णानाञ्चापि सर्व्वेषां राजा बन्धुरिहोच्यते ॥३२
तन्मां तारय राजेन्द्र मणिरत्नं ददामि ते।
यथा मम शुभावाप्तिर्भवेन्नृपवरोत्तम ॥ ३३
तथा कार्य्यं महाबाहो कृपा यदि ममोपरि।
आत्मनश्च कुरु क्षिप्रं सर्व्वमेवौर्द्ध्वदैहिकम् ॥ ३४

नृपतिरुवाच।

कथं प्रेता भवन्तीह कृतैरप्यौर्द्ध्वदैहिकैः।
पिशाचाश्च भवन्तीह कर्म्मभिः कैश्च तद्वद ॥ ३५

प्रेत उवाच।

ब्रह्मस्वं देवद्रव्यञ्च स्त्रीणां बालधनं तथा।
ये हरन्ति नृपश्रेष्ठ प्रेतयोनिं व्रजन्ति ते ॥ ३६
तापसीञ्च सगोत्राञ्च अगम्यां ये भजन्ति हि।
भवन्ति ते महाप्रेता अनुजा निहरन्ति ये ॥ ३७
प्रवालवज्रहर्त्तारो ये च वस्त्रापहारकाः।
तथा हिरण्यहर्त्तारः संयुगेऽसन्मुखागताः ॥ ३८
कृतघ्ना नास्तिका रौद्रास्तथा साहसिका नराः।
पञ्चयज्ञविनिर्म्मुक्ता महादानरताश्च ये।
एवमाद्या महाराज जायन्ते प्रेतयोनयः ॥ ३९

राजोवाच।

कथं मुक्ता भवन्तीह प्रेतत्वात् ब्रूहि तेऽपि च।

(क) मृगयां गन्तुमुद्यत इति पाठान्तरम्।

(क) दीनान्धकृपणेभ्यश्च दत्तमन्नमनेकधेति पाठः क्वाचित्कः

...पि मया कार्य्यमौर्द्ध्वदेहिकमात्मनः ।
...ना केन तत् कार्य्यं सर्व्वमेतद्वदस्व मे ॥ ४०
प्रेत उवाच ।
...श्रवणं विष्णोः पूजा सज्जनसङ्गतिः ।
...निर्विनाशाय भवन्तीति मया श्रुतम् ॥ ४१
...वच्यामि ते विष्णुपूजां प्रेतत्वनाशिनीम् ॥ ४२
...र्णद्वयमाहृत्य मूर्त्तिं भूप प्रकल्पयेत् ।
...रायणस्य देवस्य सर्व्वाभरणभूषिताम् ।
...वस्त्रयुगाच्छन्नां चन्दनागुरुचर्च्चिताम् ॥ ४३
...र्व्वैर्विविधैस्तोयैरधिवास्य यजेत् ततः ।
...तु श्रीधरं देवं दक्षिणे मधुसूदनम् ॥ ४४
...मे वामनं देवमुत्तरे च गदाधरम् ।
...पितामहं पूज्य तथा देवं महेश्वरम् ।
...च विधानेन गन्धपुष्पादिभिः पृथक् ॥ ४५
...ः प्रदक्षिणीकृत्य अग्नौ सन्तर्प्य देवताः ।
...न दध्ना क्षीरेण विश्वेदेवांस्तथा नृप ॥ ४६
...ः स्नातो विनीतात्मा यजमानः समाहितः ।
...रायणाग्रे विधिवत् स्वक्रियामौर्द्ध्वदेहिकीम् ॥ ४७
...रभेत विनीतात्मा क्रोध-लोभविवर्ज्जितः ।
...द्धानि कुर्य्यात् सर्व्वाणि वृषस्योत्सर्ज्जनं तथा ॥ ४८
...योदशानां विप्राणां युगच्छत्राण्युपानहौ ।
...ङ्गुलीयकयुक्तानि भाजनासनभोजनैः ॥ ४९
...न्नाश्च सोदका देया घटाः प्रेतहिताय वै ।
...य्यादानमथो दत्त्वा घटं प्रेतस्य निर्व्वपेत् ॥ ५०
नारायणेति सन्नाम संपुटस्थं समर्च्चयेत् ।
एवं कृत्वाथ विधिवच्छुभाशुभफलं लभेत् ॥ ५१
राजोवाच ।
कथं प्रेतघटं कुर्य्याद्दद्यात् केन विधानतः ।
ब्रूहि सर्व्वानुकम्पार्थं घटं प्रेतविमुक्तिदम् ॥ ५२
प्रेत उवाच ।
साधु पृष्टं महाराज कथयामि निबोध ते ।
प्रेतत्वं न भवेद्येन दानेन सुदृढ़ेन च ॥ ५३
दानं प्रेतघटं नाम सर्व्वाशुभविनाशनम् ।
...मं सर्व्वलोकानां दुर्गतिक्षयकारकम् ॥ ५४
सन्तप्तहाटकमयन्तु घटं विधाय
ब्रह्मेश-केशवयुतं सह लोकपालैः ।
क्षीराज्यपूर्णविवरं प्रणिपत्य भक्त्या
विप्राय देहि तव दानशतैः किमन्यैः ॥ ५५
ब्रह्मा मध्ये तथा विष्णुः शङ्करः शङ्करोऽव्ययः ।
प्राच्यादिषु च तत्कण्ठे लोकपालान् क्रमेण तु ॥ ५६
सम्पूज्य विधिवद्राजन् धूपैः कुसुमचन्दनैः ।
ततो दुग्धाज्यसहितं घटं देयं हिरण्मयम् ॥ ५७
सर्व्वदानाधिकञ्चैतन्महापातकनाशनम् ।
कर्त्तव्यं श्रद्धया राजन् प्रेतत्वविनिवृत्तये ॥ ५८
श्रीभगवानुवाच ।
एवं संजल्पतस्तस्य प्रेतेन नियतात्मनः ।
सेनाजगामानुपदं हस्त्यश्वरथसङ्कुला ॥ ५९
ततो बले समायाते दत्त्वा राज्ञे महामणिम् ।
नमस्कृत्य पुनः प्रार्थ्य प्रेतोऽदर्शनमीयिवान् ॥ ६०
तस्माद्वनाद्विनिष्क्रम्य राजापि स्वपुरं ययौ ।
स्वपुरं स समासाद्य सर्व्वं तत् प्रेतभाषितम् ॥ ६१
चकार विधिवत् पक्षिन्नौर्द्ध्वदेहादिकं विधिम् ।
तस्य पुण्यप्रदानेन प्रेतो मुक्तो दिवं ययौ ॥ ६२
श्राद्धेन परदत्तेन गतः प्रेतोऽपि सद्गतिम् ।
किं पुनः पुत्रदत्तेन पिता यातीति चाद्भुतम् ॥ ६३
इतिहासमिमं पुण्यं शृणोति श्रावयेच्च यः ।
न तौ प्रेतत्वमायातः पापाचारयुतावपि ॥ ६४

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे बभ्रुवाहन-प्रेतसंस्कारो नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ।

गरुड़ उवाच ।

किमेतत् कथितं देव विस्तरेण वदस्व मे ।
आसुप्तिकीं क्रियां देव उत्क्रान्तिसमयादनु ॥ १
संसारसाधु मे नाथ ब्रूहि कृत्यं जनार्द्दन ।
यथा कार्य्या नरैः सम्यक् क्रिया चैवौर्द्ध्वदेहिकी ॥ २
कथं प्रेता महाकाया रौद्ररूपा भयानकाः ।
सम्भवन्ति सुरश्रेष्ठ कर्म्मभिः कैः शुभाशुभैः ॥ ३
पिशाचाः सम्भवन्तीह कस्येदं कर्म्मणः फलम् ।
तन्मे कथय देवेश अहमिच्छामि वेदितुम् ॥ ४

भूम्यां प्रक्षिप्यते कस्मात् पञ्चरत्नं कुतो मुखे ।
अधस्ताच्च तिला दर्भाः पादौ याम्यां व्यवस्थिताः ॥ ५
किमर्थं मण्डलं भूमौ गोमयेनोपलिप्यते ।
किमर्थं स्मर्य्यते विष्णुर्विष्णुसूक्तञ्च पठ्यते ॥ ६
किमर्थं पुत्रपुत्राश्च तिष्ठन्ति तस्य चाग्रतः ।
किमर्थं दीपदानञ्च किमर्थं विष्णुपूजनम् ॥ ७
किमर्थमातुरो दानं ददाति द्विजपुङ्गवे ।
बन्धून् मित्राण्यमित्रांश्च क्षमापयति तत् कथम् ॥ ८
तिला लोहं हिरण्यञ्च कार्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गावो दीयते केन हेतुना ॥ ९
कथञ्च म्रियते जन्तुर्मृतस्य च कुतो गतिः ।
अतिवाहशरीरञ्च कथं विश्रमते तदा ॥ १०
शवं स्कन्धे वहेत् पुत्रो वह्निदाता च पौत्रकः ।
किमर्थं देव देवेश आज्येनाभ्यञ्जनं कृतः ॥ ११
यमसूक्तं किमर्थञ्च उदीचीं दिशमाहरेत् ।
पानीयमेकवस्त्रेण सूर्य्यबिम्बनिरीक्षणम् ॥ १२
यव-सर्षप-दूर्व्वांश्च पाषाणे निम्बचर्व्वणम् ।
वस्त्रं नरस्य नारी च विदध्यादधरोत्तरम् ॥ १३
अन्नाद्यं गृहमागत्य भोक्तव्यं गोत्रिभिः सह ।
नवकानि च पिण्डानि किमर्थं वितरेत् सुतः ॥ १४
किमर्थं चत्वरे दुग्धं पात्रे पक्के च मृण्मये ।
काष्ठत्रयं गुणे बद्धा कृत्वा रात्रौ चतुष्पथे ॥ १५
निशायां दीयते दीपो यावदब्दं दिने दिने ।
दाहोदकं किमर्थञ्च संवादः स्वजनैः सह ॥ १६
भगवन्नतिवाहस्य नवपिण्डैस्तु किं भवेत् ।
कथं देवपितृभ्यश्च वाहस्यावाहनं कथम् ।
द्रवञ्च क्रियते देव कस्मात् पिण्डं प्रदापयेत् ॥ १७
किं तत् प्रदीयते तस्य पिण्डदानादनन्तरम् ।
अस्थिसञ्चयनञ्चैव शय्यादानं किमर्थकम् ॥ १८
द्वितीयेऽह्नि कुतः स्नानं चतुर्थे साग्निके द्विजे ।
दशमे किं मलस्नानं कार्य्यं सर्व्वजनैः सह ॥ १९
कस्मात् तैलोद्वर्त्तनञ्च स्कन्धवाहान् गृहं नयेत् ।
तैः समुद्वर्त्तनञ्चापि दद्युः स्थल-जलाश्रये ॥ २०
दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ।
पिण्डश्चैकादशे कस्माद्वृषोत्सर्गः कथं भवेत् ॥ २१
श्राद्धानि षोड़शैतानि अब्दं यावत् कुतो वद ।
अन्नादौ नोदकेनैव षष्ट्यधिकशतत्रयम् ॥ २२
दिने दिने च दातव्यं घटान्नं प्रेततृप्तये ।
प्राप्ते काले च म्रियते अनित्यो मानवः प्रभो ॥ २३
छिद्रन्तु नैव पश्यामि कुतो जीवः स निर्गतः ।
कुतो गच्छन्ति भूतानि पृथिव्यापो मनस्तथा ॥ २४
तेजो वदस्व मे नाथ वायुराकाशमेव च ।
वायवश्चैव पञ्चैते कथं गच्छन्ति चाप्तये ॥ २५
लोभमोहादयः पञ्च शरीरे चैव तस्कराः ।
तृष्णा कामोऽप्यहङ्कारः कुतो यान्ति जनार्द्दन ॥ २६
पुण्यं वाप्यथवापुण्यं यत् किञ्चित् सुकृतं तथा ।
नष्टे देहे कुतो यान्ति दानानि विविधानि च ॥ २७
सपिण्डनं किमर्थञ्च पूर्णे संवत्सरेऽपि वा ।
प्रेतस्य मेलनं सार्द्धं कैः समं तत्र को विधिः ॥ २८
ये दग्धा ये त्वदग्धाश्च पतिता ये नरा भुवि ।
यानि चान्यानि भूतानि तेषामन्ते भवेच्च किम् ॥ २९
पापिनो ये दुराचारा सुहृल्लश्च ये गताः ।
आत्मघाती ब्रह्महा च स्तेयी विश्वासघातकः ॥ ३०
कपिलां यः पिबेच्छूद्रो यः पठेद्वेदमक्षरम् ।
धारयेद्वा ब्रह्मसूत्रं का गतिस्तस्य माधव ॥ ३१
विप्रस्य ब्राह्मणी भार्य्या संगृहीता यदा भवेत् ।
तस्मात् पापाच्च भीतोऽहं तन्मे वद जगत्पते ॥ ३२
सर्व्वमेतन्मया पृष्टो वद लोकहिताय वै ॥ ३३

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे अष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

श्रीकृष्ण उवाच ।

साधु पृष्टं त्वया भद्र मानुषाणां हिताय वै ।
शृणुष्वावहितो भूत्वा सर्व्वमेवौर्द्धदैहिकम् ॥ १
सम्यग्विभेदरहितं श्रुतिस्मृतिसमुद्धृतम् ।
यन्न दृष्टं सुरैः सेन्द्रैर्योगिभिर्योगचिन्तकैः ॥ २
गुह्याद्गुह्यतरं वत्स नाख्यातं कस्यचित् क्वचित् ।
भक्तस्त्वं हि महाभाग सर्व्वं ते कथयाम्यहम् ॥ ३
अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
येन केनाप्युपायेन कार्य्यं जन्म सुतस्य च ॥ ४

…र्वेन्नरकात् पुत्त्रो यदि मोक्षं न विद्यते ।
…ः पुत्त्रेण कर्त्तव्यो देयः पौत्त्रेण पावकः ॥ ५
…र्दर्भैश्च भूम्यां वै कुटी धातुमती भवेत् ।
…ाणि वत्स तु येन जीवः प्ररोहति ॥ ६
…ाद् तु गोमयैर्भूमिं तिलान् दर्भांश्च निक्षिपेत् ।
…मेवातुरो मुक्तः सर्व्वं दहति पातकम् ॥ ७
…मूलो नयेत् स्वर्गं संस्थितं नात्र संशयः ।
…स्तत्र हि ये भूम्यां तिलयुक्तान्न संशयः ॥ ८
…व वसुधा पूता यत्र लेपो न विद्यते ।
…लेपः स्थितस्तत्र पुनर्लेपेन शुध्यति ॥ ९
…धानाः पिशाचाश्च राक्षसाः क्रूरकर्म्मिणः ।
…प्ते आतुरं मुक्तं विशन्त्येते न संशयः ॥ १०
…होमे तथा श्राद्धे विप्राणां पादशोधने ।
…लेन विना भूम्यां कुर्व्वन्त्येते ह्युपद्रवम् ॥ ११
…ा रुद्रश्च विष्णुश्च श्रीर्हुताशन एव च ।
…ले चोपतिष्ठन्तस्तस्मात् कुर्व्वीत मण्डलम् ॥ १२
…न्यथा म्रियते यस्तु बालो वृद्धो युवापि वा ।
…ोन्यन्तरं स वै गच्छेत् क्रीड़ते वायुना सह ॥ १३
…मिश्रितं लोहताम्रन्तु तथैव जन्म जायते ।
…स्यैव वायुभूतस्य न श्राद्धं नोदकक्रिया ॥ १४
…म स्वेदसमुद्भूतास्तिलास्तार्क्ष्य पवित्रकाः ।
…असुरा दानवा दैत्यास्तृप्यन्ति तिलदानतः ॥ १५
तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसन्निभाः ।
ते मे दहन्तु पापानि शरीरेण कृतानि च ॥ १६
एक एव तिलद्रोणो हेमद्रोणास्तिलैः समः ।
तर्पणे दानहोमे च दत्तो भवति चाक्षयः ॥ १७
दर्भा मल्लोमसम्भूतास्तिलाः स्वेदसमुद्भवाः ।
…क्षाः स्युर्देवता दानैः श्राद्धेन पितरस्तथा ।
प्रयोगविधिना ब्रह्मा विश्वञ्चाप्युपजीवनात् ॥ १८
अपसव्यादितो ब्रह्मा दर्भमध्ये तु केशवः ।
दर्भाग्रे शङ्करं विद्यात् त्रयो देवाः कुशे स्थिताः ॥ १९
विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर ।
नैते निर्म्माल्यतां यान्ति क्रियमाणाः पुनः पुनः ॥ २०
तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ।
पञ्च प्रवहणं देव भवाब्धौ मज्जतां सताम् ॥ २१
विष्णुरेकादशी गीता तुलसी विप्र-धेनवः ।
अपारे दुर्गसंसारे षट्पदी मुक्तिदायिनी ॥ २२
तिलाः पवित्रास्त्रिविधा दर्भाश्च तुलसीरपि ।
निवारयन्ति चैतानि दुर्गतिं यान्ति मातुरम् ॥ २३
हस्ताभ्यामुद्धरेद्दर्भांस्तोयेन प्रोक्षयेद्भुवि ।
मृत्युकाले क्षिपेद्दर्भानातुरस्य करद्वये ॥ २४
दर्भैस्तु क्षिप्यते योऽसौ दर्भैस्तु परिवेष्टितः ।
विष्णुलोके स वै याति मन्त्रहीनोऽपि मानवः ॥२५
दर्भमूलीगतो भूमौ दर्भपाणिस्तु यो मृतः ।
प्रायश्चित्तविशुद्धोऽसौ संसारेऽपारसागरे ॥ २६
गोमयेनोपलिप्ते तु दर्भस्यास्तरणे स्थितः ।
तत्र दत्तेन दानेन सर्व्वं पापं व्यपोहति ॥ २७
लवणं तद्रसं दिव्यं सर्व्वकामप्रदं नृणाम् ।
यस्मादन्नरसाः सर्व्वे नोत्कटा लवणं विना ॥ २८
पितॄणाञ्च प्रियं भव्यं तस्मात् स्वर्गप्रदं भवेत् ।
विष्णुदेहसमुद्भूतो यतोऽयं लवणो रसः ॥ २९
विशेषाल्लवणं दानं तेन शंसन्ति योगिनः ।
ब्राह्मण-क्षत्त्रिय-विशां स्त्रीणां शूद्रजनस्य च ॥ ३०
आतुराणां यदा प्राणाः प्रयान्ति वसुधातले ।
लवणन्तु तदा देयं द्वारस्योद्घाटनं दिवः ॥ ३१

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़संवादे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

श्रीकृष्ण उवाच ।

शृणु तार्क्ष्य परं गुह्यं दानानां दानमुत्तमम् ।
परमं सर्व्वदानानां परं गोप्यं दिवौकसाम् ॥ १
देयमेकं महादानं कार्पासञ्चोत्तमोत्तमम् ।
येन दत्तेन प्रीयन्ते भूर्भुवः स्वरिति क्रमात् ॥ २
ब्रह्माद्या देवताः सर्व्वाः कार्प्यासे प्रीतिमाप्नुयुः ।
देयमेतन्महादानं प्रेतोद्धरणहेतवे ॥ ३
चिरं वसेद्रुद्रलोके ततो राजा भवेदिह ।
रूपवान् सुभगो वाग्मी श्रीमानतुलविक्रमः ।
यमलोकं विनिर्ज्जित्य स्वर्गं तार्क्ष्य स गच्छति ॥ ४
गां तिलांश्च क्षितिं हेम यो ददाति द्विजन्मने ।
तस्य जन्मार्ज्जितं पापं तत्क्षणादेव नश्यति ॥ ५

तिला गावो महादानं महापातकनाशनम् ।
द्वितीयं दीयते विप्रे नान्यवर्णे कदाचन ॥ ६
कल्पितं दीयते दानं तिला गावश्च मेदिनी ।
अन्येषु नैव वर्णेषु पोष्यवर्गे कदाचन ॥ ७
पोष्यवर्गे तथा स्त्रीषु दानं देयमकल्पितम् ।
आतुरे वोपरागे च इयं दानं विशिष्यते ।
आतुरे दीयते दानं तत्काले चोपतिष्ठति ॥ ८
जीवतस्तु पुनर्दत्तमुपतिष्ठत्यसंस्कृतम् ।
सत्यं सत्यं पुनः सत्यं यद्दत्तं विकलेन्द्रिये ॥ ९
यच्चानुमोदते पुत्त्रस्तच्च दानमनन्तकम् ।
अतो दद्यात् स पुत्त्रो वा यावज्जीवत्यसौ चिरम् ।
अतिवाहस्तथा प्रेतो भोगांश्च लभते यतः ॥ १०
पञ्चावस्थे च काये च अर्द्धोन्मीलितलोचने ।
तिलेषु दर्भसंसारे दानमुक्तं तदक्षयम् ॥ ११
तिला लोहं हिरण्यञ्च कार्पासं लवणं तथा ।
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ १२
लोहदानाद्यमस्तुष्येद्धर्मराजस्तिलार्पणात् ।
लवणे दीयमाने तु न भयं विद्यते यमात् ॥ १३
कार्पासस्य तु दानेन न भूतेभ्यो भयं भवेत् ।
तारयन्ति नरं गावस्त्रिविधाच्चैव पातकात् ॥ १४
संस्थेयं यमदूताश्च यमरूपा विभीषणाः ।
सर्व्वे ते वरदा यान्ति सप्तधान्येन प्रीणिताः ॥ १५
विष्णोः स्मरणमात्रेण प्राप्यते परमा गतिः ।
एतत् ते सर्व्वमाख्यातं मर्त्त्यैर्या गतिराप्यते ॥ १६
तस्मात् पुत्त्रं प्रशंसन्ति ददाति पितुराज्ञया ।
भूमिष्ठं पितरं दृष्ट्वा अर्द्धोन्मीलितलोचनम् ॥ १७
तस्मिन् काले सुतो यस्तु सर्व्वदानानि दापयेत् ।
गयाश्राद्धाद्विशिष्येत स पुत्त्रः कुलनन्दनः ॥ १८
स्वस्थानाच्चलितश्वासौ विकलस्य पितुस्तदा ।
पुत्त्रैर्यत्नेन कर्त्तव्या पितरं तारयन्ति ते ॥ १९
किं दत्तैर्बहुभिर्दानैः पितुरन्तेष्टिमाचरेत् ।
किं दत्तैर्बहुभिर्दानैः पितुरन्तेष्टिमाचरेत् ।
अश्वमेधो महायज्ञः कलां नार्हति षोड़शीम् ॥ २०
धर्म्मात्मा स न पुत्त्रो वै देवैरपि स पूज्यते ।
दापयेद्यस्तु दानानि ह्यातुरं पितरं भुवि ॥ २१
लोहदानञ्च दातव्यं भूमियुक्तेन पाणिना ।
यमं भीमञ्च नाप्नोति न गच्छेत् तस्य वेश्मनि ॥ २२
कुठारो मुषलो दण्डः खड्गश्च च्छुरिका तथा ।
एतानि यमहस्तेषु दृश्यानि पापकर्म्मिणाम् ॥ २३
तस्माल्लोहस्य दानन्तु ब्राह्मणायातुरे ददेत् ।
यमायुधानां सन्तुष्ट्यै दानमेतदुदाहृतम् ॥ २४
गर्भस्थाः शिशवो ये च युवानः स्थविरास्तथा ।
एभिर्दानविशेषैस्तु निर्द्दहेयुः स्वपातकम् ॥ २५
क्षुरिणः श्वानशवलाः षण्डामर्का उदुम्बराः ।
शवलाः श्यामदूता ये लोहदानेन प्रीणिताः ॥ २६
पुत्त्राः पौत्त्रास्तथा बन्धुः सगोत्राः सुहृदस्तथा ।
ददते नातुरे दानं ब्रह्मघ्नैस्तु समा हि ते ॥ २७
पञ्चभूमिविमुक्तस्य शृणु तस्य च या गतिः ।
अतिवाहः पुनः प्रेतो वर्षोर्द्ध्वं सुकृतं लभेत् ॥ २८
अग्नित्रयं त्रयो लोकास्त्रयो वेदास्त्रयोऽमराः ।
कालत्रयं त्रिसन्ध्यञ्च त्रयो वर्णास्त्रिशक्तयः ॥ २९
पादादौ च कटिं यावत् तावद्ब्रह्माधितिष्ठति ।
ग्रीवां यावद्धरिर्नाभेः शरीरे मनुजस्य च ॥ ३०
मस्तके तिष्ठतीशानो व्यक्ताव्यक्तो महेश्वरः ।
एकमूर्त्तेस्त्रयो भागा ब्रह्म-विष्णु-महेश्वराः ॥ ३१
अहं प्राणः शरीरस्थो भूतग्रामचतुष्टये ।
धर्म्माधर्म्मे मतिं दद्यात् सुखदुःखे कृताकृते ॥ ३२
जन्तोर्बुद्धिं समास्थाय पूर्व्वकर्म्माधिवासिताम् ।
स्वर्गं च नरके मोक्षं प्रयान्ति प्राणिनो ध्रुवम् ॥ ३३
स्वर्गस्थं नरकस्थं वा श्राद्धे वाप्यायनं भवेत् ।
तस्माच्छ्राद्धानि कुर्व्वीत त्रिविधानि विचक्षणः ॥ ३४
मत्स्यं कूर्मञ्च वाराहं नारसिंहञ्च वामनम् ।
रामं रामञ्च कृष्णञ्च बुद्धञ्चैव सकल्किनम् ।
एतानि दश नामानि स्मर्त्तव्यानि सदा बुधैः ॥ ३५
स्वर्गं जीवाः सुखं यान्ति च्युताः स्वर्गाच्च मानवाः ।
लब्ध्वा सुखञ्च वित्तञ्च दया-दाक्षिण्य-संयुताः ।
पुत्त्र-पौत्त्रैर्धनैराढ्या जीवेयुः शरदां शतम् ॥ ३६
आतुरे च ददेद्दानं विष्णुपूजाञ्च कारयेत् ।
अष्टाक्षरं तथा मन्त्रं जपेद्वा द्वादशाक्षरम् ॥ ३७
अष्टाक्षरं तथा मन्त्रं जपेद्वा द्वादशाक्षरम् ॥ ३७
पूजयेच्छुक्लपुष्पैश्च नैवेद्यर्घृतपाचकैः ।
तथा गन्धैश्च धूपैश्च श्रुति-स्मृति-मनूदितैः ॥ ३८
विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवाः ।
यत्र विष्णुं न पश्यामि तेन वासेन किं मम ॥ ३९

...ले विष्णुः स्थले विष्णुर्विष्णुः पर्व्वतमस्तके।
...ज्वालामालाकुले विष्णुः सर्व्वं विष्णुमयं जगत्॥ ४०
...आपो वयं पृथ्वी वयं दर्भो वयं तिलाः।
...गावो वयं राजा वयं वायुर्वयं प्रजाः॥ ४१
...हेम वयं धान्यं वयं मधु वयं घृतम्।
...विप्रा वयं देवा वयं मधुश्च भूर्भुवः॥ ४२
...दाता अहं ग्राही अहं यज्वा अहं क्रतुः।
...हर्त्ता अहं धर्म्मो अहं मही ह्यहं जलम्॥ ४३
...धर्म्मे मतिं दद्यां कर्म्मभिस्तु शुभाशुभैः।
...कर्म्म क्रियते क्वापि पूर्व्वजन्मार्ज्जितं खग॥४४
...मतिमहं दद्यामधर्म्मोऽप्यहमेव च।
...यातनां कुरुते सोऽपि धर्म्मे मतिं ददाम्यहम्॥ ४५
...मनुजानां हितं तार्क्ष्य अन्ते वैतरणी स्मृता।
...व्यावमत्य पापौघं विष्णुलोकं स गच्छति॥ ४६
...बाल्ये यच्च कौमारे यच्च परिणतौ च यत्।
...सर्व्वावस्थाकृतं पापं यच्च जन्मान्तरेष्वपि॥ ४७
...निशायां तथा प्रातर्यन्मध्याह्नापराह्णयोः।
...सन्ध्ययोर्यत् कृतं कर्म्म कर्म्मणा मनसा गिरा॥ ४८
...त्वा वरां सकृदपि कपिलां सर्व्वकामिकाम्।
...रेदन्तकाले स आत्मानं पापसञ्चयात्॥ ४९
...गावो ममाग्रतः सन्तु पृष्ठतः पार्श्वतस्तथा।
...गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्॥ ५०
...या लक्ष्मीः सर्व्वभूतानां या च देवे व्यवस्थिता।
...धेनुरूपेण सा देवी मम पापं व्यपोहतु॥ ५१

...इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़-संवादे त्रिंशोऽध्यायः॥ ३०॥

---

## एकत्रिंशोऽध्यायः।

श्रीविष्णुरुवाच।

...ये नराः पापसंयुक्तास्ते गच्छन्ति यमालयम्।
...तेषां मत्साहिकं दत्तमनन्तफलदं भवेत्॥ १
...पादुकस्य प्रमाणाब्दं स्वर्गे तिष्ठति भूमिदः।
...पश्चारूढ़ाश्च ते यान्ति ददते ये ह्युपानहौ॥ २
...आतपे श्रमयोगेण न दह्यन्ते च कुत्रचित्।
...छत्रदानेन वै प्रेता विचरन्ति सुखं पथि॥ ३
यमुद्दिश्य ददात्यन्नं तेन चाप्यायितो भवेत्॥ ४
अन्धकारे महाघोरे अमूर्त्ते लक्ष्यवर्ज्जिते।
उद्द्योतेनैव ते यान्ति दीपदादेन मानवाः॥ ५
आश्विने कार्त्तिके वापि माघे मृततिथावपि।
चतुर्द्दश्याञ्च दीयेत दीपदानं सुखाय वै॥ ६
प्रत्यहञ्च प्रदातव्यं मार्गे सुविषमे नरैः।
यावत् संवत्सरं वापि प्रेतस्य सुखलिप्सया॥ ७
कुलं द्योतति शुद्धात्मा प्रकाशत्वं स गच्छति।
ज्योतिर्म्मयोऽसौ पूज्योऽसौ दीपदानप्रदो नरः॥ ८
प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजातये।
कुर्य्याद्याम्यमुखं पित्रे अद्भिः सङ्कल्प्य सुस्थिरम्॥ ९
सर्व्वोपहारयुक्तानि पदान्यत्र त्रयोदश।
यो ददाति मृतस्येह जीवन्नप्यात्महेतवे।
स गच्छति महामार्गे महाकष्टविवर्ज्जितः॥ १०
आसनं भाजनं भोज्यं दीयते यद्विजातये।
सुखेन भुञ्जमानस्तु तेन गच्छत्यलं पथि॥ ११
कमण्डलुप्रदानेन तृषितः पिबते जलम्॥ १२
भाजनं वस्त्रदानञ्च कुसुमञ्चाङ्गुलीयकम्।
एकादशाहे दातव्यं प्रेतोद्धरणहेतवे॥ १३
त्रयोदश पदानीत्थं प्रेतस्य शुभमिच्छता।
दातव्यानि यथाशक्त्या प्रेतोऽसौ प्रीणितो भवेत्॥१४
भोजनानि तिलांश्चैव उदकुम्भांस्त्रयोदश।
मुद्रिकां वस्त्रयुग्मञ्च तथा याति परां गतिम्॥ १५
योऽश्वं नावं गजं वापि ब्राह्मणे प्रतिपादयेत्।
स महिम्नोऽनुसारेण तत् तत् सुखमुपाश्नुते॥ १६
नानाल्लोकान् विचरति महिषीञ्च ददाति यः।
यमपुत्त्रस्य या माता महिषी सुगतिप्रदा॥ १७
ताम्बूलं कुसुमं देयं याम्यानां हर्षवर्द्धनम्।
तेन सम्प्रीणिताः सर्व्वे तस्मिन् क्लेशं न कुर्व्वते॥ १८
गो-भू-तिल-हिरण्यानि दानान्याहुः स्वशक्तितः॥१९
मृतोद्देशेन यो दद्याज्जलपात्रञ्च मृण्मयम्।
उदपात्रसहस्रस्य फलमाप्नोति मानवः॥ २०
यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः।
न भीषयन्ति तं याम्या वस्त्रदाने कृते सति॥ २१
मार्गे हि गच्छमानस्तु तृषार्त्तः श्रमपीड़ितः।
घटान्नदानयोगेन सुखी भवति निश्चितम्॥ २२

यथा दक्षिणया युक्ता आयुधाम्बरसंयुता।
हैमं श्रीपतिना युक्ता देया विप्राय धर्म्मिणे।
तथा प्रेतत्वमुक्तोऽसौ मोदते सह दैवतैः॥ २३
एतत् ते कथितं तार्क्ष्य दानमन्त्येष्टिकर्म्मजम्।
अधुना कथयिष्येऽहमन्यदेहप्रवेशनम्॥ २४
जातस्य मृत्युलोके वै प्राणिनो मरणं ध्रुवम्।
अतः कुर्य्यात् स्वधर्म्मेण यास्यते च परन्तप॥ २५
पूर्व्वकाले मृतानाञ्च प्राणिनाञ्च खगेश्वर।
ब्रह्मोद्भूला लसौ वायुर्निर्गच्छत्यस्य मण्डलात्॥२६
नवद्वारे रोमभिश्च जनानां तालुरन्ध्रके।
पापिष्ठानामपानेन जीवनं निष्क्रामति ध्रुवम्॥ २७
शरीरञ्च पतेत् पश्चान्निर्गते मरुतीश्वरे।
वाताहतः पतत्येव निराधारो यथा द्रुमः॥ २८
पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च।
तेजस्तेजसि लीयेत समीरणः समीरणे।
आकाशे च तथाकाशः सर्व्वव्यापी च शङ्करे॥ २९
लोभ कामस्तथा क्रोधः काये पञ्चेन्द्रियाणि च।
एते तार्क्ष्य समाख्याता देहे तिष्ठन्ति तस्कराः॥ ३०
कामः क्रोधो ह्यहङ्कारो मनस्तत्रैव नायकः।
संहारश्चैव कालोऽयं पुण्य-पापसमन्वितः॥ ३१
जगतश्च स्वरूपन्तु निर्म्मितं स्वेन कर्म्मणा।
पुनर्देहान्तरं याति सुकृतैर्दुष्कृतैर्नरः॥ ३२
पञ्चेन्द्रियसमायुक्तं सकलैर्विषयैः सह।
प्रविशेत् स नवं देहं गृहे दग्धे यथा गृही॥ ३३
शरीरे ये समासीना सम्भवेत् सर्व्वधातवः।
षाट्कौशिको ह्ययं कायो माता पित्रोश्च धातवः॥३४
स्नायुस्तथा तार्क्ष्य सर्व्वे वाताश्च देहिनाम्।
मूत्रं पुरीषं तद्योगा ये चान्ये व्याधयस्तथा॥ ३५
अस्थि शुक्रं तथा स्नायु देहेन सह दह्यते।
एष ते कथितस्तार्क्ष्य विनाशः सर्व्वदेहिनाम्॥ ३६
कथयामि पुनस्तेषां शरीरञ्च यथा भवेत्।
एकस्तम्भं स्नायुबद्धं स्थूणाद्वयसमुद्भतम्॥ ३७
इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम्।
विषयैश्च समाक्रान्तं काम-क्रोधसमाकुलम्॥ ३८
राग-द्वेषसमाकीर्णं तृष्णादुर्गसुदुस्तरम्।
लोभजालसमायुक्तं पुरं पुरुषसंज्ञितम्॥ ३९
एतद्गुणसमायुक्तं शरीरं सर्व्वदेहिनाम्।
तिष्ठन्ति देवताः सर्व्वा भुवनानि चतुर्द्दश॥ ४०
आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः।
एवमेतन्मयाख्यातं शरीरं ते चतुर्व्विधम्॥ ४१
चतुरशीतिलक्षाणि निर्म्मिता योनयः पुरा।
उद्भिज्जाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः॥ ४२
इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे एकत्रिंशोऽध्यायः॥ ३१॥

---

## द्वात्रिंशोऽध्यायः।

तार्क्ष्य उवाच।

कथमुत्पद्यते जन्तुर्भूतग्रामे चतुर्व्विधे।
त्वचा रक्तं तथा मांसं मेदो मज्जास्थि जीवितम्॥ १
पादौ पाणी तथा गुह्यं जिह्वा-केश-नखाः शिरः।
सन्धिमार्गाश्च बहवो रेखा नैकविधास्तथा॥ २
कामः क्रोधो भयं लज्जा मनो हर्षः सुखासुखम्।
चित्रितं छिद्रितञ्चापि नानाजालेन वेष्टितम्॥ ३
इन्द्रजालमिदं मन्ये संसारेऽसारसागरे।
कर्त्ता कोऽत्र हृषीकेश संसारे दुःखसङ्कुले॥ ४

श्रीविष्णुरुवाच।

कथयामि परं गोप्यं कोशस्यास्य विनिर्णयम्।
येन विज्ञातमात्रेण सर्व्वज्ञत्वं प्रजायते॥ ५
साधु पृष्टं त्वया लोके सदयं जीवकारणम्।
वैनतेय शृणुष्व त्वमेकाग्रकृतमानसः॥ ६
ऋतुकाले च नारीणां वर्ज्यं दिनचतुष्टयम्।
यतस्तस्मिन् ब्रह्महत्यां पुरा ह्युत्रसमुत्थिताम्॥ ७
ब्रह्मा शक्रात् समुत्तार्य्य चतुर्थांशेन दत्तवान्।
तावन्नालोकयते वक्त्रं पापं यावद्वपुः स्थितम्॥ ८
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी ज्ञेया चतुर्थेऽहनि शुध्यति॥ ९
सप्ताहात् पितृदेवानां भवेद्योग्या व्रतार्च्चने।
सप्ताहमध्ये यो गर्भस्तत्सम्भूतिर्मलिम्लचा॥ १०
निषिक्तसमये पित्रोर्यादृक् चित्तविकल्पना।
तादृग्गर्भसमुत्पत्तिर्जायते नात्र संशयः॥ ११
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।

…मनुत्सृज्य तस्माद्युग्मासु संविशेत् ॥ १२
…र्चनिशाः स्त्रीणां सामान्यात् समुदाहृता ।
…चतुर्दशी रात्रिर्गर्भस्तिष्ठति तत्र चेत् ॥ १३
…भाग्यनिधिः पुत्रस्तत्र जायेत धार्म्मिकः ।
…निशा तत्र सामान्यैर्न लभ्येत खगाधिप ।
…शः सम्भवत्यत्र गर्भस्त्वष्टाह्नमध्यतः ॥ १४
…शेऽहनि नारीणां कार्य्यं माधुर्य्यभोजनम् ।
…ु क्षारञ्च तीक्ष्णञ्च त्याज्यमुष्णञ्च दूरतः ॥ १५
…वमोषधीपात्रं वीजञ्चाप्यमृतायितम् ।
…स्तुष्टा नरः स्वामी सम्यक् फलमवाप्नुयात् ॥ १६
…ूल-पुष्प-श्रीखण्डैः संयुक्तः शुचिवस्त्रभृत् ।
…मादाय मनसि सुतल्पं संविशेत् पुमान् ॥ १७
…समयि यादृङ् नरचित्तविकल्पना ।
…स्वभावसम्भूतिर्जन्तुर्विशति कुक्षिगः ॥ १८
…शोणितसंयोगे पिण्डोत्पत्तिः प्रजायते ।
…ते जठरे जन्तुस्तारापतिरिवाम्बरे ॥ १९
…न्यं वीजरूपं हि शुक्रे नित्यं व्यवस्थितम् ॥ २०
…स्चित्तञ्च शुक्रञ्च यदा ह्येकत्वमाप्नुयुः ।
…ा द्रावमवाप्नोति योषागर्भाशये नरः ॥ २१
…ाधिक्ये भवेन्नारी शुक्राधिक्ये भवेत् पुमान् ।
…-शोणितयोः साम्ये गर्भाः षण्ढत्वमाप्नुयुः ॥ २२
…होरात्रेण कलिलं बुद्बुदं पञ्चभिर्दिनैः ।
…तुर्दशे भवेन्मांसं मिश्रधातुसमन्वितम् ॥ २३
…नं मांसञ्च विंशाहे गर्भस्थो वर्द्धते क्रमात् ।
…विंशति मे चाह्नि बलं पुष्टिश्च जायते ॥ २४
…मासे तु सम्पूर्णे पञ्चतत्त्वं निधारयेत् ।
…सद्वये तु सञ्जाते त्वचा मेदश्च जायते ॥ २५
…स्थीनि त्रिभिर्मासैः केशाङ्गुल्यश्चतुर्थके ।
…र्णौ च नासिके वक्षो जायेरन् मासि पञ्चमे ॥ २६
…रश्रोदरं षष्ठे गुह्यादि मासि सप्तमे ।
…प्रत्यङ्गसम्पूर्णो गर्भो मासैरथाष्टभिः ॥ २७
…मे मासि सम्प्राप्ते गर्भस्थौजो दृढं भवेत् ।
…ा जायते तस्य गर्भवासपरिच्छये ॥ २८
…री वाथ नरो वाथ नपुंस्त्वं वाभिजायते ।
…वयं त्रिशालाच्चं षाट्कौशिकसमायुतम् ॥२९
…न्द्रियसमोपेतं दशनाडीविभूषितम् ।
दशप्राणगुणोपेतं यो जनाति स योगवित् ॥ ३०
मज्जास्थिशुक्रमांसानि रोम रक्तं बलं तथा ।
षाट्कौशिकमिदं पिण्डं स्याज्जन्तोः पाञ्चभौतिकम् ॥ ३१
नवमे दशमे मासि जायते पाञ्चभौतिकः ।
सूतिवातैः समाकृष्टः पीड़या विह्वलीकृतः ॥ ३२
पुष्टो नाड्याः सुषुम्णाया योषिद्गर्भस्थितश्चरन् ।
क्षितिर्वारि हविर्भोक्ता पवनाकाश एव च ॥ ३३
एभिर्भूतैः पीड़ितस्तु निबद्धः स्नायुबन्धनैः ।
मूलभूता इमे प्रोक्ताः सप्त नाड्यन्तरे स्थिताः ॥ ३४
त्वचास्थिनाड्यो रोम मांसञ्चैवात्र पञ्चमम् ।
एते पञ्च गुणाः प्रोक्ता मया भूमेः खगेश्वर ॥ ३५
यथा पञ्चगुणाश्चापस्तथा तच्छृणु काश्यप ।
लाला मूत्रं तथा शुक्रं मज्जा रक्तञ्च पञ्चमम् ।
आपः पञ्चगुणाः प्रोक्ता ज्ञातव्यास्ते प्रयत्नतः ॥ ३६
क्षुधा तृषा तथा निद्रा आलस्यं कान्तिरेव च ।
तेजः पञ्चगुणं प्रोक्तं तार्क्ष्य सर्व्वत्र योगिभिः ॥ ३७
राग-द्वेषौ तथा लज्जा भयं मोहस्तथैव च ।
इत्येतत् कथितं तार्क्ष्य वायुजं गुणपञ्चकम् ॥ ३८
आकुञ्चनं धावनञ्च लङ्घनञ्च प्रसारणम् ।
निरोधः पञ्चमः प्रोक्तो वायोः पञ्च गुणाः स्मृताः ॥ ३९
घोषश्चिन्ता च गाम्भीर्य्यं श्रवणं सत्यसंक्रमः ।
आकाशस्य गुणाः पञ्च ज्ञातव्यास्तार्क्ष्य यत्नतः ॥ ४०
श्रोत्रं त्वक् चक्षुषी जिह्वा नासा बुद्धीन्द्रियाणि च ।
पाणी पादौ गुदप्राक् च गुह्यं कर्म्मेन्द्रियाणि च ॥ ४१
इड़ा च पिङ्गला चैव सुषुम्णा च तृतीयका ।
गान्धारी गजजिह्वा च पूषा चैव यशा तथा ॥ ४२
अलम्बुशा कुहूश्चैव शङ्खिनी दशमी स्मृता ।
पिण्डमध्ये स्थिता ह्येताः प्रधाना दश नाड़यः ॥ ४३
प्राणापानौ समानश्च उदानो व्यान एव च ।
नागः कूर्म्मश्च कृकलो देवदत्तो धनञ्जयः ॥ ४४
केवलं भुक्तमन्नञ्च पुष्टिदं सर्व्वदेहिनाम् ।
नयते प्राणदो वायुः शरीरे सर्व्वसन्धिषु ॥ ४५
आहारो भुक्तमात्रस्तु वायुना क्रियते द्विधा ।
स प्रविश्य गुदे सम्यक् पृथगन्नं पृथग्जलम् ॥ ४६
ऊर्द्धमग्नेर्जलं कृत्वा तदन्नञ्च जलोपरि ।
अग्नेश्चाधः स्वयं प्राणस्तमग्निञ्च धमेच्छनैः ॥ ४७

वायुना धम्यमानोऽग्निः पृथक्कीटपृथग्रसम् ।
द्वारहीदृग्भिः कीटं भिन्नदेहात् पृथग्भवेत् ॥ ४८
कर्णाक्षि-नासिका-जिह्वा दन्त-नाभि-वपुर्गुदम् ।
न स्त्रा मलाश्रया ह्येते विरमूत्रत्वेत्यनन्तकम् ॥ ४९
शुक्र-शोणितसंयोगादेतत् षाट्कौशिकं स्मृतम् ।
रोम्णां कोव्यस्तथा तिस्रोऽयद्धकोटिसमन्विताः ॥ ५०
द्वात्रिंशद्दशनाः प्रोक्ताः सामान्यादिनतास्तत ।
सप्त लक्षाणि केशाः स्युर्नखाः प्रोक्तास्तु विंशतिः ॥ ५१
मांसं पलसहस्रैकं सामान्याद्देहसंस्थितम् ।
रक्तं पलशतं ताक्ष्य बुद्धमेव पुरातनैः ॥ ५२
पलानि दश मेदश्च त्वचा चैव तु तत्समाम् ।
पलद्वादशकं मज्जा महारक्तं पलत्रयम् ॥ ५३
शुक्रं द्विकुड़वं ज्ञेयं शोणितं कुड़वं स्मृतम् ।
श्लेष्माणश्च षड्वैव विण्मूत्रं तत्प्रमाणतः ॥ ५४
एवं पिण्डः समाख्यातो वैभवं सम्प्रचक्ष्महे ।
ब्रह्माण्डे ये गुणाः सन्ति शरीरे ते व्यवस्थिताः ॥ ५५
पातालभूधरा लोकास्तथान्ये द्वीपसागराः ।
आदित्यानां ग्रहाः सर्व्वे पिण्डमध्ये व्यवस्थिताः ॥ ५६
पादाधस्तु तलं ज्ञेयं पादोर्द्ध्वं वितलं तथा ।
जानुभ्यां सुतलं विद्धि सक्थिदेशे महातलम् ॥ ५७
तथा तलातलञ्चोरौ गुह्यदेशे रसातलम् ।
पातालं कटिसंस्थन्तु पादादौ लक्षयेद्बुधः ॥ ५८
भूर्लोको नाभिमध्ये तु भुवर्लोकं तदूर्द्ध्वतः ।
स्वर्लोकं हृदये विद्यात् कण्ठदेशे महस्तथा ॥ ५९
जनलोकं वक्त्रदेशे तपोलोकं ललाटके ।
सत्यलोकं महारन्ध्रे भुवनानि चतुर्द्दश ॥ ६०
त्रिकोणे संस्थितो मेरुरधःकोणे च मन्दरः ।
दक्षिणे चैव कैलासो वामभागे हिमाचलः ॥ ६१
निषधश्चोर्द्ध्वभागे च दक्षिणे गन्धमादनः ।
मलयो वामरेखायां सप्तैते कुलपर्व्वताः ॥ ६२
अस्थिस्थाने स्थितो जम्बूः शाको मज्जासु संस्थितः ।
कुशद्वीपः स्थितो मांसे क्रौञ्चद्वीपः शिरास्थितः ॥ ६३
त्वचायां शाल्मलद्वीपो व्योमे रोमे च सप्तयम् ।
नखस्थः पुष्करद्वीपः सागरास्तदनन्तरम् ॥ ६४
क्षारोदश्च तथा मूत्रे क्षीरे क्षीरोदसागरः ।
सुरोदधिश्च श्लेष्मस्थः मज्जायां घृतसागरः ॥ ६५
रसोदधिं रसे विद्याच्छोणिते दधिसागरम् ।
स्वादूदं लम्बिकास्थाने गर्भोदं शुक्रसंस्थितम् ॥ ६६
नादचक्रे स्थितः सूर्य्यो बिन्दुचक्रे च चन्द्रमाः ।
लोचनस्थः कुजो ज्ञेयो हृदये च बुधः स्मृतः ॥ ६७
विष्णुस्थाने गुरुं विद्याच्छुक्रे शुक्रो व्यवस्थितः ।
नाभिस्थाने स्थितो मन्दो मुखे राहुः स्थितः सदा ॥ ६८
पायुस्थाने स्थितः केतुः शरीरे ग्रहमण्डलम् ।
विभक्तञ्च समाख्यातमापादतलमस्तकम् ॥ ६९
उत्पन्ना ये हि संसारे म्रियन्ते ते न संशयः ।
विनाशः पूर्व्वकाले च जायते सर्व्वदेहिनाम् ॥ ७०
अग्रे अग्रे हि धावन्ति यमलोकगतस्य वै ।
तप्तवालुकमध्येन प्रज्वलद्वह्निमध्यतः ।
केशग्रहैः समाक्रान्ता नीयन्ते यमकिङ्करैः ॥ ७१
पापिष्ठास्त्वधमास्तार्क्ष्य दया-धर्म्मविवर्ज्जिताः ।
यमलोके वसन्त्येते कुर्व्वां जन्म न विद्यते ॥ ७२
एवं सञ्जायते तार्क्ष्य मर्त्त्यजन्तुः स्वकर्म्मभिः ।
आयुः कर्म्म च वित्तञ्च विद्या निधनमेव च ।
पञ्चतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ७३
कर्म्मणा जायते जन्तुः कर्म्मणैव प्रलीयते ।
सुकृतादुत्तमो भोगी भोग्यवान् सुकुले भवेत् ॥ ७४
यथा यथा दुष्कृतं तत् कुले हीने प्रजायते ।
दरिद्री व्याधितो मूर्खः पापकृद्दुःखभाजनम् ॥ ७५
अतः परं किमर्थं ते कथयामि खगेश्वर ॥ ७६

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ।

गरुड़ उवाच ।

उत्पत्तिलक्षणं जन्तोः कथितं मयि पुत्रके ।
यमलोकः कियन्मात्रस्त्रैलोक्ये सचराचरे ।
विस्तरं तस्य मे ब्रूहि अध्वा चैव कियान् स्मृतः ॥ १
कैश्च पापैः कृतैर्द्देव केन वा शुभकर्म्मणा ।
गच्छन्ति मानवास्तत्र कथयस्व जनार्द्दन ॥ २

श्रीभगवानुवाच ।

षड़शीतिसहस्राणि योजनानां प्रमाणतः ।

यमलोकस्य चाध्वानमन्तरा मानुषस्य च ॥ ३
आततामन्निवातप्तो ज्वलदुर्गो महापथः।
तत्र गच्छन्ति पापिष्ठा मानवा मूढ़चेतसः ॥ ४
कण्टकाश्च सुतीक्ष्णा वै विविधा घोरदर्शनाः।
तैलुवालुक्षितिर्व्याप्ता हुताशश्च तथोल्बणः ॥ ५
वृक्षच्छाया न तत्रास्ति यत्र विश्रमते नरः।
यद्दीतः कालपाशैश्च दूतैः कर्म्मभिरुल्बणैः ॥ ६
तस्मिन् मार्गे न चान्नाद्यं येन प्राणान् प्रपोषयेत्।
न जलं दृश्यते तत्र तृषा येन विलीयते ॥ ७
क्षुधया पीड़ितो याति तृष्णया च महापथि।
शीतेन कम्पते क्वापि यममार्गेऽतिदुर्गमे ॥ ८
यद्‌यस्य यादृशं पापं स पन्थास्तस्य तादृशः।
सुदीनाः कृपणा मूढ़ा दुःखैर्व्याप्तास्तरन्ति ते ॥ ९
रुदन्ति दारुणं केचित् केचिद्धोषं वदन्ति च।
आत्मकर्म्मकृतैर्दोषैः पच्यमाना मुहुर्म्मुहुः ॥ १०
ईदृग्विधः स वै पन्था विज्ञेयो दारुणः खग।
वितृष्णा ये नरा लोके सुखं तस्मिन् व्रजन्ति ते ॥ ११
यानि यानि च दानानि दत्तानि भुवि मानवैः।
तानि तान्युपतिष्ठन्ति यमलोके पुरः पथि ॥ १२
पापिनां नोपतिष्ठन्ति दाहश्चाज्जलाञ्जलिः।
भ्रमन्ति वायुभूतास्ते ये क्षुद्राः पापकर्म्मिणः ॥ १३
ईदृशं वर्त्म तद्रौद्रं कथितं तव सुव्रत।
पुनश्च कथयिष्यामि यममार्गस्य या स्थितिः ॥ १४
याम्य-नैर्ऋतयोर्मध्ये पुरं वैवस्वतस्य तु।
सर्व्वं वज्रमयं दिव्यमभेद्यं तत् सुरासुरैः ॥ १५
चतुरस्रं चतुर्द्वारं सप्तप्राकारतोरणम्।
स्वयं तिष्ठति वै यस्यां यमो दूतैः समन्वितः ॥ १६
योजनानां सहस्रं वै प्रमाणेन तदुच्यते।
सर्व्वरत्नमयं दिव्यं विद्युज्ज्वालार्कतेजसम् ॥ १७
तद्गृहं धर्म्मराजस्य विस्तीर्णं काञ्चनप्रभम्।
योजनानां पञ्चशतप्रमाणेन समुच्छ्रितम् ॥ १८
स्तम्भैः स्तम्भसहस्रैस्तु वैदूर्य्यमणिमण्डितम्।
मुक्ताजालगवाक्षं च पताकाशतभूषितम् ॥ १९
घण्टाशतनिनादाढ्यं तोरणानां शतैर्वृतम्।
एवमादिभिरन्यैश्च भूषणैर्भूषितं सदा ॥ २०
तत्रास्ते भगवान् धर्म्म आसने तु समे शुभे।
दशयोजनविस्तीर्णे नीलजीमूतसन्निभे ॥ २१
धर्म्मज्ञो धर्म्मशीलश्च धर्म्मयुक्तो हितो यमः।
भयदः पापयुक्तानां धार्म्मिकाणां सुखप्रदः ॥ २२
मन्दमारुतसंयोगैरुत्सवैर्विविधैस्तथा।
व्याख्याभिर्विविधैर्युक्तः शङ्खवादित्रनिस्वनैः ॥ २३
पुरमध्यप्रवेशे तु चित्रगुप्तस्य वै गृहम्।
तत्तु विंशतिसंख्यातं योजनानां सुविस्तरम् ॥ २४
दशोच्छ्रितं महादिव्यं लोहप्राकारवेष्टितम्।
प्रतोलीशतसञ्चारं पताकाशतशोभितम् ॥ २५
दीपिकाशतसङ्कीर्णं गीतध्वनिसमाकुलम्।
विचित्रचित्रकुशलैश्चित्रगुप्तस्य वै गृहम् ॥ २६
मणिमुक्तामये दिव्ये आसने परमाद्भुते।
तत्रस्थो गणयत्यायुर्मानुषेष्वितरेषु च ॥ २७
समूह्यति कदाचित् स सुकृते दुष्कृतेऽपि वा ॥
यद्‌येनोपार्ज्जितं यावत् तावद्वै वेत्ति तस्य तत् ॥ २८
दशाष्टदोषरहितं कृतकर्म्म लिखत्यसौ।
चित्रगुप्तालयात् प्राच्यां ज्वरस्यास्ति महागृहम् ॥ २९
दक्षिणे चापि शूलस्य लूताविस्फोटकस्य च।
पश्चिमे कालपाशस्य अजीर्णस्यारुचेस्तथा ॥ ३०
मध्यपीठोत्तरे ज्ञेया तथा चान्या विसूचिका।
ऐशान्यां वै शिरोऽर्त्तिश्च आग्नेय्याञ्चैव मूकता ॥ ३१
अतिसारश्च नैर्ऋत्यां वायव्यां दाहसंज्ञकः।
एभिः परिवृतो नित्यं चित्रगुप्तः स तिष्ठति ॥ ३२
यत् कर्म्म कुरुते कश्चित् तत् सर्व्वं विलिखत्यसौ।
तिष्ठन्ति पापकर्म्माणः पच्यमाना नराधमाः ॥ ३३
यमदूतैर्महापाशैर्हन्यमानाश्च मुद्गरैः।
बध्यन्ते विविधैः पापैः पूर्व्वकर्म्मकृतैर्नराः ॥ ३४
नानाप्रहरणाग्रैश्च नानायन्त्रैस्तथा परे।
छिद्यन्ते पापकर्म्माणः क्रकचैः काष्ठवद्द्विधा ॥ ३५
अन्ये ज्वलद्भिरङ्गारैर्वेष्टिताः परितो भृशम्।
पूर्व्वकर्म्मविपाकेन ध्मायन्ते लोहपिण्डवत् ॥ ३६
छिन्नान्ये च धरापृष्ठे कुठारेणावकर्त्तिताः।
क्रन्दमानाश्च दृश्यन्ते पूर्व्वकर्म्मविपाकतः ॥ ३७
कैश्चिद्गुड़मयैः पाकैस्तलपाकैस्तथा परे।
पीड्यन्ते यमदूतैश्च पापिष्ठाः सुभृशं नराः ॥ ३८
क्षणानि प्रार्थयन्त्यन्ये देहि देहीति कोटिशः।

यमलोके मया दृष्टा ममस्वं भक्षितं त्वया ॥ ३९
इत्येवं बहुशस्ताक्ष्यं वक्ष्यामि सुखलब्धये ॥ ४०
इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़संवादे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः।

श्रीकृष्ण उवाच।

शृणु ताक्ष्य यथान्यायं धर्म्माधर्म्मस्य लक्षणम्।
सुकृतं दुष्कृतं नृणामग्रे धावति धावताम् ॥ १
कृते तपः प्रशंसन्ति त्रेतायां ज्ञानसाधनम्।
द्वापरे यज्ञ-दाने च दानमेकं कलौ युगे ॥ २
गृहस्थानां स्मृतो धर्म्म उत्तमानां विचक्षणैः।
इष्टापूर्त्तौ स्वशक्त्या हि कुर्व्वतां नास्ति पातकम् ॥३
वृक्षस्तु रोपितो येन खनि-कूप-जलाशयाः।
यममार्गे सुखं तस्य व्रजतो नितरां भवेत् ॥ ४
अग्नितापः प्रदाता वै यैः शीतपीड़िते द्विजे।
तप्यमानाः सुखं यान्ति सर्व्वकामैः प्रपूरिताः ॥ ५
सुवर्ण-मणि-मुक्तादि-वस्त्राण्याभरणानि च।
तेन सर्व्वमिदं दत्तं येन दत्ता वसुन्धरा ॥ ६
यानि यानि च भूतानि दत्तानि भुवि मानवैः।
यमलोकपथे तानि तिष्ठन्त्येषां समीपतः ॥ ७
व्यञ्जनानि विचित्राणि भक्ष्य-भोज्यानि यानि च।
ददाति विधिना पुत्त्रः प्रेते तदुपतिष्ठति ॥ ८
आत्मा वै पुत्त्रनामास्ति पुत्त्रस्त्राता यमालये।
तारयेत् पितरं घोरात् तेन पुत्त्रः प्रचक्ष्यते ॥ ९
अतो देयञ्च पुत्त्रेण श्राद्धमाजीवितावधि।
अतिवाहस्तदा प्रेतो भोगान् वै लभते हि सः ॥ १०
दह्यमानस्य प्रेतस्य स्वजनैर्यो जलाञ्जलिः।
दीयते प्रेतरूपोऽसौ प्रीतो याति यमालये ॥ ११
अपक्वे मृण्मये पात्रे दुग्धं दत्तं दिनत्रयम्।
काष्ठत्रयं गुणैर्बद्ध्वा प्रीत्यै रात्रौ चतुष्पथे ॥ १२
प्रथमेऽह्नि द्वितीये च तृतीये च तथा खग।
आकाशस्थं पिबेद्दुग्धं प्रेतो वायुवपुर्द्धरः ॥ १३
चतुर्थे सञ्चयः कार्य्यः चतुर्थे वापि सान्निके।
अस्थिसञ्चयनं कार्य्यं दद्यादापोऽञ्जलिं ततः ॥ १४
न पूर्व्वाह्णे न मध्याह्ने नापराह्णे न सन्धिषु।
याते प्रथमयामे तु दद्यादापोजलाञ्जलीन् ॥ १५
पुत्त्रेण दत्ते ते सर्व्वे गोत्रिणो हितबान्धवाः।
स्वजात्यैः परजात्यैश्च देयो नद्यांजलाञ्जलिः ॥ १६
गन्तव्यं नैव विप्रेण दातुं शीघ्रं जलाञ्जलिम्।
निवृत्ताश्च यदा नार्यों लोकाचारः सदा भवेत् ॥ १७
पञ्चत्वञ्च गते शूद्रे यः काष्ठं नयते चिताम्।
अनुव्रजेद्दयदा विप्रस्त्रिरात्रमशुचिर्भवेत् ॥ १८
त्रिरात्रे च ततः पूर्णे नदीं गच्छेत् समुद्रगाम्।
प्राणामायशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ १९
शूद्रो गच्छति सर्व्वत्र वैश्यस्त्रिषु द्वयोः परः।
गच्छति स्वीयवर्णेषु दातुं प्रेते जलाञ्जलिम् ॥ २०
दत्ते जलाञ्जलौ पश्चाद्विदध्याद्दन्तधावनम्।
त्यजन्ति गोत्रिणः सर्व्वे दिनानि नव काश्यप ॥ २१
जलाञ्जलिं तथा दातुं गच्छन्ति द्विजसत्तमाः।
यत्र स्थाने मृतो यस्तु अध्वन्यपि गृहेऽपि वा।
विश्लेषस्तु ततः स्थानान्न क्वचिद्विहितो बुधैः ॥ २२
स्त्रीजनश्चाग्रतो गच्छेत् पृष्ठतो नवसञ्चयः।
आचमनं विधातव्यं पाषाणोपरि संस्थितैः ॥ २३
यवांश्च सर्षपान् दूर्व्वाः पूर्णपात्रे विलोकयेत्।
प्राशयेन्निम्बपत्राणि स्नेहस्नानं समाचरेत् ॥ २४
गोत्रिभिर्न च कर्त्तव्यं गृहान्नञ्च न भोजयेत्।
भुञ्जीत मृण्मये पात्रे क्रत्तानञ्च विवर्ज्जयेत् ॥ २५
मृतकस्य गुणा ग्राह्या यमगाथां समुद्गिरेत्।
शुभाशुभे च ध्यातव्ये पूर्व्वकर्म्मोपसञ्चिते ॥ २६
लब्ध्वैनैव च देहेन भुङ्क्ते सुकृतदुष्कृते।
वायुरूपो भ्रमत्येव वायुरूर्द्ध्वं स गच्छति ॥ २७
दशाहकर्म्मक्रियया कुटी निष्पाद्यते ध्रुवम्।
नवकैः षोड़शश्राद्धैः प्रयाति हि कुटीं नरः ॥ २८
तिलैर्दर्भैश्च भूम्यां वै कुटी धातुमती भवेत्।
पञ्च रत्नानि वक्त्रे तु येन जीवः प्ररोहति ॥ २९
यदा पुष्पं प्रनष्टं हि तदा गर्भं न धारयेत्।
आदराच्च ततो भूमौ तिलदर्भान् विनिक्षिपेत् ॥ ३०
पशुत्वे स्थावरत्वे च यत्र क्वापि स जायते।
तत्रैव जन्तुरुत्पन्नः श्राद्धं तत्रोपतिष्ठति ॥ ३१
धन्विना लक्ष्यमुद्दिश्य मुक्तो बाणस्तदाप्नुयात्।

त श्राद्धं यमुद्दिश्य कृतं तस्योपतिष्ठति ॥ ३२
नीतादिती दिवस्तावच्छ्राद्धैर्न प्रीणनम्।
आविममापन्नो दशाहेन च तर्पितः ॥ ३३
ददानं न यस्याभूदाकाशे भ्रमति तु सः।
नवं वसंस्तोये अग्नावपि दिनत्रयम्।
काशे वसते त्रीणि दिनमेकन्तु वासके ॥ ३४
दिने च वह्नौ च जलेनैव तु तर्पितः।
रद्धानं जलेनैव पूपकैः कृशरैर्गृहे ॥ ३५
थमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि वा।
नमेकादशे चैव श्राद्धं नवकमुच्यते ॥ ३६
द्वारे श्मशाने वा तीर्थे देवालयेऽपि वा।
दायो दीयते पिण्डस्तत्र सर्व्वान् समापयेत् ॥ ३७
दशाहे यच्छ्राद्धं तत् सामान्यमुदाहृतम्।
तुर्णामेकवर्णानां शुद्ध्यर्थं स्नानमुच्यते ॥ ३८
त्र चैकादशाहञ्च पुनः स्नात्वा शुचिर्भवेत्।
यादिप्राय यः शय्यां यथोक्तां प्रेतमोक्षदाम् ॥३९
मनेत् स यदा गोत्रं परोऽपि विधिमाचरेत्।
र्यां वा पुरुषः कश्चित् तुष्टश्च कुरुते स्त्रियाम्॥४०
थमेऽहनि यः पिण्डो दीयते विधिपूर्व्वकम्।
स्वादेन च तेनैव सर्व्वश्राद्धानि कारयेत् ॥ ४१
मन्त्रं कारयेच्छ्राद्धं दशाहं नामगोत्रतः।
द्धं कृतन्तु यैर्वस्त्रैस्तानि त्यक्त्वा गृहं विशेत् ॥ ४२
समगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
थमेऽहनि यः कुर्य्यात् स दशाहं समापयेत् ॥ ४३
जीवस्य दशभिः पिण्डैर्देहो निष्पाद्यते ध्रुवम्।
देश दशभिर्मासैर्गर्भस्थस्य यथा भवेत् ॥ ४४
शौचं यावदेतस्य तावत् पिण्डोदकक्रिया।
तुर्णामपि वर्णानामेष एव विधिः स्मृतः ॥ ४५
त्र त्रिरात्रमाशौचं तत्रादौ त्रीन् प्रदापयेत्।
तुरस्तु द्वितीयेऽह्नि तृतीये त्रींस्तथैव च ॥ ४६
वक् शरावयोर्दद्यादेकाहं क्षीरमम्बु च।
कोद्दिष्टन्तु वै श्राद्धं चतुर्थेऽहनि कारयेत् ॥ ४७
थमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते।
क्षुः श्रोत्रञ्च नासा च द्वितीयेऽह्नि प्रजायते ॥ ४८
गण्डौ वक्त्रं तथा ग्रीवा तृतीयेऽहनि जायते।
हृदयं कुक्षिरुदरं चतुर्थे तदहेव हि ॥ ४९

कटिपृष्ठं गुदञ्चापि पञ्चमेऽहनि जायते।
षष्ठे जरू च विज्ञेया सप्तमे गुल्फसम्भवः ॥ ५०
अष्टमे दिवसे प्राप्ते जङ्घे च भवतोऽण्डज।
पादौ च नवमे ज्ञेयौ दशमे बलावत्क्षुधा ॥ ५१
एकादशाहे यः पिण्डस्तं दद्यादामिषेण तु।
सिद्धान्ने तस्य दातव्यं कृशराः पूपकाः पयः।
प्रक्षाल्य विप्रचरणावर्घ्यं धूपञ्च दीपकम् ॥ ५२
द्वादश प्रतिमास्यानि श्राद्धान्येकादशे तथा।
त्रिपक्षञ्चापि षण्मासे द्वे श्राद्धानि च षोड़श ॥ ५३
मासं प्रति प्रदातव्यं मृताहे या तिथिर्भवेत्।
स मासः प्रथमो ज्ञेय इति वेदविदो विदुः ॥ ५४
भवहस्ते च यच्छ्राद्धं मृतिस्थाने द्विजासने।
तदेव प्रथमं श्राद्धं तत् स्यादेकादशेऽहनि ॥ ५५
सा तिथिर्मासिके श्राद्धे मृतो यस्मिन् दिने नरः।
रिक्तयोश्च त्रिपक्षे च सा तिथिर्नाद्रियेत व ॥ ५६
पूर्णमास्यां मृतो योऽसौ चतुर्थी तस्य चोनका।
चतुर्थ्यान्तु मृतो यस्तु नवमी तस्य चोनका ॥ ५७
नवम्याञ्च मृतो यश्च रिक्ता तस्य चतुर्द्दशी।
एता रिक्ताश्च विज्ञेया अन्त्येष्टौ कुशलेन च ॥ ५८
एकादशाहे यच्छ्राद्धं नवकं तत् प्रकीर्त्तितम्।
चतुष्पथे त्यजेदन्नं पुनः स्नानं समाचरेत् ॥ ५९
एकादशाहादारभ्य षटस्यान्नं जलान्वितम्।
दिने दिने च दातव्यमब्दं यावद्द्विजोत्तमे ॥ ६०
मानुषस्य शरीरे तु विद्यते ह्यस्थिसञ्चयः।
तत्सङ्ख्या सर्व्वदेहेषु षष्ट्यधिकशतत्रयम् ॥ ६१
उदकुम्भेन पुष्टानि तान्यस्थीनि भवन्ति हि।
एतस्माद्दीयते कुम्भः प्रीतिः प्रेतस्य जायते ॥ ६२
यस्मिन् दिने मृतो जन्तुरटव्यां विषमेऽपि वा।
यदा तदा भवेद्दाहः सूतकं मृतवासरात् ॥ ६३
तिलपात्रं तथान्नाद्यं गन्धधूपादिकञ्च यत्।
एकादशाहे दातव्यं तेन शुद्धो द्विजो भवेत् ॥ ६४
क्षत्रियो द्वादशाहे तु वैश्यः पञ्चदशे तथा।
शुद्धिः शूद्रस्य मासेन मृतके जातसूतके ॥ ६५
मासत्रये त्रिरात्रं स्यात् षण्मासेन तु पक्षिणी।
अहः संवत्सरादर्व्वाक् पूर्णे दत्त्वोदकं शुचिः।
अनेनैवानुसारेण शुद्धिः स्यात् सार्व्ववार्णिकी ॥ ६६

एकादशाहं प्रभृति पुरतः प्रतिवत्सरम् ।
विश्वेदेवांस्तु सम्पूज्य पिण्डमेकञ्च निर्व्वपेत् ॥ ६७
यथा तारागणाः सर्व्वे छाद्यन्ते रविरश्मिभिः ।
एवं प्रच्छाद्यते सर्व्वं न प्रेतो भवति क्वचित् ॥ ६८
शय्यादानं प्रशंसन्ति सर्व्वदैव द्विजोत्तमाः ।
अनित्यं जीवनं यस्मात् पश्चात् को नु प्रदास्यति ॥ ६९
तावद्बन्धुः पिता तावद्यावज्जीवति मानवः ।
मृते मृत इति ज्ञात्वा क्षणात् स्नेहो निवर्त्तते ॥ ७०
आत्मैव ह्यात्मनो बन्धुरेवं ज्ञात्वा मुहुर्मुहुः ।
जीवन्नपीति सञ्चिन्त्य स्वीयं हितमनुस्मरेत् ॥ ७१
मृतानां कः सुतो दद्याद्द्विजे शय्याञ्च तूलिका ।
एवं ज्ञात्वा निजं सर्व्वं स्वहस्तेनैव दापयेत् ॥ ७२
तस्माच्छय्यां समासाद्य सारदारुमयीं दृढ़ाम् ।
दन्तादिरुचिरां रम्यां हेमपट्टैरलङ्कृताम् ।
तस्यां संस्थाप्य हैमञ्च हरिं लक्ष्म्या समन्वितम् ॥ ७३
घृतपूर्णञ्च कलसं तत्रैव परिकल्पयेत् ।
विज्ञेयो गरुड़ प्रीत्यै स निद्राकलसो बुधैः ॥ ७४
ताम्बूल-कुङ्कुमक्षोद-कर्पूरागुरुचन्दनम् ।
दीपिकोपानहच्छत्र-चामरासनभाजनम् ॥ ७५
पार्श्वेषु स्थापयेच्छक्त्या सप्तधान्यानि चैव हि ।
शयनस्थस्य भवति यच्चान्यदुपकारकम् ॥ ७६
भृङ्गार-करकाद्यं पञ्चवर्णं वितानकम् ।
शय्यामेवंविधां कृत्वा ब्राह्मणाय निवेदयेत् ॥ ७७
सपत्नीकाय सम्पूज्य स्वर्लोकसुखदायिनीम् ।
वस्त्रैः सुशोभनैः पूज्य चैलकं परिधापयेत् ॥ ७८
कर्ण-कण्ठाङ्गुली-बाहुभूषणैश्चित्रभूषणैः ।
गृहोपकरणैर्युक्तं गृहं धेन्वा समन्वितम् ॥ ७९
ततोऽर्घः सम्प्रदातव्यः पञ्चरत्नफलाक्षतैः ॥ ८०
यथा न कृष्णशयनं शून्यं सागरकन्यया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥ ८१
इत्येवं तल्पममलं क्षमाप्य च विसर्ज्जयेत् ।
तथा चैकादशाहे तु विधिरेष प्रकीर्त्तितः ॥ ८२
ददाति यो हि धर्म्मार्थी बान्धवो बान्धवे मृते ।
विशेषमत्र पक्षि तु कथ्यमानं मया शृणु ॥ ८३
उपयुक्तञ्च तस्यासीत् यत् किञ्चित् स्वगृहे पुरा ।
तस्य यद्गात्रसंलग्नं वस्त्रं भाजन-वाहनम् ।
यदभीष्टञ्च तस्यासीत् तत् सर्व्वं परिकल्पयेत् ॥ ८४
स्थापयेत् पुरुषं हैमं शय्योपरि शुभं बुधः ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥ ८५
पुरन्दरगृहे सर्व्वं सूर्य्यपुत्रालये तथा ।
उपतिष्ठेत् सुखं जन्तोः शय्यादानप्रभावतः ॥ ८६
पीड़यन्ति न तं याम्याः पुरुषा भीषणाननाः ।
न घर्म्मेण न शीतेन बाध्यते स नरः क्वचित् ॥ ८७
शय्यादानप्रभावेण प्रेतो मुच्येत बन्धनात् ।
अपि पापसमायुक्तः स्वर्गलोकं स गच्छति ॥ ८८
विमानवरमारूढ़ः सेव्यमानोऽप्सरोगणैः ।
आभूतसंप्लवं यावत् तिष्ठेत् पातकवर्ज्जितः ॥ ८९
नवश्राद्धं षोड़शश्राद्धं शय्या संवत्सरं तथा ।
भर्त्तुर्या कुरुते नारी तस्याः श्रेयो ह्यनन्तकम् ॥ ९०
उपकाराय सा भर्त्तुर्जीवति न मृता तथा ।
उद्धरेज्जीवमाना सा सती सत्यवती प्रियम् ॥ ९१
स्त्रियादध्यन्न-शयने हेमकुङ्कुमकज्जलम् ।
वस्त्रभूषा तथा शय्या सर्व्वमेतद्धि दापयेत् ॥ ९२
उपकारकरं स्त्रीणां यच्चैवेदिह किञ्चन ।
भूषणं गात्रलग्नञ्च वस्तु भोगादिकञ्च यत् ॥ ९३
तत् सर्व्वं मेलयित्वा तु स्वे स्वे स्थाने नियोजयेत् ।
पूजयेल्लोकपालांश्च ग्रहान् देवीं विनायकम् ॥ ९४
ततः शुक्लाम्बरधरो गृहीतकुसुमाञ्जलिः ।
इममुच्चारयेन्मन्त्रं विप्रस्य पुरतो बुधः ॥ ९५
प्रेतस्य प्रतिमा ह्येषा सर्व्वोपकरणैर्युता ।
सर्व्वरत्नसमायुक्ता तव विप्र निवेदिता ॥ ९६
आत्मा शम्भुः शिवा गौरी शक्रः सुरगणैः सह ।
तस्माच्छय्याप्रदानेन सेष आत्मा प्रसीदतु ॥ ९७
आचार्य्याय प्रदातव्या ब्राह्मणाय कुटुम्बिने ।
गृहीते ब्राह्मणायाथ कोऽदादिति च कीर्त्तयेत् ॥ ९८
ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्ज्जयेत् ।
विधिनानेन वै पक्षिन् दानमेकस्य दापयेत् ॥ ९९
बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येते दातारं पातयन्ति हि ॥ १००
एवं यो वितरेत् तार्क्ष्य शृणु तस्य च यत् फलम् ।
साग्रं वर्षशतं दिव्यं स्वर्गलोके महीयते ॥ १०१
यत् पुण्यन्तु व्यतीपाते कार्त्तिक्यामयनद्वये ।

यत् पुण्यं चन्द्र-सूर्य्यग्रहे तथा १०२
रकायान्तु यत् पुण्यं चन्द्र-सूर्य्यग्रहे तथा ।
णी नैमिषे यच्च कुरुक्षेत्रे तथार्व्वुदे ।
गायां यमुनायाञ्च सिन्धु-सागरसङ्गमे ॥ १०३
तु यद्दीयते दानं तस्मादप्यधिकन्त्विदम् ।
तच्छ्राद्धप्रदानस्य नाप्नोति षोड़शीं कलाम् ॥ १०४
तस्मौ जायते प्राणी भुङ्क्ते तत्रैव तत्फलम् ।
धर्म्मचर्य्यी क्षितौ याति मानुषः शुभदर्शनः ॥ १०५
महाधनी च धर्म्मज्ञः सर्व्वशास्त्रविशारदः ।
ततः स याति वैकुण्ठं मृतोऽसौ नरपुङ्गवः ॥ १०६
दिव्यं विमानमारुह्य अप्सरोभिः समावृतः ।
यत्रासौ हव्य-कव्येषु पितृभिः सह मोदते ॥ १०७
अष्टकासु कृतं श्राद्धं अमावस्यादिने तथा ।
मघासु पितृपर्व्वाणि यानि यानि च तेषु च ॥ १०८
शृणु तार्क्ष्य यथान्यायं प्रेतत्वे पितरो यदि ।
नोपतिष्ठन्ति श्राद्धानि सपिण्डीकरणं विना ॥ १०९
सपिण्डीकरणं कार्य्यं पूर्णे वर्षे न संशयः ।
शयन्तु शवशुद्ध्यर्थं कृत्वा चैव त्रिषोड़शीम् ॥ ११०
पितृपङ्क्तिविशुद्ध्यर्थं शतार्द्धेन तु योजयेत् ।
वृद्धिं प्राप्याग्रतः कुर्य्याच्छूद्रस्य स्वेच्छयैव हि ॥ १११
शाश्वतं साग्निके कार्य्यं द्वादशाहे सपिण्डनम् ।
न चासौ कुरुते यावत् प्रेत एव स वह्निमान् ।
द्वादशाहे ततः कार्य्यं साग्निकेन सपिण्डनम् ॥ ११२
अस्थिक्षेपो गयाश्राद्धं श्राद्धञ्चापरपक्षिकम् ।
अब्दमध्ये न कुर्व्वीत सपिण्डीकरणं विना ॥ ११३
सपत्न्यो यदि बह्वः स्युरेका पुत्त्रवती भवेत् ।
सर्व्वास्ताः पुत्त्रवत्यः स्युस्तेनैकेनात्मजेन हि ॥ ११४
नासपिण्ड्याग्निमान् पुत्त्रः पितृयज्ञं समाचरेत् ।
असमाचाराद्भवेत् पापी पितृहा चापि जायते ॥ ११५
मृते भर्त्तरि या नारी प्राणांश्चैव परित्यजेत् ।
तत्रैव हि समं तस्याः प्रकुर्व्वीत सपिण्डनम् ॥ ११६
अस्थानिकापि या व्यूढ़ा वैश्या वा क्षत्त्रियापि वा ।
ताःपत्न्योवैपितुः कश्चित् कुर्य्यात् पुत्त्रः सपिण्डनम्११७
विप्रेणैव यदा शूद्री परिणीता प्रमादतः ।
एकोद्दिष्टन्तु तच्छ्राद्धं सा तु तेनैव युज्यते ॥ ११८
अन्ये तु दश ये पुत्त्रा जाता वर्णचतुष्टये ।
ते नाशुतास्तु योक्तव्याः सपिण्डीकरणे सदा ॥ ११९

अन्वष्टकासु यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम् ।
पितुः पृथक् प्रदातव्यं स्त्रियाः पिण्डं सपिण्डने ॥ १२०
पितामह्या समं मातुः पितुः सह पितामहैः ।
सपिण्डीकरणं कार्य्यमिति तार्क्ष्य मतं मम ॥ १२१
अपुत्त्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम् ।
मात्रादितिसृभिः सार्द्धमेवं धर्म्मेण योजयेत् ॥ १२२
पुत्त्रो नास्ति न भर्त्ता च स्त्रीणां तार्क्ष्य सपिण्डने ।
कारयेद्द्विसमये भ्रातृजायाश्च देवराः ॥ १२३
पति-पुत्त्रविहीनानां गोत्त्री नास्ति न देवरः ।
एकोद्दिष्टेन दातव्यं परेण सह भ्रातृभिः ॥ १२४
आत्मनादिष्टितो वापि न कृतश्चेत् सपिण्डनम् ।
नवकं षोड़शश्राद्धमेकाहे कारयेत् ततः ॥ १२५
अदाहे न च कर्त्तव्यं सदाहे कारयेद्बुधः ।
दर्भपुत्तलकं कृत्वा वह्निना दाहयेच्छवम् ॥ १२६
पितुः पुत्त्रेण कर्त्तव्यं न कुर्व्वीत पिता सुते ।
अतिस्नेहान्न कर्त्तव्यं सपिण्डीकरणं सुते ॥ १२७
बहवोऽपि यदा पुत्त्रा विधिमेकः समाचरेत् ।
नवश्राद्धं सपिण्डत्वं श्राद्धान्यन्यानि षोड़श ॥ १२८
एकेनैव तु कार्य्याणि अविभक्तधनेष्वपि ।
अन्त्येष्टिं कुरुते ह्येको मुनिभिः समुदाहृतम् ॥ १२९
विभक्तैश्च पृथक् कार्य्या क्रिया सांवत्सरादिका ।
एकैकेन च कर्त्तव्या पुत्त्रेण च स्वयं स्वयम् ॥ १३०
यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोड़श ।
पिशाचत्वं स्थिरं तस्य कृतैः श्राद्धशतैरपि ॥ १३१
भ्राता वा भ्रातृपुत्त्रो वा सपिण्डः शिष्य एव वा ।
सपिण्डीकरणं कुर्य्यात् पुत्त्रहीने खगेश्वर ॥ १३२
सर्व्वेषां पुत्त्रहीनानां पत्नी कुर्य्यात् सपिण्डनम् ।
ऋत्विजं कारयेद्वाथ पुरोहितमथापि वा ॥ १३३
मृते पितर्य्यब्दमध्ये ह्युपरागो यदा भवेत् ।
पार्व्वणन्तु सुतैः कार्य्यं श्राद्धं नान्दीमुखं न च ॥ १३४
तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ।
अब्दमध्ये न कुर्व्वीत महागुरुविपत्तिषु ॥ १३५
यमके च गजच्छाया-मन्वादिषु युगादिषु ।
पितृपिण्डो न दातव्यः सपिण्डीकरणं विना ॥ १३६
यज्ञपुरुषस्य यद्दानं देवादीनाञ्च यत् तथा ।
अपूर्णेऽप्यब्दमध्येऽपि कर्त्तव्यमिति केन च ॥ १३७

पितृभ्यो ऽपि हि यद्दत्तमर्घं पिण्डविवर्जितम्।
कर्त्तव्यं तच्च वै सर्व्वेनैव एवंविधिः स्मृतः ॥ १३८
देवानां पितरो देवा पितृणामृषयस्तथा।
ऋषीणां पितरो देवाः पिता जपति तेन वै ॥ १३९
पितृ-देव-मनुष्याणां यज्ञनाथो विभुर्भवेत्।
यज्ञनाथस्य यद्दत्तं तद्दत्तं सर्व्वदेहिनाम् ॥ १४०
मृते पितर्य्यब्दमध्ये यः श्राद्धं कारयेत् सुतः।
अप्रजन्मकृतं धर्म्मं हीयते नात्र संशयः ॥ १४१
प्रेतीभूतास्तु पितरो लुप्तपिण्डोदकक्रियाः।
भ्रमन्ति वायुना सर्व्वे क्षुत्तृभ्यां परिपीड़िताः ॥ १४२
पितरि प्रेततापन्ने लुप्यते पैतृकी क्रिया।
अथ मातुर्विपत्तिः स्यात् पितृकार्य्यं न लुप्यते ॥ १४३
मृता माता पिता तिष्ठेज्जीवते च पितामही।
सपिण्डनन्तु कर्त्तव्यं पितामह्या सहैव तु ॥ १४४
सत्यं सत्यं पुनः सत्यं श्रूयतां वचनं मम।
न पिण्डो मिलितो येषां मृतानान्तु नृणां भुवि ॥ १४५
उपतिष्ठेन्न वै तेषां पुत्रैर्दत्तमनेकधा।
सूतकारस्तदुद्देशे श्राद्धं नैव जलाञ्जलिः ॥ १४६

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गारुड़संवादे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः।

तार्क्ष्य उवाच।

अपरं मम सन्देहं कथयस्व जनार्द्दन।
पुत्रस्य च कस्यापि माता पञ्चत्वमागता ॥ १
पितामही जीवति च तथा च प्रपितामही।
वृद्धप्रपितामही तद्वन्मातृसक्तः पिता तथा ॥ २
प्रमातामहश्च तथा वृद्धप्रमातामहस्तथा।
केन सा मेल्यते माता एतत् कथय मे प्रभो ॥ ३

श्रीकृष्ण उवाच।

पुनस्तत्तं प्रवक्ष्यामि सपिण्डीकरणं खग।
उमा लक्ष्मीश्च सावित्री सैताभिर्मेलयेद्ध्रुवम् ॥ ४
त्रयः पिण्डभुजो ज्ञेयास्त्यजकाश्च त्रयः स्मृताः।
त्रयः पिण्डानुलेपाश्च दशमः पङ्क्तिसन्निभः ॥ ५
इत्येते पुरुषाः ख्याताः पितृ-मातृकुलेषु च।
तारयेद्द्वयजमानस्तु दशपूर्व्वान् दशावरान् ॥ ६
सपिण्डः स भवेद्दातौ सपिण्डीकरणे कृते।
अन्त्यस्तु त्यजको ज्ञेयो यो वृद्धप्रपितामहः ॥ ७
अन्तिमस्त्यजको ज्ञेयो लेखकः प्रथमो भवेत्।
लेखकस्त्वतिगो यस्तु स भवेत् पङ्क्तिसन्निभः ॥ ८
यजमानो भवेदेको दशपूर्व्वं दशावरे।
इत्येते पितरो ज्ञेया एकविंशति शाश्वतः ॥ ९
विधिना कुरुते यस्तु संसारे श्राद्धमुत्तमम्।
जायतेऽत्र न सन्देहः शृणु तस्यापि यत् फलम् ॥ १०
पिता ददाति पुत्रान् वै विच्छिन्नसन्ततिः खग।
स वसेन्नरके घोरे पङ्के मग्नः करी यथा ॥ ११
योन्यन्तरेषु जायेत यत्र वृक्षसरीसृपाः।
न सन्ततिं विना सोऽत्र मुच्यते नरकाद्ध्रुवम् ॥ १२
आचार्य्यस्तस्य शिष्यो वा यो दूरेऽपि हि गोत्रजः।
नारायणबलिं कुर्य्यात् तस्योद्देशेन भक्तितः ॥ १३
विशुद्धः सर्व्वपापेभ्यो मुक्तः स नरकाद्ध्रुवम्।
निवसेन्नाकलोके च नात्र कार्य्या विचारणा ॥ १४
आदौ कृत्वा धनिष्ठाञ्च एतन्नक्षत्रपञ्चकम्।
रेवत्यन्तं सदा दूष्यमशुभं सर्व्वदा भवेत् ॥ १५
बलिस्तत्र न कर्त्तव्यो विप्रादिसर्व्वजातिषु।
दीयते न जलं तत्र अशुभं जायते ध्रुवम्।
लोकयात्रा न कर्त्तव्या दुःखार्त्तः स्वजनो यदि ॥ १६
पञ्चकानन्तरं तस्य कर्त्तव्यं सर्व्वमन्यथा।
पुत्राणां गोत्रिणां तस्य सन्तापोऽप्युपजायते ॥ १७
गृहे हानिर्भवेत् पृष्ठे ऋक्षेष्वेषु मृतश्च यः।
अथवा ऋक्षमध्येऽपि दाहस्तस्य विधीयते ॥ १८
क्रियते मानुषाणान्तु सद्य आहुतिकारणात्।
सद्याहुतिकरं पुण्यं तीर्थं तद्दाह उत्तमः ॥ १९
विप्रैर्नियमतः कार्य्यः समन्त्रो विधिपूर्व्वकः।
शवस्य च समीपे तु क्षिप्यते पुत्तलास्ततः ॥ २०
दर्भमयाश्च चत्वारो विप्रा मन्त्राभिमन्त्रिताः।
ततो दाह्यः प्रकर्त्तव्यः तैश्च पुत्तलकैः सह ॥ २१
सूतकान्ते ततः पुत्रः कुर्य्याच्छान्तिकमुत्तमम् ॥ २२
पञ्चकेषु मृते योऽसौ न गतिं लभते नरः ॥।
तिलान् गाश्च सुवर्णञ्च तमुद्दिश्य घृतं ददेत् ॥ २३
विप्राणां दीयते दानं सर्व्वोपद्रवनाशनम्।

सूतकान्ते च सत्पुत्रैः स प्रेतो लभते गतिम् ॥ २४
शजनोपानहौ छत्त्रं हेममुद्राञ्च वाससी।
दक्षिणा दीयते विप्र सर्व्वपातकमोचनी ॥ २५
बालवृद्धातुराणाञ्च मृतानां पञ्चकेषु हि।
विधानं यो न कुर्व्वीत विघ्नस्तस्य प्रजायते ॥ २६
षडादशैव वस्तूनि प्रेतश्राद्धे विवर्ज्जयेत्।
आशिषो द्विगुणान् दर्भान् प्रणवान् नैकपिण्डताम् २७
अग्नौकरणमुच्छिष्टं श्राद्धं वै वैश्वदेविकम्।
शर्य्यानिक्यं स्वधाकारं पितृशब्दं न चोच्चरेत् ॥ २८
अनुशब्देन कुर्व्वीत नावाहनमथोल्मुकम्।
सीमान्तं न कुर्व्वीत प्रदक्षिणविसर्ज्जनम् ॥ २९
न कुर्य्यात् तिलहोमञ्च द्विजः पूर्णाहुतिं तथा।
न कुर्य्याद्विश्वदेवान्ते कर्त्ता गच्छत्यधोगतिम् ॥ ३०
मलिनश्राद्धसंज्ञाने पूर्व्वषोड़शकं तथा।
स्थाने द्वारे चार्द्धमार्गे चितायां शवहस्तयोः ॥ ३१
षष्ठं सञ्चयने प्रोक्तं दश पिण्डा दशाह्निकाः।
श्राद्धषोड़शकञ्चैतत् प्रथमं परिकीर्त्तितम् ॥ ३२
अन्यच्च षोड़शं मध्ये द्वितीयं तार्क्ष्य मे शृणु।
कर्त्तव्यानीह विधिना श्राद्धान्येकादशैव तु ॥ ३३
ब्रह्म-विष्णु-शिवाद्यञ्च तथान्यच्छ्राद्धपञ्चकम्।
मध्यं षोड़शकं प्राहुरेतत् तत्त्वविदो जनाः ॥ ३४
द्वादश प्रतिमास्यानि श्राद्धमेकादशे तथा।
त्रिपक्षसश्चवञ्चैव द्वे रिक्ते खग षोड़श ॥ ३५
आद्यं शवविशुद्ध्यर्थं कृत्वान्यञ्च त्रिषोड़शम्।
पितृपङ्क्तिविशुद्ध्यर्थं शतार्द्धेन तु योजयेत् ॥ ३६
शतार्द्धेन विहीनो यो मिलितः पङ्क्तिभाङ् न हि।
चत्वारिंशत् तथैवाष्टश्राद्धं प्रेतत्वनाशनम् ॥ ३७
एकेनोनशतार्द्धेन सम्भवेत् पङ्क्तिसन्निधः।
मेलनीयः शतार्द्धेन सन्धिः श्राद्धेन तत्त्वतः ॥ ३८

अथ शवविधिः।

शवस्य शिविकया करचरणबन्धनं तत्र कर्त्तव्यम्।
एवं चेन्न विधानं विधीयते तत्पिशाचपरिभवनम् ३९
संजायते रजन्याञ्च शवनिगमने राष्ट्रंभयशून्यम्।
अन्नं न भुञ्जीत् भुञ्जेत् चेत् दुष्पर्शा दुर्गतिर्भवेत् ॥ ४०
ग्राममध्ये स्थिते प्रेते श्रुते भुङ्क्ते यदृच्छया।
तद्वै मांसवज्ज्ञातं तत् तोयं रुधिरोपमम् ॥ ४१
ताम्बूलं दन्तकाष्ठञ्च भोजनं ऋतुसेवनम्।
ग्राममध्ये स्थिते प्रेते वर्ज्जयेत् पिण्डपातनम् ॥ ४२
स्नानं दानं जपो होमस्तर्पणं सुरपूजनम्।
ग्राममध्ये स्थिते प्रेते शुद्ध्यर्थं ज्ञातिधर्म्मतः ॥ ४३
ज्ञातिसम्बन्धिनामेवं व्यवहारः खगेश्वर।
विलुप्य ज्ञातिधर्म्मञ्च प्रेतपापेन लिप्यते ॥ ४४

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः।

ताक्ष्य उवाच।

कस्मादनशनं पुण्यमक्षय्यगतिदायकम्।
स्वगृहन्तु परित्यज्य तीर्थे वै म्रियते यदि ॥ १
अप्राप्य तीर्थं म्रियते गृहे वा मृत्युमागतः।
भूत्वा कुटीचरो यस्तु स कां गतिमवाप्नुयात् ॥ २
सन्न्यासं कुरुते यस्तु तीर्थे वापि गृहेऽपि वा।
कथं तस्य प्रकर्त्तव्यमप्राप्तनिधनेऽपि वा ॥ ३
नियमे चेत् कृते देव चित्तभङ्गो हि जायते।
केन तस्य भवेत् सिद्धिः कृतेनाप्यकृतेन वा ॥ ४

श्रीकृष्ण उवाच।

कृत्वा निरशनं यो वै मृत्युमाप्नोति कोऽपि चेत्।
मानुषीं तनुमुत्सृज्य मम तुल्यो विराजते ॥ ५
यावन्त्यहानि जीवेत व्रते निरशने कृते।
क्रतुभिस्तानि तुल्यानि सम प्रवरदक्षिणैः ॥ ६
तीर्थे गृहे वा सन्न्यासं नीत्वा चेन्म्रियते यदि।
प्रत्यहं लभते सोऽपि पूर्व्वोक्तं द्विगुणं फलम् ॥ ७
महारोगोपपत्तौ च गृहीतेऽनशने कृते।
पुनर्न जायते रोगी देववद्धि विराजते ॥ ८
य आतुरः सन् सन्न्यासं गृह्णाति यदि मानवः।
पुनर्न जायते भूमौ संसारे दुःखसागरे ॥ ९
अहन्यहनि दातव्यं ब्राह्मणानाञ्च भोजनम्।
तिलपात्रं यथाशक्ति दीपदानं सुरार्चनम् ॥ १०
एवंव्रतस्य दह्यन्ति पापान्युच्चावचानि च।
मृतो मुक्तिमवाप्नोति यथा सर्व्वे महर्षयः ॥ ११
तस्मादनशनं नृणां वैकुण्ठपददायकम्।

तस्मात् स्वस्थे चोत्तरे वा साधयेन्मोक्षलक्षणम्।
पुत्रद्रव्यादि सन्त्यज्य तीर्थं व्रजति यो नरः।
ब्रह्माद्या देवतास्तस्य भवेयुस्तुष्टिपुष्टिदाः ॥ १३
यस्तीर्थसम्मुखो भूत्वा व्रते ह्यनशने कृते।
म्रियेतान्तरालेऽपि ऋषीणां मण्डले वसेत् ॥१४
व्रतं निरशनं कृत्वा स्वगृहेऽपि मृतो यदि।
स्वकुलानि परित्यज्य एकाकी विचरेद्दिवि ॥ १५
अनश्नैव तथा तोयं परित्यज्य नरो यदि।
शीतमत्यादतोयश्च न पुनर्जायते क्षितौ ॥ १६
कृत्यासीनं तीर्थगतं रक्षन्ति वनदेवताः।
यमदूता विशेषेण न यान्त्यास्तस्य पार्श्वगाः ॥ १७
तीर्थसेवी नरो यस्तु सर्व्वकिल्बिषवर्ज्जितः।
तत्र म्रियेत दह्येत स तीर्थफलभाग्भवेत् ॥ १८
जीवितेऽपि सदा तीर्थे ह्यन्यत्र म्रियते यदि।
शुभे देशे कुले धीमान् स भवेद्वेदविद्द्विजः ॥ १९
कृत्वा निरशनं तार्क्ष्य पुनर्ज्जीवति मानवः।
ब्राह्मणान् स समाहूय सर्व्वस्वं यत् परित्यजेत् ॥२०
चान्द्रायणं चरेत् कृत्स्नमनुज्ञातश्च तैर्द्विजैः।
अनृतं न वदेत् पश्चाद्धर्म्ममेव समाचरेत् ॥ २१
तीर्थं गत्वा च यः कोऽपि पुनरायाति वै गृहे।
अनुज्ञातः स वै विप्रैः प्रायश्चित्तमथाचरेत् ॥ २२
दत्त्वा वा स्वर्णदानानि गो-मही-गज-वाजिनः।
तीर्थं यदि लभेद्यस्तु मृत्युकाले स भाग्यवान् ॥२३
गृहात् प्रचलितस्तीर्थं मरणे समुपस्थिते।
पदे पदे तु गोदानं यदि हिंसा न जायते ॥ २४
गृहे तु यत् कृतं पापं तीर्थस्नानेन शुध्यति।
गृहे तु यत् कृतं पापं तीर्थस्नानेन शुध्यति।
कृन्तते तत्र पापञ्चेदश्मलेपसमं हि तत् ॥ २५
लिख्येत् स नात्र सन्देहो यावच्चन्द्रार्कतारकम्।
तत्र दत्तानि दानानि जायन्ते चाक्षयानि वै ॥ २६
आतुरे सति दातव्यं निर्द्धनैरपि मानवैः।
आतुरे सति दातव्यं सप्तधान्यं विशेषतः ॥ २७
गात्रस्तिला हिरण्यञ्च सप्तधान्यं विशेषतः ॥ २७
दानवन्तं नरं दृष्ट्वा हृष्टाः सर्व्वे दिवौकसः।
ऋषिभिः सह धर्म्मेण चित्रगुप्तेन सर्व्वदा ॥ २८
आत्मायत्तं धनं यावत् तावद्विप्रे समर्पयेत्।
पराधीनं मृते सर्व्वं कृपया कः प्रदास्यति ॥ २९
पितुरुद्देशेन यः पुत्रैर्धनं विप्रकरेऽर्पितम्।
आत्मानं सधनं तेन चक्रे पुत्र-प्रपौत्रकैः ॥ ३०
पितुः शतगुणं दत्तं सहस्रं मातुरुच्यते।
भगिन्या शतसाहस्रं सोदर्य्ये दत्तमक्षयम् ॥ ३१
यदि लोभान्न यच्छन्ति प्रमादान्मोहतोऽपि वा।
मृताः शोचन्ति ते सर्व्वे कदर्य्याः पापिनस्त्विति ॥ ३२
अतिक्लेशेन लब्धस्य प्रकृत्या चञ्चलस्य च।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ ३३
मृत्युः शरीरगोप्तारं वसुरक्षं वसुन्धरा।
दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ ३४
उदारो धार्म्मिकः सौम्यः प्राप्यापि विपुलं धनम्।
तृणवन्मन्यते तार्क्ष्य आत्मानं वित्तमित्यपि ॥ ३५
न चैवोपद्रवास्तस्य मोहजालो न चैव हि।
मृत्युकाले न च भयं यमदूतसमुद्भवम् ॥ ३६

समाः सहस्राणि च सप्त वै जले
दशैकमग्नौ पतने च षोडश।
महाहवे षष्टिरशीति गोग्रहे
अनाशके काश्यप चाक्षया गतिः ॥ ३७

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

—

## सप्तत्रिंशोऽध्यायः।

तार्क्ष्य उवाच।

उदकुम्भप्रदानं मे कथयस्व यथातथम्।
विधिना केन कर्त्तव्या कृतिरेषा जनार्द्दन ॥ १
किंलक्षणाः केन पूर्णाः कस्य देया जनार्द्दन।
कस्मिन् काले प्रदातव्या प्रेततृप्तिप्रसाधकाः ॥ २

श्रीकृष्ण उवाच।

सत्यं तार्क्ष्य प्रवक्ष्यामि उदकुम्भप्रदानकम्।
प्रेतोद्देशेन दातव्या अन्नपानीयसंयुताः।
विशेषेण महापक्षिन् प्रेतमुक्तिप्रदायकाः ॥ ३
द्वादशाहे च षण्मासे त्रिपक्षे वापि वत्सरे।
उदकुम्भाः प्रदातव्या मार्गे तस्य सुखाय वै ॥ ४
अहन्यहनि दातव्या उदकुम्भास्तिलैर्युताः।
सुलिप्ते भूमिभागे तु पक्वान्नजलपूरिताः ॥ ५
प्रेतस्य तत्र दातव्यं भाजनञ्च यदृच्छया।

...तस्तेन दत्तेन प्रेतो याम्यैः स गच्छति ॥ ६
...हे विशेषेण उदकुम्भान् प्रदापयेत्।
...वा तत्र सङ्कल्प्य घटान् द्वादशसंख्यकान् ॥ ७
...पि वर्द्धनी तत्र पक्वान्नफलपूरिता।
...मुद्दिश्य दातव्या सङ्कल्प्य ब्राह्मणे शुभे ॥ ८
...वै धर्मराजाय तेन तुष्टेन मुक्तिभाक्।
...शुभाय चैकन्तु गतस्तत्र सुखी भवेत् ॥ ९
...श्याद्याः प्रदातव्याः माषान्नजलपूरिताः ॥ १०
...न्तिश्राद्धमारभ्य श्राद्धषोड़शकस्य तु।
...शब्राह्मणानान्तु एकैकं विनिवेदयेत् ॥ ११
...दशाहात् प्रभृति देयो नित्यं दृढ़ाह्वयः।
...न्नजलपूर्णो हि यावत् संवत्सरं दिनम् ॥ १२
...णवाणि वृन्नानि दत्त्वाद्विघटिकानि च।
...वै वर्द्धनी तत्र तस्यां पात्रन्तु वंशजम् ॥ १३
...णा च्छादयेत् तान्तु पूजयित्वा सुगन्धिभिः।
...णेभ्यो विशेषेण जलपूर्णानि दापयेत् ॥ १४
...हनि सङ्कल्प्य विधिपूर्व्वं खगेश्वर।
...णाय कुलीनाय वेदवृत्तयुताय च ॥ १५
...वृत्तवते देयं मूर्खे तन्न कदाचन।
...र्थो वेदवृत्ताढ्यस्तारणे लवणोऽपि च ॥ १६

तार्क्ष्य उवाच।

...नतीर्थार्थितं मोक्षं स्वर्गञ्च वद मे प्रभो।
...न मोक्षमवाप्नोति केन स्वर्गे वसेच्चिरम् ॥ १७
...न गच्छति तेजस्तु स्वर्लोकात् सत्यलोकतः।
...नुष्यं केन लभते नरकेषु निमज्जति ॥ १८
...मे वद निश्चित्य भक्तानां मोक्षदायक।
...हि कस्मिन् मृते स्वर्गे पुनर्जन्म न विद्यते ॥ १९

श्रीविष्णुरुवाच।

...नुष्यं भारते वर्षे त्रयोदशसु जातिषु।
...प्राप्य म्रियते क्षेत्रे पुनर्ज्जन्म न विद्यते ॥ २०
...ध्या मथुरा माया काशी काञ्ची अवन्तिका।
...री द्वारवती ज्ञेया सप्तैता मोक्षदायिकाः ॥ २१
...स्तमिति यो ब्रूयात् प्राणैः कण्ठगतैरपि।
...विष्णुपुरं याति न पुनर्जायते क्षितौ ॥ २२
...श्चरितं येन हरिरित्यक्षरद्वयम्।
...परिकरस्तेन मोक्षाय गमनं प्रति ॥ ॥ २३

कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः।
जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ २४
शालग्रामशिला यत्र यत्र द्वारवती शिला।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ २५
शालग्रामशिला यत्र पापदोषक्षयावहा।
तत्सन्निधानमरणान्मुक्तिर्जन्तोः सुनिश्चिता ॥ २६
रोपणात् पालनात् सेकाद्ध्यान-स्पर्शन-कीर्त्तनात्।
तुलसी दहते पापं नृणां जन्मार्ज्जितं खग ॥ २७
ज्ञानह्रदे सत्यजले राग-द्वेषमलापहे।
यः स्नातो मानसे तीर्थे न स लिप्येत पातकैः ॥२८
न काष्ठे विद्यते देवो न शिलायां कदाचन।
भावे हि विद्यते देवस्तस्माद्भावं समाचरेत् ॥ २९
प्रातः प्रातः प्रपश्यन्ति नर्म्मदां मत्स्यघातिनः।
न ते शिवपुरीं याति चित्तवृत्तिर्गरीयसी ॥ ३०
यादृक् चित्तप्रतीतिः स्यात् तादृक्कर्म्मफलं नृणाम्।
परलोकगतिस्तादृक् सूची-सूत्रविचारवत् ॥ ३१
ब्राह्मणार्थे गवार्थे च स्त्रीणां बालवधेषु च।
प्राणत्यागपरो यस्तु स वै मोक्षमवाप्नुयात् ॥ ३२
अनाशके मृतो यस्तु स वै मोक्षमवाप्नुयात्।
अनाशके मृतो यस्तु स मुक्तः सर्व्वबन्धनैः ॥ ३३
दत्त्वा दानानि विप्रेभ्यस्ततो मोक्षमवाप्नुयात्।
एते वै मोक्षमार्गाश्च स्वर्गमार्गास्तथैव च ॥ ३४
गोग्रहे देशविध्वंसे मरणं रणतीर्थयोः।
उत्तमाधममध्यस्य बाधमानस्य देहिनः।
आत्मानं तत्र सन्त्यज्य स्वर्गवासं लभेच्चिरम् ॥ ३५
जीवितं मरणञ्चैव द्वयं शिक्षेत पण्डितः।
जीवितं दान भोगाभ्यां मरणं रण-तीर्थयोः ॥ ३६
हरिक्षेत्रे कुरुक्षेत्रे भृगुक्षेत्रे तथैव च।
प्रभासे श्रीस्थले चैव अर्व्वुदे च त्रिपुष्करे ॥ ३७
भूतेश्वरे मृतो यस्तु स्वर्गे वसति मानवः।
ब्रह्मणो दिवसं यावत् ततः पतति भूतले ॥ ३८
वर्षवृत्तिन्तु यो दद्याद्ब्राह्मणे दोषवर्ज्जिते।
स सर्व्वकुलमुद्धृत्य स्वर्गलोके महीयते ॥ ३९
कन्यां विवाहयेद्यस्तु ब्राह्मणं वेदपारगम्।
इन्द्रलोके वसेत् सोऽपि स्वकुलैः परिवेष्टितः ॥ ४०
महादानानि दत्त्वा च नरस्तत्फलमाप्नुयात् ॥ ४१

वापी-कूप-तड़ागानामाराम-सुरसद्मनाम्।
जीर्णोद्धारं प्रकुर्व्वाणः पूर्व्वकर्त्तुः फलं लभेत्।
जीर्णोद्धारेण वा तेषां तत् पुण्यं द्विगुणं भवेत् ॥ ४२
शीतवातातपहरमपि वर्षाकुटीरकम्।
कृत्वा विप्राय विदुषि प्रददाति कुटुम्बिने ॥ ४३
तिस्रः कोव्यर्द्धकोटी च नरः स्वर्गे महीयते ॥ ४४
या स्त्री सवर्णा संशुद्धा मृतं पतिमनुव्रजेत्।
सा मृता स्वर्गमाप्नोति वर्षाणां रोमसंख्यया ॥ ४५
पुत्र-पौत्रादिकं त्यक्त्वा स्वपतिं यानुगच्छति।
स्वर्गं लभेतां तौ चोभौ दिव्यस्त्रीभिरलङ्कृतौ ॥ ४६
कृत्वा पापान्यनेकानि भर्त्तृद्रोहमतिः सदा।
प्रक्षालयति सर्व्वाणि या स्वं पतिमनुव्रजेत् ॥ ४७
महापापसमाचारो भर्त्ता चेद्दुष्कृती भवेत्।
तस्याप्यनुव्रता नारी नाशयेत् सर्व्वकिल्बिषम् ॥ ४८
आजन्मातं नियमतो नित्यदानं करोति यः।
चतुश्चमरसंयुक्त-विमानेनाधिगच्छति ॥ ४९
यत् कृतं हि मनुष्येण पापमामरणान्तिकम्।
तत् सर्व्वं नाशमायाति वर्षवृत्तिप्रदानतः ॥ ५०
भूतं भव्यं भविष्यञ्च पापं जन्मत्रयार्ज्जितम्।
प्रक्षालयति तत् सर्व्वं विप्रकन्योपनायनात् ॥ ५१
दशकूपसमा वापी दशवापीसमं सरः।
सरोभिर्दशभिस्तुल्या या प्रपा निर्ज्जले वने ॥ ५२
या वापी निर्ज्जले देशे यद्दानं निर्द्धने द्विजे।
प्राणिनां यो दयां धत्ते स भवेन्नाकनायकः ॥ ५३
एवमादिभिरन्यैश्च सुकृतैः स्वर्गभाग्भवेत्।
तत्र तत् सर्व्वं फलं प्राप्य प्रतिष्ठां परमां लभेत् ॥ ५४
अल्पकार्य्यं परित्यज्य सततं धर्म्मवान् भवेत्।
दानं दमो दया चेति सारमेतत् त्रयं भुवि ॥ ५५
दानं साधोर्दरिद्रस्य शून्यलिङ्गस्य पूजनम्।
अनाथप्रेतसंस्कारः कोटियज्ञफलप्रदः ॥ ५६

तार्क्ष्य उवाच।

सूतकानां विधिं ब्रूहि दयां कृत्वा ममोपरि।
विवेकाय हि चित्तस्य मानवानां हिताय च ॥ ५७

श्रीकृष्ण उवाच।

मृते जन्मनि पक्षीन्द्र सूतकं स्याच्चतुर्व्विधम्।
चतुर्णामपि वर्णानां सामान्येन विवर्ज्जितम् ॥ ५८
उभयत्र दशाहानि कुलस्यान्नं विवर्ज्जयेत्।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥ ५९
देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिं व्यवस्थाञ्च ज्ञात्वा कर्म्म समारभेत् ॥ ६०
गुहावह्निप्रवेशे च देशान्तरमृतेषु च।
स्नानं सचैलं कर्त्तव्यं सद्यःशौचं विधीयते ॥ ६१
आमगर्भाश्च ये जीवा ये च गर्भाद्विनिःसृताः।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ ६२
शिल्पिनः कारवो वैद्या दासी दासास्तथैव च।
राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्त्तिताः ॥ ६३
सत्री च मन्त्रपूतश्च आहिताग्निर्नृपस्तथा।
एषां वै सूतको नास्ति यस्य नेच्छन्ति बाड़वाः ॥ ६४
प्रसवे च सपिण्डानां न कुर्य्यात् सङ्करं द्विजः।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥ ६५
विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके।
पूर्व्वसङ्कल्पितं वित्तं भोज्यं तन्मनुरब्रवीत् ॥ ६६
अन्तर्दशाहे स्याताञ्चेत् पुनर्मरण-जन्मनी।
तावत् स्यादशुचिर्विप्रो यावत् तत् स्यादनिर्द्दशम् ॥ ६७
उदिते नियमे दाने आर्त्ते विप्रे निवेदयेत्।
तथैव ऋषिभिः प्रोक्तं यथाकालं न दुष्यति ॥ ६८
मृण्मयेन तु पात्रेण तिलैर्मिश्रजलैः सह।
मृत्तिकया तथान्ते च नरः स्नात्वा शुचिर्भवेत् ॥ ६९
दानं परिषदे दद्यात् सुवर्णं गोवृषं द्विजे।
क्षत्रियो द्विगुणं दत्त्वा वैश्यस्तु त्रिगुणं तथा ॥ ७०
चतुर्गुणन्तु शूद्रेण दातव्यं ब्राह्मणे धनम्।
एवञ्चानुक्रमेणैव चातुर्वर्ण्यं विशुध्यति ॥ ७१
ब्राह्मणार्थे विपन्ना ये नारीणां गोग्रहेषु च।
आहवेषु विपन्नानामेकरात्रमशौचकम् ॥ ७२
न तेषामशुभं किञ्चिद्विप्राणां शुभकर्म्मणि।
जलावगाहनात् तेषां सद्यः शुद्धिरुदाहृता ॥ ७३

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ।

तार्क्ष्य उवाच ।

भगवन् ब्राह्मणाः केचिद्दपमृत्युवशं गताः ।
कथं तेषां भवेन्मार्गः किं स्थानं का गतिर्भवेत् ॥ १
किञ्च युक्तं भवेत् तेषां विधानञ्चापि कीदृशम् ।
तदहं श्रोतुमिच्छामि ब्रूहि मे मधुसूदन ॥ २

श्रीकृष्ण उवाच ।

प्रेतीभूतद्विजातीनां सम्भूते मृत्युवैकृते ।
तेषां मार्ग-गति-स्थानं विधानं कथयाम्यहम् ॥ ३
शृणु तार्क्ष्य परं गोप्यं जाते दुर्म्मरणे सति ।
लङ्घनैर्ये मृता विप्रा दंष्ट्रिभिश्चाभिघातिताः ॥ ४
कण्ठग्राहविलग्नानां चीणानां तुण्डघातिनाम् ।
विषाग्नि-वृष-विप्रेभ्यो विसूच्या चात्मघातकाः ॥ ५
पतनोद्बन्धनजले मृतानां शृणु संस्थितिम् ।
यान्ति ते नरके घोरे ये च म्लेच्छादिभिर्हताः ॥ ६
श्वशृगालादिसंस्पृष्टा अदग्धाः कृमिसङ्कुलाः ।
उल्लङ्घिता मृता ये च महारोगैश्च पीड़िताः ॥ ७
अभिशस्तास्तथा व्यङ्गा ये च पापान्नपोषिताः ।
चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युताग्नितः ॥ ८
दंष्ट्रिभ्यश्च पशुभ्यश्च वृचादिपतनान्मृताः ।
उदक्या-सूतकी-शूद्री-रजकी सङ्ग दूषिताः ॥ ९
तेन पापेन नरकान्मुक्ताः प्रेतत्वभागिनः ।
न तेषां कारयेद्दाहं सूतकं नोदकक्रियाम् ॥ १०
सर्व्वलोकहितार्थाय शृणु पापभयापहम् ।
षण्मासे ब्राह्मणे दाहस्त्रिमासं चत्रिये मतः ॥ ११
सार्द्धमासन्तु वैश्यस्य सद्यः शूद्रे विधीयते ।
गङ्गायां यमुनायाञ्च नैमिषे पुष्करेऽपि च ॥ १२
तड़ागे जलपूर्णे वा ह्रदे वा विमलोदके ।
वापी-कूप-गवां गोष्ठे गृहे वा प्रतिमालये ॥ १३
कृष्णाग्रे कारयेद्विप्र वलिं नारायणाह्वयम् ।
प्रेताय तर्पणं कार्य्यं मन्त्रैः पौराण-वैदिकैः ॥ १४
सर्व्वौषध्यचतैर्मिश्रैर्विष्णुमुद्दिश्य तर्पयेत् ।
कार्य्यं पुरुषसूक्तेन मन्त्रर्वा वैष्णवैरपि ॥ १५
दक्षिणाभिमुखो भूत्वा प्रेतमोक्षप्रदो भव ।
तर्पणस्यावसाने च वीतरागो विमत्सरः ॥ १६

जितेन्द्रियमना भूत्वा शुचिष्मान् धर्म्मतत्परः ।
दानधर्म्मरतः शान्तः प्रणम्य वाग्यतः शुचिः ॥ १७
यजमानो भवेत् तत्र शुचिर्बन्धुसमन्वितः ।
भक्त्या तत्र प्रकुर्व्वीत श्राद्धान्येकादशैव तु ॥ १८
सर्व्वकर्म्मविपाकेन एकैकाग्रे समाहितः ।
तोय-व्रीहि-यवान् षष्ट्या गोधूमांश्च प्रियङ्गुकान् ॥ १९
हविष्यान्नं शुभं मुद्रां छत्रोष्णीषे च चेलकम् ।
दापयेत् सर्व्वशस्यानि चीर-चौद्रयुतानि च ॥ २०
वस्त्रोपानहसंयुक्तं दद्यादष्टविधं पदम् ।
दापयेत् सर्व्वविप्रेभ्यो न कुर्य्यात् पङ्क्तिबन्धनम् ॥ २१
भूतौ स्थितेषु पिण्डेषु गन्धपुष्पाचतान्वितम् ।
शङ्खपात्रे तथा ताम्रे तर्पणञ्च पृथक् पृथक् ॥ २२
ध्यानधारणसंयुक्तो जानुभ्यामवनीं गतः ।
दातव्यं सर्व्वविप्रेभ्यो वेदशास्त्रविधानतः ॥ २३
ऋचा वै दापयेदर्घमेकोद्दिष्टे पृथक् पृथक् ।
आपो देवो मधुमती आदिपीठे प्रकल्पिता ॥ २४
उपयामगृहीतोऽसि द्वितीयेऽर्घं निवेदयेत् ।
येनापावकचक्षुषा तृतीये च सङ्कल्पिता ॥ २५
ये देवासश्चतुर्थे तु समुद्रं गच्छ पञ्चमे ।
अग्निर्ज्योतिस्तथा षष्ठे हिरण्यगर्भश्च सप्तमे ॥ २६
यज्वाग्रतेति नवमे दशमे याः फलीति च ।
दद्याच्च विश्वतश्चक्षुः पिण्डे चैकादशे ततः ॥ २७
भद्रं कर्णेभिरिति च कुर्य्यात् पिण्डविसर्ज्जनम् ।
कृत्वैकादशदैवत्यं श्राद्धं कुर्य्यात् परेऽहनि ॥ २८
विप्रानावाहयेत् पश्चाच्चतुर्व्वेदविशारदान् ।
विश्वशील गुणोपेतान् स्वकीयान्शीलसत्तमान् ।
अव्यङ्गान् सुप्रशस्तांश्च न तु वर्ज्यान् कदाचन ॥ २९
विष्णुः स्वर्णमयः कार्य्यो रुद्रस्ताम्रमयस्तथा ।
ब्रह्मा रूप्यमयस्तद्वद्यमो लोहमयो भवेत् ॥ ३०
शन्नोदेवीति मन्त्रेण गोविन्दं पश्चिमे न्यसेत् ।
अग्नआयाहीति रुद्रमुत्तर एवविन्यसेत् ।
अग्निमीलेति मन्त्रेण पूर्व्वेणैव प्रजापतिम् ॥ ३१
ईषित्वोर्ज्जेति मन्त्रेण दक्षिणे स्थापयेद्यमम् ।
मध्ये मण्डलकं कृत्वा स्थाप्यो दर्भमयो नरः ॥ ३२
ब्रह्मा विष्णुस्तथा रुद्रो यमः प्रेतश्च पञ्चमः ।
पृथक् कुम्भे ततः स्थाप्याः पञ्चरत्नसमन्विताः ॥ ३३

युगयज्ञोपवीतानि पृथङ्मुद्रापराणि च।
जपं कुर्य्यात् पृथक् तत्र ब्रह्मादौ देवतासु च॥ ३४
पदश्राद्धानि कुर्व्वीत देवतानां यथाविधि।
जलधारां ततो दद्यात् पीठे पीठे पृथक् पृथक्॥ ३५
शङ्खे वा ताम्रपात्रे वा अलाभे मृण्मयेऽपि वा।
तिलोदकं समादाय सर्व्वौषधिसमन्वितम्॥ ३६
आसनोपानहौ छत्रं मुद्रिका च कमण्डलुः।
भाजनं भाजनाधारं वस्त्राण्यष्टविधं पदम्॥ ३७
ताम्रपात्रं तिलैः पूर्णं सहिरण्यं सदक्षिणम्।
दद्याद्ब्राह्मणमुख्याय विधियुक्तं खगेश्वर॥ ३८
ऋग्वेदपारगे दद्याज्जातशस्यां वसुन्धराम्।
यजुर्व्वेदमये विप्रे गाञ्च दद्यात् पयस्विनीम्॥ ३९
सामगाय शिवोद्देशे प्रदद्यात् कलधौतकम्।
यमोद्देशे तिलाँल्लोहं ततो दद्याच्च दक्षिणाम्॥ ४०
तथा पुत्तलकं कार्य्यं सर्व्वौषधिसमन्वितम्।
पलाशस्य च वृन्तानि विभागं शृणु काश्यप॥ ४१
कृष्णाजिनं समास्तीर्य्य कुशैश्च पुरुषाकृतिम्।
शतत्रयं षष्टियुतं वृन्तैः प्रोक्तोऽस्थिसञ्चयः॥ ४२
वृन्तस्य तानि वृन्तानि अङ्गेष्वेषु पृथक् पृथक्।
चत्वारिंशच्छिरे देयं ग्रीवायां दश विन्यसेत्॥ ४३
विंशत्युरःस्थले दद्याद्विंशतिं जठरेऽपि च।
बाहुयुग्मे शतं दद्यात् कटिदेशे च विंशतिम्॥ ४४
ऊरुद्वये शतञ्चापि त्रिंशज्जङ्घाद्वये न्यसेत्।
दद्याच्चतुष्टयं शिश्ने षड्दद्याद्वृषणद्वये।
दश पादाङ्गुलीभागे एवमस्थीनि विन्यसेत्॥ ४५
नारिकेलं शिरःस्थाने तुम्बं दद्याच्च तालुके।
पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम्॥ ४६
अन्त्रेषु नालकं दद्याद्वालकं घ्राणमेव च।
वसायां मेदकं दद्याद्गोमूत्रेण तु मूत्रकम्॥ ४७
गन्धकं धातवो देया हरितालं मनःशिला।
रेतःस्थाने पारदञ्च पुरीषे पित्तलं तथा॥ ४८
मनःशिलां तथा गात्रे तिलकल्कञ्च सन्धिषु।
यवपिष्टं तथा मांसे मधु वै चौद्रमेव च॥ ४९
केशेषु च वटजटा त्वचायाञ्च मृगत्वचा।
कर्णयोस्तालपत्रञ्च स्तनयोश्चैव गुञ्जिका॥ ५०
नासायां शतपत्रञ्च कमलं नाभिमण्डले।
वृन्ताकं वृषणद्वन्द्वे लिङ्गे स्याद्गृञ्जनं शुभम्॥ ५१
घृतं नाभ्यां प्रदेयं स्यात् कौपीने च त्रपु स्मृतम्।
मौक्तिकं स्तनयोर्मूर्द्ध्नि कुङ्कुमेन विलेपनम्॥ ५२
कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः।
परिधानं पट्टसूत्रं हृदये रुक्मकं न्यसेत्॥ ५३
ऋद्धि-वृद्धी भुजौ द्वौ च चक्षुषोश्च कपर्द्दकौ।
सिन्दूरं नेत्रकोणे च ताम्बूलाद्युपहारकैः॥ ५४
सर्व्वौषधियुतं प्रेतं कृत्वा पूजा यथोदिता।
साग्निके चापि विधिना यज्ञपात्रं न्यसेत् क्रमात्॥ ५५
शिरो मे श्रीरिति ऋचा पुनन्तु मे वसवेति च।
प्रेतस्य पावनं कृत्वा शालिग्रामशिलोदकैः॥ ५६
विष्णुमुद्दिश्य दातव्या सुशीला गौः पयस्विनी॥ ५७
तिला लोहं हिरण्यञ्च कार्पासं लवणं तथा।
सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम्॥ ५८
तिलपात्रं ततो दत्त्वा पददानं तथैव च।
ततो वैतरणी देया सर्व्वाभरणभूषिता॥ ५९
कर्त्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मवान्।
प्रेतमोक्षं ततः कुर्य्याद्धृदि विष्णुं प्रकल्प्य च॥ ६०
ओं विष्णुरिति संस्मृत्य प्रेतं तन्मृत्युमेव च।
अग्निदाहं ततः कुर्य्यात् सूतकन्तु दिनत्रयम्॥ ६१
दशाहकर्त्ता पिण्डाश्च कर्त्तव्याः प्रेतमुक्तये।
सर्व्वं वर्षविधिं कुर्य्यादेवं प्रेतश्च मुक्तिभाक्॥ ६२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़संवादे अष्टत्रिंशोऽध्यायः॥ ३८॥

---

## एकोनचत्वारिंशोऽध्यायः।

श्रीविष्णुरुवाच।

वृषोत्सर्गं प्रकुर्व्वीत विधिपूर्व्वं खगेश्वर।
कार्त्तिकादिषु मासेषु पौर्णमास्यां शुभे दिने॥ १
विवाहोत्सर्ज्जनं श्राद्धं नान्दीमुखमुपक्रमेत्।
कुर्य्याद्ध्रुवश्च संस्कारानग्निस्थापनमेव च॥ २
वाप्यां कूपे गवां गोष्ठे स्थाप्याग्निं विधिवत् ततः।
विवाहविधिना सर्व्वं कुर्य्याद्ब्राह्मणवाचनम्॥ ३
पात्रासादनं अयणामुपयमनकुशादिकम्।
पर्य्युक्षणान्ते होमञ्च कुर्य्याद्वै ब्राह्मणेन तु॥ ४

आधारावाज्यभागौ च चक्षुषी च प्रदापयेत् ।
प्रथमेऽहनीति मन्त्रेण होतव्याश्च षडाहुतीः ॥ ५
आधारावाज्यभागौ तु पायसेनाङ्गदेवताः ।
अग्नये रुद्राय सर्व्वाय पशुपतये उग्राय शिवाय ।
भवाय महादेवाय ईशानाय यमाय च ॥ ६
पिष्टकेन सकृद्धोमं पूषागा इति मन्त्रतः ।
उभयोः स्विष्टकृद्धोमश्चरुणा पायसेन च ॥ ७
प्रथमं व्याहृतिहोमः प्रायश्चित्तं प्रजापतिः ।
संस्रावप्राशनं कुर्य्यात् प्रणीतापरिमोक्षणम् ॥ ८
पवित्रप्रतिपत्तिश्च ब्राह्मणे दक्षिणां ततः ।
गरुड़रुद्रजाप्येन प्रेतो मोक्षमवाप्नुयात् ॥ ९
एकवर्णं वृषञ्चैव सकृद्वत्सतरीं खग ।
स्नापयित्वा ततः कुर्य्यात् सर्व्वालङ्कारभूषिताम् ॥ १०
प्रतिष्ठाप्य च तद्युग्मं प्रेतो मोक्षमवाप्नुयात् ।
पुच्छे च तर्पणं कार्य्यमुच्छ्रितं मन्त्रपूर्व्वकम् ।
ब्राह्मणान् भोजयेत् पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ ११
ततः श्राद्धं समारभ्य एकोद्दिष्टं यथाविधि ।
जलमन्नं तथा देयं प्रेतोद्धरणहेतवे ॥ १२
द्वादशाहे ततः कुर्य्यान्मासि मासि पृथक् पृथक् ।
एवं विधिसमायुक्तो प्रेतमोक्षं करोति हि ॥ १३

इति श्रीगारुड़े उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ।

श्रीविष्णुरुवाच ।

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति ॥ १
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥ २
नास्ति भूमिसमं दानं नास्ति भूमिसमो निधिः ।
नास्ति सत्यसमो धर्म्मो नानृतात् पातकं परम् ॥ ३
अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्य्यसुताश्च गावः ।
लोकत्रयं तेन भवेत् प्रदत्तं
यः काञ्चनं गाञ्च महीञ्च दद्यात् ॥ ४
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येते जप-पूजन-होमतः ॥ ५
कृत्वा बहूनि पापानि रौद्राणि विपुलानि च ।
अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति ॥ ६
हरन्तमपि लोभेन निरुध्यात्तं निवारयेत् ।
स याति नरके घोरे यस्तं न परिरक्षति ॥ ७
अकर्त्तव्यं न कर्त्तव्यं प्राणैः कण्ठगतैरपि ।
कर्त्तव्यमेव कर्त्तव्यमिति धर्म्मविदो विदुः ॥ ८
आकरप्रवर्त्तने वै पापं गोसहस्रवधैस्तुल्यम् ।
वृत्तिच्छेदे च तथा वृत्तेः करणे लक्षधेनुदानफलम् ॥ ९
वरमेकानपहृता न तु दत्तं गवां शतम् ।
एकां हृत्वा शतं दत्त्वा न तेन समता भवेत् ॥ १०
स्वयमेव तु यो दत्त्वा स्वयमेव प्रबाधते ।
स पापी नरकं याति यावदाभूतसंप्लवम् ॥ ११
न चाश्वमेधेन तथा विधिवद्दक्षिणावता ।
अवृत्तिकर्षिते दीने ब्राह्मणे रक्षितं यथा ॥ १२
न तद्भवति वेदेषु यज्ञे सुबहुदक्षिणे ।
यत् पुण्यं दुर्व्वले त्रस्ते ब्राह्मणे परिरक्षिते ॥ १३
ब्रह्मस्वरसपुष्टानि वाहनानि बलानि च ।
युद्धकाले विशीर्य्यन्ते सैकताः सेतवो यथा ॥ १४
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ १५
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ।
तदेव चौर्य्यरूपेण दहत्याचन्द्रतारकम् ॥ १६
लोहचूर्णाश्मचूर्णानि कदाचिज्जरयेत् पुमान् ।
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् जरयिष्यति ॥ १७
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ १८
ब्राह्मणातिक्रमो नास्ति विप्रे विद्याविवर्ज्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ १९
संक्रान्तौ यानि दानानि हव्यकव्यानि यानि च ।
सप्तकल्पक्षयं यावद्ददात्यर्कः पुनः पुनः ॥ २०
प्रतिग्रहाध्यापनयाजनेषु
प्रतिग्रहं श्रेष्ठतमं वदन्ति ।
प्रतिग्रहाच्छुध्यति जाप्यहोमै-
र्न याजनं कर्म्म पुनन्ति वेदाः ॥ २१

सदाजापी सदाहोमी परपाकविवर्ज्जितः।
रत्नपूर्णामपि महीं प्रतिगृह्णन्न लिप्यते ॥ २२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः।

श्रीविष्णुरुवाच।

जलाग्निबन्धनभ्रष्टा प्रव्रज्यानाशकच्युताः।
शैन्द्वाभ्यां विशुध्यन्ति दत्त्वा धेनुं तथा वृषम् ॥ १
जनदाहशवर्षस्य चतुर्व्वर्षाधिकस्य च।
प्रायश्चित्तं चरेन्माता पिता वान्योऽपि बान्धवः ॥ २
अतो बालनरस्यापि नापराधो न पातकम्।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥ ३
रजस्य दर्शने दृष्टे आतुरा स्त्री भवेद्यदि।
चतुर्थेऽह्नि पदादींश्च त्यक्त्वा स्नात्वा विशुध्यति ॥ ४
आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत् स आतुरः ॥ ५

इति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-गरुड़संवादे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः।

श्रीविष्णुरुवाच।

स्वेच्छया तार्क्ष्यमरणं शृङ्गि-दंष्ट्रि-सरीसृपैः।
चाण्डालाद्यात्मघातैश्च विषाद्यैस्ताड़नैस्तथा ॥ १
जलाग्निगतवातैश्च निराहारादिभिस्तथा।
येषामेव भवेन्मृत्युः प्रोक्तास्ते पापकर्म्मिणः ॥ २
पाषण्डसमाश्रिताश्चैव महापातकिनस्तथा।
स्त्रियश्च व्यभिचारिण्य आरूढ़पतितास्तथा ॥ ३
न तेषां स्यान्नवश्राद्धं न संस्कारः सपिण्डनम्।
श्राद्धानि षोड़शोक्तानि न भवन्ति च तान्यपि ॥ ४
वृत्तं यत् क्षिपेदप्सु गृह्याग्निञ्च चतुष्पथे।
पात्राणि निर्द्दहेदग्नौ साग्निके पापकर्म्मणि ॥ ५
पूर्णे संवत्सरे तेषामित्थं कार्य्यं दयालुभिः।
पुष्पैरात्मार्थे शुक्लपक्षे च काश्यप ॥ ६
एकादशीं समासाद्य शुक्लपक्षे च काश्यप ॥ ६

विष्णुं यमञ्च सम्पूज्य गन्धपुष्पाक्षतादिभिः।
दश पिण्डान् घृताक्तांश्च दर्भेषु मधुसंयुतान् ॥ ७
यज्ञोपवीती स तिलान् ध्यायन् विष्णुं यमं तथा।
दक्षिणाभिमुखस्तूष्णीमेकैकं निर्व्वपेत् तु तान् ॥ ८
उद्धृत्य मिश्रितान् पश्चात् तीर्थेऽम्भःसु विनिक्षिपेत्।
क्षिपन् संकीर्त्तयेन्नाम गोत्रञ्च मृतकस्य च ॥ ९
पुनरभ्यर्च्चयेद्विष्णुं यमं कुसुमचन्दनैः।
धूपदीपैः सनैवेद्यैर्भक्ष्य-भोज्यसमन्वितैः ॥ १०
तस्मिन्नुपवसेदह्नि विप्रांश्चैव निमन्त्रयेत्।
कुल-विद्या-तपोयुक्तान् साधुशीलसमन्वितान् ॥ ११
नव सप्ताथवा पञ्च स्वसामर्थ्यानुसारतः।
अपरेऽहनि मध्याह्ने यमं विष्णुं तथार्च्चयेत् ॥ १२
उदङ्मुखांस्तथा विप्रांस्तान् सम्यगुपवेशयेत्।
आवाहनार्घदानादौ विष्णुं यमसमन्वितम् ॥ १३
यज्ञोपवीती कुर्व्वीत प्रेतनाम प्रकीर्त्तयेत्।
प्रेतं यमञ्च विष्णुञ्च स्मरन् श्राद्धं समापयेत् ॥ १४
अन्येभ्यश्चापि सर्व्वेभ्यः पिण्डदानार्थमुद्धरेत्।
पृथग्वा दश पिण्डांश्च पञ्च दद्यात् क्रमेण तु ॥ १५
प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च।
सभृत्याय शिवायाथ प्रेतायापि च पञ्चमम् ॥ १६
नाम गोत्रं स्मरेत् तस्य विष्णुशब्दं प्रकीर्त्तयेत्।
नमस्कारं शिरस्कन्तु पञ्चमं पिण्डमुद्धरेत् ॥ १७
गो-भूमि-पिण्डदानाद्यैः भक्त्या प्रेतं स्मरंश्च तम्।
तिलैस्तिलांस्तु विप्राणां दर्भयुक्तेषु पाणिषु ॥ १८
दद्यादन्नं द्विजानाञ्च ताम्बूलं दक्षिणां तथा।
एवं शिष्टतमं विप्रं हिरण्येन प्रपूजयेत् ॥ १९
नाम गोत्रं स्मरन् दद्याद्विष्णुप्रीतिस्त्विति ब्रुवन्।
अनुव्रज्य द्विजान् पश्चात् तत्काम्भो दक्षिणामुखः ॥ २०
कीर्त्तयन्नामगोत्रे तु भुवि प्रीतस्त्विति क्षिपेत्।
मित्र-बन्धुजनैः सार्द्धं शेषं भुञ्जीत वाग्यतः ॥
प्रतिसंवत्सरादि स्यादेकोद्दिष्टविधानतः ॥ २१
एवं कृते गमिष्यन्ति स्वर्लोकं पापकर्म्मिणः।
सपिण्डीकरणादौ तु कृते चैवाप्नुवन्ति ते ॥ २२
अथ कश्चित् प्रमादेन म्रियते क्षुद्रकादिभिः।
संस्कारप्रमुखस्तस्य सर्व्वं कुर्य्याद्यथाविधि ॥ २३
प्रमादादिच्छया मर्त्या न गच्छेत् स्वर्गसंसुखः।

...योरुभोयोनागं पञ्चमीषु प्रपूजयेत् ॥ २४
...र्यात् पिष्टमयीं लेखां नागानामाकृतिं भुवि ।
...येत् तां सितैः पुष्पैः सुगन्धैश्चन्दनेन च ॥ २५
...याद्धूपदीपन्तु तण्डुलांश्च सितान् क्षिपेत् ।
...मपिष्टं तथैवान्नं क्षीरञ्च विनिवेदयेत् ॥ २६
...पस्थाय वदेदेवं मुञ्चन् मुद्रां शुकानि च ।
...रं तद्दिनेऽशौयाद्दैवश्राद्धं समापयेत् ॥ २७
...वर्णं शक्तितो नागं ततो दद्याद्द्विजोत्तमे ।
...ं दत्त्वा ततो ब्रूयात् प्रीयतां नागराड़िति ॥ २८
...थाविभवं कुर्व्वीत कर्म्माण्यन्यानि पूर्व्ववत् ।
...शाखोक्तविधानेन इत्थं कुर्य्याद्ध्यथातथम् ।
...त्वान्मोचयेत् तांस्तु स्वर्गमार्गं नयेत हि ॥ २९

...ति श्रीगारुड़े महापुराणे उत्तरखण्डे श्रीकृष्ण-
गरुड़संवादे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः ।

श्रीविष्णुरुवाच ।

...त्यब्दं श्राद्धमेवं ते कथयामि खगेश्वर ।
...त्यब्दं पार्व्वणेनैव कुर्य्यातां क्षेत्रजौरसौ ॥ १
...विधिना चेतरैरेवमेकोद्दिष्टं न पार्व्वणम् ॥ २
...नमेश्च सुतौ स्यातामनग्नौ क्षेत्रजौरसौ ।
...कोद्दिष्टं न कुर्य्यातां प्रत्यब्दं तौ तु पार्व्वणम् ॥ ३
यदा त्वन्यतरः साग्निः पुत्त्रो वाप्यथवा पिता ।
...त्यब्दं पार्व्वणं तत्र कुर्य्यातां क्षेत्रजौरसौ ॥ ४
...नग्नयः साग्नयो वा पुत्त्रा वा पितरोऽपि वा ।
...काद्दिष्टं सुतैः कार्य्यं तस्य सर्व्वैः सुतैरपि ॥ ५
...कोद्दिष्टमपुत्त्राणां पुंसां स्याद्योषितामपि ।
...कोद्दिष्टे कुशा ग्राह्याः समूला यज्ञकर्म्मणि ।
...र्हिर्लूनाः सकृल्लूनाः श्राद्धं वृद्धिमते सदा ॥ ६
...र्त्तव्ये पार्व्वणे श्राद्धे आशौचं यदि जायते ।
...शौचावगमे कुर्य्याच्छ्राद्धं हि तदनन्तरम् ॥ ७
...कोद्दिष्टन्तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
...सेऽन्यस्मिन् तिथौ तस्यां कुर्य्याच्छ्राद्धं तदैव हि॥ ८
...र्णौ श्राद्धन्तु शूद्रस्य भार्य्यायास्तत्सुतस्य च ।
...न्यायाश्च द्विजातीनामनुपेतद्विजस्य च ॥ ९

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कुर्य्याच्छ्राद्धं कुर्य्यात् पृथक् पृथक् ॥१०
दद्यात् पूर्व्वं मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्य्यात् संनिपाते त्वयं विधिः ॥ ११
प्रत्यब्दमेवं यः कुर्य्याद्ध्यथातथमतन्द्रितः ।
तारयित्वा पितॄन् सर्व्वान् प्राप्नोति परमां गतिम्॥१२
न ज्ञायते मृताहश्चेत् प्रस्थानदिनमेव च ।
मासश्चेत् स्यात् परिज्ञातस्तद्दर्शे स्यान्मृताह्निकम्॥१३
यदा मासो न विज्ञातो विज्ञातं दिनमेव च ।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत् ॥ १४
दिनमासावविज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिन-मासौ तु ग्राह्यौ श्राद्धे मयोदितौ ॥ १५
प्रस्थानस्यापि न ज्ञातौ दिनमासौ यदा पुनः ।
मृतवार्त्ताश्रुतौ ग्राह्यौ पूर्व्वप्रोक्तक्रमेण तु ॥ १६
प्रवासमन्तरेणापि स्यातां तौ विस्मृतौ यदा ।
तदानीमपि तौ ग्राह्यौ पूर्व्ववत् तु मृताह्निके ॥ १७
गृहस्थे प्रोषिते यत्र क्वचिन्न म्रियते गृहे ।
आशौचापगमे यत्र प्रारब्धश्राद्धकर्म्मणि ॥ १८
प्रत्यागतश्चेज्जानाति तत्र वृत्तं गृही तथा ।
आशौचं दक्षिणास्ते च न द्रव्यादेस्तदा भवेत् ॥ १९
पुत्त्रादिना यदारब्धं श्राद्धं तत्तेन वाखिलम् ।
समापनीयं तत्रापि श्राद्धं गृहीति दूरतः ॥ २०
दाता भोक्ता च न ज्ञातं सूतकं मृतकं तथा ।
उभयोरपि तद्दोषं नारोपयति कर्हिचित् ॥ २१
यदा त्वन्यतरज्ज्ञातं सूतकं मृतकं तथा ।
भोक्तुरेव तदा दोषो नान्यो दाता प्रदुष्यति ॥ २२
इत्युक्तेन प्रकारेण यः कुर्य्यान्मृतवासरम् ।
अविज्ञातमृताहस्य सततं तारयत्यसौ ॥ २३
नित्यश्राद्धेऽथ गन्धाद्यैर्द्विजानभ्यर्च्च्य भक्तितः ।
सर्व्वान् पितृगणान् सम्यक् सहैवोद्दिश्य योजयेत्॥२४
आवाहनं स्वधाकारं पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्य्यादिनियमान् विश्वेदेवास्तथैव च ॥ २५
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ।
दत्त्वा तु दक्षिणा शक्त्या नमस्कारैर्विसर्ज्जयेत् ॥ २६
देवानुद्दिश्य विश्वादीन् यद्दद्याद्द्विजभोजनम् ।
तन्नित्यश्राद्धवत् कार्य्यं देवश्राद्धं तदुच्यते ॥ २७

मातृश्राद्धन्तु पूर्व्वेण कर्म्मादौ पैतृकं तथा ।
उत्तरेऽहनि वृद्धौ स्यान्मातामहगणस्य तु ॥ २८
श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवन्तु तान्त्रिकम् ॥ २९
मातृभ्यः कल्पयेत् पूर्व्वं पितृभ्यस्तदनन्तरम् ।
मातामहेभ्यश्च तथा दद्यादित्थं क्रमेण तु ॥ ३०
मातृश्राद्धे तु विप्राणामभावे तु कुलस्त्रियः ।
पतिपुत्त्रान्विताः साध्व्यो योषितोऽष्टौ च भावयेत् ३१
इष्टापूर्त्तादिके श्राद्धं कुर्य्यादाभ्युदयं तथा ।
उत्पातादिनिमित्तेषु नित्यश्राद्धवदेव तु ॥ ३२
नित्यं दैवञ्च वृद्धञ्च काम्यं नैमित्तिकं तथा ।
श्राद्धान्युक्तप्रकारेण कुर्व्वन् सिद्धिमवाप्नुयात् ॥ ३३
इति ते कथितं तार्क्ष्य किमन्यत् परिपृच्छसि ॥ ३४

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
श्रीकृष्ण-गरुड़संवादे त्रिचत्वा-
रिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः ।

तार्क्ष्य उवाच ।

सुकृतस्य प्रभावेण स्वर्गो नानाविधो नृणाम् ।
भोगाः सौख्यानि रूपञ्च बलं बुद्धिः पराक्रमः ॥ १
सत्यं पुण्यवतां देव जायतेऽत्र परत्र च ।
सत्यं सत्यं पुनः सत्यं देववाक्यं न चान्यथा ॥ २
धर्म्मो जयति नाधर्म्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधो विष्णुर्जयति नासुरः ॥ ३
तद्व सत्यं मया ज्ञातं सुकृताच्छोभनं भवेत् ।
यथोत्कृष्टतमं पुण्यं तथोत्कृष्टतरं नरः ॥ ४
एवन्तु श्रोतुमिच्छामि जायन्ते पापिनो यथा ।
येन कर्म्मविपाकेन यथा नियमभाग्भवेत् ॥ ५
यां यां योनिमवाप्नोति यथा रूपश्च जायते ।
तन्मे वद सुरश्रेष्ठ समासेनापि काङ्क्षितम् ॥ ६

श्रीकृष्ण उवाच ।

शुभाशुभफलैस्तार्क्ष्य भुक्तभोगा नराश्चिह ।
जायन्ते लक्षणैर्यैस्तु तानि मे शृणु काश्यप ॥ ७
गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ८
प्रायश्चित्तेष्वचीर्णेषु यमलोका ह्यनेकधा ।
यातनाभिर्विमुक्तानामनेन जीवसन्ततिम् ॥ ९
गत्वा मानुषभावे तु पापचिह्ना भवन्ति ते ।
तान्यहं तव चिह्नानि कथयिष्ये खगोत्तम ॥ १०
सहित्वा यातनाः सर्व्वा गत्वा वैवस्वतक्षयम् ।
निस्तीर्णयातनास्ते तु लोकमायान्ति चिह्निताः ॥ ११
गद्गदोऽनृतवादी स्यान्मूकश्चैव गवानृते ।
ब्रह्महा जायते कुष्ठी श्यावदन्तश्च मद्यपः ॥ १२
कुनखी स्वर्णहरणाद्दुश्चर्म्मा गुरुतल्पगः ।
संयोगी हीनयोनिः स्याद्दरिद्रो दत्तदानतः ॥ १३
ग्रामशूकरतां याति अयाज्ययाजको द्विजः ।
खरो वै बहुयाजी स्यात् काको निर्मन्त्रभोजनात् १४
अपरीक्षितभोक्तारो व्याघ्राः स्युर्निर्जने वने ।
बहुतर्ज्जको मार्ज्जारः खद्योतः कक्षदाहकः ॥ १५
पात्रे विद्याप्रदाता यो बलीवर्द्दो भवेत् तु सः ।
अन्नं पर्य्युषितं विप्रे प्रददत् कुक्कुरो भवेत् ॥ १६
मात्सर्य्यादपि जात्यन्धो जन्मान्धः पुस्तकं हरन् ।
फलान्याहरतोऽपत्यं म्रियते नात्र संशयः ॥ १७
मृतो वानरतां याति तन्मुखो गण्डवान् भवेत् ।
अदत्त्वा भक्ष्यमश्नाति अनपत्यो भवेत् तु सः ॥ १८
हरन् वस्त्रं भवेद्गोधा गरदः पवनाशनः ।
प्रव्रज्यागमनाद्राजन् भवेन्मरुपिशाचकः ॥ १९
चातको जलहर्त्ता स्याद्धान्यहर्त्ता च मूषिकः ।
अप्राप्तयौवनां सेवन् भवेत् सर्प इति श्रुतिः ॥ २०
गुरुदाराभिलाषी च कृकलासो भवेद्ध्रुवम् ।
जलप्रस्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ २१
अविक्रेयविक्रयाद्वै वक्रो गृध्रो भवेन्नरः ।
अयोनिगो वृको हि स्यादुलूकः क्रयवञ्चनात् ॥ २२
मृतस्यैकादशाहे तु भुञ्जानश्चाभिजायते ।
प्रतिश्रुत्य द्विजेभ्योऽर्थमददज्जम्बुको भवेत् ॥ २३
राज्ञीं गत्वा भवेद्दंष्ट्री तस्करो विड्वराहकः ।
शाकिवाफलविक्रेता वृषश्च वृषलीपतिः ॥ २४
मार्ज्जारोऽग्निं पदा स्पृष्ट्वा रोगवान् परमांसभुक् ।
मार्ज्जारोऽग्निं पदा स्पृष्ट्वा रोगवान् परमांसभुक् ।
उदक्यागमनात् षण्ढो दुर्गन्धश्च सुगन्धहृत् ॥ २५
यद्वा तद्वापि पारक्यं स्वल्पं वा हरते बहु ।
हृत्वा वै योनिमाप्नोति तैरश्चीं नात्र संशयः ॥ २६

एवमादीनि चिह्नानि अन्यान्यपि खगेश्वर ।
स्वकर्म्मविततान्येव दृश्यन्ते यैस्तु मानवैः ॥ २७
एवं दुष्कृतकर्म्मा हि भुक्त्वा च नरकान् क्रमात् ।
जायते कर्म्मशेषेण उक्तास्वेतासु योनिषु ॥ २८
ततो जन्मशतं मर्त्त्यं सर्व्वजन्तुषु काश्यप ।
जायते नात्र सन्देहः समीभूते शुभाशुभे ॥ २९
स्त्री-पुंसोस्तु प्रसङ्गेन निरुद्धे शुक्र-शोणिते ।
पञ्चभूतसमोपेतो जायते पाञ्चभौतिकः ॥ ३०
इन्द्रियाणि मनः प्राणा ज्ञानमायुः सुखं धृतिः ।
धारणा प्रेरणं दुःखं मिथ्याहङ्कार एव च ॥ ३१
प्रयताकृतिवर्णस्तु राग-द्वेषौ भवाभवौ ।
तस्येदमात्मनः सर्व्वमनादेरादिमिच्छतः ॥ ३२
स्वकर्म्मवद्धस्य तदा गर्भवृद्धिर्भवेदिति ।
पुरा यथा मया प्रोक्तं तव जन्तोर्हि लक्षणम् ॥ ३३
एवं प्रवर्त्तितं चक्रं भूतग्रामे चतुर्व्विधे ।
समुत्पत्तिर्विनाशश्च जायते तात्र देहिनाम् ॥ ३४
ऊर्द्ध्वगतिः स्वधर्म्मेण अधर्म्मेणाप्यधोगतिः ।
जायते सर्व्ववर्णानां स्वधर्म्मचलनात् खग ॥ ३५
देवत्वे मानुषत्वे च दानभोगादिकाः क्रियाः ।
या दृश्यन्ते वैनतेय तत् सर्व्वं कर्म्मजं फलम् ॥ ३६
अकर्म्मविहिते घोरे कामक्रोधार्ज्जितेऽशुभे ।
नरके पतिते भूयो यस्योत्तारो न विद्यते ॥ ३७
या सा वैतरणी नाम यममार्गे महासरित् ।
अगाधा दुस्तरा पापैर्दृष्टमात्रा भयावहा ॥ ३८
पूय-शोणिततोयाढ्या मांसकर्द्दमसङ्कुला ।
पापिनश्चागतं दृष्ट्वा नानाभयसमावृता ॥ ३९
क्वाथ्यते सत्वरं तोयं पात्रमध्ये घृतं यथा ।
क्रिमिभिः सङ्कुलं पूयं वज्रतुण्डैः समावृतम् ॥ ४०
शिशुमारैश्च मकरैर्वज्रकर्त्तरिसंयुतैः ।
अन्यैश्च जलजीवैश्च हिंसिभिर्मांसभेदिभिः ॥ ४१
उद्यन्ते द्वादशादित्याः प्रलयान्ते तथा हि ते ।
तपन्ति तत्र वै मर्त्त्याः क्रन्दमानास्तु पापिनः ॥ ४२
हा भ्रातः पुत्र तातेति प्रलपन्ति मुहुर्म्मुहुः ।
विचरन्ति निमज्जन्ति ग्लानिं गच्छन्ति जन्तवः ॥४३
चतुर्व्विधैः प्राणिगणैर्दृष्टव्याप्ता महानदी ।
तरन्ति गोप्रदानेन अन्यथा च पतन्ति ते ॥ ४४

मां नरा येऽवमन्यन्ते आचार्य्यं गुरुमेव च ।
अवमन्यन्ति ये मूढ़ास्तेषां वासस्तु तत्र वै ॥ ४५
पतिव्रतां साधुशीलामूढ़ां धर्म्मेषु निश्चलाम् ।
परित्यजन्ति ये मूढ़ास्तेषां वासस्तु सन्ततम् ॥ ४६
विश्वासप्रतिपन्नानां स्वामि-मित्र-तपस्विनाम् ।
स्त्रीबालविकलादीनां वधं कृत्वा पतन्ति हि ।
पच्यन्ते तत्र मध्ये तु क्रन्दमानास्तु पापिनः ॥ ४७
श्रान्तं बुभुक्षितं विप्रं यो विघ्नायोपसर्पति ।
क्रिमिभिर्भक्ष्यते तत्र यावदाभूतसंप्लवम् ॥ ४८
ब्राह्मणाय प्रतिश्रुत्य यथार्थं न ददाति तम् ।
आहूय नास्ति यो ब्रूयात् तस्य वासस्तु तत्र वै ॥४९
अग्निदो गरदश्चैव कूटसाक्षी च मद्यपः ।
यज्ञविध्वंसकश्चैव राजगामी च पैशुनी ॥ ५०
कथाभङ्गकरश्चैव स्वयं दत्तापहारकः ।
क्षेत्रसेतुविभेदी च परदारप्रधर्षकः ॥ ५१
ब्राह्मणो रसविक्रेता तथा यो वृषलीपतिः ।
गोधनस्य तृणार्त्तस्य वापीभेदं करोति यः ॥ ५२
कन्याविदूषकश्चैव दानं दत्त्वानुतापकः ।
शूद्रस्तु कपिलापायी ब्राह्मणो मांसभोजनः ॥ ५३
एते वसन्ति सततं मा विचारं कृथाः क्वचित् ।
कृपणो नास्तिकः क्षुद्रः स तस्यां निवसेत् खग ॥५४
सदामर्षी सदाक्रोधी निजवाक्यप्रमाणकृत् ।
परोक्त्युच्छेदको नित्यं वैतरण्यां वसेच्चिरम् ॥ ५५
यश्चाहङ्कारवान् पापः स्वविकत्थन कारकः ।
कृतघ्नो तगर्भसन्तापी वैतरण्यां स मज्जति ॥ ५६
कदापि भाग्ययोगेन तरणेच्छा यदा भवेत् ।
सानुकूला भवेद्येन तदाकर्णय काश्यप ॥ ५७
अयने विषुवे पुण्ये व्यतीपाते दिनोदये ।
चन्द्रसूर्य्योपरागे वा संक्रान्तौ दर्शवासरे ॥ ५८
अन्येषु पुण्यकालेषु दीयते दानमुत्तमम् ।
यदा तदा भवेद्वापि श्रद्धादानं प्रति ध्रुवम् ॥ ५९
तदैव दानकालः स्याद्यतः सम्पत्तिरस्थिरा ।
अनित्यानि शरीराणि विभवो नैव शाश्वतः ॥ ६०
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसंग्रहः ।
कृष्णां वा पाटलां वापि कुर्य्याद्वैतरणीं शुभाम् ॥६१
स्वर्णशृङ्गीं रौप्यखुरां कांस्यपात्रोपदोहनाम् ।

कृष्णवस्त्रयुगाच्छन्नां सप्तधान्यसमन्विताम् ॥ ६२
कार्पासद्रोणशिखरे आसीनं ताम्रभाजने ।
यमं हैमं प्रकुर्व्वीत लोहदण्डसमन्वितम् ।
इक्षुदण्डमयं बद्ध्वा प्लवं सुदृढ़बन्धनैः ॥ ६३
उडुपोपरि तां धेनुं सूर्य्यदेहसमुद्भवाम् ।
कृत्वा प्रकल्पयेद्विप्रश्छत्त्रोपानत्समन्वितम् ॥ ६४
अङ्गुरीयकवासांसि ब्राह्मणाय निवेदयेत्
इममुच्चारयेन्मन्त्रं संगृह्य सजलान् कुशान् ॥ ६५
यमद्वारे महाघोरे श्रुत्वा वैतरणीं नदीम् ।
तर्त्तुकामो ददाम्येनां तुभ्यं वैतरणीं नमः ॥ ६६
गावो मे अग्रतः सन्तु गावो मे सन्तु पार्श्वतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ ६७
विष्णुरूपो द्विजश्रेष्ठ मामुद्धर महीसुर ।
सदक्षिणा मया दत्ता तुभ्यं वैतरणी नमः ॥ ६८
धर्म्मराजञ्च सर्व्वेशं वैतरण्याश्च धेनुकाम् ।
सर्व्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥ ६९
पुच्छं संगृह्य धेन्वाश्च अग्रे कृत्वा तु वै द्विजम् ।
धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ॥ ७०
उत्तारणार्थं देवेशि वैतरण्यै नमोऽस्तु ते ।
अनुव्रजेत् तु गच्छन्तं सर्व्वं तस्य गृहं नयेत् ॥ ७१
एवं कृते वैनतेय सा सरित् सुतरा भवेत् ।
सर्व्वान् कामानवाप्नोति यो दद्याद्भुवि मानवः ॥ ७२
सुकृतस्य प्रभावेण सुखञ्चेह परत्र च ॥
स्वस्थे सहस्रगुणितमातुरे शतसम्मितम् ॥ ७३
मृतस्य च तु यद्दानं परोक्षे तत् समं स्मृतम् ।
स्वहस्तेन ततो देयं मृते कः कस्य दास्यति ॥ ७४
दानधर्म्मविहीनानां कृपणजीवितक्षितेः ।
अस्थिरेण शरीरेण स्थिरं कर्म्म समाचरेत् ॥ ७५
अवश्यमेव यास्यन्ति प्राणाः प्राघूर्णिका इव ॥ ७६

इतीदमुक्तं तव पक्षिराज
विडम्बनं जन्तुगणस्य सर्व्वम् ।
प्रेतस्य मोक्षाय तदौर्द्ध्वदैहिकं
हिताय लोकस्य शुभाशुभा यदि ॥ ७७

सूत उवाच ।

एवं विप्राः समादिष्टो विष्णुना प्रभविष्णुना ।
गरुड़ः प्रेतचरितं श्रुत्वा सन्तुष्टिमागतः ॥ ७८
व्रततीर्थादिकं सर्व्वं पुनः पप्रच्छ केशवम् ।
ध्यात्वा मनसि सर्व्वेशं सर्व्वकारणकारणम् ॥ ७९
कथयन्तं सर्व्वमेतज्जन्तूनां प्रभवादिकम् ।
मरणं जन्म च तथा प्रेतत्वञ्चौर्द्ध्वदैहिकम् ॥ ८०
लाभस्तेषां तपस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्द्दनः ॥ ८१
धर्म्मो जयति नाधर्म्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधो विष्णुर्जयति नासुरः ॥ ८२
विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवः ।
येषामेव स्थिरा बुद्धिर्न तेषां दुर्गतिर्भवेत् ॥ ८३
मङ्गलं भगवान् विष्णुर्मङ्गलं गरुड़ध्वजः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलायतनं हरिः ॥ ८४
हरिर्भागीरथी विप्रा विप्रा भागीरथी हरिः ।
भागीरथी हरिर्विप्राः सारमेतज्जगत्त्रयम् ॥ ८५

इति श्रीगारुड़े उत्तरखण्डे श्रीकृष्णगरुड़-
संवादे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशोऽध्यायः ।

तार्क्ष्य उवाच ।

ये मर्त्त्यलोके निवसन्ति मानवा-
स्ते सर्व्वजातौ निधनं प्रयान्ति ।
काले स्वकीये निजपुण्यसंख्यया
वदन्ति लोके कथयस्व तन्मे ॥ १
गच्छन्ति मार्गेण सुदुस्तरेण
त्रिधात्वनिष्पादितवर्त्मनि स्थिताः ।
केनैव पुण्येन मुदं प्रयान्ति
तिष्ठन्ति केनैव कुलं बलं वयः ॥ २

सूत उवाच ।

श्रुत्वाथ देवो गरुड़स्य वाक्यं
स्मृतं वपुः कर्म्ममयञ्च रूपम् ।
सृष्टा धरा येन चराचरं जगत्
स येन शास्ता विहितो यमो विभुः ॥ ३

श्रीभगवानुवाच ।

धर्म्मार्थकामं चिरमोक्षसञ्चय-
मन्यं द्वितीयं यममार्गगामिणाम् ।

प्रविश्यतेऽङ्गुष्ठसमे स तत्र वै
तं प्राप्य देहं खपुरं स्वमन्दिरम् ॥ ४
गृहीतपाशा रुदति पुनः पुन-
र्दृष्ट्वा सुपुण्ये विजदेहसंस्थिते।
देवेन्द्रपूजा पितृदेवतृप्तिर्द
मोहान्न चेष्टं न च पुत्रसन्ततिः ॥ ५
न मेऽस्ति बन्धुर्यममार्गगामिणो
मया न कृत्यं विजदेहलिप्सया।
सम्प्राप्य विप्रत्वमतीव दुर्लभं
नाधीतवान् वेदपुराणसंहिताः।
प्राप्तं सुरत्नं करसंस्थितं गतं
देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ ६
यः क्षत्रियो बाहुबलेन संयुगे
ललाटदेशाद्रुधिरं सुखागतम्।
तत् सोमपानं हि कृतं महामखे
जीवन्मृतः सोऽपि हि याति मुक्तिम् ॥ ७
स्थानान्यनेकानि कृतानि तानि
पीतान्यनेकान्यपि गर्हितानि।
शस्त्रं गृहीत्वा समरे रिपूणां
यः सम्मुखं याति स मुक्तपापः ॥ ८
चन्द्रान्वयो वापि विशान्वयो वा
शूद्रान्वयो वापि हि नीचवर्णः।
संग्रामदेवद्विजबालघाते
स्त्री-वृद्ध-गोदी न तपस्विनश्च ॥ ९
उपद्रुतेष्वेषु पराङ्मुखो यः
सुतस्य देवाः सकलाः पराङ्मुखाः।
तिलोदकं नैव पिबन्ति पूर्व्वे
हुतं न गृह्णाति हुताशनाहुतिः ॥ १०
देशाज्ञयाहा समरे समागते
शस्त्रं गृहीत्वा परसैन्यसम्मुखः।
न याति पक्षीन्द्र मृतश्च पश्चात्
दातं बलं तस्य गतं तथैव।
द्विजाय दत्त्वा कनकं महीमिमां
भूयः स पश्चाद्भवतीह लोके ॥ ११
दानं प्रदत्तं ग्रहणे द्विजेन्द्रे
स्नानं कृतं तेन सदा सुतीर्थे।
गत्वा गयायां पितृपिण्डदानं
कृतं सदा यो म्रियते न युद्धे ॥ १२
यः चान्त्रदेहन्तु विहाय शोचते
रणाङ्गणे स्वामिवधे च गोग्रहे।
स्त्रीबालघाते पथि सार्थहेतवे
मया स्वकोशं न हतं न पातितम् ॥ १३
वैश्यः स कर्म्माणि विशोधते तदा।
गृहीतपाशो न मयापि सञ्चितम्।
सत्यं न चोक्तं क्रय-विक्रयेण
मोहाद्विमूढेन कुटुम्बहेतवे ॥ १४
शूद्रं वपुः प्राप्य यशस्करं सदा
दानं द्विजेभ्यो न कृतं द्विजार्चनम्।
जलाशयो नैव कृतो धरातले
असंस्कृतो विप्रवरो न संस्कृतः ॥ १५
त्यक्त्वाऽन्त्यजं देहमहो न सुस्थितं
मया सुतीर्थे स्ववपुर्न चोज्झितम्।
धर्म्मोर्ज्जितो न स्तुतिदेवपूजितम्।
कृतं मया नैव विमुक्तिहेतवे ॥ १६
देहं समासाद्य तथैव पिण्डजं
वर्णाश्च सर्व्वेऽन्त्यज-म्लेच्छसंज्ञिताः॥
असृङ्मयं देहमयं विशन्ति
नैवेहमानाः पथि धर्म्मसङ्कुले ॥ १७
परस्परं धर्म्मकृतं स्वकीयं
सम्पाद्य लब्धं पथि सञ्चरन्तम्।
पक्षीन्द्र वाक्यानि शृणुष्व तानि ॥ १८
मनोरमाणि प्रवदन्ति यानि
सर्व्वेषु लोकेषु त्रिलोकसारं
द्वीपेषु सर्व्वेषु च जम्बुकाख्यं।
देशेषु सर्व्वेष्वपि देवदेशः
जीवेषु सर्व्वेषु मनुष्यसारम् ॥ १९
वर्णाश्च चत्वार इह प्रशस्ताः
वर्णेषु धर्म्मिष्ठनराः प्रशस्ताः।
धर्म्मेण सौख्यं समुपैति सर्व्वं
ज्ञानं समाप्नोति महापथिस्थितः ॥ २०
देहं परित्यज्य यदा गतायुषः
पथिस्थितोऽहं कृमिकीटसंस्थितः।

वरीष्यपोऽहं ममको विनिर्म्मित-
श्चतुष्पदोऽहं वनशूकरोऽहम् ॥ २१
सर्व्वं विजानाति हि गर्भसंस्थितो
जातश्च सद्यस्तदिदञ्च विस्मृतः
यच्चिन्तितं गर्भसमागतेन वै
बालो युवा वृद्धवया बभूव ॥ २२
मोहादिनष्टं यदि गर्भचिन्तितं
स्मृतं पुनर्मृत्युगते च देहे।
तस्मिन् प्रनष्टे हृदि चिन्तितं गतं
स्मृतं पुनर्मृत्युगते च देहे ॥ २३
तस्मिन् प्रनष्टे हृदि चिन्तितं पुन-
र्मया स्वकीयं परवञ्चनं कृतम्।
द्यूतञ्छलेनापि च चौर्य्यवृत्त्या
धर्म्मं व्यतिक्रम्य शरीररक्षणे ॥ २४
क्लेशेन लक्ष्मीः समुपार्ज्जिता स्वयं
मया न भुक्तं मनसेप्सितं धनम्।
ताम्बूलमन्नं मधुरं सगोरसं
दत्त्वाग्निदेवाथिवन्धुवर्गे ॥ २५
सोमग्रहे सूर्य्यसमागतेन वा
न सेवितं तीर्थवरिष्ठमुत्तमम्।
कोषं स्वकीयं मलमूत्रपूरितं
देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ २६
मया न दृष्टा न नता न पूजिता
त्रैविक्रमी मूर्त्तिं धरातले स्थिता।
प्रभासनाथो न च भक्तिसंस्तुतो
देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ २७
गत्वा वरिष्ठे भुवि तीर्थसन्निधौ
धनं न दत्तं विदुषां करे मया।
आप्लुत्य देहं विधिना द्विजे गुरौ
देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ २८
न मातृपूजा न च विष्णुशङ्करौ
न गोत्रचण्डी न च भास्करोऽपि वा।
पञ्चोपचारैर्बलियुक्तचन्दनै-
र्देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ २९
लब्धं मया मानव-देवतोपमे
मोहाद्गतं सर्व्वमिदञ्च पार्थिव।

गतिर्न वीक्षेत स वै विमूढधी-
र्देहिन् क्वचिन्निस्तर यत् त्वया कृतम् ॥ ३०
एतानि पक्षिन् मनसा विचिन्त्य
वाक्यानि धर्म्मार्थयशस्कराणि।
मुक्तिं समायान्ति मनुष्यलोके
वसन्ति ये धर्म्मरताः सुदेहे ॥ ३१
इति ब्रुवाणैर्यमदूतवर्गै-
र्विहन्यते कालमयैश्च मुद्गरैः।
हा दैव हा दैव इति स्मरन् वै
धनं न दत्तं स्वयमर्ज्जितं यत् ॥ ३२
न भूमिदानं न च गोप्रदानं
न वारिदानं न च वस्त्रदानम्।
फलं सताम्बूलविलेपनं वा
त्वया न दत्तं भुवि शोचसि कथम् ॥ ३३
पिता मृतस्ते च पितामहो वा
यया धृतो वायुदरे स्वकीये।
मृतोऽप्यसौ बन्धुजनः समस्तो
दृष्टं त्वया सर्व्वमिदं गतायुः ॥ ३४
कोषं त्वदीयं ज्वलितञ्च वह्निना
पुत्त्रैर्गृहीतो धनधान्यसञ्चयः।
सुभाषितं धर्म्मचयं कृतञ्च यत्
तदेव गच्छेद्दलपृष्ठसंस्थम् ॥ ३५
न दृश्यते कोऽपि मृतः समागतो
राजा यतिर्वा द्विजपुङ्गवोऽपि वा।
यो वै मृतः साहसिकः समन्यको
नाशं गतो योऽपि धरातले स्थितः ॥ ३६
एवं गणास्ते ब्रुवते सकिङ्करा
धैर्य्यं समालम्ब्य विषादपूरितः।
ब्रवीति पक्षीन्द्र मनुष्यता तदा
श्रुत्वा गणानां वचनं महाद्भुतम् ॥ ३७
दानप्रदानेन विमानसंस्थितो
धर्म्मः पिता मातृदयानुरूपिणी।
कलत्रवाणी मधुराय भाषिणी
स्नाता सुतीर्थे च सुबन्धुवर्गः ॥ ३८
करापितं यत् सुकृतं समस्तम्
स्वर्गस्तदा स्यात् तव किङ्करोपमः।

यो धर्म्मवान् प्राप्स्यति कोऽतिसौख्यं
पापी समस्तं विविधञ्च दुःखम् ॥ ३९
यो धर्म्मशीलो जितमानरोषो
विद्याविनीतो न परोपतापी ।
स्वदारतुष्टः परदारवर्ज्जी
ते वै नरा नो भुवि वन्दनीयाः ॥ ४०
मिष्टान्नदाता वसुणाग्निहोत्री
वेदान्तविच्चेन्द्रसहस्रजीवी ।
मासोपवासी च पतिव्रता च
षड्जीवलोके मम वन्दनीयाः ॥ ४१
एवं समाचारयुतो नरोऽपि
वापीं सकूपां सजलं तड़ागम् ।
प्रपाशुभं कुञ्चदेवमन्दिरं
कृतं नरेणैव स धर्म्म उत्तमः ॥ ४२
वर्णाश्रमं वेदविदे च दत्तम्
कन्याविवाहऋणमोचनं द्विजैः ।
भूमिः सुकृष्टापि वृषार्त्तिहेतो-
स्तदेवमेतं सुकृतं समस्तम् ॥ ४३
अध्यायमेनं सुकृतस्य सारं
शृणोति गायत्यपि भावशुद्ध्या ।
स वै कुलीनः स च धर्म्मयुक्तो
विष्णवालयं याति वचः स नूनम् ॥ ४४

गरुड़ उवाच ।

श्रुता मया दयासिन्धो ह्यज्ञानाज्जीवसंसृतिः ।
अधुना श्रोतुमिच्छामि मोक्षोपायं सनातनम् ॥ ४५
भगवन् देवदेवेश शरणागतवत्सल ।
असारे घोरसंसारे सर्व्वदुःखमलीमसे ॥ ४६
नानाविधशरीरस्था अनन्ता जीवराशयः ।
जायन्ते च म्रियन्ते च तेषामन्तो न विद्यते ॥ ४७
सदा दुःखातुरा एव न सुखी विद्यते क्वचित् ।
केनोपायेन मोक्षेश मुच्यन्ते वद मे प्रभो ॥ ४८

श्रीभगवानुवाच ।

शृणु तार्क्ष्य प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
यस्य श्रवणमात्रेण संसारान्मुच्यते नरः ॥ ४९
अस्ति देवः परब्रह्मस्वरूपी निष्कलः शिवः ।
सर्व्वज्ञः सर्व्वकर्त्ता च सर्व्वेशो निर्म्मलोऽद्वयः ॥ ५०
स्वयं ज्योतिरनाद्यन्तो निर्व्विकारः परात्परः ।
निर्गुणः सच्चिदानन्दस्तदंशाज्जीवसंज्ञकः ॥ ५१
अनाद्यविद्योपहताद्यथाग्नौ विस्फुलिङ्गकाः ।
देहाद्युपाधिसम्भिन्नास्ते कर्म्मभिरनादिभिः ॥ ५२
सुख-दुःखप्रदैः पुण्य-पापरूपैर्नियन्त्रिताः ।
तत्तज्जातियुतं देहमायुर्भोगञ्च कर्म्मजम् ॥ ५३
प्रतिजन्म प्रपद्यन्ते तेषामपि परं पुनः ।
सूक्ष्मलिङ्गशरीरमामोक्षादक्षरं खग ॥ ५४
स्थावराः कृमयश्चाब्जाः पक्षिणः पशवो नराः ।
धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ ५५
चतुर्व्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः ।
सुकृतान्मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥ ५६
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ।
न मानुषं विनान्यत्र तत्त्वज्ञानन्तु लभ्यते ॥ ५७
अत्र जन्मसहस्राणां सहस्रैरपि कोटिभिः ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ ५८
सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ।
यस्तारयति नात्मानं तस्मात् पापतरोऽत्र कः ॥ ५९
नरः प्राप्येतरज्जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ।
न वेत्त्यात्महितं यस्तु स भवेद्ब्रह्मघातकः ॥ ६०
विना देहेन कस्यापि पुरुषार्थो न विद्यते ।
तस्माद्देहं धनं रक्षेत् पुण्यकर्म्माणि साधयेत् ॥ ६१
रक्षयेत् सर्व्वदात्मानमात्मा सर्व्वस्य भाजनम् ।
रक्षणे यत्नमातिष्ठेज्जीवन् भद्राणि पश्यति ॥ ६२
पुनर्ग्रामः पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम् ।
पुनः शुभाशुभं कर्म्म न शरीरं पुनः पुनः ॥ ६३
शरीररक्षणोपायाः क्रियन्ते सर्व्वदा बुधैः ।
नेच्छन्ति च पुनस्त्यागमपि कुष्ठादिरोगिणः ॥ ६४
तद्गोपितं स्याद्धर्म्मार्थं धर्म्मो ज्ञानार्थमेव च ।
ज्ञानन्तु ध्यानयोगार्थमचिरात् प्रविमुच्यते ॥ ६५
आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति ॥ ६६
इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधं देशं व्याधिस्थः किं करिष्यति ॥ ६७
व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटाम्बुवत् ।
निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समभ्यसेत् ॥ ६८

यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः।
यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समभ्यसेत् ॥ ६९
यावत् तिष्ठति देहोऽयं तावत् तत्त्वं समभ्यसेत्।
सन्दीप्तकोणभवने कूपं खनति दुर्म्मतिः ॥ ७०
कालो न ज्ञायते नानाकार्य्यैः संसारसम्भवैः।
सुखं दुःखं जनो हन्त न वेत्ति हितमात्मनः ॥ ७१
जातानार्त्तान् मृतानापद्भ्रष्टान् दृष्ट्वा च दुःखितान्।
लोको मोहसुरां पीत्वा न बिभेति कदाचन ॥ ७२
सम्पदः स्वप्नसङ्काशा यौवनं कुसुमोपमम्।
तड़िच्चपलमायुष्यं कस्य स्याज्जानतो धृतिः ॥ ७३
शतं जीवितमत्यल्पं निद्रालस्यैस्तदर्द्धकम्।
बाल्य रोग-जरा-दुःखैरल्पं तदपि निष्फलम् ॥ ७४
प्रारब्धव्ये निरुद्योगो जागर्त्तव्ये प्रसुप्तकः।
विश्वस्तव्यो भयस्थाने हा नरः को न हन्यते ॥ ७५
तोयफेनसमे देहे जीवेनाक्रम्य संस्थिते।
अनित्यप्रियसंवासे कथं तिष्ठति निर्भयः ॥ ७६
अहिते हितसंज्ञः स्यादध्रुवे ध्रुवसंज्ञकः।
अनर्थे चार्थविज्ञानः स्वमर्थं यो न वेत्ति सः ॥ ७७
पश्यन्नपि प्रस्खलति शृण्वन्नपि न बुध्यति।
पठन्नपि न जानाति देवमायाविमोहितः ॥ ७८
तन्निमज्जज्जगदिदं गम्भीरे कालसागरे।
मृत्यु-रोग-जराग्राहैर्न कश्चिदपि बुध्यते ॥ ७९
प्रतिक्षणमयं कालः क्षीयमाणो न लक्ष्यते।
आमकुम्भ इवाम्भःस्थो विशीर्णो न विभाव्यते ॥ ८०
युज्यते वेष्टनं वायोराकाशस्य च खण्डनम्।
ग्रथनञ्च तरङ्गाणामास्था नायुषि युज्यते ॥ ८१
पृथिवी दह्यते येन मेरुश्चापि विशीर्य्यते।
शुष्यते सागरजलं शरीरस्य च का कथा ॥ ८२
अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे।
जल्पन्तमिति मर्त्त्याजं हन्ति कालवृको बलात् ॥ ८३
इदं कृतमिदं कार्य्यमिदमन्यत् कृताकृतम्।
एवमीहासमायुक्तं कृतान्तः कुरुते वशम् ॥ ८४
श्वःकार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकम्।
न हि मृत्युः प्रतीक्षेत कृतं वाप्यथवाऽकृतम् ॥ ८५
जरादर्शितपन्थानं प्रचण्डव्याधिसैनिकम्।
मृत्युशत्रुमधिष्ठोऽसि त्रातारं किं न पश्यति ॥ ८६
तृष्णासूचीविनिर्भिन्नं सिक्तं विषयसर्पिषा।
रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ ८७
बालांश्च यौवनस्थांश्च वृद्धान् गर्भगतानपि।
सर्व्वानाविशते मृत्युरेवम्भूतमिदं जगत् ॥ ८८
स्वदेहमपि जीवोऽयमुक्त्वा याति यमालयम्।
स्त्री-मातृ-पितृ-पुत्रादिसम्बन्धः केन हेतुना ॥ ८९
दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः।
तस्य त्यागः कृतो येन स सुखी नापरः क्वचित् ॥ ९०
प्रभवं सर्व्वदुःखानामालयं सकलापदाम्।
आश्रयं सर्व्वपापानां संसारं वर्ज्जयेत् क्षणात् ॥ ९१
लोह-दारुमयैः पाशैः पुमान् बद्धो विमुच्यते।
पुत्रदारमयैः पाशैर्मुच्यते न कदाचन ॥ ९२
यावन्तः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान्।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ९३
वञ्चिताशेषवित्तैस्तैर्नित्यं लोको विनाशितः।
हा हन्त विषयाहारैर्देहस्थेन्द्रियतस्करैः ॥ ९४
मांसलुब्धो यथा मत्स्यो लोहशङ्कुं न पश्यति।
सुखलुब्धस्तथा देही यमबाधां न पश्यति ॥ ९५
हिताहितं न जानन्तो नित्यमुन्मार्गगामिनः।
कुक्षिपूरणनिष्ठा ये ते नरा नारकाः खग ॥ ९६
निद्रादिमैथुनाहाराः सर्व्वेषां प्राणिनां समाः।
ज्ञानवान् मानवः प्रोक्तो ज्ञानहीनः पशुः स्मृतः ॥ ९७
प्रभाते मल-मूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ।
रात्रौ मदन-निद्राभ्यां बाध्यन्ते मूढ़मानवाः ॥ ९८
स्वदेहधनदारादिनिरताः सर्व्वजन्तवः।
जायन्ते च म्रियन्ते च हा हन्ताज्ञानमोहिताः ॥ ९९
तस्मात् सङ्गः सदा त्याज्यः सर्व्वस्त्यक्तुं न शक्यते।
महद्भिः सह कर्त्तव्यः सन्तः सङ्गस्य भेषजम् ॥ १००
सत्सङ्गश्च विवेकश्च निर्म्मलं नयनद्वयम्।
यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः ॥ १०१
स्वस्ववर्णाश्रमाचारनिरताः सर्व्वमानवाः।
न जानन्ति परं धर्म्मं वृथा नश्यन्ति दाम्भिकाः ॥ १०२
क्रियायासपराः केचिद्व्रतचर्य्यादिसंयुताः।
अज्ञानसंवृतात्मानः सञ्चरन्ति प्रचारकाः ॥ १०३
नाममात्रेण सन्तुष्टाः कर्म्मकाण्डरता नराः।
मन्त्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥ १०४

एकभुक्तोपवासाद्यैर्नियमैः कायशोषणैः ।
मूढाः परोक्षमिच्छन्ति मम मायाविमोहिताः ॥ १०५
देहदण्डनमात्रेण का मुक्तिरविवेकिनाम् ।
वल्मीकताडनादेव मृतः कुत्र महोरगः ॥ १०६
जटाभाराजिनैर्युक्ता दाम्भिका वेशधारिणः ।
भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति जनानपि ॥ १०७
संसारजसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम् ।
कर्म्म-ब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ १०८
गृहारण्यसमा लोके गतव्रीडा दिगम्बराः ।
चरन्ति गर्द्दभाद्याश्च विरक्तास्ते भवन्ति किम् ॥ १०९
मृद्भस्मोद्धूलनादेव मुक्ताः स्युर्यदि मानवाः ।
मृद्भस्मवासी नित्यं श्वा स किं मुक्तो भविष्यति ॥ ११०
तृण-पर्णोदकाहाराः सततं वनवासिनः ।
जम्बूकाखुमृगाद्याश्च तापसास्ते भवन्ति किम् ॥ १११
आजन्ममरणान्तञ्च गङ्गादितटिनीस्थिताः ।
मण्डूकमत्स्यप्रमुखा योगिनस्ते भवन्ति किम् ॥ ११२
पारावताः शिलाहाराः कदाचिदपि चातकाः ।
न पिबन्ति महीतोयं व्रतिनस्ते भवन्ति किम् ॥ ११३
तस्मादित्यादिकं कर्म्म लोकरञ्जनकारकम् ।
मोक्षस्य कारणं साक्षात् तत्त्वज्ञानं खगेश्वर ॥ ११४
षड्दर्शनमहाकूपे पतिताः पशवः खग ।
परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ ११५
वेदशास्त्रार्णवे घोरे उह्यमाना इतस्ततः ।
षडूर्म्मिनिग्रहग्रस्तास्तिष्ठन्ति हि कुतार्किकाः ॥ ११६
वेदागमपुराणज्ञः परमार्थं न वेत्ति यः ।
विडम्बकस्य तस्यैव तत् सर्व्वं काकभाषितम् ॥ ११७
इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः ।
पठन्त्यहर्निशं शास्त्रं परतत्त्वपराङ्मुखाः ॥ ११८
वाक्य छन्दोनिबन्धेन काव्यालङ्कारशोभिताः ।
चिन्तया दुःखिता मूढ़ास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ ११९
अन्यथा परमं तत्त्वं जनाः क्लिश्यन्ति चान्यथा ।
अन्यथा शास्त्रसद्भावो व्याख्यां कुर्व्वन्ति चान्यथा ॥ १२०
कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति च ।
अहङ्काररताः केचिदुपदेशादिवर्ज्जिताः ॥ १२१
पठन्ति वेदशास्त्राणि बोधयन्ति परस्परम् ।
न जानन्ति परं तत्त्वं दर्व्वी पाकरसं यथा ॥ १२२

शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ १२३
तत्त्वमात्मस्थमज्ञात्वा मूढ़ः शास्त्रेषु मुह्यति ।
गोपः कुक्षिगते छागे कूपे पश्यति दुर्म्मतिः ॥ १२४
संसारमोहनाशाय शब्दबोधो न हि क्षमः ।
न निवर्त्तेत तिमिरं कदाचिद्दीपवार्त्तया ॥ १२५
प्रज्ञाहीनस्य पठनं यथान्धस्य च दर्पणम् ।
अतः प्रज्ञावतां शास्त्रं तत्त्वज्ञानस्य लक्षणम् ॥ १२६
इदं ज्ञानमिदं ज्ञेयं सर्व्वन्तु श्रोतुमिच्छति ।
दिव्यवर्षसहस्रायुः शास्त्रान्तं नैव गच्छति ॥ १२७
अनेकानि च शास्त्राणि स्वल्पायुर्विघ्नकोटयः ।
तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसि ॥ १२८
अभ्यस्य वेदशास्त्राणि तत्त्वं ज्ञात्वाथ बुद्धिमान् ।
पलालमिव धान्यार्थी सर्व्वशास्त्राणि सन्त्यजेत् ॥ १२९
यथामृतेन तृप्तस्य नाहारेण प्रयोजनम् ।
तत्त्वज्ञस्य तथा तार्क्ष्य न शास्त्रेण प्रयोजनम् ॥ १३०
न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि ।
ज्ञानादेव हि कैवल्यं नान्यथा विनतात्मज ॥ १३१
नाश्रमः कारणं मुक्तेर्दर्शनानि न कारणम् ।
तथैव सर्व्वकर्म्माणि ज्ञानमेव हि कारणम् ॥ १३२
मुक्तिदा गुरुवागेका विद्या सर्व्वा विडम्बिका ।
काष्ठभारसहस्रेषु ह्येकं सञ्जीवनं परम् ॥ १३३
अद्वैतं हि शिवं प्रोक्तं क्रियायासविवर्ज्जितम् ।
गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः ॥ १३४
आगमोत्थं विवेकोत्थं द्विधाज्ञानं प्रचक्ष्यते ।
शब्दब्रह्मागममयं परब्रह्मविवेकजम् ॥ १३५
अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
समं तत्त्वं न जानन्ति द्वैताद्वैतविवर्ज्जितम् ॥ १३६
द्वे पदे बन्धमोक्षाय न ममेति ममेति च ।
ममेति बध्यते जन्तुर्न ममेति प्रमुच्यते ॥ १३७
तत् कर्म्म यन्न बन्धाय सा विद्या या विमुक्तिदा ।
आयासायापरं कर्म्म विद्यान्या शिल्पनैपुणम् ॥ १३८
यावत् कर्म्माणि दीयन्ते यावत् संसारवासना ।
यावदिन्द्रियचापल्यं तावत् तत्त्वकथा कुतः ॥ १३९
यावद्देहाभिमानश्च ममता यावदेव हि ।
प्रयागत् यत्नवेगोऽस्ति यावत् सङ्कल्पकल्पना ॥ १४०

यावन्तो मनसः स्थैर्य्यं न यावच्छास्त्रचिन्तनम्।
यावन्न गुरुकारुण्यं तावत् तत्त्वकथा कुतः॥ १४१
तावत् तपो व्रतं तीर्थं जपहोमार्च्चनादिकम्।
वेदशास्त्रागमकथा यावत् तत्त्वं न विन्दति॥ १४२
तस्मात् सर्व्वप्रयत्नेन सर्व्वावस्थासु सर्व्वदा।
तत्त्वनिष्ठो भवेत् तार्क्ष्य यदीच्छेन्मोक्षमात्मनः॥ १४३
धर्मज्ञानप्रसूनस्य स्वर्गमोक्षफलस्य च।
तापत्रयादिसन्तप्तश्छायां मोक्षतरोः श्रयेत्॥ १४४
तस्माज्ज्ञानेनात्मतत्त्वं विज्ञेयं श्रीगुरोर्मुखात्।
सुखेन मुच्यते जन्तुर्घोरसंसारबन्धनात्॥ १४५
तत्त्वज्ञस्यान्तिमं कृत्यं शृणु वक्ष्यामि तेऽधुना।
येन मोक्षमवाप्नोति ब्रह्म निर्वाणसंज्ञकम्॥ १४६
अन्तकाले तु पुरुष आगते गतसाध्वसः।
छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम्॥ १४७
गृहात् प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः।
शुचौ विविक्त आसीनो विधिवत् कल्पितासने॥ १४८
अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम्।
मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन्॥ १४९
नियच्छेद्विषयेभ्योऽक्षान् मनसा बुद्धिसारथिः।
मनः कर्म्मभिराक्षिप्तं शुभार्थे धारयेद्धिया॥ १५०
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्।
एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले॥ १५१
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥ १५२
न यत्र दाम्भिका यान्ति ज्ञानवैराग्यवर्ज्जिताः।
सुधियस्तां गतिं यान्ति तानहं कथयामि ते॥ १५३

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुख-दुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत्॥ १५४

ज्ञानह्रदे सत्यजले राग-द्वेषमलापहे।
यः स्नाति मानसे तीर्थे स वै मोक्षमवाप्नुयात्॥ १५५
प्रौढवैराग्यमास्थाय भजते मामनन्यभाक्।
पूर्णदृष्टिः प्रसन्नात्मा स वै मोक्षमवाप्नुयात्॥ १५६
त्यक्त्वा गृहञ्च यस्तीर्थे निवसेन्मरणोत्सुकः।
म्रियते मुक्तिक्षेत्रेषु स वै मोक्षमवाप्नुयात्॥ १५७

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती ज्ञेयाः सप्तैता मोक्षदायिकाः॥ १५८
इति ते कथितं तार्क्ष्य मोक्षधर्मं सनातनम्।
ज्ञान-वैराग्यसहितं श्रुत्वा मोक्षमवाप्नुयात्॥ १५९
मोक्षं गच्छन्ति तत्त्वज्ञा धार्म्मिकाः स्वर्गतिं नराः।
पापिनो दुर्गतिं यान्ति संसरन्ति खगादयः॥ १६०

सूत उवाच।

स्वप्रश्नोत्तरराद्धान्तमेवं भगवतो मुखात्।
श्रुत्वा हृष्टतनुस्तार्क्ष्यो ननाम जगदीश्वरम्॥ १६१
सन्देहो मे महान् नष्टो भवद्वाक्यविरोचनात्।
इत्युक्त्वा विष्णुमामन्त्र्य स गतः कश्यपाश्रमम्॥ १६२
सद्यो देहान्तरं याति यथा याति विलम्बतः।
अनयोरुभयोश्चैव न विरोधस्तथापि वः॥ १६३
सर्व्वमाख्यातवांस्तातं श्रुतो भगवतो मुखात्।
मारीचोऽपि मुदं लेभे श्रुत्वा वाक्यं रमापतेः॥ १६४
अपाकृतस्तु सन्देहो ब्राह्मणा भवतां मया।
उक्तं सुपर्णसंज्ञन्तु पुराणं परमाद्भुतम्॥ १६५
इदमाप हरेस्तार्क्ष्यस्तार्क्ष्याद्दाप ततो भृगुः।
भृगोर्वशिष्ठः संप्राप वामदेवस्ततः पुनः॥ १६६
पराशरमुनिः प्राप तस्माद्व्यासस्ततो ह्यहम्।
मया तु भवतां प्रोक्तं परं गुह्यं हरेरिदम्॥ १६७
य इदं शृणुयान्मर्त्यो यो वाप्यभिदधाति च।
इहामुत्र च लोके स सर्व्वत्र सुखमाप्नुयात्॥ १६८
व्रजतः संयमन्यां यद्दुःखमत्र निरूपितम्।
अस्य श्रवणतः पुण्यं तन्मुक्तो जायते पुनः॥ १६९
अत्रोक्तकर्म्मपाकादिश्रवणाच्च नृणामिह।
वैराग्यभावहेतुत्वादयस्माच्छ्रोतव्यमेव च॥ १७०

भजत जितहृषीकाः कृष्णमेनं मुनीशं
समजनि वत यस्मान्नीः सुधासारधारा।
पृषतमपि यदीयं वर्णरूपं निपीय
श्रुतिपुटचुलुकेन प्राप्नुवन्त्यात्मनैक्यम्॥ १७१

व्यास उवाच।

इति सूतमुखोद्गीर्णां सर्व्वशास्त्रार्थमण्डिनीम्।
वैष्णवीं वाक्सुधां पीत्वा ऋषयस्तुष्टिमाययुः॥ १७२
प्रशशंसुस्तथान्योन्यं सूतं सर्व्वार्थदर्शिनम्।
प्रहर्षमतुलं प्रापुर्मुनयः शौनकादयः॥ १७३

इति हरिवचनानि सूतवाचा
खगपतिसंशयभेदकानि यानि ।
स मुनिरपि निशम्य शौनकेन्द्रो
बहुतरमानयति स्म आत्मनि स्वम् ॥ ५६
अपूजयंस्ते मुनयस्तदानी-
मुदारवाग्भिर्मुहुरेव सूतम् ।
धन्योऽसि सूत त्वमितीत्युदीरयन्
व्यसर्जयंस्तच्च निवर्त्तितेऽध्वरे ॥ ५७
पुराणं गारुडं पुण्यं पवित्रं पापनाशनम् ।
शृण्वतां कामनापूरं श्रोतव्यं सर्व्वदैव हि ॥ ५८
श्रुत्वा दानानि देयानि वाचकायाखिलानि च ।
पूर्व्वोक्तशयनादीनि नान्यथा सफलं भवेत् ॥ ५९
पुराणं पूजयेत् पूर्व्वं वाचकं तदनन्तरम् ।
वस्त्रालङ्कारगोदानैर्द्दक्षिणाभिश्च सादरम् ॥ ६०
अन्नैश्च हेमदानैश्च भूमिदानैश्च भूरिभिः ।
पूजयेद्वाचकं भक्त्या बहुपुण्यफलाप्तये ॥ ६१
यश्चेदं शृणुयान्मर्त्त्यो यश्चापि परिकीर्त्तयेत् ।
विहाय यातनां घोरां धूतपापो दिवं व्रजेत् ॥ ६२

इति श्रीगारुड़े महापुराणे उत्तरखण्डे
सारोद्धारे श्रीकृष्ण-गरुड़संवादे
पञ्चचत्वारिंशोऽध्यायः ॥४५॥

---

समाप्तमिदमुत्तरखण्डम् ।

---

## समाप्तञ्चेदं गरुड़पुराणम् ।

॥ श्रीः ॥



